# ॐ चरकसंहिता

सूत्र-निदान-विमान-शारीरेन्द्रिय-चिकित्सित
कल्प-सिद्धिस्थानात्मिका
आयुर्वेदीया
भगवता आत्रेयेण उपदिष्टा
अग्निवेश-नामधेयेन तत् शिष्येण विरचिता
चरकाभिधानेन महर्षिणा प्रतिसंस्कृता

वि, ए, उपाधिधारिणा पण्डितकुलपतिना
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
बहूनि आदर्शपुस्तकानि समालोच्य
संस्कृता प्रकाशिता च।

द्वितीयसंस्करणम्।



कलिकातानगर्य्याम्
"नारायणयन्त्रे" मुद्रिता।

खृ० १८९६।

# चरकसंहितायाः सूचीपत्रम् ।

## शारीरस्थाने



## इन्द्रियस्थाने



## चिकित्सितस्थाने

# चरकसंहितायां

## सूत्रस्थानम् ।

---

अथातो दीर्घंजीवितीयमध्यायं व्याख्यास्यामः ।

दीर्घंजीवितमन्विच्छन् भरद्वाज उपागमत् ।
इन्द्रमुग्रतपा बुद्धा शरण्यममरेश्वरम् ॥ १ ॥
ब्रह्मणा हि यथा प्रोक्तमायुर्वेदं प्रजापतिः ।
जग्राह निखिलेनादावश्विनौ तु पुनस्ततः ॥ २ ॥
अश्विभ्यां भगवान् शक्रः प्रतिपेदे ह केवलम् ।
ऋषिप्रोक्तो भरद्वाजः तस्माच्छक्रमुपागमत् ॥ ३ ॥
विघ्नीभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम् ।
तपोपवासाध्ययनब्रह्मचर्य्यव्रतायुषाम् ॥ ४ ॥
तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः ।
समेताः पुण्यकर्म्माणः पार्श्वे हिमवतः शुभे ॥ ५ ॥
अङ्गिरा जमदग्निश्च वसिष्ठः काश्यपो भृगुः ।
आत्रेयो गौतमः सांख्य. पुलस्त्यो नारदोऽसित ॥ ६ ॥
अगस्त्यो वामदेवश्च मार्कण्डेयाश्वलायनौ ।
पारिक्षिर्भिक्षुरात्रेयो भरद्वाजः कपिष्ठलः ॥ ७ ॥
विश्वामित्राश्वरथ्यौ च भार्गवश्च्यवनोऽभिजित् ।
भार्ग्यः शाण्डिल्यकौण्डिन्यौ वार्क्षिर्देवलगालवौ ॥ ८ ॥
साङ्कृत्यो वैजवापिश्च कुशिको वादरायणः ।
वडिशः शरलोमा च काप्यकात्यायनावुभौ ॥ ९ ॥
काङ्कायन. कैकशेयो धौम्यो मारीचिकाश्यपौ ।
शर्कराक्षो हिरण्याक्षो लौगाक्षिः पैङ्गिरेव च ॥ १० ॥

शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः ।
वैखानसा वालखिल्यास्तथा चान्ये महर्षयः ॥ ११ ॥
ब्रह्मज्ञानस्य निधयो दमस्य नियमस्य च ।
तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः ॥ १२ ॥
सुखोपविष्टास्ते तत्र पुण्यां चक्रुरिमां कथाम् ।
धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ॥ १३ ॥
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च ।
प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् ॥ १४ ॥
कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः ।
अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ॥ १५ ॥
स वक्ष्यति शमोपायं यथावदमरप्रभुः ।
कः सहस्राक्षभवनं गच्छेत् प्रष्टुं शचीपतिम् ॥ १६ ॥
अहमर्थे नियुज्येयमत्रेति प्रथमं वचः ।
भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः ॥ १७ ॥
स शक्रभवनं गत्वा सुरर्षिगणमध्यगम् ।
ददर्श बलहन्तारं दीप्यमानमिवानलम् ॥ १८ ॥
सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् ।
प्रोवाच भगवान् धीमान् ऋषीणां वाक्यमुत्तमम् ॥ १९ ।
व्याधयो हि समुत्पन्नाः सर्वप्राणिभयङ्कराः ।
तद् ब्रूहि मे शमोपायं यथावदमरप्रभो ! ॥ २० ॥
तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः ।
पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये ॥ २१ ॥
हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् ।
त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः ॥ २२ ॥
सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः ।
यथावदचिरात्सर्वं बुबुधे तन्मना मुनिः ॥ २३ ॥

तेनायुरमितं लेभे भरद्वाजः सुखान्वितः ।
ऋषिभ्योऽनधिकं तच्च शशंसाऽनवशेषयन् ॥ २४ ॥
ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम् ।
दीर्घमायुश्चिकीर्षन्तो वेदं वर्द्धनमायुषः ॥ २५ ॥
महर्षयस्ते ददृशुर्यथावत् ज्ञानचक्षुषा ।
सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म्म च ॥ २६ ॥
समवायं च तत् ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः ।
लेभिरे परमं शर्म्म जीवितं चापि निर्गदम् ॥ २७ ॥
अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः ।
शिष्येभ्यो दत्तवान् षड्भ्यः सर्वभूतानुकम्पया ॥ २८ ॥
अग्निवेशश्च भेलश्च जतूकर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥ २९ ॥
बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः ।
तन्त्रप्रणेता प्रथममग्निवेशो यतोऽभवत् ॥ ३० ॥
अथ भेलादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ।
श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधसः ॥ ३१ ॥
श्रुत्वा सूत्रणमर्थानामृषयः पुण्यकर्म्मणाम् ।
यथावत् सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे ॥ ३२ ॥
सर्व एवाऽस्तुवंस्तांश्च सर्वभूतहितैषिणः ।
सर्वभूतेष्वनुक्रोश इत्युच्चैरब्रुवन् समम् ॥ ३३ ॥
तं पुण्यं शुश्रुवुः शब्दं दिवि देवर्षयः स्थिताः ।
सामराः परमर्षीणां श्रुत्वा मुमुदिरे परम् ॥ ३४ ॥
अहो साध्विति घोषश्च लोकांस्त्रीनन्ववादयत् ।
नभसि स्निग्धगम्भीरो हर्षाद्भूतैरुदीरितः ॥ ३५ ॥
शिवो वायुर्ववौ सर्वा भाभिरुन्मीलिता दिशः ।
निपेतुः सजलाश्चैव दिव्याः कुसुमवृष्टयः ॥ ३६ ॥

अथाग्निवेशप्रमुखान् विविशुर्ज्ञानदेवताः ।
बुद्धिः सिद्धिः स्मृतिर्मेधा धृतिः कीर्त्तिः क्षमा दया ॥ ३७ ॥
तानि चानुमतान्येषां तन्त्राणि परमर्षिभिः ।
भवाय भूतसङ्घानां प्रतिष्ठां भुवि लेभिरे ॥ ३८ ॥
हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।
मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ ३९ ॥
शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम् ।
नित्यगश्चानुबन्धश्च पर्य्यायैरायुरुच्यते ॥ ४० ॥
तस्यायुषः पुण्यतमो वेदो वेदविदां मतः ।
वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः ॥ ४१ ॥
सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम् ।
ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु ॥ ४२ ॥
सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् ।
तुल्यार्थता हि सामान्यं विशेषस्तु विपर्य्ययः ॥ ४३ ॥
सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवत् ।
लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम् ॥ ४४ ॥
स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम् ।
वेदस्यास्य तदर्थं हि वेदोऽयं सम्प्रकाशितः ॥ ४५ ॥
खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः ।
सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् ॥ ४६ ॥
सार्था गुर्वादयो बुद्धिः प्रयत्नान्ताः परादयः ।
गुणाः प्रोक्ताः प्रयत्नादि कर्म चेष्टितमुच्यते ॥ ४७ ॥
समवायोऽपृथग्भावो द्रव्यादीनां गुणैर्मतः ।
स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः ॥ ४८ ॥
यत्राश्रिताः कर्मगुणाः कारणं समवायि यत् ।
तद् द्रव्यं समवायी तु निश्चेष्टः कारणं गुणः ॥ ४९ ॥

संयोगे च वियोगे च कारणं द्रव्यमाश्रितम्।
कर्त्तव्यस्य क्रिया कर्म कर्म नान्यदपेक्षते ॥ ५० ॥
इत्युक्तं कारणं कार्य्यं धातुसाम्यमिहोच्यते।
धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ॥ ५१ ॥
कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च।
द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः ॥ ५२ ॥
शरीरं सत्त्वसंज्ञं च व्याधीनामाश्रयो मतः।
तथा सुखानां योगस्तु सुखानां कारणं समः ॥ ५३ ॥
निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः।
चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ॥ ५४ ॥
वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः।
मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥ ५५ ॥
प्रशाम्यत्यौषधैः पूर्वो द्रव्ययुक्तिव्यपाश्रयैः।
मानसो ज्ञानविज्ञानधैर्य्यस्मृतिसमाधिभिः ॥ ५६ ॥
रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः।
विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥ ५७ ॥
सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु।
विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥ ५८ ॥
गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः।
श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥ ५९ ॥
विपरीतगुणैर्देशमात्राकालोपपादितैः।
भेषजैर्विनिवर्त्तन्ते विकाराः साध्यसम्मताः ॥ ६० ॥
साधनं नत्वसाध्यानां व्याधीनामुपदिश्यते।
भूयश्चातो यथाद्रव्यं गुणकर्म प्रवक्ष्यते ॥ ६१ ॥
रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा।
निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः ॥ ६२ ॥

स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च।
कषायश्चेति षट्कोऽयं रसानां संग्रहः स्मृतः॥ ६३॥
स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः।
जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः॥ ६४॥
किञ्चिद्दोषप्रशमनं किञ्चिद्धातुप्रदूषणम्।
स्वस्थवृत्तौ हितं किञ्चिद्द्रव्यं त्रिविधमुच्यते॥ ६५॥
तत्पुनस्त्रिविधं ज्ञेयं जाङ्गमौद्भिदपार्थिवम्।
मधूनि गोरसाः पित्तं वसा मज्जासृगामिषम्॥ ६६॥
विण्मूत्रं चर्मरेतोऽस्थि स्नायु शृङ्गं खुरा नखाः।
जङ्गमेभ्यः प्रयुज्यन्ते केशा लोमानि रोचनाः॥ ६७॥
सुवर्णं समलाः पञ्च लोहाः ससिकताः सुधा।
मनःशिलाले मणयो लवणं गैरिकाञ्जने॥ ६८॥
भौममौषधमुद्दिष्टमौद्भिदन्तु चतुर्विधम्।
वनस्पतिर्वीरुधश्च वानस्पत्यस्तथौषधिः॥ ६९॥
फलैर्वनस्पतिः पुष्पैर्वानस्पत्यः फलैरपि।
ओषध्यः फलपाकान्ताः प्रतानैर्वीरुधः स्मृताः॥ ७०॥
मूलत्वक्सारनिर्यासनाडस्वरसपल्लवाः।
क्षाराः क्षीरं फलं पुष्पं भस्म तैलानि कण्टकाः॥ ७१॥
पत्राणि शुङ्गाः कन्दाश्च प्ररोहाश्चौद्भिदो गणः।
मूलिन्यः षोडशैकोना फलिन्यो विंशतिः स्मृताः॥ ७२॥
महास्नेहाश्च चत्वारः पञ्चैव लवणानि च।
अष्टौ मूत्राणि सङ्ख्यातान्यष्टावेव पयांसि च॥ ७३॥
शोधनार्थाश्च षड्वृक्षाः पुनर्वसुनिदर्शिताः।
य एतान् वेत्ति सर्वांस्तु विकारेषु स वेदवित्॥ ७४॥
हस्तिदन्ती हैमवती श्यामा त्रिवृदधो गुडा।
सप्तला श्वेतनामा च प्रत्यक्श्रेणी गवाक्ष्यपि॥ ७५॥

ज्योतिष्मती च बिम्बी च शणपुष्पी विषाणिका ।
अजगन्धा द्रवन्ती च चीरिणी चात्र षोडशी ॥ ७६ ॥
शणपुष्पी च बिम्बी च छर्द्दने हैमवत्यपि ।
श्वेता ज्योतिष्मती चैव योज्या शीर्षविरेचने ॥ ७७ ॥
एकादशावशिष्टा याः प्रयोज्यास्ता विरेचने ।
इत्युक्ता नामकर्मभ्यां मूलिन्यः फलिनीः शृणु ॥ ७८ ॥
शङ्खिन्यथ विडङ्गानि त्रपुषं मदनानि च ।
आनूपं स्थलजञ्चैव क्लीतकं द्विविधं स्मृतम् ॥ ७९ ॥
धामार्गकमथेक्ष्वाकु जीमूतं कृतवेधनम् ।
प्रकीर्य्या चोदकीर्य्या च प्रत्यक्पुष्पी तथाभया ।
अन्तःकोटरपुष्पी च हस्तिपर्ण्याश्च शारदम् ॥ ८० ॥
कम्पिल्लकारग्वधयोः फलं यत् कुटजस्य च ।
धामार्गवमथेक्ष्वाकुजीमूतं कृतवेधनम् ॥ ८१ ॥
मदनं कुटजञ्चैव त्रपुषं हस्तिपर्णिनी ।
एतानि वमने चैव योज्यान्यास्थापनेषु च ॥ ८२ ॥
नस्तः प्रच्छर्दने चैव प्रत्यक् पुष्पी विधीयते ।
दश यान्यवशिष्टानि तान्युक्तानि विरेचने ॥ ८३ ॥
नामकर्मभिरुक्तानि फलान्येकोनविंशतिः ।
सर्पिस्तैलं वसा मज्जा स्नेहो दृष्टः चतुर्विधः ॥ ८४ ॥
पानाभ्यञ्जनवस्त्यर्थं नस्यार्थं चैव योगतः ।
स्नेहना जीवना वर्ण्या वर्णोपचयवर्द्धनाः ॥ ८५ ॥
स्नेहा ह्येतेषु विहिता वातपित्तकफापहाः ।
सौवर्चलं सैन्धवञ्च विड़मौद्भिदमेव च ॥ ८६ ॥
सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ।
स्निग्धान्युष्णानि तीक्ष्णानि दीपनीयतमानि च ॥ ८७ ॥
आलेपनार्थे युज्यन्ते स्नेहस्वेदविधौ तथा ।

अधोभागोर्द्धभागेषु निरूहेष्वनुवासने ॥ ८८ ॥
अभ्यञ्जने भोजनार्थे शिरसश्च विरेचने ।
शस्त्रकर्मणि वर्त्त्यर्थमञ्जनोत्सादनेषु च ॥ ८९ ॥
अजीर्णानाहयोर्वाते गुल्मे शूले तथोदरे ।
उक्तानि लवणान्यूर्द्धं मूत्राण्यष्टौ निबोध मे ॥ ९० ॥
मुख्यानि यानि चेष्टानि सर्वाण्यात्रेयशासने ।
अविमूत्रमजामूत्रं गोमूत्रं माहिषं तथा ॥ ९१ ॥
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च ।
उष्णतीक्ष्णमथो रूक्षं कटुकं लवणान्वितम् ॥ ९२ ॥
मूत्रमुत्सादने युक्तं युक्तमालेपनेषु च ।
युक्तमास्थापने मूत्रं युक्तं चापि विरेचने ॥ ९३ ॥
स्वेदेष्वपि च तद्युक्तमानाहेषु गदेषु च ।
उदरेष्वथ चार्शःसु गुल्मकुष्ठकिलासिषु ॥ ९४ ॥
तद्युक्तमुपनाहेषु परिषेके तथैव च ।
दीपनीयं विषघ्नं च क्रिमिघ्नं चोपदिश्यते ॥ ९५ ॥
पाण्डुरोगोपसृष्टानामुत्तमं सर्वथोच्यते ।
श्लेष्माणं शमयेत्पीतं मारुतञ्चानुलोमयेत् ॥ ९६ ॥
कर्षेत्पित्तमधोभागमित्यस्मिन् गुणसंग्रहः ।
सामान्येन मयोक्तस्तु पृथक्त्वेन प्रवक्ष्यते ॥ ९७ ॥
अविमूत्रं सतिक्तं स्यात् स्निग्धं पित्ताविरोधि च ।
आजं कषायमधुरं पथ्यं दोषान्निहन्ति च ॥ ९८ ॥
गव्यं समधुरं किञ्चित् दोषघ्नं क्रिमिकुष्ठनुत् ।
कण्डूघ्नं शमयेत् पीतं सम्यग् दोषोदरे हितम् ॥ ९९ ॥
अर्शःशोफोदरघ्नन्तु सक्षारं माहिषं सरम् ।
हास्तिकं लवणं मूत्रं हितन्तु क्रिमिकुष्ठिनाम् ॥ १०० ॥
प्रशस्तं बद्धविण्मूत्रविषश्लेष्मामयार्शसाम् ।

सतिक्तं श्वासकासघ्नमर्शोघ्नं चोष्ट्रमुच्यते ॥ १०१ ॥
वाजिनां तिक्तकटुकं कुष्ठव्रणविषापहम्।
खरमूत्रमपस्मारोन्मादग्रहविनाशनम् ॥ १०२ ॥
इतीहोक्तानि मूत्राणि यथा सामर्थ्ययोगतः।
अतः क्षीराणि वक्ष्यन्ते कर्म चैषां गुणाश्च ये ॥ १०३ ॥
अविक्षीरमजाक्षीरं गोक्षीरं माहिषं च यत्।
उष्ट्रीणामथ नागीनां वडवायाः स्त्रियास्तथा ॥ १०४ ॥
प्रायशो मधुरं स्निग्धं शीतं स्तन्यं पयः स्मृतम्।
प्रीणनं बृंहणं वृष्यं मेध्यं बल्यं मनस्करम् ॥ १०५ ॥
जीवनीयं श्रमहरं श्वासकासनिबर्हणम्।
हन्ति शोणितपित्तञ्च सन्धानं विहतस्य च ॥ १०६ ॥
सर्वप्राणभृतां सात्म्यं शमनं शोधनं तथा।
तृष्णाघ्नं दीपनीयं च श्रेष्ठं क्षीणक्षतेषु च ॥ १०७ ॥
पाण्डुरोगेऽम्लपित्ते च शोषे गुल्मे तथोदरे।
अतीसारे ज्वरे दाहे श्वयथौ च विधीयते ॥ १०८ ॥
योनिशुक्रप्रदोषेषु मूत्रेषु प्रदरेषु च।
पुरीषे ग्रथिते पथ्यं वातपित्तविकारिणाम् ॥ १०९ ॥
नस्यालेपावगाहेषु वमनास्थापनेषु च।
विरेचने स्नेहने च पयः सर्वत्र युज्यते ॥ ११० ॥
यथाक्रमं क्षीरगुणा नेकैकस्य पृथक् पृथक्।
अन्नपानादिकेऽध्याये भूयो वक्ष्याम्यशेषतः ॥ १११ ॥
अथापरे त्रयो वृक्षाः पृथक् ये फलमूलिभिः।
स्नुह्यर्काश्मन्तकास्तेषामिदं कर्म पृथक् पृथक् ॥ ११२ ॥
वमनेऽश्मन्तकं विद्यात् स्नुहीक्षीरं विरेचने।
क्षीरमर्कस्य विज्ञेयं वमने सविरेचने ॥ ११३ ॥
इमांस्त्रीनपरान् वृक्षानाहुर्येषां हितास्त्वचः।

पूतिकः कृष्णगन्धा च तिल्वकश्च तथा तरुः ॥ ११४ ॥
विरेचने प्रयोक्तव्यः पूतिकस्तिल्वकस्तथा ।
कृष्णगन्धा परीसर्पे शोथेष्वर्शःसु चोच्यते ॥ ११५ ॥
दद्रुविद्रधिगण्डेषु कुष्ठेष्वप्यलजीषु च ।
षड्वृक्षान् शोधनानेतानपि विद्याद्विचक्षणः ॥ ११६ ॥
इत्युक्ताः फलमूलिन्यः स्नेहाश्च लवणानि च ।
मूत्रं क्षीराणि वृक्षाश्च षट् ये दृष्टाः पयस्त्वचः ॥ ११७ ॥
ओषधीर्नामरूपाभ्यां जानते ह्यजपा वने ।
अविपाश्चैव गोपाश्च ये चान्ये वनवासिनः ॥ ११८ ॥
न नामज्ञानमात्रेण रूपज्ञानेन वा पुनः ।
ओषधीनां परां प्राप्तिं कश्चिद्वेदितुमर्हति ॥ ११९ ॥
योगवित्त्वप्यरूपज्ञस्तासां तत्त्वविदुच्यते ।
किं पुनर्यो विजानीयादोषधीः सर्वथा भिषक् ॥ १२० ॥
रूपस्तासान्तु यो विद्याद्देशकालोपपादितम् ।
पुरुषं पुरुषं वीक्ष्य स विज्ञेयो भिषक्तमः ॥ १२१ ॥
यथा विषं यथा शस्त्रं यथाग्निरशनिर्यथा ।
तथौषधमविज्ञातं विज्ञातममृतं यथा ॥ १२२ ॥
औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः ।
विज्ञातं चापि दुर्युक्तं युक्तिबाह्येन भेषजम् ॥ १२३ ॥
योगादपि विषं तीक्ष्णमुत्तमं भेषजं भवेत् ।
भेषजं चापि दुर्युक्तं तीक्ष्णं सम्पद्यते विषम् ॥ १२४ ॥
तस्मान्न भिषजा युक्तं युक्तिबाह्येन भेषजम् ।
धीमता किञ्चिदादेयं जीवितारोग्यकाङ्क्षिणा ॥ १२५ ॥
कुर्यान्निपतितो मूर्ध्नि सशेषं वासवाशनिः ।
सशेषमातुरं कुर्यान्नत्वज्ञमतमौषधम् ॥ १२६ ॥
दुःखिताय शयानाय श्रद्दधानाय रोगिणे ।

यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति ॥ १२७ ॥
तस्य च मृत्युदूतस्य दुर्मतेस्त्यक्तधर्मणः।
नरो नरकपाती स्यात्तस्य सम्भाषणादपि ॥ १२८ ॥
वरमाशीविषविषं क्वथितं ताम्रमेव वा।
पीतमत्यग्निसन्तप्ता भक्षिता वाप्ययोगुड़ाः ॥१२९ ॥
न तु श्रुतवतां वेशं बिभ्रता शरणागतात्।
गृहीतमन्नं पानं वा वित्तं वा रोगपीड़ितात् ॥ १३० ॥
भिषक् बुभूर्षुर्मतिमानतः स्वगुणसम्पदि।
परं प्रयत्नमातिष्ठेत् प्राणदः स्याद्यथा नृणाम् ॥ १३१ ॥
*तदेव युक्तं भैषज्यं यदारोग्याय कल्पते।*
स चैव भिषजां श्रेष्ठो रोगिभ्यो यः प्रमोचयेत् ॥१३२ ॥
सम्यक् प्रयोगं सर्वेषां सिद्धिराख्याति कर्मणाम्।
सिद्धिराख्याति सर्वैश्च गुणैर्युक्तं भिषक्तमम् ॥ १३३ ॥ इति।

तत्र श्लोकाः।

आयुर्वेदागमो हेतुरागमस्य प्रवर्त्तनम्।
सूत्रस्याभ्यनुज्ञानमायुर्वेदस्य निर्णयः ॥ १३४ ॥
सम्पूर्णं कारणं श्रेयं आयुर्वेदप्रयोजनम्।
हेतवश्चैव दोषाश्च भेषजं संग्रहेण च ॥ १३५ ॥
रसाः सप्रत्यया द्रव्यास्त्रिविधो द्रव्यसंग्रहः।
मूलिन्यश्च फलिन्यश्च स्नेहाश्च लवणानि च ॥ १३६ ॥
मूत्रं क्षीराणि वृक्षाश्च षट् ये क्षीरत्वगाश्रयाः।
कर्माणि चैषां सर्वेषां योगायोगगुणागुणाः ॥ १३७ ॥
वैद्यापवादो यत्रस्थाः पर्वे च भिषजां गुणाः।
सर्वमेतत् समाख्यातं पूर्वेऽध्याये महर्षिणा ॥ १३८ ॥

इति दीर्घञ्जीविताध्यायः समाप्तः।

# द्वितीयोऽध्यायः

अथातोऽपामार्गतण्डुलीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

अपामार्गस्य बीजानि पिप्पलीर्मरिचानि च ।
विडङ्गान्यथ शिग्रूणि सर्षपांस्तुम्बुरूणि च ॥ १ ॥
अजाजीञ्चाजगन्धाञ्च पीलून्येलां हरेणुकाम् ।
पृथ्वीकां सुरसां श्वेतां कुठेरकफणिज्झकौ ॥ २ ॥
शिरीषबीजं लशुनं हरिद्रे लवणद्वयम् ।
ज्योतिष्मती नागरञ्च दद्यात् शीर्षविरेचने ॥ ३ ॥
गौरवे शिरसः शूले पीनसेऽर्द्धावभेदके ।
क्रिमिव्याधावपस्मारे घ्राणनाशे प्रमोहके ॥ ४ ॥
मदनं मधुकं निम्बं जीमूतं कृतवेधनम् ।
पिप्पलीकुटजेक्ष्वाकूण्येलां धामार्गवाणि च ॥ ५ ॥
उपस्थिते श्लेष्मपित्ते व्याधावामाशयाश्रये ।
वमनार्थं प्रयुञ्जीत भिषग्देहमदूषयन् ॥ ६ ॥
त्रिवृतां त्रिफलां दन्ती नीलिनीं सप्तलां वचाम् ।
काम्पिल्यक गवाक्षीञ्च क्षीरिणीमुदकीर्य्यकाम् ॥ ७ ॥
पीलून्यारग्वधं द्राक्षां द्रवन्तीं निचुलानि च ।
पक्वाशयगते दोषे विरेकार्थं प्रयोजयेत् ॥ ८ ॥
पाटलाञ्चाग्निमन्थञ्च बिल्वं श्योनाकमेव च ।
काश्मर्य्यं शालपर्णीञ्च पृश्निपर्णीं निदिग्धिकाम् ॥ ९ ।
बलाश्वदंष्ट्रां बृहतीमेरण्डं सपुनर्नवाम् ।
यवान् कुलत्थान् कोलानि गुडूचीं मदनानि च ॥ १०
पलाशं कत्तृणं चैव स्नेहांश्च लवणानि च ।

उदावर्त्ते विबन्धेषु युञ्ज्यादास्थापने सदा ॥ ११ ॥
अतएवौषधगणात् संकल्प्यमनुवासनम् ।
मारुतघ्नमिति प्रोक्तः संग्रहः पाञ्चकर्मिकः ॥ १२ ॥
तान्युपस्थितदोषाणां स्नेहस्वेदोपपादनैः ।
पञ्च कर्माणि कुर्वीत मात्राकालौ विचारयन् ॥ १३ ॥
मात्राकालाश्रया युक्तिः सिद्धिर्युक्तौ प्रतिष्ठिता ।
तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा ॥ १४ ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधाः ।
विविधानां विकाराणां तत्साध्यानां निवृत्तये ॥ १५ ॥
पिप्पलीपि[illegible]चित्रकनागरैः ।
यवागूर्दीपनीया स्याच्छूलघ्नी चोपसाधिता ॥ १६ ॥
दधित्थबिल्वचाङ्गेरीतक्रदाडिमसाधिता ।
पाचनी ग्राहणी पेया सवाते पाञ्चमूलिका ॥ १७ ॥
शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ।
दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥ १८ ॥
पयस्यर्द्धोदके छागे ह्रीवेरोत्पलनागरैः ।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता ॥ १९ ॥
दद्यात् सातिविषां पेयां सामे साम्लां सनागराम् ।
श्वदंष्ट्राकण्टकारिभ्यां मूत्रकृच्छ्रे सफाणिताम् ॥ २० ॥
विडङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च ।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका ॥ २१ ॥
मृद्वीकासारिवालाजापिप्पलीमधुनागरैः ।
पिपासाघ्नी विषघ्नी च सोमराजी विपाचिता ॥ २२ ॥
सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मता ।
गवेधुकानां भृष्टानां कर्षणीया समाक्षिका ॥ २३ ॥
सर्पिष्मती बहुतिला स्नेहनी लवणान्विता ।

कुशामलकनिर्यूहे श्यामाकानां विरूक्षणी ॥ २४ ॥
दशमूलीशृता कासहिक्काश्वासकफापहा ।
यमके मदिरा सिद्धा पक्वाशयरुजापहा ॥ २५ ॥
शाकैर्मांसैस्तिलैर्माषैः सिद्धा वर्चो निरस्यति ।
जम्ब्वाम्रास्थिदधित्थाम्लबिल्वैः सांग्राहिकी मता ॥ २६ ॥
क्षारचित्रकहिङ्ग्वम्लवेतसैर्भेदिनी मता ।
अभया पिप्पलीमूलविश्वैर्वातानुलोमनी ॥ २७ ॥
तक्रसिद्धा यवागूः स्याद्घृतव्यापत्तिनाशिनी ।
तैलव्यापदि शस्ता तु तक्रपिण्याकसाधिता ॥ २८ ॥
गव्यमांसरसैः साम्ला विषम[illegible]यम् ।
कण्ठ्या यवानां यमके पि[illegible]लकैः शृता ॥ २९ ॥
ताम्रचूडरसे सिद्धा रेतो[illegible]रुजापहा ।
समाषविदला वृष्या घृतक्षीरोपसाधिता ॥ ३० ॥
उपोदिकादधिभ्यां तु सिद्धा मदविनाशिनी ।
क्षुधं हन्यादपामार्गक्षीरगोधारसे शृता ॥ ३१ ॥

तत्र श्लोकाः ।

अष्टाविंशतिरित्येता यवाग्वः परिकीर्त्तिताः ।
पञ्चकर्माणि चाश्रित्य प्रोक्तो भेषजसंग्रहः ॥ ३२ ॥
पूर्वं मूलफलज्ञानहेतोरुक्तं यदौषधम् ।
पञ्चकर्माश्रयज्ञानहेतोस्तत् कीर्त्तितं पुनः ॥ ३३ ॥
स्मृतिमान् युक्तिहेतुज्ञो जितात्मा प्रतिपत्तिमान् ।
भिषगौषधसंयोगैश्चिकित्सां कर्त्तुमर्हति ॥ ३४ ॥

इति भेषजचतुष्केऽपामार्गतण्डुलीयो नाम द्वितीयोऽध्यायः समाप्तः ।

---

# तृतीयोऽध्यायः ।

अथात आरग्वधीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

आरग्वधः सैड़गजः करञ्जो वासा गुडूची मदनं हरिद्रे ।
श्याह्वः सुराह्वः खदिरो धवश्च निम्बो विडङ्गं करवीरकत्वक् ॥१॥
ग्रन्थिश्च भौर्जो लशुनः शिरीषः सलोमशो गुग्गुलुकृष्णगन्धे ।
फणिज्झको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥२॥
वचा हरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनञ्च ।
मनःशिलाले गृहधूम एला काशीशमुस्तार्जुनरोध्रसर्जाः ॥३॥
इत्यर्द्धरूपैर्विहिताः षड़ेते गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥४॥
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिभं सदद्रु ।
भगन्दरार्शांस्यपचीं सपामां हन्युः प्रयुक्तास्त्वचिरान्नराणाम् ॥५॥
कुष्ठं हरिद्रे सुरसं पटोलं निम्बाश्वगन्धे सुरदारु शिग्रु ।
ससर्षपं तुम्बुरुधान्यवन्यं चण्डां च चूर्णानि समानि कुर्य्यात् ॥६॥
तैस्तक्रयुक्तैः प्रथमं शरीरं तैलाक्तमुद्वर्त्तयितुं यतेत ।
तेनास्य कण्डूः पिड़काः सकोठाः कुष्ठानि शोफाश्च शमं व्रजन्ति ॥७
कुष्ठामृतासङ्गकटङ्कटेरी काशीशकाम्पिल्लकरोध्रमुस्ताः ।
सौगन्धिकं सर्जरसो विड़ङ्गं मनःशिलाले करवीरकत्वक् ॥ ८ ॥
तैलाक्तगात्रस्य कृतानि चूर्णान्येतानि दद्यादवचूर्णनार्थम् ।
दद्रुः सकण्डुः किटिभानि पामा विचर्चिका चैव तथैति शान्तिम् ९
मनःशिलाले मरिचानि तैलमार्कम्पयः कुष्ठहरः प्रदेहः ।
तुल्यं विड़ङ्गं मरिचानि कुष्ठं लोध्रञ्च तद्वत् समनःशिलं स्यात् ॥१०
रसाञ्जनं सप्रपुनाड़बीजं युक्तः कपित्थस्य रसेन लेपः ।
करञ्जबीजैडगजं सकुष्ठं गोमूत्रपिष्टञ्च परः प्रदेहः ॥ ११ ॥
उभे हरिद्रे कुटजस्य बीजं करञ्जबीजं सुमनःप्रवालान् ।

त्वचं समध्यां हयमारकस्य लेपं तिलक्षारयुतं विदध्यात् ॥१२॥
मनःशिला त्वक्कुटजात् सकुष्ठः सलोमशः सैडगजः करञ्जः ।
ग्रन्थिश्च भौर्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन ॥१३॥
पलाशनिर्दाहरसेन चापि कर्षोद्धृतान्याढकसम्मितेन ।
दर्वीप्रलेपं प्रवदन्ति लेपमेतत्परं कुष्ठनिसूदनाय ॥ १४ ॥
पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्तयेदश्वहनच्छदैश्च ॥ १५ ॥
कोलं कुलत्थाः सुरदारुरास्ना माषातसीतैलफलानि कुष्ठम् ।
वचा शताह्वा यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः ॥१६॥
आनूपमत्स्यामिषवेसवारैरुष्णैः प्रदेहः पवनापहः स्यात् ।
स्नेहैश्चतुर्भिर्दशमूलमिश्रैर्गन्धौषधैश्चानिलजित् प्रदेहः ॥ १७ ॥
• तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमार्तिं जठरे निहन्यात् ।
कुष्ठं शताह्वां सवचां यवानां चूर्णं सतैलाम्लमुशन्ति वाते ॥१८॥
उभे शताह्वे मधुकं मधूकं बलां प्रियालञ्च कशेरुकञ्च ।
घृतं विदारीञ्च सितोपलाञ्च कुर्यात् प्रदेहं पवने सरक्ते ॥१९॥
रास्ना गुडूची मधुकं बले द्वे सजीवकं सर्षभकम्पयश्च ।
घृतञ्च सिद्धं मधुशेषयुक्तं रक्तानिलार्त्तिं प्रणुदेत् प्रदेहः ॥२०॥
वाते सरक्ते सघृतः प्रदेहो गोधूमचूर्णं छगलीपयश्च ।
नतोत्पलं चन्दनकुष्ठयुक्तं शिरोरुजायां सघृतः प्रदेहः ॥२१॥
प्रपौण्डरीकं सुरदारु कुष्ठं यष्ट्याह्वमेला कमलोत्पले च ।
शिरोरुजायां सघृतः प्रदेहो लोहैरकापद्मकचोरकैश्च ॥२२॥
रास्ना हरिद्रे नलदं शताह्वे द्वे देवदारूणि सितोपलाञ्च ।
जीवन्तिमूलं सघृतं सतैलमालेपनं पार्श्वरुजासु कोष्णम् ॥२३॥
शैवालपद्मोत्पलवेत्रतुङ्गं प्रपौण्डरीकाणि मृणाललोध्रम् ।
प्रियङ्गुकालीयकचन्दनानि निर्वापणः स्यात् सघृतः प्रदेहः ॥२४॥
सिता लता वेतसपद्मकानि यष्ट्याह्वमैन्द्री नलिनानि दूर्वा ।

यवासमूलं कुम्भकाग्नयोश्च निर्वापणः स्यात् जलमेरका च ॥२५॥
शैलेयमेलागुरु चाथ कुष्ठं चण्डा नतं त्वक् सुरदारु रास्ना।
शीतं निहन्यादचिरात् प्रदेहो विषं शिरीषस्तु ससिन्धुवारः ॥२६
शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥ २७ ॥

तत्र श्लोकः।

इहात्रिजः सिद्धतमानुवाच द्वात्रिंशतं सिद्धमहर्षिपूज्यः।
चूर्णप्रदेहान् विविधामयघ्नानारग्वधीये जगतो हितार्थम् ॥२८॥

इति आरग्वधीयो नाम तृतीयोऽध्यायः समाप्तः।

---

## चतुर्थोऽध्यायः।

अथातः षड्विरेचनशताश्रितीयमध्यायं व्याख्यास्यामः।

इति ह स्माह भगवानात्रेयः।

इह खलु षड्विरेचनशतानि भवन्ति। षड्विरेचनाश्रयाः। पञ्च कषायशतानि। पञ्च कषाययोनयः। पञ्चविधं कषायकल्पनम्। पञ्चाशन्महाकषाया इति संग्रहः ॥ १ ॥

षड्विरेचनशतानीति यदुक्तं तदिह संग्रहेणोदाहृत्य विस्तरेण कल्पोपनिषदि अनुव्याख्यास्यामः ॥ २ ॥

त्रयस्त्रिंशद्योगशतं प्रणीतं फलेष्वेकोनचत्वारिंशज्जीमूतकेषु योगाः। पञ्चचत्वारिंशदिक्ष्वाकुषु धामार्गवः षड्विधा भवति योगयुक्तः ॥ ३ ॥

कुटजस्त्वष्टादशधा योगमेति कृतवेधनं षष्ठिधा भवति योगयुक्तम्। श्यामात्रिवृद्योगशतं प्रणीतं दशापरे चात्र भवन्ति योगाः ॥ ४ ॥

चतुरङ्गुलो द्वादशधा योगमेति लोध्रं विधौ षोड़श योग-

युक्तम्। सप्तदशघ्नो भवति विंशतियोगयुक्त एकोनचत्वारिंशत् सप्तलाशङ्खिन्योर्योगाः ॥ ५ ॥

अष्टाचत्वारिंशदन्तोद्रवन्त्योरिति षड्विरेचनशतानि ॥६॥

षड्विरेचनाश्रया इति। चीरमूलत्वक्पत्रपुष्पफलानीति॥७॥

पञ्च कषाययोनय इति। मधुरकषायोऽम्लकषायः कटुकषायस्तिक्तकषायः कषायकषायश्चेति तन्त्रे संज्ञा ॥ ८ ॥

पञ्चविधं कषायकल्पनमिति। तद्यथा। स्वरसः कल्कः शृतः शीतः फाण्टः कषाय इति ॥ ९ ॥

यन्त्रप्रपीडनाद्द्रव्याद्रसः स्वरस उच्यते।
यत्पिण्डं रसपिष्टानां तत्कल्कं परिकीर्त्तितम्॥ १० ॥
वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः।
द्रव्यादापोत्थितात्तोये तत्पुनर्निशि संस्थितात्॥ ११ ॥
कषायो योऽभिनिर्याति स शीतः समुदाहृतः।
क्षिप्त्वोष्णतोये मृदितं तत् फाण्टं परिकीर्त्तितम्॥ १२ ॥

तेषां यथापूर्वं बलाधिक्यम्। अतः कषायकल्पना व्याध्यातुरबलापेक्षिणी। नत्वेवं खलु सर्वाणि सर्वत्रोपयोगीनि भवन्ति। पञ्चाशन्महाकषाया इति यदुक्तं तदनुव्याख्यास्यामः ॥ १३ ॥

तद्यथा। जीवनीयो बृंहणीयो लेखनीयो भेदनीयः सन्धानीयो दीपनीय इति षट्कः कषायवर्गः ॥ १४ ॥

बल्यो वर्ण्यः कण्ठ्यो हृद्य इति चतुष्कः कषायवर्गः ॥ १५ ॥

तृप्तिघ्नोऽर्शोघ्नः कुष्ठघ्नः कण्डूघ्नः क्रिमिघ्नो विषघ्न इति षट्कः कषायवर्गः ॥ १६ ॥

स्तन्यजननः स्तन्यशोधनः शुक्रजननः शुक्रशोधन इति चतुष्कः कषायवर्गः ॥ १७ ॥

स्नेहोपगः स्वेदोपगो वमनोपगो विरेचनोपग आस्थापनोपगोऽनुवासनोपगः शिरोविरेचनोपग इति सप्तकःकषायवर्गः ॥१८॥

छर्दिनिग्रहणस्तृष्णानिग्रहणो हिक्कानिग्रहण इति त्रिकः कषायवर्गः ॥ १८ ॥

पुरीषसंग्रहणीयः पुरीषविरजनीयो मूत्रसंग्रहणीयो मूत्रविरजनीयो मूत्रविरेचनीय इति पञ्चकः कषायवर्गः ॥ २० ॥

कासहरः श्वासहरः शोथहरो ज्वरहरः श्रमहर इति पञ्चकः कषायवर्गः ॥ २० ॥

दाहप्रशमनः शीतप्रशमन उदर्दप्रशमनोऽङ्गमर्दप्रशमनः शूलप्रशमन इति पञ्चकः कषायवर्गः ॥ २२ ॥

शोणितास्थापनो वेदनास्थापनः संज्ञास्थापनः प्रजास्थापनो वयःस्थापन इति पञ्चकः कषायवर्गः। इति पञ्चाशन्महाकषायाः ॥ २२ ॥

महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति। तेषामेकैकस्मिन् महाकषाये दशदशावयविकान् कषायाननुव्याख्यास्यामः। तान्येव पञ्च कषायशतानि भवन्ति ॥ २४ ॥

तद्यथा। जीवकर्षभकौ मेदा महामेदा काकोली क्षीरकाकोली मुद्गमाषपर्ण्यौ जीवन्ती मधुकमिति दशेमानि जीवनीयानि भवन्ति ॥ २५ ॥

क्षीरिणी राजक्षवक बला काकोली क्षीरकाकोली वाट्यायनी भद्रौदनी भारद्वाजी पयस्यर्ष्यगन्धा इति दशेमानि बृंहणीयानि भवन्ति ॥ २६ ॥

मुस्तकुष्ठहरिद्रादारुहरिद्रावचातिविषाकटुरोहिणी-चित्रकचिरविल्व हैमवत्य इति दशेमानि लेखनीयानि भवन्ति॥२७॥

सुवहार्कोरुवूकाग्निमुखीचित्राचित्रकचिरविल्वशङ्खिनीसकुलादनी स्वर्णक्षीरिण्य इति दशेमानि भेदनीयानि भवन्ति ॥ २८ ॥

मधुकमधुपर्णीपृश्निपर्ण्यम्बष्ठकीसमङ्गामोचरसधातकीलोध्रप्रियङ्गुकट्फलानीति दशेमानि सन्धानीयानि भवन्ति ॥ २८ ॥

पिप्पली-पिप्पलीमूलचव्यचित्रकशृङ्गवेराम्लवेतसमरिचाज-मोदाभल्लातकास्थिहिङ्गुनिर्यासा इति दशेमानि दीपनीयानि भवन्ति ॥ २० ॥ इति षट्कः कषायवर्गः॥

ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धास्थिरारोहिणीबलाति-बला इति दशेमानि बल्यानि भवन्ति ॥ २१ ॥

चन्दनतुङ्गपद्मकोशीरमधुकमञ्जिष्ठासारिवापयस्यासितालता इति दशेमानि वर्ण्यानि भवन्ति ॥ २२ ॥

सारिवेक्षुमूलमधुकपिप्पलीद्राक्षाविदारीकैटर्य्यहंसपदीबृहती-कण्टकारिका इति दशेमानि कण्ठ्यानि भवन्ति ॥ २३ ॥

आम्राम्रातकलिकुच-करमर्द-वृक्षाम्लाम्लवेतसकुवलयबदर-दाडिममातुलुङ्गानीति दशेमानि हृद्यानि भवन्ति। इति चतुष्कः कषायवर्गः ॥ २४ ॥

नागरचित्रकचव्यविडङ्गमूर्वागुडूचीवचामुस्तपिप्पलीपटोला-नीति दशेमानि तृप्तिघ्नानि भवन्ति ॥ २५ ॥

कुटजबिल्वचित्रकनागरातिविषाभयाधन्वयासकदारुहरिद्रा-यवानीव्यानीति दशेमानि अर्शोघ्नानि भवन्ति ॥ २६ ॥

खदिराभयामलकहरिद्रारुष्करसप्तपर्णारग्वधकरवीरविडङ्ग-जातिप्रवाला इति दशेमानि कुष्ठघ्नानि भवन्ति ॥ २७ ॥

चन्दननलदकृतमालनक्तमाल-निम्बकुटजसर्षप-मधुकदारु-हरिद्रामुस्तानीति दशेमानि कण्डूघ्नानि भवन्ति ॥ २८ ॥

अक्षीवमरिचगण्डीरकेबूकविडङ्गनिर्गुण्डीकिणिहीश्वदंष्ट्रा-वृषपर्णिकाखुपर्णिका इति दशेमानि क्रिमिघ्नानि भवन्ति ॥२९॥

हरिद्रामञ्जिष्ठासुवहासूक्ष्मैलापालिन्दीचन्दनकतकशिरीषसिन्धु-वारश्लेष्मातका इति दशेमानि विषघ्नानि भवन्ति। इति षट्कः कषायवर्गः ॥ ४० ॥

वीरणशालिषष्टिकेक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटकर्त्तृण-मूलानीति दशेमानि स्तन्यजननानि भवन्ति ॥ ४१ ॥

पाठामहौषधसुरदारुमुस्तमूर्वागुडूचीवत्सकफलकिराततिक्त-कटुरोहिणीशारिवा इति दशेमानि स्तन्यशोधनानि भवन्ति॥४२॥

जीवकर्षभककाकोलीक्षीरकाकोलीमुद्गपर्णीमाषपर्णीमेदावृद्ध-रुहाजटिलाकुलिङ्गा इति दशेमानि शुक्रजननानि भवन्ति ॥४३॥

कुष्ठैलवालुककट्फलसमुद्रफेनकदम्बनिर्यासेक्षुकाण्डेक्ष्विक्षु-रकवसुकोशीराणीति दशेमानि शुक्रशोधनानि भवन्ति। चतुष्कः कषायवर्गः ॥ ४४ ॥

मृद्वीकामधुकमधुपर्णीमेदाविदारीकाकोलीक्षीरकाकोली-जीवकजीवन्तीशालपर्ण्य इति दशेमानि स्नेहोपयोगानि भवन्ति ॥ ४५ ॥

शोभाञ्जनकैरण्डार्कवृश्चीरपुनर्नवायवतिलकुलत्थमाषवदरा-णीति दशेमानि स्वेदोपगानि भवन्ति ॥ ४६ ॥

मधुमधुककोविदारकर्वुदारनीपविदुलबिम्बीशणपुष्पीसदा-पुष्पीप्रत्यक्पुष्प्य इति दशेमानि वमनोपगानि भवन्ति ॥ ४७ ॥

द्राक्षाकाश्मर्य्यपरूषकाभयामलकविभीतककुवलवदरकर्कन्धू-पीलूनीति दशेमानि विरेचनोपगानि भवन्ति ॥ ४८ ॥

त्रिवृद्बिल्वपिप्पलीकुष्ठसर्षपवचावत्सकफलशतपुष्पामधुक-मदनफलानीति दशेमान्यास्थापनोपगानि भवन्ति ॥ ४९ ॥

रास्नासुरदारुबिल्वमदनशतपुष्पावृश्चीरपुनर्नवाश्वदंष्ट्राग्नि-मन्थश्योणाका इति दशेमानि अनुवासनोपगानि भवन्ति ॥५०॥

ज्योतिष्मतीक्षवकमरिच-पिप्पली-विडङ्ग-शिग्रु-सर्षपापामा-र्गतण्डुलश्वेतामहाश्वेता इति दशेमानि शिरोविरेचनोपगानि भवन्ति ॥ ५१ ॥ इति सप्तकः कषायवर्गः ।

जम्ब्वाम्रपल्लवमातुलुङ्गाम्लबदरदाडिमयवयष्टिकोशीरमृल्लाजा इति दशेमानि छर्दिनिग्रहाणि भवन्ति ॥ ५२ ॥

नागरधन्वयासकमुस्तपर्पटकचन्दनकिराततिक्तकगुडूचीह्री-वेरधान्यकपटोलानीति दशेमानि तृष्णानिग्रहाणि भवन्ति ॥५३॥

शटीपुष्करमूलबदरबीजकण्टकारिकाबृहतीवृक्षरुहाभया-पिप्पलीदुरालभाकुलीरशृङ्ग्य इति दशेमानि हिक्कानिग्रहाणि भवन्ति ॥ ५४ ॥ इति त्रिकः कषायवर्गः ।

प्रियङ्ग्वनन्ताम्रास्थि-कट्वङ्गलोध्रमोचरससमङ्गाधातकी-पुष्प-पद्मापद्मकेशराणीति दशेमानि पुरीषसंग्रहणानि भवन्ति ॥५५॥

जम्बुशल्लकीत्वक्कच्छुरामधुकशाल्मली-श्रीवेष्टकभृष्टमृत्पय-स्योत्पल-तिलकणा इति दशेमानि पुरीष-विरजनीयानि भवन्ति ॥ ५६ ॥

जम्ब्वाम्रप्लक्षवटकपीतनोडुम्बराश्वत्थभल्लातकाश्मन्तक सोम-वल्का इति दशेमानि मूत्रसंग्रहणानि भवन्ति ॥ ५७ ॥

वृक्षादनीश्वदंष्ट्रावसुकवशिरपाषाणभेददर्भकुशकाशगुन्द्रे त्-कटमूलानीति दशेमानि मूत्रविरेचनीयानि भवन्ति ॥ ५८ ॥

पद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रमधुकप्रिय-ङ्गुधातकीपुष्पाणीति दशेमानि मूत्रविरजनीयानि भवन्ति ॥५९॥

शारिवाशर्करापाठामञ्जिष्ठाद्राक्षापीलुपरूषकाभयामलक-विभीतकानीति दशेमानि ज्वरहराणि भवन्ति ॥ ६३ ॥

द्राक्षाखर्जूरपियाल-वदरदाड़िमफल्गुपरूषकेक्षु-यवयष्टिका इति दशेमानि श्रमहराणि भवन्ति। इति पञ्चकः कषायवर्गः। ६४

लाजाचन्दनकाश्मर्य्यफलमधुकशर्करानीलोत्पलोशीरशारि-वागुडूचीह्रीवेराणीति दशेमानि दाहप्रशमनानि भवन्ति ॥६५॥

तगरागुरुधन्याकशृङ्गवेरभूतीकवचाकण्टकारिकाग्निमन्थ-श्योणाकपिप्पल्य इति दशेमानि शीतप्रशमनानि भवन्ति ॥६६॥

तिन्दुकपियाल वदरखदिरकदरसप्तपर्णाश्वकर्णार्जुनासना-रिमेदा इति दशेमान्युदर्दप्रशमनानि भवन्ति ॥ ६७ ॥

विदारीगन्धा पृश्निपर्णी बृहती कण्टकारिकैरण्ड काकोली चन्दनोशीरैलामधुकानीति दशेमानि अङ्गमर्दप्रशमनानि भवन्ति ॥ ६८ ॥ .

पिप्पली पिप्पलीमूलचव्य चित्रकशृङ्गवेर मरिचाजमोदाज-गन्धाजाजीगण्डीराणीति दशेमानि शूलप्रशमनानि भवन्ति॥६९॥

इति पञ्चकः कषायवर्गः।

मधुमधुकरुधिरमोचरसमृत्कपाललोध्र गैरिकप्रियङ्गुशर्करा-लाजा इति दशेमानि शोणितास्थापनानि भवन्ति ॥ ७० ॥

शालकट्फलकदम्बपद्मकतुरङ्गमोचरस शिरीषवञ्जुलैलवा-लुकाशोका इति दशेमानि वेदनास्थापनानि भवन्ति ॥ ७१ ॥

हिङ्गुकैटर्य्यारिमेदावचाचोरक वयःस्था गोलोमी जटिला पलङ्कषाशोकरोहिण्य इति दशेमानि संज्ञास्थापनानिभवन्ति ॥७२

ऐन्द्री ब्राह्मी शतवीर्य्या सहस्रवीर्य्यामोघाव्यथाशिवारिष्टा-वाट्यपुष्पीविष्वक्सेनकान्ता इति दशेमानि प्रजास्थापनानि भवन्ति ॥ ७३ ॥

अमृताभया धात्री मुक्ता श्वेता जीवन्त्यतिरसा मण्डूकपर्णी स्थिरा पुनर्नवा इति दशेमानि वयःस्थापनानि भवन्ति ॥७४॥

जम्ब्वाम्रपल्लवमातुलुङ्गाम्लबदरदाडिमयवयष्टिकोशीरमृल्लाजा इति दशेमानि छर्दिनिग्रहाणि भवन्ति ॥ ५२ ॥

नागरधन्वयासकमुस्तपर्पटकचन्दनकिराततिक्तकगुडूचीह्री-वेरधान्यकपटोलानीति दशेमानि तृष्णानिग्रहाणि भवन्ति ॥५३॥

शटीपुष्करमूलबदरबीजकण्टकारिकाबृहतीवृक्षरुहाभया-पिप्पलीदुरालभाकुलीरशृङ्ग्य इति दशेमानि हिक्कानिग्रहाणि भवन्ति ॥ ५४ ॥ इति त्रिकः कषायवर्गः ।

प्रियङ्ग्वनन्ताम्रास्थि-कट्वङ्गलोध्रमोचरससमङ्गाधातकी-पुष्प पद्मापद्मकेशराणीति दशेमानि पुरीषसंग्रहणानि भवन्ति ॥५५॥

जम्ब्वशल्लकीत्वक्कच्छुरामधुकशाल्मली-श्रीवेष्टकभृष्टमृत्पय-स्योत्पल-तिलकणा इति दशेमानि पुरीष-विरजनीयानि भवन्ति ॥ ५६ ॥

जम्ब्वाम्रप्लक्षवटकपीतनोडुम्बराश्वत्थभल्लातकाश्मन्तक सोम-वल्का इति दशेमानि मूत्रसंग्रहणानि भवन्ति ॥ ५७ ॥

वृक्षादनीश्वदंष्ट्रावसुकवशिरपाषाणभेददर्भकुशकाशगुन्द्रेत्क-टमूलानीति दशेमानि मूत्रविरेचनीयानि भवन्ति ॥ ५८ ॥

पद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रमधुकप्रिय-ङ्गुधातकीपुष्पाणीति दशेमानि मूत्रविरजनीयानि भवन्ति ॥५९॥

इति पञ्चकः कषायवर्गः ।

द्राक्षाभयामलकपिप्पलीदुरालभाशृङ्गीकण्टकारिकाद्वयोर-पुनर्नवातामलक्य इति दशेमानि कासहराणि भवन्ति ॥६०॥

शटीपुष्करमूलाम्लवेतसैलाहिङ्ग्वगुरुसुरसातामलकीजीवन्ती-चण्डा इति दशेमानि श्वासहराणि भवन्ति ॥ ६१ ॥

पाटलाग्निमन्थबिल्वश्योणाककाश्मर्य्यकण्टकारिकाबृहती-शालपर्णीपृश्निपर्णीगोक्षुरका इति दशेमानि शोथहराणि भवन्ति ॥ ६२ ॥

शारिवाशर्करापाठामञ्जिष्ठाद्राक्षापीलुपरूषकाभयामलक-विभीतकानीति दशेमानि ज्वरहराणि भवन्ति ॥ ६३ ॥

द्राक्षाखर्जूरपियाल-बदरदाडिमफल्गुपरूषकेक्षु-यवयष्टिका इति दशेमानि श्रमहराणि भवन्ति। इति पञ्चक कषायवर्गः। ६४

लाजाचन्दनकाश्मर्य्यफलमधुकशर्करानीलोत्पलोशीरशारि-वागुडूचीह्रीवेराणीति दशेमानि दाहप्रशमनानि भवन्ति ॥६५॥

तगरागुरुधन्याकशृङ्गवेरभूतीकवचाकण्टकारिकाग्निमन्थ-श्योणाकपिप्पल्य इति दशेमानि शीतप्रशमनानि भवन्ति ॥६६॥

तिन्दुकपियाल बदरखदिरकदरसप्तपर्णाश्वकर्णार्जुनासना-रिमेदा इति दशेमान्युदर्दप्रशमनानि भवन्ति ॥ ६७ ॥

विदारीगन्धा पृश्निपर्णी बृहती कण्टकारिकैरण्ड काकोली चन्दनोशीरैलामधुकानीति दशेमानि अङ्गमर्दप्रशमनानि भवन्ति ॥ ६८ ॥

पिप्पली पिप्पलीमूलचव्य चित्रकशृङ्गवेर मरिचाजमोदाज-गन्धाजाजीगण्डीराणीति दशेमानि शूलप्रशमनानि भवन्ति॥६९॥
इति पञ्चकः कषायवर्गः।

मधुमधुकरुधिरमोचरसमृत्कपाललोध्र गैरिकप्रियङ्गुशर्करा-लाजा इति दशेमानि शोणितास्थापनानि भवन्ति ॥ ७० ॥

शालकट्फलकदम्बपद्मकतुरङ्गमोचरस शिरीषवञ्जुलैलवा-लुकाशोका इति दशेमानि वेदनास्थापनानि भवन्ति ॥ ७१ ॥

हिङ्गुकैटर्य्यारिमेदावचाचोरक वयःस्था गोलोमी जटिला पलङ्कषाशोकरोहिण्य इति दशेमानि सञ्ज्ञास्थापनानिभवन्ति ॥७२

ऐन्द्री ब्राह्मी शतवीर्य्या सहस्रवीर्य्यामोघाव्यथाशिवारिष्टा-वाट्यपुष्पीविष्वक्सेनकान्ता इति दशेमानि प्रजास्थापनानि भवन्ति ॥ ७३ ॥

अमृताभया धात्री मुक्ता श्वेता जीवन्त्यतिरसा मण्डूकपर्णी स्थिरा पुनर्नवा इति दशेमानि वयःस्थापनानि भवन्ति ॥७४॥

इति पञ्चकः कषायवर्गः ।

इति पञ्चकषायशतान्यभिसमस्य पञ्चाशन्महाकषायाः महताञ्च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति ॥ ७५ ॥

न हि विस्तरस्य प्रमाणमस्ति न चाप्यतिसंक्षेपोऽल्पबुद्धीनां सामर्थ्यायोपकल्पते । तस्मादनति-संक्षेपेणानति-विस्तरेण चोद्दिष्टाः । एतावन्तो ह्यल्पबुद्धीनां व्यवहाराय बुद्धिमताञ्च स्वालक्षण्यानुमानयुक्तिकुशलाना मनुक्तार्थं ज्ञानायेति ॥७६॥

एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच नैतानि भगवन् पञ्चकषायशतानि पूर्य्यन्ते । तानि तानि ह्येवाङ्गानि संप्लवन्ते तेषु तेषु महाकषायेष्विति ॥ ७७ ॥

तमुवाच भगवानात्रेयः । नैतदेवं बुद्धिमता द्रष्टव्यमग्निवेश । एकोऽपि ह्यनेकां सञ्ज्ञां लभते कार्य्यान्तराणि कुर्वन् । तद्यथा पुरुषो बहूनां कर्म्मणां करणे समर्थो भवति । स यद्यत्कर्म्म करोति तस्य तस्य कर्म्मणः कर्त्तृकरणकार्य्यसंप्रयुक्तं तत्तद्गौणं नामविशेषं प्राप्नोति । तद्वदोषधद्रव्यमपि द्रष्टव्यम् । यदि चैकमेव किञ्चिद्द्रव्यमासादयामस्तथा गुणयुक्तं यत्सर्वकर्म्मणां करणे समर्थं स्यात् कस्ततोऽन्यदिच्छेदुपधारयितुमुपदेष्टुं वा शिष्येभ्य इति ॥ ७८ ॥

तत्र श्लोकाः ।

यतो यावन्ति यैर्द्रव्यैर्विरेचनशतानि षट् ।
उक्तानि संग्रहेणेह तथैवैषां षडाश्रयाः ॥ ७९ ॥
रसा लवणवर्ज्याश्च कषाया इति संज्ञिताः ।
तस्मात्पञ्चविधा योनिः कषायाणामुदाहृता ॥ ८० ॥
तथा कल्पनमप्येषामुक्तं पञ्चविधं पुनः ।
महताञ्च कषायाणां पञ्चाशत्परिकीर्त्तिताः ॥ ८१ ॥
पञ्च चापि कषायाणां शतान्युक्तानि भागशः ।

लक्षणार्थे प्रमाणं हि विस्तरस्य न विद्यते ॥ ८२ ॥
न चालमतिसंक्षेपः सामर्थ्यायोपकल्पते ।
अल्पबुद्धेरयं तस्मान्नातिसंक्षेपविस्तरः ॥ ८३ ॥
मन्दानां व्यवहाराय बुधानां बुद्धिवृद्धये ।
पञ्चाशत्को ह्ययं वर्गः कषायाणामुदाहृतः ॥ ८४ ॥
तेषां कर्मसु बाह्येषु योगमाभ्यन्तरेषु च ।
संयोगं च वियोगञ्च यो वेद स भिषग्वरः ॥ ८५ ॥

इति षड्विरेचनशताश्रितीयो नाम चतुर्थोऽध्यायः समाप्तः ।

---

## अथ पञ्चमोऽध्यायः ।

अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः । मात्राशी स्यात् । आहारमात्रा पुनरग्निबलापेक्षिणी । यावत् ह्यस्याशनमशितमनुपहत्य प्रकृतिं यथाकालं जरां गच्छति तावदस्य मात्राप्रमाणं वेदितव्यं भवति । तत्र शालिषष्टिकमुद्गलावकपिञ्जलैणशशशरभशम्बरादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ति । तथा पिष्टेक्षुक्षीरविकृतिमाषानूपौदकपिशितादीन्याहारद्रव्याणि प्रकृतिगुरूण्यपि मात्रामेवापेक्षन्ते । न चैवमुक्ते द्रव्ये गुरुलाघवमकारणं मन्येत । लघूनि हि द्रव्याणि वाय्वग्निगुणबहुलानि भवन्ति । पृथ्वीसोमगुणबहुलानीतराणि । तस्मात् स्वगुणादपि लघून्यग्निसन्धुक्षणस्वभावान्यल्पदोषाणि चोच्यन्तेऽपि सौहित्योपयुक्तानि । गुरूणि पुनर्नाग्निसन्धुक्षणस्वभावान्यसामान्यादतश्चातिमात्रं दोषवन्ति सौहित्योपयुक्तान्यन्यत्र व्यायामाग्निबलात् । सैषा भवत्यग्निबलापेक्षिणी मात्रा न च नापेक्षते द्रव्यम् । द्रव्यापेक्षया च त्रिभागसौहित्यमर्धसौहित्यं वा

हरेणुकां प्रियङ्गुञ्च पृथ्वीकां केशरं नखम् ।
ह्रीवेरं चन्दनं पत्रं त्वगेलोशीरपद्मकम् ॥ १४ ॥
ध्यामकं मधुकं मांसी गुग्गुल्वगुरुशर्करम् ।
न्यग्रोधोडुम्बराश्वत्थप्लक्षलोध्रत्वचः शुभाः ॥ १५ ॥
वन्यं सर्जरसं मुस्तं शैलेयं कमलोत्पले ।
श्रीवेष्टकं शल्लकीञ्च शुकबर्हमथापि च ॥ १६ ॥
पिष्ट्वा लिम्पेच्छरेषिकां तां वर्त्तिं यवसन्निभाम् ।
अङ्गुष्ठसंमितां कुर्यादष्टाङ्गुलसमां भिषक् ॥ १७ ॥
शुष्कां विगर्भां तां वर्त्तिं धूमनेत्रार्पितां नरः ।
स्नेहाक्तामग्निसंप्लुष्टां पिबेत्प्रायोगिकीं सुखाम् ॥ १८ ॥
वसाघृतमधूच्छिष्टैर्युक्तियुक्तैर्वरौषधैः ।
वर्त्तिं मधुरकैः कृत्वा स्नैहिकीं धूममाचरेत् ॥ १९ ॥
श्वेता ज्योतिष्मती चैव हरितालं मनःशिला ।
गन्धाश्चागुरुपत्राद्या धूमं मूर्द्धविरेचनम् ॥ २० ॥
गौरवं शिरसः शूलं पीनसार्द्धावभेदकौ ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥ २१ ॥
दन्तदौर्बल्यमास्रावः स्रोतोघ्राणाक्षिदोषजः ।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकः ॥ २२ ॥
हनुमन्याग्रहः कण्डूः क्रिमयः पाण्डुता मुखे ।
श्लेष्मप्रसेको वैस्वर्यं गलशुण्ड्युपजिह्विका ॥ २३ ॥
खालित्यं पिञ्जरत्वञ्च केशानां पतनं तथा ।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥ २४ ॥
धूमपानात् प्रशाम्यन्ति बलं भवति चाधिकम् ।
शिरोरुहकपालानामिन्द्रियाणां स्वरस्य च ॥ २५ ॥
न च वातकफात्मानो बलिनोऽप्यूर्द्ध्वजत्रुजाः ।
धूमवक्त्रकपानस्य व्याधयः स्युः शिरोगताः ॥ २६ ॥

प्रयोगपाने तस्याष्टौ कालाः सम्परिकीर्त्तिताः ।
वातश्लेष्मसमुत्क्लेशः कालेष्वेषु हि लक्ष्यते ॥ २७ ॥
स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्वा दन्तान् विघृष्य च ।
नावनाञ्जननिद्रान्ते चात्मवान् धूमपो भवेत् ॥ २८ ॥
तथा वातकफात्मानो न भवन्त्यूर्द्ध्वजत्रुजाः ।
रोगास्तस्य तु पेयाः स्युरापानास्त्रिस्त्रयस्त्रयः ॥ २९ ॥
परं द्विकालपायी स्यादह्नः कालेषु बुद्धिमान् ।
प्रयोगे स्नैहिके त्वेकं वैरेच्यं त्रिचतुः पिबेत् ॥ ३० ॥
हृत्कण्ठेन्द्रियसंशुद्धिर्लघुत्वं शिरसः शमः ।
यथेरितानां दोषाणां सम्यक्पीतस्य लक्षणम् ॥ ३१ ॥
बाधिर्य्यमान्ध्यं मूकत्वं रक्तपित्तं शिरोभ्रमम् ।
अकाले चातिपीतश्च धूमः कुर्य्यादुपद्रवान् ॥ ३२ ॥
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ।
स्नैहिकं धूमजे दोषे वायुः पित्तानुगो यदि ॥ ३३ ॥
शीतन्तु रक्तपित्ते स्यात् श्लेष्मपित्ते विरूक्षणम् ।
परन्त्वतः प्रवक्ष्यामि धूमो येषां विगर्हितः ॥ ३४ ॥
न विरिक्तः पिबेद्धूमं न कृते वस्तिकर्म्मणि ।
न रक्ती न विषेणार्त्तो न शोची न च गर्भिणी ॥ ३५ ॥
न श्रमे न मदे नामे न पित्ते न प्रजागरे ।
न मूर्च्छाभ्रमतृष्णासु न क्षीणे नापि च क्षते ॥ ३६ ॥
न मद्यदुग्धे पीत्वा च न स्नेहं न च माक्षिकम् ।
धूमं न भुक्त्वा दध्ना च न रूक्षः क्रुद्ध एव च ॥ ३७ ॥
न तालुशोषे तिमिरे शिरस्यभिहते न च ।
न शङ्खके न रोहिण्यां न मेहे न मदात्यये ॥ ३८ ॥
एषु धूममकालेषु मोहात् पिबति यो नरः ।
रोगास्तस्य प्रवर्द्धन्ते दारुणा धूमविभ्रमात् ॥ ३९ ॥

धूमयोग्यः पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये ।
घ्राणेनास्येन कण्ठस्थे मुखेन घ्राणपो वमेत् ॥ ४० ॥
आस्येन धूमकवलान् पिबन् घ्राणेन नोद्वमेत् ।
प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी ॥ ४१ ॥
ऋज्वङ्गचक्षुस्तच्चेताः सूपविष्टस्त्रिपर्य्ययम् ।
पिबेच्छिद्रं पिधायैकं नासया धूममात्मवान् ॥ ४२ ॥
चतुर्विंशतिकं नेत्रं स्वाङ्गुलीभिर्विरेचने ।
द्वात्रिंशदङ्गुलं स्नेहे प्रयोगे चाष्टमिष्यते ॥ ४३ ॥
ऋजुत्रिकोषाफलितं कोलास्थ्यग्रप्रमाणितम् ।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते ॥ ४४ ॥
दूराद्विनिर्गतः पर्वच्छिन्नो नाड़ीतनूकृतः ।
नेन्द्रियं बाधते धूमो मात्राकालनिषेवितः ॥ ४५ ॥
यदा चोरश्च कण्ठश्च शिरश्च लघुतां व्रजेत् ।
कफश्च तनुतां प्राप्तः सुपीतं धूममादिशेत् ॥ ४६ ॥
अविशुद्धः स्वरो यस्य कण्ठश्च सकफो भवेत् ।
स्तिमितो मस्तकश्चैव न पीतं धूममादिशेत् ॥ ४७ ॥
तालु मूर्द्धा च कण्ठश्च शुष्यते परितप्यते ।
तृष्यते मुह्यते जन्तू रक्तञ्च स्रवतेऽधिकम् ॥ ४८ ॥
शिरश्च भ्रमतेऽत्यर्थं मूर्च्छा चास्योपजायते ।
इन्द्रियाण्युपतप्यन्ते धूमेऽत्यर्थं निषेविते ॥ ४९ ॥
वर्षावर्षेऽणुतैलञ्च कालेषु त्रिषु नाचरेत् ।
प्रावृट्शरद्वसन्तेषु गतमेघे नभस्तले ॥ ५० ॥
नस्य कर्म यथाकालं यो यथोक्तं निषेवते ।
न तस्य चक्षुर्न घ्राणं न श्रोत्रमुपहन्यते ॥ ५१ ॥
न स्युः श्वेता न कपिलाः केशाः श्मश्रूणि वा पुनः ।
न च केशाः प्रलुप्यन्ते वर्द्धन्ते च विशेषतः ॥ ५२ ॥

मन्यास्तथा शिरः शूलमर्दितं हनुसंग्रहः ।
पीनसार्धावभेदौ च शिरः कम्पश्च शाम्यति ॥ ५३ ॥
शिराः शिरः कपालानां सन्धयः स्नायुकण्डराः ।
नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥ ५४ ॥
मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान् ।
सर्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम् ।
न चास्य रोगाः सहसा प्रभवन्त्यूर्ध्वजत्रुजाः ।
जीर्यतश्चोत्तमाङ्गे च जरा न लभते बलम् ॥ ५५ ॥
चन्दनागुरुणी पत्रं दार्वीत्वङ् मधुकं बलाम् ।
प्रपौण्डरीकं सूक्ष्मैलां विडङ्गं बिल्वमुत्पलम् ॥ ५६ ॥
ह्रीवेरमभयं वन्यं त्वङ्मुस्तं शारिवां स्थिराम् ।
सुराह्वं पृश्निपर्णीञ्च जीवन्तीञ्च शतावरीम् ॥ ५७ ॥
हरेणुं बृहतीं व्याघ्रीं सुरभीं पद्मकेशरम् ।
विपाचयेच्छतगुणे माहेन्द्रे विमलेऽम्भसि ॥ ५८ ॥
तैलाद्दशगुणं शेषं कषायमवतारयेत् ।
तेन तैलं कषायेण दशकृत्वो विपाचयेत् ॥ ५९ ॥
अथास्य दशमे पाके समांशं छागलं पयः ।
दद्यादेषोऽणुतैलस्य नावनीयस्य संविधिः ॥ ६० ॥
तस्य मात्रां प्रयुञ्जीत तैलस्यार्द्धपलोन्मिताम् ।
स्निग्धस्विन्नोत्तमाङ्गस्य पिचुना नावनैस्त्रिभिः ॥ ६१ ॥
त्र्यहात्त्र्यहाच्च सप्ताहमेतत्कर्म समाचरेत् ।
निवातोष्णसमाचारो हिताशी नियतेन्द्रियः ॥ ६२ ॥
तैलमेतत्त्रिदोषघ्नमिन्द्रियाणां बलप्रदम् ।
प्रयुञ्जानो यथाकालं यथोक्तानश्नुते गुणान् ॥ ६३ ॥
आपोथिताग्रं द्वौ कालौ कषायं कटुतिक्तकम् ।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥ ६४ ॥

निहन्ति गन्धवैरस्यं जिह्वादन्तास्यजं मलम्।
निष्कृष्य रुचिमाधत्ते सद्यो दन्तविशोधनम्॥ ६५॥
सुवर्णरूप्यताम्राणि त्रपुरीतिमयानि च।
जिह्वानिर्लेखनानि स्युरतीक्ष्णान्यनृजूनि च॥ ६६॥
जिह्वामूलगतं यच्च मलमुच्छ्वासरोधि च।
सौगन्ध्यं भजते तेन तस्माज्जिह्वां विनिर्लिखेत्॥ ६७॥
करञ्जकरवीरार्कमालतीककुभासनाः।
शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः॥ ६८॥
धार्य्याण्यास्येन वैशद्यरुचिसौगन्ध्यमिच्छता।
जातीकटुकपूगानां लवङ्गस्य फलानि च॥ ६९॥
कक्कोलकफलं पत्रं ताम्बूलस्य शुभं तथा।
तथा कर्पूरनिर्य्यासः सूक्ष्मैलायाः फलानि च॥ ७०॥
हन्वोर्बलं स्वरबलं वदनोपचयः परः।
स्याात्परञ्च रसज्ञानमन्ने च रुचिरुत्तमा॥ ७१॥
न चास्य कण्ठशोषः स्यान्नौष्ठयोः स्फुटनाद्भयम्।
न च दन्ताः क्षयं यान्ति दृढमूला भवन्ति च॥ ७२॥
न शूल्यन्ते न चाम्लेन हृष्यन्ते भक्षयन्ति च।
परानपि खरान् भक्ष्यान् तैलगण्डूषसेवनात्॥ ७३॥
नित्यं स्नेहार्द्रशिरसः शिरःशूलं न जायते।
न खालित्यं न पालित्यं न केशाः प्रपतन्ति च॥ ७४॥
बलं शिरःकपालानां विशेषेणाभिवर्द्धते।
दृढमूलाश्च दीर्घाश्च कृष्णाः केशा भवन्ति च॥ ७५॥
इन्द्रियाणि प्रसीदन्ति सुत्वग्भवति चाननम्।
निद्रालाभः सुखञ्च स्यान्मूर्ध्नि तैलनिषेवणात्॥ ७६॥
न कर्णरोगा वातोत्थाः न मन्याहनुसंग्रहः।
नोच्चैः श्रुतिर्न बाधिर्य्यं स्यान्नित्यं कर्णतर्पणात्॥ ७७॥

स्नेहाभ्यङ्गाद्यथा कुम्भश्चर्म स्नेहविमर्दनात् ।
भवत्युपाङ्गादक्षश्च दृढः क्लेशसहो यथा ।
तथा शरीरमभ्यङ्गाद्दृढं सुत्वक् प्रजायते ॥ ७८ ॥
प्रशान्तमारुताबाधं क्लेशव्यायामसंसहम् ।
स्पर्शने चाधिको वायुः स्पर्शनञ्च त्वगाश्रितम् ।
त्वच्यश्च परमोऽभ्यङ्गस्तस्मात्तं शीलयेन्नरः ॥ ७९ ॥
न चाभिघाताभिहतं गात्रमभ्यङ्गसेविनः ।
विकारं भजतेऽत्यर्थं बलकर्मणि वा क्वचित् ॥ ८० ॥
सुस्पर्शोपचिताङ्गश्च बलवान् प्रियदर्शनः ।
भवत्यभ्यङ्गनित्यत्वान्नरोऽल्पजर एव च ॥ ८१ ॥
खरत्वं शुष्कतां रौक्ष्यं श्रमः सुप्तिश्च पादयोः ।
सद्य एवोपशाम्यन्ति पादाभ्यङ्गनिषेवणात् ॥ ८२ ॥
जायते सौकुमार्यञ्च बलं स्थैर्यञ्च पादयोः ।
दृष्टिः प्रसादं लभते मारुतश्चोपशाम्यति ॥ ८३ ॥
न च स्याद् गृध्रसीवातः पादयोः स्फुटनं न च ।
न शिरास्नायुसङ्कोचः पादाभ्यङ्गेन पादयोः ॥ ८४ ॥
दौर्गन्ध्यं गौरवं तन्द्रां कण्डूमलमरोचकम् ।
स्वेदं बीभत्सतां हन्ति शरीरपरिमार्जनम् ॥ ८५ ॥
पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम् ।
शरीरबलसन्धानं स्नानमोजस्करं परम् ॥ ८६ ॥
काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम् ।
श्रीमत्पारिषदं शस्तं निर्मलाम्बरधारणम् ॥ ८७ ॥
वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम् ।
सौमनस्यमलक्ष्मीघ्नं गन्धमाल्यनिषेवणम् ॥ ८८ ॥
धन्यं मङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनम् ।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥ ८९ ॥

मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम्।
पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥ ८० ॥
पौष्टिकं वृष्यमायुष्यं शुचिरूपविराजनम्।
केशश्मश्रुनखादीनां कल्पनं संप्रसाधनम् ॥ ८१ ॥
चक्षुष्यं स्पर्शनहितं पादयोर्व्यसनापहम्।
बल्यं पराक्रमसुखं वृष्यं पादत्रधारणम् ॥ ८२ ॥
ईतेः प्रशमनं बल्यं गुप्त्यावरणशङ्करम्।
घर्मानिलरजोऽम्बुघ्नं छत्रधारणमुच्यते।
स्खलतः संप्रतिष्ठानं शत्रूणाञ्च निषेधनम् ॥ ८३ ॥
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम्।
नगरी नगरस्येव रथस्येव रथी सदा ॥ ८४ ॥
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत्।
भवति चात्र। वृत्त्युपायान्निषेवेत ये स्युर्धर्माविरोधिनः।
शममध्ययनञ्चैव सुखमेवं समश्नुते ॥ ८५ ॥
तत्र श्लोकाः। मात्रा द्रव्याणि मात्राञ्च संश्रित्य गुरुलाघवम्।
द्रव्याणां गर्हितोऽभ्यासो येषां येषाञ्च शस्यते ॥ ८६ ॥
अञ्जनं धूमवर्त्तिश्च त्रिविधा वर्त्तिकल्पना।
धूमपानगुणाः कालाः पानमानञ्च यस्य यत् ॥ ८७ ॥
व्यापत्ति चिह्नं भैषज्यं धूमो येषां विगर्हितः।
पेयो यथा यन्मयञ्च नेत्रं यस्य च यद्विधम् ॥ ८८ ॥
नस्य कर्मगुणा नस्तः कार्य्यं यच्च यथा यदा।
भक्षयेद्दन्तपवनं यथा यद्यद् गुणश्च यत् ॥ ८९ ॥
यदर्थं यानि चास्येन धार्य्याणि कवलग्रहे।
तैलस्य ये गुणा दृष्टा शिरस्तैलगुणाश्च ये ॥ १०० ॥
कर्णतैले तथाभ्यङ्गे पादाभ्यङ्गे च मार्जने।
स्नाने वाससि शुद्धे च सौगन्ध्ये रत्नधारणे ॥ १०१ ॥

सन्तापे जगत्यम्ला रसाः प्रवर्द्धन्तेऽम्ललवणमधुरा यथाक्रमं तत्र बलमुपचीयन्ते नृणामिति ॥ ६ ॥

भवन्ति चात्र । आदावन्ते च दौर्बल्यं विसर्गादानयोर्नृणाम् ।
मध्ये मध्यबलन्त्वन्ते श्रेष्ठमग्रे च निर्दिशेत् ॥ ७ ॥
शीते शीतानिलस्पर्शसंरुद्धो बलिनां बली ।
पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः ॥ ८ ॥
स यदा नेन्धनं युक्तं लभते देहजं तदा ।
रस हिनस्त्यतो वायुः शीतः शीते प्रकुप्यति ॥ ९ ॥
तस्मात्तुषारसमये स्निग्धाम्ललवणान् रसान् ।
औदकानूपमांसानां मेध्यानामुपयोजयेत् ॥ १० ॥
बिलेशयानां मांसानि प्रसहानां श्रुतानि च ।
भक्षयेन्मदिरां सीधुं मधु चानुपिबेत् नरः ॥ ११ ॥
गोरसानिक्षुविकृतीर्वसां तैलं नवौदनम् ।
हेमन्तेऽभ्यस्यतस्तोयमुष्णञ्चायुर्न क्षीयते ॥ १२ ॥
अभ्यङ्गोत्सादनं मूर्ध्नि तैलं जेन्ताकमातपम् ।
भजेद्भूमिगृहञ्चोष्णमुष्णं गर्भगृहं तथा ॥ १३ ॥
शीते सुसंवृतं सेव्य यानं शयनमासनम् ।
प्रावाराजिनकौषेयप्रवेणीकुथकास्तृतम् ॥ १४ ॥
गुरूष्णवासा दिग्धाङ्गो गुरुणाऽगुरुणा सदा ।
शयने प्रमदां पीनां विशालोपचितस्तनीम् ॥ १५ ॥
आलिङ्ग्याऽगुरुदिग्धाङ्गी सुप्यात् समदमन्मथाम् ।
प्रकामञ्च निषेवेत मैथुनं शिशिरागमे ॥ १६ ॥
वर्जयेदन्नपानानि लघूनि वातलानि च ।
प्रवातं प्रमिताहारमुदमन्थं हिमागमे ॥ १७ ॥
हेमन्तशिशिरे तुल्ये शिशिरेऽल्पं विशेषणम् ।
रौक्ष्यमादानजं शीतं मेघमारुतवर्षजम् ॥ १८ ॥

तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ।
निवातमुष्णमधिकं शिशिरे गृहमाश्रयेत् ॥ १९ ॥
कटुतिक्तकषायाणि वातलानि लघूनि च ।
वर्जयेदन्नपानानि शिशिरे शीतलानि च ॥ २० ॥
हेमन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः ।
कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून् ॥ २१ ॥
तस्माद्वसन्ते कर्माणि वमनादीनि कारयेत् ।
गुर्वम्लस्निग्धमधुरं दिवास्वप्नं च वर्जयेत् ॥ २२ ॥
व्यायामोद्वर्त्तनं धूमं कवलग्रहमञ्जनम् ।
सुखाम्बुना शौचविधिं शीलयेत् कुसुमागमे ॥ २३ ॥
चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः ।
शारभं शाशमैणेयं मांसं लावकपिञ्जलम् ॥ २४ ॥
भक्षयेन्निगदं सीधुं पिबेन्माध्वीकमेव वा ।
वसन्तेऽनुभवेत् स्त्रीणां काननानाञ्च यौवनम् ॥ २५ ॥
मयूखैर्जगतः सारं ग्रीष्मे पेपीयते रविः ।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥ २६ ॥
शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः ।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥ २७ ॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम् ।
लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत् ॥ २८ ॥
दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले ।
भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्यमस्तके ॥ २९ ॥
व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः ।
सेव्यमानो भजेदास्यां मुक्तामणिविभूषितः ॥ ३० ॥
काननानि च शीतानि जलानि कुसुमानि च ।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥ ३१ ॥

चादानदुर्बले देहे पक्ता भवति दुर्बलः।
स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः॥ ३२॥
भूवाष्पान्मेघनिस्यन्दात् पाकादम्लाज्जलस्य च।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः॥ ३३॥
तस्मात् साधारणः सर्वो विधिर्वर्षासु चेष्यते।
उदमन्थं दिवास्वप्नमवश्यायं नदीजलम्॥ ३४॥
व्यायाममातपञ्चैव व्यवायञ्चात्र वर्जयेत्।
पानभोजनसंस्कारान् प्रायः क्षौद्रान्वितान् भजेत्॥ ३५॥
व्यक्ताम्ललवणस्नेहं वातावर्षाकुलेऽहनि।
विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये॥ ३६॥
अग्निं संरक्षणवता यवगोधूमशालयः।
पुराणा जाङ्गलैर्मांसैर्भोज्या यूषैश्च संस्कृतैः॥ ३७॥
पिबेत् क्षौद्रान्वितञ्चाल्पं माध्वीकारिष्टमम्बु वा।
माहेन्द्रं तप्तशीतं वा कौपं सारसमेव वा॥ ३८॥
प्रघर्षोद्वर्त्तनस्नानगन्धमाल्यपरो भवेत्।
लघुशुद्धाम्बरः स्थानं भजेदक्लेदि वार्षिकम्॥ ३९॥
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति॥ ४०॥
तत्रान्नपानं मधुरं लघुशीतं सतिक्तकम्।
पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः॥ ४१॥
लावान् कपिञ्जलानेणानुरभ्रान् शरभान् शशान्।
शालीन् सयवगोधूमान् सेव्यानाहुर्घनात्यये॥ ४२॥
तिक्तस्य सर्पिषः पानं विरेको रक्तमोक्षणम्।
धाराधरात्यये कार्यमातपस्य च वर्जनम्॥ ४३॥
वसां तैलमवश्याय मौदकानूपमामिषम्।
क्षारं दधि दिवास्वप्नं प्राग्वातञ्चात्र वर्जयेत्॥ ४४॥

दिवा सूर्यांशुसन्तप्तं निशि चन्द्रांशुशीतलम्।
कालेन पक्वं निर्दोषमगस्त्येनाविषीकृतम् ॥ ४५ ॥
हंसोदकमिति ख्यातं शारदं विमलं शुचि।
स्नानपानावगाहेषु शस्यते तद्यथामृतम् ॥ ४६ ॥
शारदानि च माल्यानि वासांसि विमलानि च।
शरत्काले प्रशस्यन्ते प्रदोषे चन्द्ररश्मयः ॥ ४७ ॥
इत्युक्तमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम्।
उपशेते यदौचित्यादोकसात्म्यं तदुच्यते ॥ ४८ ॥
दोषाणामामयानाञ्च विपरीतगुणं गुणैः।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितं चाद्यमेव च ॥ ४९ ॥ इति
तत्र श्लोकः। ऋतावृतौ नृभिः सेव्यमसेव्यं यच्च किञ्चन।
तस्याशितीये निर्दिष्टं हेतुमत्सात्म्यमेव च ॥ ५० ॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते।
तस्याशितीयो नाम षष्ठोऽध्यायः।

---

## सप्तमोऽध्यायः।

अथातो न वेगान् धारणीयमध्यायं व्याख्यास्यामः।
इति ह स्माह भगवानात्रेयः।

न वेगान् धारयेद्धीमान् जातान् मूत्रपुरीषयोः।
न रेतसो न वातस्य न वम्याः क्षवथोर्न च ॥ १ ॥
नोद्गारस्य न जृम्भाया न वेगान् क्षुत्पिपासयोः।
न वाष्पस्य न निद्राया न श्वासस्य श्रमेण च ॥ २ ॥
एतान् धारयतो जातान् वेगान् रोगा भवन्ति ये।
पृथक् पृथक् चिकित्सार्थं तान् मे निगदतः शृणु ॥ ३ ॥
वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा।
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥४॥

स्वेदावगाहनाभ्यङ्गान् सर्पिषश्चावपीडकम्।
मूत्रे प्रतिहते कुर्यात् त्रिविधं वस्तिकर्म च ॥ ५ ॥
पक्वाशयशिरःशूलं वातवर्चोनिरोधनम्।
पिण्डिकोद्वेष्टनाध्मानं पुरीषे स्याद्विधारिते ॥ ६ ॥
स्वेदाभ्यङ्गावगाहाश्च वर्त्तयो वस्तिकर्म च।
हितं प्रतिहते वर्चस्यन्नपानं प्रमाथि च ॥ ७ ॥
मेढ्रे वृषणयोः शूलमङ्गमर्दो हृदि व्यथा।
भवेत् प्रतिहते शुक्रे विबद्धं मूत्रमेव च ॥ ८ ॥
तत्राभ्यङ्गावगाहाश्च मदिरा चरणायुधाः।
शालिः पयोनिरूहाश्च शस्तं मैथुनमेव च ॥ ९ ॥
वातमूत्रपुरीषाणां सङ्गाध्मानं क्लमो रुजा।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ १० ॥
स्नेहस्वेदविधिस्तत्र वर्त्तयो भोजनानि च।
पानानि वस्तयश्चैव शस्तं वातानुलोमनम् ॥ ११ ॥
कण्डूकोठाऽरुचिव्यङ्गशोथपाण्ड्वामयज्वराः।
कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः ॥ १२ ॥
भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम्।
रूक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते ॥ १३ ॥
मन्यास्तम्भः शिरःशूलमर्दितावर्धभेदकौ।
इन्द्रियाणाञ्च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥ १४ ॥
तत्रोर्द्ध्वजत्रुकेऽभ्यङ्गः स्वेदो धूमः सनावनः।
हितं वातघ्नमाद्यञ्च घृतञ्चोत्तरभक्तिकम् ॥ १५ ॥
हिक्काकासोऽरुचिः कम्पो विबन्धो हृदयोरसोः।
उद्गारनिग्रहात्तत्र हिक्कायास्तुल्यमौषधम् ॥ १६ ॥
विनामाक्षेपसङ्कोचाः सुप्तिः कम्पः प्रवेपनम्।
जृम्भाया निग्रहात्तत्र सर्वं वातघ्नमौषधम् ॥ १७ ॥

कार्श्यदौर्बल्यवैवर्ण्यमङ्गमर्दोऽरुचिर्भ्रमः ।
क्षुद्वेगनिग्रहात्तत्र स्निग्धोष्णं लघुभोजनम् ॥ १८ ॥
कण्ठास्यशोषो बाधिर्यं श्रमः श्वासो हृदि व्यथा ।
पिपासानिग्रहात् तत्र शीतं तर्पणमिष्यते ॥ १९ ॥
प्रतिश्यायोऽक्षिरोगश्च हृद्रोगश्चारुचिर्भ्रमः ।
बाष्पनिग्रहणात्तत्र स्वप्नो मद्यं प्रियाः कथाः ॥ २० ॥
जृम्भाङ्गमर्दस्तन्द्रा च शिरोरोगाक्षिगौरवम् ।
निद्राविधारणात् तत्र स्वप्नः संवाहनानि च ॥ २१ ॥
गुल्महृद्रोगसम्मोहाः श्रमनिश्वासधारणात् ।
जायन्ते तत्र विश्रामो वातघ्न्यश्च क्रिया हिताः ॥ २२ ॥
वेगनिग्रहजा रोगा य एते परिकीर्त्तिताः ।
इच्छंस्तेषामनुत्पत्तिं वेगानेतान्न धारयेत् ॥ २३ ॥
इमांस्तु धारयेद्वेगान् हितैषी प्रेत्य चेह च ।
साहसानामशस्तानां मनोवाक्कायकर्मणाम् ॥ २४ ॥
लोभशोकभयक्रोधमानवेगान् विधारयेत् ।
नैर्लज्ज्येर्ष्यातिरागाणामभिध्यायाश्च बुद्धिमान् ॥ २५ ॥
परुषस्यातिमात्रस्य सूचकस्यानृतस्य च ।
वाक्यस्याकालयुक्तस्य धारयेद्वेगमुत्थितम् ॥ २६ ॥
देहप्रवृत्तिर्या काचित् वर्त्तते परपीड़या ।
स्त्रीभोगस्तेयहिंसाद्या तस्या वेगान् विधारयेत् ॥ २७ ॥
पुण्यशब्दो विपापत्वान्मनोवाक्कायकर्मणाम् ।
धर्मार्थकामान् पुरुषः सुखी भुङ्क्ते चिनोति च ॥ २८ ॥
शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्द्धिनी ।
देहव्यायामसंख्याता मात्रया तां समाचरेत् ॥ ३० ॥
लाघवं कर्मसामर्थ्यं स्थैर्यं क्लेशसहिष्णुता ।
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ ३१ ॥

श्रमः क्लमः क्षयस्तृष्णा रक्तपित्तं प्रतामकः ।
अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥ ३२ ॥
व्यायामहास्यभाष्याध्वग्राम्यधर्मप्रजागरान् ।
नोचितानपि सेवेत बुद्धिमानतिमात्रया ॥ ३३ ॥
एतानेवंविधांश्चान्यान् योऽतिमात्रं निषेवते ।
गजः सिंहमिवाकर्षन् सहसा स विनश्यति ॥ ३४ ॥
उचितादहिताद्धीमान् क्रमशो विरमेन्नरः ।
हितं क्रमेण सेवेत क्रमश्चात्रोपदिश्यते ॥ ३५ ॥
प्रक्षेपापचये ताभ्यां क्रमः पादांशिको भवेत् ।
एकान्तरं ततश्चोर्ध्वं द्व्यन्तरं त्र्यन्तरं तथा ॥ ३६ ॥
क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ।
सन्तो यान्त्यपुनर्भावमप्रकम्प्या भवन्ति च ॥ ३७ ॥
समपित्तानिलकफाः केचिद्गर्भादितो नराः ।
दृश्यन्ते वातलाः केचित् पित्तलाः श्लेष्मलास्तथा ॥ ३८ ॥
तेषामनातुराः पूर्वे वातलाद्याः सदातुराः ।
दोषानुशयिता ह्येषां देहप्रकृतिरुच्यते ॥ ३९ ॥
विपरीतगुणस्तेषां स्वस्थवृत्तेर्विधिर्हितः ।
समसर्वरसं सात्म्यं समधातोः प्रशस्यते ॥ ४० ॥
द्वे अधः सप्त शिरसि खानि स्वेदमुखानि च ।
मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः ॥ ४१ ॥
मलवृद्धिं गुरुत्वेन लाघवान्मलसंचयम् ।
मलायनानां बुध्येत सङ्गोत्सर्गादतीव च ॥ ४४ ॥
तान् दोषलिङ्गैरादिश्य व्याधीन् साध्यानुपाचरेत् ।
व्याधिहेतुप्रतिद्वन्द्वैर्मात्राकालौ विचारयन् ॥ ४५ ॥
विषमस्वस्थवृत्तानामेते रोगास्तथापरे ।
जायन्ते नातुरस्तस्मात् स्वस्थवृत्तपरो भवेत् ॥ ४६ ॥

माधवप्रथमे मासि नभस्यप्रथमे पुनः ।
सहस्यप्रथमे चैव हारयेद्दोषसञ्चयम् ॥ ४७ ॥
स्निग्धस्विन्नशरीराणामूर्द्ध्वञ्चाधश्च बुद्धिमान् ।
वस्तिकर्म ततः कुर्य्यान्नस्तः कर्म च बुद्धिमान् ॥ ४८ ॥
यथाक्रमं यथायोगमत ऊर्द्ध्वं प्रयोजयेत् ।
रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥ ४९ ॥
रोगास्तथा न जायन्ते प्रकृतिस्थेषु धातुषु ।
धातवश्चाभिवर्द्धन्ते जरा चान्द्यमुपैति च ॥ ५० ॥
विधिरेष विकाराणामनुत्पत्तौ निदर्शितः ।
निजानामितरेषान्तु पृथगेवोपदिश्यते ॥ ५१ ॥
ये भूतविषवाय्वग्निसम्प्रहारादिसम्भवाः ।
नृणामागन्तवो रोगाः प्रज्ञा तेष्वपराध्यति ॥ ५२ ॥
ईर्ष्याशोकभयक्रोधमानद्वेषादयश्च ये ।
मनोविकारास्तेऽप्युक्ताः सर्वे प्रज्ञापराधजाः ॥ ५३ ॥
त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ।
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्त्तनम् ॥ ५४ ॥
आगन्तूनामनुत्पत्तावेष मार्गो निदर्शितः ।
प्राज्ञः प्रागेव तत् कुर्य्याद्धितं विद्यात्तदात्मनः ॥ ५५ ॥
आप्तोपदेशः प्राज्ञानां प्रतिपत्तिश्च कारणम् ।
विकाराणामनुत्पत्तावुत्पन्नानाञ्च शान्तये ॥ ५६ ॥
पापवृत्तवचःसत्वाः सूचकाः कलहप्रियाः ।
मर्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः ॥ ५७ ॥
परापवादरतयः परनारीप्रवेशिनः ।
निर्घृणास्त्यक्तधर्माणः परिवर्ज्या नराधमाः ॥ ५८ ॥
बुद्धिविद्यावयःशीलधैर्य्यस्मृतिसमाधिभिः ।
वृद्धोपसेविनो वृद्धाः स्वभावज्ञा गतव्यथाः ॥ ५९ ॥

सुमुखाः सर्वभूतानां प्रशान्ताः शंसितव्रताः।
सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः॥ ६० ॥
आहाराचारचेष्टासु सुखार्थी प्रेत्य चेह च।
परं प्रयत्नमातिष्ठेद् बुद्धिमान् हितसेवने॥ ६१ ॥
न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम्।
नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना॥ ६२ ॥
अलक्ष्मीदोषयुक्तत्वान्नक्तन्तु दधिवर्जितम्।
श्लेष्मलं स्यात् ससर्पिष्कं दधि मारुतसूदनम्॥ ६३ ॥
न च सन्धुक्षयेत् पित्तमाहारञ्च विपाचयेत्।
शर्करासयुतं दद्यात्तृष्णादाहनिवारणम्॥ ६४ ॥
मुद्गसूपेन संयुक्तं दद्याद्रक्तानिलापहम्।
सुरसञ्चाल्पदोषञ्च क्षौद्रयुक्तं भवेद्दधि।
उष्णं पित्तास्रकृद्दोषान् धात्रीयुक्तन्तु निर्हरेत्॥ ६५ ॥
ज्वरासृक्पित्तवीसर्पकुष्ठपाण्डामयभ्रमान्।
प्राप्नुयात् कामलाञ्चोग्रां विधिं हित्वा दधिप्रियः॥६६॥
तत्र श्लोकाः॥ वेगा वेगसमुत्थाश्च रोगास्तेषाञ्च भेषजम्।
येषां वेगा विधार्य्याश्च यदर्थं यद्धिताहितम्॥ ६७ ॥
उचिते चाहिते वर्ज्ये सेव्ये चानुचिते क्रमः।
यथाप्रकृति चाहारो मलायनगदौषधम्॥ ६८ ॥
भविष्यतामनुत्पत्तौ रोगाणामौषधञ्च यत्।
वर्ज्याः सेव्याश्च पुरुषा धीमतात्मसुखार्थिना॥ ६९ ॥
विधिना दधि सेव्यञ्च येन यस्मात्तदत्रिजः।
न वेगान् धारणेऽध्याये सर्वमेवावदन्मुनिः॥ ७० ॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते न वेगान् धारणीयोऽध्यायः।

# अष्टमोऽध्यायः ।

अथात इन्द्रियोपक्रमणीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

इह खलु पञ्चेन्द्रियाणि पञ्चेन्द्रियद्रव्याणि,

पञ्चेन्द्रियाधिष्ठानानि पञ्चेन्द्रियार्थाः, पञ्चेन्द्रियबुद्धयो भवन्तीत्युक्तमिन्द्रियाधिकारे अतीन्द्रियं पुनः मनःसत्त्वसंज्ञकं चेत्याहुरेके तदर्थात्मसम्पत्तदायत्त चेष्टम् चेष्टाप्रत्ययभूतमिन्द्रियाणाम् ॥ १ ॥

स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्चानेकमेकस्मिन् पुरुषे सत्त्व-रजस्तमःसत्त्वगुणयोगाच्च । न चानेकत्वं नानेकं ह्येककालमनेकेषु प्रवर्तते ॥ २ ॥

तस्मान्नैककाला सर्वेन्द्रियप्रवृत्तिः । यद्गुणं चाभीक्ष्णं पुरुषमनुवर्त्तते सत्त्वं तत् सत्त्वमेवोपदिशन्ति मुनयो बाहुल्यानुशयात् ॥ ३ ॥

मनःपुरःसराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति ।

तत्र चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनमिति पञ्चेन्द्रियाणि ॥४॥

पञ्चेन्द्रियद्रव्याणि खं वायुर्ज्योतिरापो भूरिति । पञ्चेन्द्रियाधिष्ठानानि अक्षिणी कर्णौ नासिके जिह्वा त्वक् चेति ॥ ५ ॥

पञ्चेन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः । पञ्चेन्द्रियबुद्धयश्चक्षुर्बुद्ध्यादिकाः ॥ ६ ॥

पुनरिन्द्रियेन्द्रियार्थसत्त्वात्मसन्निकर्षजाः ॥ ७ ॥

क्षणिका निश्चयात्मिकाश्चेत्येतत्पञ्चपञ्चकम् । मनोमनोऽर्थौ बुद्धिरात्मा चेत्यध्यात्मद्रव्यगुणसंग्रहः शुभाशुभप्रवृत्तिनिवृत्तिहेतुश्च द्रव्याश्रितं कर्म यदुच्यते क्रियेति ॥ ८ ॥

तत्रानुमानगम्यानां पञ्चमहाभूतविकारसमुदायात्मकानामपि सतामिन्द्रियाणां तेजश्चक्षुषि खं श्रोत्रे घ्राणे क्षितिरापो रसने स्पर्शनेऽनिलो विशेषेणोपदिश्यते ॥ ९ ॥

तत्र यद्यदात्मकमिन्द्रियं विशेषात्तत्तदात्मकमेवार्थमनुधावति। तत् स्वभावाद्विभुत्वाच्च ॥ १० ॥

तदर्थातियोगायोगमिथ्यायोगात् समनस्कमिन्द्रियं विकृतिमापद्यमानं यथास्वं बुद्ध्युपघाताय सम्पद्यते ॥ ११ ॥

सामर्थ्ययोगात् पुनः प्रकृतिमापद्यमानं यथास्वं बुद्धिमाप्याययति ॥ १२ ॥

मनसस्तु चिन्त्यमर्थः । तत्र मनसो बुद्धेश्च त एव समानातिहीनमिथ्यायोगाः प्रकृतिविकृतिहेतवो भवन्ति ॥ १३ ॥

तत्रेन्द्रियाणां समनस्कानामनुपतप्तानामनुपतापाय प्रकृतिभावे प्रयतितव्यमेभिर्हेतुभिः ॥ १४ ॥

तद्यथा सात्म्येन्द्रियार्थसंयोगेन बुद्ध्या सम्यगवेक्ष्यावेक्ष्य कर्मणां सम्यक् प्रतिपादनेन देशकालात्मगुणाविपरीतोपसेवनेन चेति । तस्मादात्महितं चिकीर्षता सर्वेण सर्वं सर्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम् । तद्ध्यनुष्ठानं युगपत् सम्पादयत्यर्थद्वयमारोग्यमिन्द्रियविजयञ्चेति ॥ १५ ॥

तत् सद्वृत्तमखिलेनोपदेक्ष्यामः । तद्यथा । देवगोब्राह्मणगुरुवृद्धसिद्धाचार्य्यानर्चयेत् । अग्निमुपाचरेत् । ओषधीः प्रशस्ताः धारयेत् । द्वौ कालावुपस्पृशेत् । मलायतनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात् । त्रिःपचस्य केशश्मश्रुलोमनखान् संहारयेत् । नित्यमनुपहतवासाः सुमनाः सुगन्धिः स्यात् ॥ १६ ॥

साधुवेशः प्रसाधितकेशो मूर्द्धश्रोत्रघ्राणपादतैलनित्यो धूमपः पूर्वाभिभाषी सुमुखः दुर्गेष्वभ्युपपत्ता होता यष्टा दाता चतुष्पथानां नमस्कर्त्ता वलीनामुपहर्त्ताऽतिथीनां पूजकः पितृणां पिण्डदः काले हितमितमधुरार्थवादी । वश्यात्मधर्मात्मा हेतावीर्षुः फलेनेर्षुः निश्चिन्तो निर्भीको धीमान् ह्रीमान् महोत्साहः दक्षः क्षमावान् धार्मिकः आस्तिकः विनयबुद्धि-

विद्याभिजनवयोवृद्धसिद्धाचार्य्याणामुपासिता छत्री दण्डी मौनी सोपानत्को युगमात्रदृक् विचरेत् ॥ १७ ॥

मङ्गलाचारशीलः कुचैलास्थिकण्टकामेध्यकेशतुषोत्करभस्मकपालस्नानबलिभूमीनां परिहर्त्ता प्राक् श्रमाद्व्यायामवर्जी स्यात्। सर्वप्राणिषु बन्धुभूतः स्यात् क्रुद्धानामनुनेता भीतानामाश्वासयिता दीनानामभ्युपपत्ता सत्यसन्धः सामप्रधानः परपरुषवचनसहिष्णुः अमर्षघ्नः प्रशमगुणदर्शी। रागद्वेषहेतूनां हन्ता। नानृतं ब्रूयात्। नान्यस्वमाददीत ॥१८॥

नान्यस्त्रियमभिलषेत्। नान्यश्रियं न वैरं रोचयेत्। न कुर्य्यात् पापं न पापेऽपि पापी स्यात्। नान्यदोषान् ब्रूयात्। नान्यरहस्यमागमयेत् ॥ १९ ॥

नाधार्मिकैर्न नरेन्द्रद्विष्टैः सहासीत। नोन्मत्तैर्न पतितैर्न भ्रूणहन्तृभिर्न क्षुद्रैर्न दुष्टैः। न दुष्टयानान्यारोहेत्। न जानुसमं कठिनमासनमध्यासीत ॥ २० ॥

नाऽनास्तीर्णमनुपहितमविशालमसमं वा शयनं प्रपद्येत। न गिरिविषममस्तकेष्वनुचरेत्। न द्रुममारोहेत् न जलोग्रवेगमवगाहेत। कूलच्छायां नोपासीत। नाग्न्युत्पातमभितश्चरेत्। नोच्चैर्हसेत्। न शब्दवन्तं मारुतं मुञ्चेत्। नासंवृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्त्तयेत्। न नासिकां कुष्णीयात्। न दन्तान् विघट्टयेत्। न नखान् वादयेत्। नास्थीन्यभिहन्यात्। न भूमिं विलिखेत्। न छिन्द्यात्तृणम्। न लोष्टं मृद्नीयात् ॥ २१ ॥

न विगुणमङ्गैश्चेष्टेत। ज्योतींष्यग्निममेध्यमशस्तञ्च नाभिवीक्षेत। न हुं कुर्य्याच्छवम्। न चैत्यध्वजगुरुपूज्याशस्तच्छायामाक्रामेत्। न क्षपास्वमरसदनचैत्यचत्वरचतुष्पथोपवनश्मशानायतनान्यासेवेत। नैकः शून्यगृहं न चाटवीमनुप्रवि-

शेत्। न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत। नोत्तमैर्विरुध्येत। नावरानुपासीत। न जिह्मं रोचयेत्। नाऽनार्य्यमाश्रयेत्। न भयमुत्पादयेत्। न साहसातिस्वप्नप्रजागरस्नानपानाशनान्यासेवेत। नोर्द्ध्वजानुश्चिरं तिष्ठेत्। न व्यालानुपसर्पेत् न दंष्ट्रिणः न विषाणिनः। पुरोवातातपावश्यायातिप्रवातान् जह्यात् कलिं नारभेत। नानिभृतोऽग्निमुपासीत नोच्छिष्टो नाधः कृत्वा प्रतापयेत्॥ नाविगतक्लमो नाप्लुतवदनो न नग्न उपस्पृशेत्। न स्नानशाट्या स्पृशेदुत्तमाङ्गम्। न केशाग्राण्यभिहन्यात्। नोपस्पृश्य ते एव वाससी बिभृयात्। नास्पृष्ट्वा रत्नाज्यपूज्यमङ्गलसुमनसोऽभिनिष्क्रामेत्। न पूज्यमङ्गलान्यपसव्यं गच्छेत्। नेतराण्यनुदक्षिणम्॥ २२॥

नारत्नपाणिर्नास्नातो नोपहतवासा नाऽजपित्वा नाहुत्वा देवताभ्यो नाऽनिरूप्य पितृभ्यो नाऽदत्त्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यो नापुण्यगन्धी नामाली नाप्रक्षालितपाणिपादवदनो नाऽशुद्धमुखो नोदङ्मुखो न विमनाभक्ताशिष्टाशुचिक्षुधितपरिचरो न पात्रीष्वमेध्यासु नादेशे नाऽकाले नाकीर्णे नाऽदत्त्वाग्रमग्नये नाप्रोक्षितं प्रोक्षणोदकैर्न मन्त्रैरनभिमन्त्रितं न कुत्सयन् न कुत्सितं न प्रतिकूलोपहितमन्नमाददीत। न पर्य्युषितमन्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः॥ २३॥

नाऽशेषभुक् स्यादन्यत्र दधिमधुलवणशक्तुसर्पिर्भ्यः॥ २४॥

न नक्तं दधि भुञ्जीत। न शक्तूनेकानश्नीयात्। न निशि न भुक्त्वा न बहून् न द्विर्नोदकान्तरितान्॥ २५॥

न छित्त्वा द्विजैर्भक्षयेत्। नाऽनृजुः क्षुयाद्धाद्यात् न शयीत। न वेगितोऽन्यकार्य्यः स्यात्। न वाय्वग्निसलिलसोमार्कद्विजगुरुप्रतिमुखं निष्ठीविकावातवर्च्चोमूत्राण्युत्सृजेत्। न पन्थानमवमूत्रयेत्। न जनवति नान्नकाले न जप्यहोमाध्ययन-

बलिमङ्गलक्रियासु शेषमिंधानन्नं सुखेत्। न स्त्रियमवजानीत नातिविश्रम्भयेत् न गुह्यमनुश्रावयेत् नाधिकुर्य्यात्। न रजस्वलां नातुरां नामेध्यां नाशस्तां नानिष्टरूपाचारोपचारां नादक्षिणां नाकामां नान्यकामां नान्यस्त्रियं नान्ययोनिं नायोनौ न चैत्यचत्वरचतुष्पथोपवनश्मशानायतनसलिलौषधिद्विजगुरुसुरालयेषु न सन्ध्ययोः न निषिद्धतिथिषु नाशुचिर्न जग्धभेषजो नाप्रणीतसङ्कल्पो नानुपस्थितप्रहर्षो नाभुक्तवान् नात्यशितो न विषमस्थो न मूत्रोच्चारपीडितो न श्रमव्यायामोपवासक्लमाभिहतो नाऽरहसि व्यवायं गच्छेत्॥ २६॥

न सतो न गुरून् परिवदेत्। नाशुचिरभिचारकर्मचैत्यपूज्यपूजाध्ययनमभिनिर्वर्तयेत्। न विद्युत्स्वनार्त्तवीषु नाभ्युदितासु दिक्षु नाग्निसम्प्लवे न भूमिकम्पे न महोत्सवे नोल्कापाते न महाग्रहोपगमने न नष्टचन्द्रायां तिथौ न सन्ध्ययोर्न मुखाद्गुरोरपतितं नातिमात्रं न तान्तमस्वरं न विस्वरं नानवस्थितपदं नातिद्रुतं न विलम्बितं नातिक्लीवं नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यसेत्। नातिसमयं जह्यात्। न नियमं भिन्द्यात्॥ २७॥

न नक्तं नादेशे चरेत्। न सन्ध्यास्वभ्यवहाराध्ययनस्त्रीस्वप्नसेवी स्यात्। न बालवृद्धलुब्धमूर्खक्लिष्टक्लीबैः सह सख्यं कुर्य्यात्। न मद्यद्यूतवेश्याप्रसङ्गरुचिः स्यात्। न गुह्यं विवृणुयात्॥ न कञ्चिदवजानीयात्। नाहंमानी स्यात्। नादक्षो नादक्षिणो नासूयको न ब्राह्मणान् परिवदेत्। न गवां दण्डमुद्यच्छेत्। न वृद्धान् न गुरून् न गणान् न नृपान् वाधिक्षिपेत् न चातिब्रूयात्। न बान्धवानुरक्तकृच्छ्रद्वितीयगुह्यज्ञान् बहिः कुर्य्यात्॥ २८॥

नाधीरो नात्युच्छ्रितसत्त्वः स्यात्, नाभृतभृत्यो नाविश्रब्धस्वजनो नैकः सुखी न दुःखशीलाचारोपचारो न सर्वविश्रम्भी

न सर्वाभिशङ्की। न सर्वकालविचारी। न कार्य्यकालमतिपातयेत्। नापरीक्षितमभिनिविशेत्। नेन्द्रियवशगः स्यात् ॥२९

न चञ्चलं मनो भ्रामयेत्। न बुद्धीन्द्रियाणामतिभारमादध्यात्। न चातिदीर्घसूत्री स्यात्। न क्रोधहर्षावनुविदध्यात्। न शोकमनुवशेत्। न सिद्धावौत्सुक्यं गच्छेत् नासिद्धौ दैन्यम्। प्रकृतिमभीक्ष्णं स्मरेत्। हेतुप्रभावनिश्चितः स्यात्। हेत्वारम्भनित्यश्च। न कृतमित्याश्वसेत्। न वीर्य्यं जह्यात्। नापवादमनुस्मरेत् ॥ ३० ॥

नाशुचिरुत्तमाज्याक्षत-तिल-कुश-सर्षपैरग्निं जुहुयात्। आत्मानमाशीर्भिराशासानः। अग्निर्मे नापगच्छेच्छरीरात् वायुर्मे प्राणानादधातु। विष्णुर्मे बलमादधातु। इन्द्रो मे वीर्य्यं शिवा मां प्रविशन्त्वापः। आपोहिष्ठेत्यपः स्पृशेत्। द्विः परिमृज्यौष्ठौ पादौ चाभ्युक्ष्य मूर्द्धनि खानि चोपस्पृशेत्। अद्भिरात्मानं हृदयं शिरश्च ब्रह्मचर्य्यज्ञानदानमैत्रीकारुण्यहर्षोपेक्षाप्रशमपरश्च स्यादिति ॥ ३१ ॥

अत्र श्लोकाः। पञ्चपञ्चकमुद्दिष्टं मनो हेतुचतुष्टयम्।
इन्द्रियोपक्रमेऽध्याये सद्वृत्तमखिलेन च ॥ ३२ ॥
स्वस्थवृत्तं यथोद्दिष्टं यः सम्यगनुतिष्ठति।
स समाः शतमव्याधिरायुषा न वियुज्यते ॥ ३३ ॥
नृलोकमापूरयते यशसा साधुसम्मतः।
धर्मार्थौ चेति भूतानां बन्धुतामुपगच्छति ॥ ३४ ॥
परान् सुकृतिनो लोकान् पुण्यकर्मा प्रपद्यते।
तस्माद्वृत्तमनुष्ठेयमिदं सर्वेण सर्वदा ॥ ३५ ॥
यच्चान्यदपि किञ्चित् स्यादनुक्तमिह पूजितम्।
वृत्तं तदपि चात्रेयः सदैवाभ्यनुमन्यते ॥ ३६ ॥

इति स्वस्थचतुष्कः ॥ अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते
इन्द्रियोपक्रमणीयोऽष्टमोऽध्यायः ॥

# नवमोऽध्यायः ।

अथातः खुड्डाकचतुष्पादमध्यायं व्याख्यास्यामः ॥

इति ह स्माह भगवानात्रेयः ॥

भिषग् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।
गुणवत् कारणं ज्ञेयं विकारव्युपशान्तये ॥ १ ॥
विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते ।
सुखसंज्ञकमारोग्यं विकारो दुःखमेव च ॥ २ ॥
चतुर्णां भिषगादीनां शस्तानां धातुवैकृते ।
प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते ॥ ३ ॥
श्रुते पर्य्यवदातत्वं बहुशो दृष्टकर्मता ।
दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम् ॥ ४ ॥
बहुता तत्र योग्यत्वमनेकविधकल्पना ।
सम्पच्चेति चतुष्कोऽयं द्रव्याणां गुण उच्यते ॥ ५ ॥
उपचारज्ञता दाक्ष्यमनुरागश्च भर्त्तरि ।
शौचञ्चेति चतुष्कोऽयं गुणः परिचरे जने ॥ ६ ॥
स्मृतिर्निर्देशकारित्वमभीरुत्वमथापि च ।
ज्ञापकत्वञ्च रोगाणामातुरस्य गुणाः स्मृताः ॥ ७ ॥
कारणं षोड़शगुणं सिद्धौ पादचतुष्टयम् ।
विज्ञाता शासिता योक्ता प्रधानं भिषगत्र तु ॥ ८ ॥
पक्तौ हि कारणं पक्तुर्यथा पात्रेन्धनानलाः ।
विजेतुर्विजये भूमिश्चमूः प्रहरणानि च ॥ ९ ॥
आतुराद्यास्तथा सिद्धौ पादाः कारणसंज्ञिताः ।
वैद्यस्यातश्चिकित्सायां प्रधानं कारणं भिषक् ॥ १० ॥
मृद्दण्डचक्रसूत्राद्याः कुम्भकारादृते यथा ।
नावहन्ति गुणं वैद्यादृते पादत्रयं तथा ॥ ११ ॥
गन्धर्वपुरवन्नाशं यद्विकाराः सुदारुणाः

यान्ति यचेतरे वृद्धिमाशूपायप्रतीक्षिणः ॥ १२ ॥
सति पादत्रये ज्ञाज्ञो भिषजावत्र कारणम्।
नरमात्मा हतोऽज्ञेन न चिकित्सा प्रवर्त्तिता ॥ १३ ॥
पाणिचाराद्यथाचक्षुरज्ञानाद्भीतभीतवत्।
नौर्मारुतवशेवाज्ञो भिषक् चरति कर्मसु ॥ १४ ॥
यदृच्छया समापन्नमुत्तार्थं नियतायुषम्।
भिषग्मानी निहन्त्याशु शताश्चनियतायुषाम् ॥ १५ ॥
तस्माच्छास्त्रेऽर्थविज्ञाने प्रवृत्तौ कर्मदर्शने।
भिषक्चतुष्टये युक्तः प्राणाभिसर उच्यते ॥ १६ ॥
हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे।
ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः ॥ १७ ॥
शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये।
पात्रापेक्षीण्यतः प्रज्ञां चिकित्सार्थं विशोधयेत् ॥ १८ ॥
विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया।
यस्यैते षड्गुणास्तस्य न साध्यमतिवर्त्तते ॥ १९ ॥
विद्या मतिः कर्मदृष्टिरभ्यासः सिद्धिराश्रयः।
वैद्यशब्दाभिनिष्पत्तावलमेकैकमप्यदः ॥ २० ॥
यस्य त्वेते गुणाः सर्वे सन्ति विद्यादयः शुभाः।
स वैद्यशब्दं सद्भूतमर्हन् प्राणिसुखप्रदः ॥ २१ ॥
शास्त्रं ज्योतिः प्रकाशार्थं दर्शनं बुद्धिरात्मनः।
ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन् नापराध्यति ॥२२॥
चिकित्सिते त्रयः पादा यस्माद्वैद्यव्यपाश्रयाः।
तस्मात् प्रयत्नमातिष्ठेद्भिषक् स्वगुणसम्पदि ॥ २३ ॥
मैत्री कारुण्यमार्त्तेषु शक्ये प्रीतिरुपेक्षणम्।
प्रकृतिस्थेषु भूतेषु वैद्यवृत्तिश्चतुर्विधा ॥ २४ ॥
तत्र श्लोकौ ॥ भिषग्जितां चतुष्पादं पादः पादश्चतुर्गुणः।

भिषक्प्रधानं पादेभ्यो यस्माद्वैद्यस्तु यद्गुणः ॥ २५ ॥
ज्ञानानि बुद्धिर्ब्राह्मी च भिषजां या चतुर्विधा ।
सर्वमेतच्चतुष्पादे खुड्डके सम्प्रकाशितम् ॥ २६ ॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते खुड्डाकचतुष्पादो
नाम नवमोऽध्यायः समाप्तः ।

---

## दशमोऽध्यायः ।

अथातो महाचतुष्पादमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

चतुष्पादं षोडशकलं भेषजमिति भिषजो भाषन्ते । यदुक्तं पूर्वाध्याये षोडशगुणमिति तद्भेषजम् । युक्तियुक्तमलमारोग्यायेति भगवान् पुनर्वसुरात्रेयः ॥ १ ॥

नेति मैत्रेयः । किं कारणं दृश्यन्ते ह्यातुराः केचिदुपकरणवन्तश्च परिचारकसम्पन्नाश्चात्मवन्तश्च कुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानास्तथा युक्ताश्चापरे म्रियमाणास्तस्माद्भेषजमकिञ्चित्करं भवति ॥ २ ॥

तद्यथा । श्वभ्रे सरसि च प्रसिक्तमल्पमुदकम् । नद्यां स्यन्दमानायां पांशुधाने पांशुमुष्टिप्रकीर्ण इति । तथापरे दृश्यन्ते अनुपकरणाश्चापरिचारकाश्चानात्मवन्तश्चाकुशलैश्च भिषग्भिरनुष्ठिता. समुत्तिष्ठमानाः । तथा युक्ता म्रियमाणाश्चापरे यतश्च प्रतिकुर्वन् सिद्ध्यति प्रतिकुर्वन् म्रियते अप्रतिकुर्वन् म्रियते ततश्चिन्त्यते भेषजमभेषजेनाविशिष्टमिति ॥ ३ ॥

मैत्रेय! मिथ्या चिन्त्यत इत्यात्रेयः । किं कारणं ये ह्यातुराः षोडशगुणसमुदितेनानेन भेषजेनोपपद्यमाना इत्युक्तं तदनुपपन्नं न हि भेषजसाध्यानां व्याधीनां भेषजमकारणं भवति । ये पुनरातुराः केवलाद्भेषजादृते समुत्तिष्ठन्ते न तेषां सम्पूर्णभेषजो-

पपादानाय समुत्थानविशेषोऽस्ति। यथा हि पतितं पुरुषं समर्थमुत्थानायोत्थापयन् पुरुषो बलमस्योपादध्यात्। स क्षिप्रतरमपरिक्लिष्ट एवोत्तिष्ठेत्तद्वत् सम्पूर्णभेषजोपलम्भादातुराः। ये चातुराः केवलाद्भेषजादपि म्रियन्ते न च सर्व एव ते भेषजोपपन्नाः समुत्तिष्ठेरन् न हि सर्वे व्याधयो भवन्त्युपायसाध्याः॥४

न चोपायसाध्यानां व्याधीनामनुपायेन सिद्धिरस्ति न चासाध्यानां व्याधीनां भेषजसमुदायोऽस्ति न ह्यलं ज्ञानवान् भिषङ्मुमूर्षुमातुरमुत्थापयितुम्। परीक्ष्यकारिणो हि कुशला भवन्ति। यथा हि योगज्ञोऽभ्यासनित्य इष्वासो धनुरादायेषुमपास्यन् नातिविप्रकृष्टे महति काये नापराधो भवति। सम्पादयति चेष्टकार्य्यम्। तथा भिषक् स्वगुणसम्पन्न उपकरणवान् वीक्ष्य कर्मारभमाणः साध्यरोगमनपराधः सम्पादयत्येवातुरमारोग्येण न तस्मात् भेषजमभेषजेनाविशिष्टं भवति॥ ५॥

इदञ्चेदन्न नः प्रत्यक्षं यदनातुरेण भेषजेनातुरं चिकित्सामः। क्षाममक्षामेण कृशं दुर्बलमाप्याययामः॥ ६॥

स्थूलं मेदस्विनमपतर्पयामः। शीतेनोष्णाभिभूतमुपचरामः। शीताभिभूतमुष्णेन। न्यूनान् धातून् पूरयामः व्यतिरिक्तान् ह्रासयामः। व्याधीन्मूलविपर्य्ययेणोपचरन्तः सम्यक् प्रकृतौ स्थापयामः तेषां नस्तथा कुर्वतामयं भेषजसमुदायः कान्ततमो भवति॥ ७॥

भवति चात्र। साध्यासाध्यविभागज्ञो ज्ञानपूर्वं चिकित्सकः।
काले चारभते कर्म यत्तत् साधयति ध्रुवम्॥ ८॥
अर्थविद्यायशोहानिमुपक्रोशमसंग्रहम्।
प्राप्नुयान्नियतं वैद्यो योऽसाध्यं समुपाचरेत्॥ ९॥
सुखसाध्यं मतं साध्यं कृच्छ्रसाध्यमथापि च।
द्विविधञ्चाप्यसाध्यं स्याद् याप्यं यच्चानुपक्रमम्॥ १०॥

साध्यानां त्रिविधश्चाल्पमध्यमोत्कृष्टतां प्रति ।
विकल्पो न त्वसाध्यानां नियतानां विकल्पना ॥ ११
हेतवः पूर्वरूपाणि रूपाण्यल्पानि यस्य च ।
न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत् ॥ १२ ॥
न च कालगुणस्तुल्यो न दोषो दुरुपक्रमः ।
गतिरेका नवत्वञ्च रोगस्योपद्रवो न च ॥ १३ ॥
दोषश्चैकः समुत्पत्तौ देहः सर्वौषधक्षमः ।
चतुष्पादोपपत्तिश्च सुखसाध्यस्य लक्षणम् ॥ १४ ॥
निमित्तपूर्वरूपाणां रूपाणां मध्यमे बले ।
कालप्रकृतिदूष्याणां सामान्येऽन्यतमस्य च ॥ १५ ॥
गर्भिणीवृद्धबालानां नात्युपद्रवपीड़ितम् ।
शस्त्रक्षाराग्निकृत्यानामनवं कृच्छ्रदोषजम् ॥ १६ ॥
विद्यादेकपथं रोगं नातिपूर्णचतुष्पदम् ।
द्विपथं नातिकालं वा कृच्छ्रसाध्यं द्विदोषजम् ॥ १७ ॥
शेषत्वादायुषो याप्यमसाध्यं पथ्यसेवया ।
लब्धाल्पसुखमल्पेन हेतुनाशुप्रवर्त्तकम् ॥ १८ ॥
गम्भीरं बहुधातुस्थं मर्मसन्धिसमाश्रितम् ।
नित्यानुशायिनं रोगं दीर्घकालमवस्थितम् ॥ १९ ॥
विद्याद् द्विदोषजं तद्वत् प्रत्याख्येयं त्रिदोषजम् ।
क्रियापथमतिक्रान्तं सर्वमार्गानुसारिणम् ॥ २० ॥
औत्सुक्यारतिसंमोहकरमिन्द्रियनाशनम् ।
दुर्बलस्य सुसंवृद्धं व्याधिं सारिष्टमेव च ॥ २१ ॥
भिषजा प्राक् परीक्ष्येवं विकाराणां सुलक्षणम् ।
पश्चात् कार्य्यसमारम्भः कार्य्यः साध्येषु धीमता ॥ २२ ॥
साध्यासाध्यविभागज्ञो यः सम्यक् प्रतिपत्तिमान् ।
न स मैत्रेय तुल्यानां मिथ्याबुद्धिं प्रकल्पयेत् ॥ २४ ॥

तत्र श्लोकौ । इहौषधं पादगुणाः प्रभावो भेषजाश्रय ।
आत्रेय-मैत्रेय-मती मतिद्वैविध्यनिश्चयः ॥ २४ ॥
चतुर्विधविकल्पाश्च व्याधयः स्वस्वलक्षणाः ।
उक्ता महाचतुष्पादे येष्वायत्तं भिषग् जितमिति ॥ २५ ॥

महाचतुष्पादोऽध्याय समाप्त ।

---

## एकादशोऽध्यायः ।

अथातस्त्रिषैषणीयमध्याय व्याख्यास्याम ।

इति ह स्माह भगवानात्रेयः ।

इह खलु पुरुषेणानुपहतसत्त्वबुद्धिपौरुषपराक्रमेण हितमिह चामुष्मिंश्च लोके समनुपश्यता तिस्र एषणाः पर्य्येष्टव्या भवन्ति ॥ १ ॥

तद्यथा । प्राणैषणा धनैषणा परलोकैषणेति । आसान्तु खल्वेषणानां प्राणैषणां तावत् पूर्वतरमापद्येत् । कस्मात् प्राण-परित्यागे हि सर्वत्याग । तस्यानुपालनं स्वस्थस्य स्वस्थवृत्ति-रातुरस्य विकारप्रशमनेऽप्रमादस्तदुभयमेतदुक्तं वक्ष्यते च । तद् यथोक्तमनुवर्त्तमान प्राणानुपालनाद्दीर्घमायुरवाप्नोतीति । प्रथमैषणा व्याख्याता भवति ॥ २ ॥

अथ द्वितीया धनैषणामापद्येत । प्राणेभ्यो ह्यनन्तरं धनमेव पर्य्येष्टव्यं भवति । न ह्यत पापात् पापीयोऽस्ति यदनुपकरणस्य दीर्घमायु तस्मादुपकरणानि पर्य्येष्टु यतेत । तत्रोपकरणोपाया-ननुव्याख्यास्याम ॥ ३ ॥

तद्यथा । कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि । यानि चान्यान्यपि सतामविगर्हितानि कर्म्माणि वृत्तिपुष्टि-कराणि विद्यात् तान्यारभेत कर्त्तुम् । तथा कुर्वन् दीर्घजीवित-

मनुभवन् पुरुषो भवतीति । द्वितीया धनैषणा व्याख्याता भवति ॥ ४ ॥

अथ तृतीयां परलोकैषणामापद्येत । संशयश्चात्र कथं भविष्याम इतश्च्युता नवेति । कुतः पुनः संशय इति उच्यते सन्ति ह्येके प्रत्यक्षपराः परोक्षत्वात् पुनर्भवस्य नास्तिक्यमाश्रिताः सन्ति चापरे ये त्वागमप्रत्ययादेव पुनर्भवमिच्छन्ति श्रुतिभेदाच्च । मातरं पितरञ्चैके मन्यन्ते जन्मकारणं स्वभावं परनिर्माणं यदृच्छाञ्चापरे जनाः । इत्यतः संशयः । किं नु खल्वस्ति पुनर्भवो न वेति । तत्र बुद्धिमान् नास्तिक्यबुद्धिं जह्यात् विचिकित्साञ्च । कस्मात् प्रत्यक्षं ह्यल्पमनल्पमप्रत्यक्षमस्ति यदागमानुमानयुक्तिभिरुपलभ्यते । यैरेव तावदिन्द्रियैः प्रत्यक्षमुपलभ्यते तान्येव सन्ति चाप्रत्यक्षाणि ॥ ५ ॥

सताञ्च रूपाणामतिसन्निकर्षादतिविप्रकर्षादावरणात् करणदौर्बल्यान्मनोऽनवस्थानात् समानाभिहारादभिभवादतिसौक्ष्म्याच्च प्रत्यक्षानुपलब्धिः । तस्मादपरीक्षितमेतदुच्यते प्रत्यक्षमेवास्ति नान्यदस्तीति श्रुतयश्चैता न कारणं युक्तिविरोधात् ॥६॥

आत्मा मातुः पितुर्वा यः सोऽपत्यं यदि सञ्चरेत् ।
द्विविधं सञ्चरेदात्मा सर्वो वावयवेन वा ॥ ७ ॥
सर्वश्चेत् सञ्चरेन्मातुः पितुर्वा मरणं भवेत् ।
निरन्तरं नावयवः कश्चित् सूक्ष्मस्य चात्मनः ॥ ८ ॥
बुद्धिर्मनश्च निर्णीते यथैवात्मा तथैव ते ।
येषाञ्चैषा मतिस्तेषां योनिर्नास्ति चतुर्विधा ॥ ९ ॥
विद्यात् स्वाभाविकं षण्णां धातूनां यत् स्वलक्षणम् ।
संयोगे च विभागे च तेषां कर्मैव कारणम् ॥ १० ॥
अनादेश्चेतना धातोर्नेष्यते परनिर्मितिः ।
पर आत्मा स चेद्धेतुरिष्टोऽस्तु परनिर्मितिः ॥ ११ ॥

न परीक्षा न परीक्ष्यं न कर्त्ता कारणं न च।
न देवा नर्षयः सिद्धाः कर्म्म कर्म्मफलं न च ॥ १२ ॥
नास्ति कस्यास्ति नैवात्मा यदृच्छोपहतात्मनः।
पातकेभ्यः परञ्चैतत् पातकं नास्तिकग्रहः ॥ १३ ॥
तस्मान्मतिं विमुच्येताममार्गप्रसृतां बुधः।
सतां बुद्धिप्रदीपेन पश्येत् सर्वं यथातथम् ॥ १४ ॥

द्विविधमेव खलु सर्वं सच्चासच्च तस्य चतुर्विधा परीक्षा। आप्तोपदेशः प्रत्यक्षमनुमानं युक्तिश्चेति ॥ १५ ॥

आप्तास्तावत्। रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा ॥ १६ ॥
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्।
सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमः ॥ १७ ॥
आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्त्तते।
व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निरुच्यते ॥ १८ ॥
प्रत्यक्षपूर्वं त्रिविधं त्रिकालञ्चानुमीयते।
वह्निर्निगूढो धूमेन मैथुनं गर्भदर्शनात् ॥ १९ ॥
एवं व्यवस्यन्त्यतीत वीजात् फलमनागतम्।
दृष्ट्वा वीजात् फलं जातमिहैव सदृशं बुधाः ॥ २० ॥
जलकर्षणवीजर्त्तुसंयोगात् शस्यसम्भवः।
युक्तिः षड्धातुसंयोगाद्गर्भाणां सम्भवस्तथा ॥ २१ ॥
मथ्यमन्थनमन्थानसंयोगादग्निसम्भवः।
युक्तियुक्ता चतुष्पादसम्पद्व्याधिनिवर्त्तिनी ॥ २२ ॥
बुद्धिः पश्यति या भावान् बहुकारणयोगजान्।
युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया ॥ २३ ॥
एषा परीक्षा नास्त्यन्या यया सर्वं परीक्ष्यते।
परीक्ष्यं सदसच्चैवं तया चास्ति पुनर्भवः ॥ २४ ॥

तत्राप्तागमस्तावद्वेदो यश्चान्योऽपि कश्चिद्वेदार्थादविपरीतः परीक्षकैः प्रणीतः। शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः स चाप्तागमः। आप्तागमादुपलभ्यते दानं तपो यज्ञः सत्यमहिंसा ब्रह्मचर्यमित्यभ्युदयनिःश्रेयसकराणि। न चानतिवृत्तसत्वदोषाणामदोषैरपुनर्भवो धर्मद्वारेषूपदिश्यते ॥ २५ ॥

धर्मद्वारावहितैश्च व्यपगतभयरागद्वेषलोभमोहमानैर्ब्रह्मपरैराप्तैः कर्मविद्भिरनुपहतसत्वबुद्धिप्रचारैः पूर्वैः पूर्वतरैः महर्षिभिर्दिव्यचक्षुर्भिर्दृष्ट्वोपदिष्टः पुनर्भव इति व्यवस्येदेवं पुनर्भवं प्रत्यक्षमपि चोपलभ्यते ॥ २६ ॥

मातापित्रोर्विसदृशान्यपत्यानि तुल्यसम्भवानां वर्णस्वराकृतिसत्वबुद्धिभाग्यविशेषाः। प्रवरावरकुलजन्मदास्यैश्वर्य्यं सुखासुखमायुः। आयुषो वैषम्यमिहाकृतस्यावाप्तिरशिक्षितानाञ्च रुदितस्तनपानहासत्रासादीनाञ्च प्रवृत्तिर्लक्षणोत्पत्तिः कर्मसामान्ये फलविशेषो मेधा क्वचित् क्वचित् कर्मण्यमेधा जातिस्मरणमिहागमनमितश्च्युतानाञ्च भूतानां समदर्शने प्रियाप्रियत्वम्। अतएवानुमीयते यत् स्वकृतमपरिहार्य्यमविनाशि पौर्वदेहिकं दैवसंज्ञकमानुबन्धिकं कर्म तस्यैतत् फलमितश्चान्यद्भविष्यतीति फलाद्बीजमनुमीयते फलञ्च बीजात् ॥ २७ ॥

युक्तिश्चैषा षड्धातुसमुदायाद्गर्भजन्म आत्मा च परलोकसम्बन्ध एव इति कर्त्तृकरणसंयोगात् क्रिया। कृतस्य कर्मणः फलं नाकृतस्य नाङ्कुरोत्पत्तिरवीजात्। कर्मसदृशं फलं नान्यस्माद्बीजादन्यस्योत्पत्तिरिति युक्तिः ॥ २८ ॥

एवं प्रमाणैश्चतुर्भिरुपदिष्टैः पुनर्भवे धर्मद्वारेष्वनुविधीयते ॥२८॥

तद्यथा गुरुशुश्रूषायामध्ययने व्रतचर्य्यायां दारक्रियायामपत्योत्पादने भृत्यभरणेऽतिथिपूजायां दानेऽनभिध्यायां तपस्यनसूयायां देहवाङ्मनसे कर्मण्यक्लिष्टे देहेन्द्रियमनोऽर्थबुद्ध्यात्म-

परीक्षायां मनःसमाधाविति। यानि चान्यान्यप्येवंविधानि कर्म्माणि सतामविगर्हितानि स्वर्ग्याणि वृत्तिपुष्टिकराणि विद्यात्तान्यारभेत कर्त्तुम्। तथा कुर्व्वन्निह चैव यशो लभते प्रेत्य च स्वर्गमिति। तृतीया परलोकैषणा व्याख्याता भवति॥ ३०॥

अथ खलु त्रय उपस्तम्भाः। त्रिविधं बलम्। त्रीण्यायतनानि। त्रयो रोगाः। त्रयो रोगमार्गाः त्रिविधा भिषजः त्रिविधमौषधमिति॥ ३१॥

त्रय उपस्तम्भा इत्याहारः स्वप्नो ब्रह्मचर्य्यमिति। एभिस्त्रिभिर्युक्तियुक्तैरुपस्तब्धमुपस्तम्भैः शरीरं बलवर्णोपचयोपचितमनुवर्त्तते यावदायुषः संस्कारात् संस्कारमहितमनुपसेवमानस्य य इहैवोपदेक्ष्यते॥ ३२॥

त्रिविधं बलमिति सहजं कालजं युक्तिकृतञ्च। तत्र सहजं यच्छरीरसत्वयोः प्राकृतम्। कालकृतमृतुविभागजं वयस्कृतञ्च। युक्तिकृतं पुनस्तद्यदाहारचेष्टायोगजम्॥ ३३॥

त्रीण्यायतनानीति अर्थानां कर्म्मणः कालस्य चातियोगायोगमिथ्यायोगाः। तत्रातिप्रभावतां दृश्यानामतिमात्रं दर्शनमतियोगः। सर्व्वशोऽदर्शनमयोगः। अतिसूक्ष्मातिश्लिष्टातिविप्रकृष्टरौद्रभैरवाद्भुतद्विष्टबीभत्सविकृतादिरूपदर्शनं मिथ्यायोगः॥ ३४॥

तथातिमात्रस्तनितोपहतकृष्टादीनां शब्दानामतिमात्रं श्रवणमतियोगः। सर्व्वशोऽश्रवणमयोगः। परुषेष्टविनाशोपघातप्रधर्षणभीषणादिशब्दश्रवणं मिथ्यायोगः॥ ३५॥

तथातितीक्ष्णोग्राभिष्यन्दिनां गन्धानामतिमात्रं घ्राणमतियोगः। सर्व्वशोऽघ्राणमयोगः। पूतिद्विष्टामेध्यक्लिन्नविषपवनकुणपगन्धादिघ्राणं मिथ्यायोगः॥ ३६॥

तथा रसानामत्यादानमतियोगः। अनादानमयोगः। मिथ्यायोगो राशिवर्ज्यंष्वाहारविधिविशेषायतनेषूपदेक्ष्यते॥ ३७॥

समयोगयुक्तास्तु प्रकृतिहेतवो भवन्ति । सर्वेषामेव भावानां भावाभावौ नान्तरेण योगायोगातियोगमिथ्यायोगान् समुपलभ्येते । यथास्वं युक्त्यपेक्षिणौ हि भावाभावौ ॥ ४८ ॥

त्रयो रोगा इति निजागन्तुमानसाः तत्र निजः शरीरदोषसमुत्थः । आगन्तुर्भूतविषवाय्वग्निसम्प्रहारादिसमुत्थः । मानसः पुनरिष्टस्यालाभाल्लाभाच्चानिष्टस्योपजायते ॥ ४९ ॥

तत्र बुद्धिमता मानसव्याधिपरीतेनापि सता बुद्ध्या हिताहितमवेक्ष्यावेक्ष्य धर्मार्थकामानाम् अहितानामनुपसेवने हितानाञ्चोपसेवने प्रयतितव्यम् ॥ ५० ॥

न ह्यन्तरेण लोके त्रयमेतत् मानसं किञ्चिन्निष्पद्यते सुखं वा दुःखं वा तस्मादेतच्चानुष्ठेयम् । तद्विद्यवृद्धानाञ्चोपसेवने प्रयतितव्यम् । आत्मदेशकालबलशक्तिज्ञाने यथावच्चेति ॥ ५१ ॥

भवति चात्र । मानसं प्रति भैषज्यं त्रिवर्गस्यान्ववेक्षणम् ।
तद्विद्यसेवा विज्ञानमात्मादीनाञ्च सर्वश इति ॥ ५२ ॥

त्रयो रोगमार्गा इति । शाखा मर्मास्थिसन्धयः कोष्ठश्च । तत्र शाखा रक्तादयो धातवस्त्वक् च बाह्यो रोगमार्गः । मर्माणि पुनर्वस्तिहृदयमूर्द्धादीनि अस्थिसन्धयोऽस्थिसंयोगास्तत्रोपनिबद्धाश्च स्नायुकण्डरा मध्यमो रोगमार्गः । कोष्ठः पुनरुच्यते महास्रोतः शरीरमध्यं महानिम्नमामपक्वाशयश्चेति पर्य्यायशब्दैः तन्त्रे स रोगमार्ग आभ्यन्तरः ॥ ५३ ॥

तत्र गण्डपीड़कालज्यपचीचर्मकीलार्बुदाधिमांसालसककुष्ठव्यङ्गादयो विकारा बहिर्मार्गजाः ॥ ५४ ॥

वीसर्पश्वयथुगुल्मार्शोविद्रध्यादयः शाखानुसारिणो भवन्ति रोगाः ॥ ५५ ॥

पक्षवधग्रहापतानकार्दितशोषराजयक्ष्मास्थिसन्धिशूलगुदभ्रंशादयः शिरोहृद्वस्तिरोगादयश्च मध्यममार्गानुसारिणो भवन्ति रोगाः ॥ ५६ ॥

ज्वरातीसारच्छर्द्यलसकविसूचिकाकासश्वासहिक्कानाहोदरप्लीहादयोऽन्तर्मार्गजाश्च। वीसर्प-श्वयथु-गुल्मार्शो-विद्रध्यादयः कोष्ठमार्गानुसारिणो भवन्ति रोगाः ॥ ५७ ॥

त्रिविधा भिषज इति।

भिषक् छद्मचराः सन्ति सन्त्येके सिद्धसाधिताः।
सन्ति वैद्यगुणैर्युक्तास्त्रिविधा भिषजो भुवि ॥ ५८ ॥
वैद्यभाण्डौषधैः पुस्तैः पल्लवैरवलोकनैः।
लभन्ते ये भिषक्शब्दमज्ञास्ते प्रतिरूपकाः ॥ ५९ ॥
श्रीयशोज्ञानसिद्धानां व्यपदेशादतद्विधाः।
वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिताः ॥ ६० ॥
प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः।
जीविताभिसरा ये स्युर्वैद्यत्वं तेष्ववस्थितम् ॥ ६१ ॥

त्रिविधमौषधमिति। दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्त्वावजयश्च। तत्र दैवव्यपाश्रयं मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपाततीर्थगमनादि। युक्तिव्यपाश्रयं पुनराहारौषधद्रव्याणां योजना। सत्त्वावजयः पुनरहितेभ्योऽर्थेभ्यो मनोनिग्रहः ॥ ६२ ॥

शरीरदोषप्रकोपे तु खलु शरीरमेवाश्रित्य प्रायशस्त्रिविधमौषधमिच्छन्ति। अन्तःपरिमार्जनं बहिःपरिमार्जनं शस्त्रप्रणिधानञ्चेति। तत्रान्तःपरिमार्जनं यदन्तःशरीरमनुप्रविश्यौषधमाहारजातव्याधीन् प्रमार्ष्टि। यत् पुनर्बहिःस्पर्शमाश्रित्याभ्यङ्गस्वेद-प्रदेह-परिषेकोन्मर्दनाद्यैरामयान् प्रमार्ष्टि तद्बहिःपरिमार्जनम् ॥ ६३ ॥

शस्त्रप्रणिधानं पुनश्छेदनभेदनव्यधनदारणलेखनोत्पाटनप्रच्छनसीवनैषणक्षारजलौकाश्चेति ॥ ६४ ॥

प्राज्ञो रोगे समुत्पन्ने बाह्येनाभ्यन्तरेण वा।
कर्मणा लभते शर्म शस्त्रोपक्रमणेन वा ॥ ६५ ॥

बालस्तु खलु मोहाद्वा प्रमादाद्वा न बुध्यते ।
उत्पद्यमानं प्रथमं रोगं शत्रुमिवाबुधः ॥ ६६ ॥
अणुर्हि प्रथमं भूत्वा रोगः पश्चाद्विवर्द्धते ।
स जातमूलो मुष्णाति बलमायुश्च दुर्मतेः ॥ ६७ ॥
न मूढो लभते संज्ञां तावद्यावन्न पीड्यते ।
पीड़ितस्तु मतिं पश्चात् कुरुते व्याधिनिग्रहे ॥ ६८ ॥
अथ पुत्रांश्च दारांश्च ज्ञातींश्चाहूय भाषते ।
सर्वस्वेनापि मे कश्चिद्भिषगानीयतामिति ॥ ६९ ॥
तथाविधञ्च कः शक्तो दुर्बलं व्याधिपीड़ितम् ।
कृशं क्षीणेन्द्रियं दीनं परित्रातुं गतायुषम् ॥ ७० ॥
स त्रातारमनासाद्य बालस्त्यजति जीवितम् ।
गोधालाङ्गूलबद्धेवाकृष्यमाणा बलीयसा ॥ ७१ ॥
तस्मात् प्रागेव रोगेभ्यो रोगेषु तरुणेषु वा ।
भेषजैः प्रतिकुर्वीत य इच्छेत् सुखमात्मनः ॥ ७२ ॥
तत्र श्लोकौ । एषणाश्चाप्युपस्तम्भा बलं कारणमामयाः ।
तिस्रैषणीये मार्गाश्च भिषजो भेषजानि च ॥ ७३ ॥
त्रित्वेनाष्टौ समुद्दिष्टाः कृष्णात्रेयेण धीमता ।
भावाभावेष्वसक्तेन येषु सर्वं प्रतिष्ठितम् ॥ ७४ ॥

इति तिस्रैषणीयाध्यायः समाप्तः ।

---

## द्वादशोऽध्यायः ।

अथातो वातकलाकलीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

वातकलाकलीयज्ञानमधिकृत्य परस्परमतानि जिज्ञासमानाः समुपविश्य महर्षयः पप्रच्छुरन्योन्यं किं गुणो वायुः किमस्य प्रकोपनमुपशमनानि वास्य कानि । कथञ्चैनमसङ्घात-

वन्तमनवस्थितमनासाद्य प्रकोपनप्रशमनानि प्रकोपयन्ति प्रशमयन्ति वा। कानि चास्य कुपिताकुपितस्य शरीराशरीरचरस्य शरीरेषु वा चरतः कर्माणि बहिःशरीरेभ्यो वेति ॥ १ ॥

अत्रोवाच कुशः साङ्कृत्यायनः। रूक्षलघुशीतदारुणखरविशदाः षड़िमे वातगुणा भवन्ति। तत् श्रुत्वा वाक्यं कुमारशिरा भरद्वाज उवाच ॥ २ ॥

एवमेतद् यथा भगवानाह एत एव वातगुणा भवन्ति। स तु एवंगुणैः द्रव्यैरेवं प्रभावैश्च कर्मभिरभ्यस्यमानैर्वायुः प्रकोपमापद्यते समानगुणाभ्यासो हि धातूनां वृद्धिकारणमिति ॥३॥

तत् श्रुत्वा वाक्यं काङ्कायनो वाह्लीकभिषगुवाच। एवमेतद् यथा भगवानाह। एतान्येव वातप्रकोपनानि भवन्ति। अतो विपरीतानि खल्वस्य प्रशमनानि भवन्ति। प्रकोपनविपर्ययो हि धातूनां प्रशमकारणमिति ॥ ४ ॥

तत् श्रुत्वा वाक्यं बड़िशो धामार्गव उवाच। एवमेतद् यथा भगवानाह। एतान्येव वातप्रकोपप्रशमनानि भवन्ति। यथा ह्येनमसङ्घातमनवस्थितमनासाद्य प्रकोपनप्रशमनानि प्रकोपयन्ति प्रशमयन्ति वा। तथानुव्याख्यास्यामः। वातप्रकोपनानि खलु रूक्षलघुशीतदारुणखरविशदशुषिरकराणि शरीराणां तथाविधेषु शरीरेषु वायुराश्रयं गत्वा आप्याय्यमानः प्रकोपमापद्यते। वातप्रशमनानि पुनः स्निग्धगुरूष्णश्लक्ष्णमृदुपिच्छिलघनकराणि शरीराणां तथाविधेषु शरीरेषु वायुरसज्यमानश्चरन् प्रशान्तिमापद्यते ॥ ५ ॥

तच्छ्रुत्वा बड़िशवचनमवितथमृषिगणैरनुमतमुवाच वार्योविदो राजर्षिः एवमेतत् सर्वमनपवादं यथा भगवानाह। यानि तु खलु वायोः कुपिताकुपितस्य शरीराशरीरचरस्य शरीरेषु चरतः कर्माणि बहिःशरीरेभ्यो वा भवन्ति ॥ ६ ॥

तैरात्मवयवान् प्रत्यक्षानुमानोपमानोपदेशैः साधयित्वा नमस्कृत्य वायवे यथाशक्ति प्रवक्ष्यामः । वायुस्तन्त्रयन्त्रधरः प्राणोदानसमानव्यानापानात्मा प्रवर्त्तकश्चेष्टानामुच्चावचानां नियन्ता प्रणेता च मनसः । सर्वेन्द्रियाणामुद्योगकरः । सर्वेन्द्रियार्थानामभिवोढा सर्वशरीरधातुव्यूहकरः सन्धानकरः शरीरस्य प्रवर्त्तको वाचः प्रकृतिः स्पर्शशब्दयोः श्रोत्रस्पर्शनयोर्मूलं हर्षोत्साहयोर्योनिः । समीरणोऽग्नेर्दोषसंशोषणः । क्षेप्ता बहिर्मलानां स्थूलाणुस्रोतसां भेत्ता कर्त्ता गर्भाकृतीनाम् आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः ॥ ७ ॥

कुपितस्तु खलु शरीरे शरीरं नानाविधैर्विकारैरुपतपति । बलवर्णसुखायुषामुपघाताय मनो व्यावर्त्तयति सर्वेन्द्रियाण्युपहन्ति । विनिहन्ति गर्भान् विकृतिमापादयत्यतिकालं धारयति । भयशोकमोहदैन्यातिप्रलापान् जनयति प्राणांश्चोपरुणद्धि । प्रकृतिभूतस्य खल्वस्य लोकेषु चरतः कर्माणीमानि भवन्ति ॥ ८ ॥

तद्यथा । धरणीधारणं ज्वलनोज्ज्वालनम् आदित्यचन्द्रनक्षत्रग्रहगणानां सन्तानगतिविधानं सृष्टिश्च मेघानाम्, अपाञ्च विसर्गः प्रवर्त्तनं स्रोतसां पुष्पफलानाञ्चाभिनिर्वर्त्तनमुद्भेदनञ्चोद्भिदानामृतूनां प्रविभागः, विभागो धातूनां धातुमानसंस्थानव्यक्तिः बीजाभिसंस्कारः शस्याभिवर्द्धनं विक्लेदोपशोषणे अवैकारिकविकारश्चेति ॥ ९ ॥

प्रकुपितस्य खल्वस्य लोकेषु चरतः कर्माणीमानि भवन्ति ॥ १० ॥

तद्यथा उत्पीडनं सागराणामुद्वर्त्तनं सरसां प्रतिसरणमापगानामाकम्पनञ्च भूमेराधमनमम्बुदानां शिखरिशिखरावमथनमुन्मथनमनोकहानां नीहारनिर्ह्रादपांशुसिकतामत्स्यभेकोरग-

चारुधिराश्लाघनिविसर्गौ व्यापादनश्च पवनामृतूनां प्रस्थानाम्‌ संघातौ भूतानाञ्चोपसर्गौ भावानाञ्चाभावकरणम्। चतुर्युगान्तकराणां मेघसूर्य्यानलानिलानां विसर्गः। स हि भगवान् प्रभवश्चाव्ययश्च भूतानां भावानामभावाकरः॥ ११॥

सुखासुखयोर्विधाता मृत्युर्यमो नियन्ता प्रजापतिरदितिर्विश्वकर्मा विश्वरूपः सर्वगः सर्वतन्त्राणां विधाता। भावानामणुर्विभुर्विष्णुः क्रान्ता लोकानां वायुरेव भगवानिति॥ १२॥

तत् श्रुत्वा वार्य्योविदवचो मारीचिरुवाच। यद्यप्येवमेतत् किमर्थस्यास्य वचने विज्ञाने वा सामर्थ्यमस्ति भिषग्विद्यायाम् भिषग्विद्यां वाधिकृत्य इयं कथा प्रवृत्तेति। वार्य्योविद उवाच। भिषक् पवनमतिबलमतिपरुषमतिशीघ्रकारिणमात्ययिकञ्चेत् नानुनिशम्येत्॥ १३॥

सहसा प्रकुपितमतिप्रयतः कथमग्रेऽभिरक्षितुमभिधास्यति। प्रागेवैनमत्ययभयादिति। वायोर्यथार्था स्तुतिरपि भवत्यारोग्याय बलवर्णवृद्धये वर्चस्वित्वायोपचयाय च। ज्ञानोपपत्तये परमायुःप्रकर्षाय चेति। मारीचिरुवाच। अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति। तद्यथा॥ १४॥

पक्तिमपक्तिं दर्शनमदर्शनं मात्रामात्रत्वमूष्मणः प्रकृतिविकृतिवर्णौ शौर्य्यं भयं क्रोधं हर्षं मोहं प्रसादमित्येवमादीनि चापराणि द्वन्द्वानीति। तत् श्रुत्वा मारीचिवचः काश्यप उवाच। सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति। तद्यथा॥ १५॥

दार्ढ्यं शैथिल्यमुपचयं कार्श्यमुत्साहमालस्यं वृषतां क्लीवतां बुद्धिं मोहमेवमादीनि चापराणि द्वन्द्वानीति। तत् श्रुत्वा काश्यपवचो भगवान् पुनर्वसुरात्रेय उवाच। सर्व एव भवन्तः

सर्व एव खलु वातपित्तश्लेष्माणः प्रकृतिभूताः पुरुषमव्यापन्नेन्द्रियं बलवर्णसुखोपपन्नमायुषा महतोपपादयन्ति । सम्यगेवाचरिता धर्मार्थकामा निःश्रेयसेन महता उपपादयन्ति पुरुषमिह चामुष्मिंश्च लोके । विकृतास्त्वेनं महता विपर्ययेणोपपादयन्ति । ऋतवस्त्रय इव विकृतिमापन्ना लोकमशुभेनोपघातकाल इति । तदृषयः सर्व एवानुमेनिरे वचनमात्रेयस्य भगवतोऽभिननन्दुश्चेति ॥ १७ ॥

भवति चात्र । तदात्रेय वचः श्रुत्वा सर्व एवानुमेनिरे ।
ऋषयोऽभिननन्दुश्च यथेन्द्रवचनं सुराः ॥ १८ ॥

तत्र श्लोकौ । षड्गुणा द्विविधा हेतुर्विविधं कर्म यत् पुनः ।
वायोश्चतुर्विधं कर्म पृथक् च कफपित्तयोः ॥ १९ ॥
महर्षीणां मतिर्या या पुनर्वसुमतिश्च या ।
कलाकलीये वातस्य तत् सर्वं सम्प्रकाशितमिति ॥ २० ॥

इति वातकलाकलीयोऽध्यायः समाप्तः ।

---

## त्रयोदशोऽध्यायः ।

अथातः स्नेहाध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

साङ्ख्यैः संख्यातसंख्येयैः सहासीनं पुनर्वसुम् ।
जगद्धितार्थं पप्रच्छ वह्निवेशः स्वसंशयम् ॥ १ ॥
किंयोनयः कति स्नेहाः के च स्नेहगुणाः पृथक् ।
कालानुपाने के कस्य कति काश्च विचारणाः ॥ २ ॥
कति मात्राः कथंमानाः का च केषूपदिश्यते ।
कश्च केभ्यो हितः स्नेहः प्रकर्षः स्नेहने च कः ॥ ३ ॥
स्नेह्याः के के च न स्नेह्याः स्निग्धातिस्निग्धलक्षणम् ।
किं पानात् प्रथमं पीते जीर्णे किञ्च हिताहितम् ॥ ४ ॥

के मृदुक्रूरकोष्ठाः का व्यापदः सिद्धयश्च काः ।
अच्छे संशोधने चैव स्नेहे का हर्त्तिरिष्यते ॥ ५ ॥
विचारणाः केषु योज्या विधिना केन तत् प्रभो ! ।
स्नेहनस्यामितज्ञान ! ज्ञातुमिच्छामि वेदितुम् ॥ ६ ॥
अथ तत् संशयच्छेत्ता प्रत्युवाच पुनर्वसुः ।
स्नेहानां द्विविधा सौम्य ! योनिः स्थावरजङ्गमा ॥ ७ ॥
तिलः पियालाभिषुकौ बिभीतकचित्राभयैरण्डमधूकसर्षपाः ।
कुसुम्भबिल्वारुकमूलकातसीनिकोचकाक्षोडकरञ्जशिग्रुजाः॥८॥
स्नेहाशयाः स्थावरसंज्ञितास्तथा स्युर्जङ्गमा मत्स्यमृगाः सपक्षिणः।
तेषां दधिक्षीरघृतामिषं वसा स्नेहेषु मज्जा च तथोपदिश्यते ॥९॥
सर्वेषां तैलजातानां तिलतैलं विशिष्यते ।
बलार्थे स्नेहने चाग्र्यमैरण्डन्तु विरेचने ॥ १० ॥
सर्पिस्तैलं वसा मज्जा सर्वस्नेहोत्तमा मताः ।
एभ्यश्चैवोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात् ॥ ११ ॥
घृतं पित्तानिलहरं रसशुक्रौजसां हितम् ।
निर्वापणं मृदुकरं स्वरवर्णप्रसादनम् ॥ १२ ॥
मारुतघ्नं न च श्लेष्मवर्द्धनं बलवर्द्धनम् ।
त्वच्यमुष्णं स्थिरकरं तैलं योनिविशोधनम् ॥ १३ ॥
विद्धभग्नाहतभ्रष्टयोनिकर्णशिरोरुजि ।
पौरुषोपचये स्नेहे व्यायामे चेष्यते वसा ॥ १४ ॥
बलशुक्ररसश्लेष्ममेदो मज्जविवर्द्धनः ।
मज्जा विशेषतोऽस्थ्नाञ्च बलकृत् स्नेहने हितः ॥ १५ ॥
सर्पिः शरदि पातव्यं वसा मज्जा च माधवे ।
तैलं प्रावृषि नात्युष्णं शीते स्नेहं पिबेन्नरः ॥ १६ ॥
वातपित्ताधिके रात्रावुष्णे चापि पिबेन्नरः ।
श्लेष्माधिके दिवाशीते पिबेच्चामलभास्करे ॥ १७ ॥

अल्पगुणे वा दिवापीते वातपित्ताधिकेन च ।
मूर्च्छां पिपासामुन्मादं कामलां वा समीरयेत् ॥ १८ ॥
शीते रात्रौ पिवेत् स्नेहं नरः श्लेष्माधिकोऽपि वा ।
आनाहमरुचिं शूलं पाण्डुतां वा समृच्छति ॥ १९ ॥
जलमुष्णं घृते पेयं यूषस्तैलेऽनुशस्यते ।
वसामज्ज्ञोस्तु मण्डः स्यात् सर्वेषूष्णमथाम्बु वा ॥ २० ॥
ओदनश्च विलेपी च रसो मांसं पयो दधि ।
यवागूः सूपशाकौ च यूषः काम्बलिकः खडः ॥ २१ ॥
शक्तवस्तिलपिष्टञ्च मद्यं लेहास्तथैव च ।
भक्ष्यमभ्यञ्जनं वस्तिस्तथा चोत्तरवस्तयः ॥ २२ ॥
गण्डूषः कर्णतैलञ्च नस्यं कर्णाक्षितर्पणम् ।
चतुर्विंशतिरित्येताः स्नेहस्य प्रविचारणाः ॥ २३ ॥
अच्छपेयस्तु यः स्नेहो न तामाहुर्विचारणाम् ।
स्नेहस्य स भिषग्दृष्टः कल्पः प्राथमकल्पिकः ॥ २४ ॥
रसैश्चोपहितः स्नेहः समासव्यासयोगिभिः ।
षड्भिस्त्रिषष्टिधा सङ्ख्यां प्राप्नोत्येकश्च केवलः ॥ २५ ॥
एवमेता चतुःषष्टिः स्नेहानां प्रविचारणा ।
सात्म्यर्त्तुव्याधिपुरुषान् प्रयोज्या जानता भवेत् ॥ २६ ॥
अहोरात्रमहः कृत्स्नमर्द्धाहञ्च प्रतीक्षते ।
प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति ॥ २७ ॥
इति तिस्रः समुद्दिष्टा मात्राः स्नेहस्य मानतः ।
तासां प्रयोगान् वक्ष्यामि पुरुषं पुरुषं प्रति ॥ २८ ॥
प्रभूतस्नेहनित्या ये क्षुत्पिपासासहा नराः ।
पावकश्चोत्तमबलो येषां ये चोत्तमा बले ॥ २९ ॥
गुल्मिनः सर्पदष्टाश्च वीसर्पोपहताश्च ये ।
उन्मत्ताः कृच्छ्रमूत्राश्च गाढवर्चस एव च ॥ ३० ॥

पिबेयुरुत्तमां मात्रां तस्याः पाने गुणान् शृणु ।
विकारान् शमयत्येषा शीघ्रं सम्यक् प्रयोजिता ॥ ३१ ॥
दोषानुकर्षिणी मात्रा सर्वमार्गानुसारिणी ।
बल्या पुनर्नवकरी शरीरेन्द्रियचेतसाम् ॥ ३२ ॥
अरुष्कस्फोटपीड़का कण्डुपामाभिरर्दिताः ।
कुष्ठिनश्च प्रमीढाश्च वातशोणितकाश्च ये ॥ ३३ ॥
नातिबह्वाशिनश्चैव मृदुकोष्ठास्तथैव च ।
पिबेयुर्मध्यमां मात्रां मध्यमाश्चापि ये बले ॥ ३४ ॥
मात्रैषा मन्दविभ्रंशा न चातिबलहारिणी ।
सुखेन च स्नेहयति शोधनार्थे च युज्यते ॥ ३५ ॥
ये तु वृद्धाश्च बालाश्च सुकुमाराः सुखोचिताः ।
रिक्तकोष्ठत्वमहितं येषां मन्दाग्नयश्च ये ॥ ३६ ॥
ज्वरातीसारकासाश्च येषां चिरसमुत्थिताः ।
स्नेहमात्रां पिबेयुस्ते ह्रस्वां ये चावरा बले ॥ ३७ ॥
परिहारे सुखा चैषा मात्रा स्नेहनबृंहणी ।
वृष्या बल्या निराबाधा चिरञ्चाप्यनुवर्त्तते ॥ ३८ ॥
* वातपित्तप्रकृतयो वातपित्तविकारिणः ।
चक्षुष्कामाः चताः चीणा वृद्धा बालास्तथाबलाः ॥ ३९ ॥
आयुःप्रकर्षकामाश्च बलवर्णस्वरार्थिनः ।
पुष्टिकामाः प्रजाकामाः सौकुमार्य्यार्थिनश्च ये ॥ ४० ॥
दीप्त्योजःस्मृतिमेधाग्निबुद्धीन्द्रियबलार्थिनः ।
पिबेयुः सर्पिरार्त्ताश्च दाहशस्त्रविषाग्निभिः ॥ ४१ ॥
प्रवृद्धश्लेष्ममेदस्काश्चलस्थूलगलोदराः ।
वातव्याधिभिराविष्टा वातप्रकृतयश्च ये ॥ ४२ ॥
बलं तनुत्वं लघुतां दृढ़तां स्थिरगात्रताम् ।
स्निग्धश्लक्ष्णतनुत्वक्तां ये च काङ्क्षन्ति देहिनः ॥ ४३ ॥

क्रमिकोष्ठाः क्रूरकोष्ठास्तथा नाडीभिरर्दिताः ।
पिबेयुः शीतले काले तैलं तैलोचिताश्च ये ॥ ४४ ॥
वातातपसहा ये च रूक्षा भाराध्वकर्षिताः ।
संशुष्करेतोरुधिरा निष्पीतकफमेदसः ॥ ४५ ॥
अस्थिसन्धिसिरास्नायुमर्मकोष्ठमहारुजः ।
बलवान् मारुतो येषां खानि चावृत्य तिष्ठति ॥ ४६ ॥
महच्चाग्निबलं येषां वसासात्म्याश्च ये नराः ।
तेषां स्नेहयितव्यानां वसापानं विधीयते ॥ ४७ ॥
दीप्ताग्नयः क्लेशसहा घस्मराः स्नेहसेविनः ।
वातार्त्ताः क्रूरकोष्ठाश्च स्नेह्या मज्जानमाप्नुयुः ॥ ४८ ॥
येभ्यो येभ्यो हितो यो यः स्नेहः स परिकीर्त्तितः ।
स्नेहनस्य प्रकर्षौ तु सप्तरात्रत्रिरात्रकौ ॥ ४९ ॥
स्वेद्याः शोधयितव्याश्च रूक्षवातविकारिणः ।
व्यायाममद्यस्त्रीनित्याः स्नेह्याः स्युर्ये च चिन्तकाः ॥ ५० ॥
संशोधनादृते येषां रूक्षणं संप्रवक्ष्यते ।
न तेषां स्नेहनं शस्तमुत्सन्नकफमेदसाम् ॥ ५१ ॥
अभिष्यन्दाननगुदा नित्यं मन्दाग्नयश्च ये ।
तृष्णामूर्च्छापरीताश्च गर्भिण्यस्तालुशोषिणः ॥ ५२ ॥
अन्नद्विषश्छर्दयन्तो जठरामगरार्दिताः ।
दुर्बलाश्च प्रतान्ताश्च स्नेहग्लाना मदातुराः ॥ ५३ ॥
न स्नेह्या वर्त्तमानेषु न नस्तो बस्तिकर्मसु ।
स्नेहपानात् प्रजायन्ते तेषां रोगाः सुदारुणाः ॥ ५४ ॥
पुरीषं ग्रथितं रूक्षं वायुरप्रगुणो मृदुः ।
पक्ता खरत्वं रौक्ष्यञ्च गात्रस्यास्निग्धलक्षणम् ॥ ५५ ॥
वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् ।
मार्दवं स्निग्धता चाङ्गे स्निग्धानामुपजायते ॥ ५६ ॥

पाण्डुता गौरवं जाड्यं पुरीषस्याविपक्वता।
तन्द्रीररुचिरुत्क्लेशः स्यादतिस्निग्धलक्षणम् ॥ ५७ ॥
द्रवोष्णमनभिष्यन्दि भोज्यमन्नं प्रमाणतः।
नातिस्निग्धमसंकीर्णं श्वःस्नेहं पातुमिच्छता ॥ ५८ ॥
पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः।
शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः ॥ ५९ ॥
उष्णोदकोपचारी स्यात् ब्रह्मचारी क्षपाशयः।
शकृन्मूत्रानिलोद्गारानुदीर्णांश्च न धारयेत् ॥ ६० ॥
व्यायाममुच्चैर्वचनं क्रोधशोकौ हिमातपौ।
वर्जयेदप्रवातञ्च सेवेत शयनासनम् ॥ ६१ ॥
स्नेहं पीत्वा नरः स्नेहं प्रतिभुञ्जान एव च।
स्नेहमिथ्योपचाराद्धि जायन्ते दारुणा गदाः ॥ ६२ ॥
मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया।
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः ॥ ६३ ॥
गुड़मिक्षुरसं मस्तु क्षीरमुल्लोड़ितं दधि।
पायसं कृसरं सर्पिः काश्मर्यं त्रिफलारसम् ॥ ६४ ॥
द्राक्षारसं पीलुरसं जलमुष्णमथापि वा।
मद्यं वा तरुणं पीत्वा मृदुकोष्ठो विरिच्यते ॥ ६५ ॥
विरेचयन्ति नैतानि क्रूरकोष्ठं कदाचन।
भवति क्रूरकोष्ठस्य ग्रहणी तूल्बणानिलाः ॥ ६६ ॥
उदीर्णपित्ताल्पकफा ग्रहणी मन्दमारुता।
मृदुकोष्ठस्य तस्मात् स सुविरेच्यो नरः स्मृतः ॥ ६७ ॥
उदीर्णपित्ता ग्रहणी यस्य चाग्निबलं महत्।
भस्मीभवति तस्याशु स्नेहः पीतोऽग्नितेजसा ॥ ६८ ॥
स जग्ध्वा स्नेहमात्रां तामोजः प्रचालयन् बली।
स्नेहाग्निरुत्तमां तृष्णां सोपसर्गामुदीरयेत् ॥ ६९ ॥

नालं स्नेहसमृद्धस्य शमायान्नं सुगुर्वपि।
स चेत् सुशीतं सलिलं नासादयति दह्यते ॥ ७० ॥
यथैवाशीविषः कक्षमध्यगः स्वविषाग्निना।
अजीर्णे यदि तु स्नेहे तृष्णा स्याच्छर्दयेद्भिषक् ॥ ७१ ॥
शीतोदकं पुनः पीत्वा भुक्त्वा रूक्षान्नमुल्लिखेत्।
न सर्पिः केवलं पित्ते पेयं सामे विशेषतः ॥ ७२ ॥
सर्वं ह्यनुरजेद्देहं हत्वा संज्ञाञ्च मारयेत्।
तन्द्रा सोत्क्लेश आनाहो ज्वरः स्तम्भो विसंज्ञता ॥ ७३ ॥
कुष्ठानि कण्डूः पाण्डुत्वं शोफार्शांस्यरुचिस्तृषा।
जठरं ग्रहणीदोषः स्तैमित्यं वाक्यनिग्रहः।
शूलमामप्रदोषाश्च जायन्ते स्नेहविभ्रमात् ॥ ७४ ॥
तत्राप्युल्लेखनं शस्तं स्वेदः कालप्रतीक्षणात्।
प्रतिपत्तिर्यथाव्याधि वुद्धा संसनमेव च।
तत्रारिष्टप्रयोगमथ रूक्षपानान्नसेवनम् ॥ ७५ ॥
मूत्राणां त्रिफलायाश्च स्नेहव्यापत्तिभेषजम्।
अकाले चाहितश्चैव मात्रया न च योजितः ॥ ७६ ॥
स्नेहमिथ्योपचाराच्च व्यापद्येतातिसेवितः।
स्नेहात् प्रस्कन्दनो जन्तुस्त्रिरात्रोपरमः पिबेत् ॥ ७७ ॥
स्नेहवद् द्रवमुष्णञ्च त्र्यहं भुक्त्वा रसौदनम्।
एकाहोपरतस्तद्वत् भुक्त्वा प्रच्छर्दनं पिबेत् ॥ ७८ ॥
स्यात् तु संशोधनार्थाय वृत्तिः स्नेहे विरिक्तवत्।
स्नेहद्विषः स्नेहनित्या मृदुकोष्ठाश्च ये नराः ॥ ७९ ॥
क्लेशासहा मद्यनित्यास्तेषामिष्टा विचारणा।
लावतैत्तिरिमायूरहंसवाराहकौक्कुटाः।
गव्याजौरभ्रमात्स्याश्च रसाः स्युः स्नेहने हिताः ॥ ८० ॥
यवकोलकुलत्थाश्च स्नेहाः सगुडशर्कराः।

दाडिमं दधि सव्योषं रससंयोगसंग्रहः ॥ ८१ ॥
स्नेहयन्ति तिलाः पूर्वं जग्धाः सस्नेहफाणिताः ।
कृशराश्च बहुस्नेहास्तिलकाम्बलिकास्तथा ॥ ८२ ॥
फाणितं शृङ्गवेरश्च तैलश्च सुरया सह ।
पिबेद्रूक्षो घृतैर्मांसैर्जीर्णेऽश्नीयाच्च भोजनम् ॥ ८३ ॥
तैलं मण्डेन सुरया वसां मज्जानमेव वा ।
पिबेत् सफाणितं क्षीरं नरः स्निह्यति वातिकः ॥ ८४ ॥
धारोष्णं स्नेहसंयुक्तं पीत्वा सलवणं पयः ।
नरः स्निह्यति पीत्वा वा सरं दध्नः सफाणितम् ॥ ८५ ॥
पाञ्चप्रसृतिकी पेया पायसो माषमिश्रकः ।
क्षीरसिद्धो बहुस्नेहः स्नेहयेदचिरान्नरम् ॥ ८६ ॥
सर्पिस्तैलं वसा मज्जा तण्डुलप्रसृतैः शृता ।
पाञ्च प्रसृतिकी पेया पेया स्नेहनमिच्छता ॥ ८७ ॥
ग्राम्यानुपौदकं मांसं गुडं दधि पयस्तिलान् ।
कुष्ठी शोथी प्रमेही च स्नेहने न प्रयोजयेत् ॥ ८८ ॥
स्नेहैर्यथास्वं तान् सिद्धैः स्नेहयेदविकारिभिः ॥ ८८ ॥
पिप्पलीभिर्हरीतक्याः सिद्धैस्त्रिफलयापि वा ।
द्राक्षामलकयूषाभ्यां दध्ना चाम्लेन साधयेत् ॥ ९० ॥
व्योषगर्भं भिषक् स्नेहं पीत्वा स्निह्यति तन्नरः ।
यवकोलकुलत्थानां रसाः क्षीरं सुरा दधि ॥ ९१ ॥
क्षीरसर्पिश्च तत् सिद्धं स्नेहनीयं घृतोत्तमम् ।
तैलमज्जवसासर्पिर्बदरत्रिफलारसैः ।
योनिशुक्रप्रदोषेषु साधयित्वा प्रयोजयेत् ॥ ९२ ॥
गृह्णात्यम्बु यथा वस्त्रं प्रस्रवत्यधिकं यथा ।
तथाग्निर्जीर्यति स्नेहं तथा स्रवति चाधिकम् ॥ ९३ ॥
यथा वा क्लेदयत्पिण्डमासिक्तं त्वरया जलम् ।

स्रवति संसते स्नेहात्तथा त्वरितसेवितः ॥ ९४ ॥
लवणोपहिताः स्नेहाः स्नेहयन्त्यचिरान्नरम् ।
तद्ध्यभिष्यन्द्यरूक्षञ्च सूक्ष्ममुष्णं व्यवायि च ॥ ९५ ॥
स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम् ।
स्नेहस्वेदोपपन्नस्य संशोधनमथेतरमिति ॥ ९६ ॥
तत्र श्लोकः । स्नेहाः स्नेहविधिः कृत्स्नो व्यापत्सिद्धिः सभेषजा ।
यथा प्रश्नं भगवता व्याहृतं चान्द्रभागिना ॥ ९७ ॥
स्नेहाध्यायः समाप्तः ।

---

## चतुर्दशोऽध्यायः ।

अथातः स्वेदाध्यायं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ।

अतः स्वेदाः प्रवक्ष्यन्ते यैर्यथावत् प्रयोजितैः ।
स्वेदसाध्याः प्रशाम्यन्ति गदा वातकफात्मकाः ॥ १ ॥
स्नेहपूर्वं प्रयुक्तेन स्वेदेनावर्जितेऽनिले ।
पुरीषमूत्ररेतांसि न सज्जन्ति कथञ्चन ॥ २ ॥
शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ।
नमयन्ति यथान्यायं किं पुनर्जीवतो नरान् ॥ ३ ॥
रोगर्त्तुव्याधितापेक्षी नात्युष्णोऽतिमृदुर्न च ।
द्रव्यवान् कल्पितो देशे स्वेदः कार्यकरो मतः ॥ ४ ॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले ।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो हितः ॥ ५ ॥
वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ।
स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः ॥ ६ ॥
आमाशयगते वाते कफे पक्वाशयाश्रिते ।

रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च ॥ ७ ॥
वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु नैव वा ।
मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः ॥ ८ ॥
सुशुद्धैर्नक्तकैः पिण्ड्या गोधूमानामथापि वा ।
पद्मोत्पलपलाशैर्वा स्वेद्यः संवृत्य चक्षुषी ॥ ९ ॥
मुक्तावलीभिः शीताभिः शीतलैर्भाजनैरपि ।
जलार्द्रैर्जलजैर्हस्तैः स्विद्यतो हृदयं स्पृशेत् ॥ १० ॥
शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ।
सञ्जाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥ ११ ॥
पित्तप्रकोपो मूर्च्छा च शरीरसदनं तृषा ।
दाहः स्वेदाङ्गदौर्बल्यमतिस्विन्नस्य लक्षणम् ॥ १२ ॥
उक्तस्तस्याशितीये यो ग्रैष्मिकः सर्वशो विधिः ।
सोऽतिस्विन्नस्य कर्त्तव्यो मधुरः स्निग्धशीतलः ॥ १३ ॥
कषायमद्यनित्यानां गर्भिण्या रक्तपित्तिनाम् ।
पित्तिनां सातिसाराणां रूक्षाणां मधुमेहिनाम् ॥ १४ ॥
विदग्धभ्रष्टब्रध्नानां विषमद्यविकारिणाम् ।
श्रान्तानां नष्टसंज्ञानां स्थूलानां पित्तमेहिनाम् ॥ १५ ॥
तृष्यतां क्षुधितानाञ्च क्रुद्धानां शोचतामपि ।
कामल्युदरिणाञ्चैव क्षतानामाढ्यरोगिणाम् ॥ १६ ॥
दुर्बलातिविशुष्काणामुपक्षीणौजसां तथा ।
भिषक् तैमिरिकाणाञ्च न स्वेदमवतारयेत् ॥ १७ ॥
प्रतिश्याये च कासे च हिक्काश्वासेष्वलाघवे ।
कर्णमन्याशिरःशूले स्वरभेदे गलग्रहे ।
अर्दितैकाङ्गसर्वाङ्गपक्षाघाते विनामके ॥ १८ ॥
कोष्ठानाहविबन्धेषु शुक्राघाते विजृम्भके ।
पार्श्वपृष्ठकटीकुक्षिसंग्रहे गृध्रसीषु च ॥ १९ ॥

मूत्रकृच्छ्रे महत्त्वे च मुष्कयोरङ्गमर्दके।
पादोरुजानुजङ्घार्त्तिसंग्रहे श्वयथावपि ॥ २० ॥
खल्लीष्वामेषु शीते च वेपथौ वातकण्टके।
सङ्कोचायामशूलेषु स्तम्भगौरवसुप्तिषु।
सर्वाङ्गेषु विकारेषु स्वेदनं हितमुच्यते ॥ २१ ॥
तिलमासकुलत्थाम्लघृततैलामिषौदनैः।
पायसैः कृशरैर्मांसैः पिण्डस्वेदं प्रयोजयेत् ॥ २२ ॥
गोखरोष्ट्रवराहाश्वशकृद्भिः सतुषैर्यवैः।
सिकतापांशुपाषाणकरीषायसपूटकैः ॥ २३ ॥
श्लैष्मिकान् स्वेदयेत् पूर्वैर्वातिकान् समुपाचरेत्।
द्रव्याण्येतानि शस्यन्ते यथास्वं प्रस्तरेष्वपि ॥ २४ ॥
भूगृहेषु च जेन्ताकेपूष्णगर्भगृहेषु च।
विधूमाङ्गारतप्तेष्वभ्यक्तः स्विद्यति ना सुखम् ॥ २५ ॥
ग्राम्यानूपौदकं मांसं पयो वस्तशिरस्तथा।
वराहमध्यं पित्तासृक् स्नेहवत्तिलतण्डुलान्।
इत्येतानि समुत्क्वाथ्य नाडीस्वेदं प्रयोजयेत् ॥ २६ ॥
देशकालविभागज्ञो युक्त्यपेक्षो भिषक्तमः।
वरुणामृतकैरण्डशिग्रुमूलकसर्षपैः ॥ २७ ॥
वासावंशकरञ्जार्कपत्रैरश्मन्तकस्य च।
शोभाञ्जनकशैरीषमालतीसुरसार्जकैः।
पत्रैरुत्क्वाथ्य सलिलं नाडीस्वेदं प्रयोजयेत् ॥ २८ ॥
भूतीकपञ्चमूलाभ्यां सुरया दधिमस्तुना।
पत्रैरम्लैश्च सस्नेहैर्नाडीस्वेदं प्रयोजयेत् ॥ २९ ॥
एत एव च निर्यूहाः प्रयोज्या जालकोष्ठके।
स्वेदनार्थं घृतक्षीरतैलकोष्ठांश्च कारयेत् ॥ ३० ॥
गोधूमशकलैश्चूर्णैर्यवानामम्लसंयुतैः।

सम्नेहकिण्वलवणैरुपनाहः प्रशस्यते ॥ ३१ ॥
गन्धैः सुरायाः किण्वेन जीवन्त्या शतपुष्पया ।
उमया कुष्ठतैलाभ्यां युक्तया चोपनाहयेत् ॥ ३२ ॥
चर्मभिश्चोपनद्धव्यः सलोमभिरपूतिभिः ।
उष्णवीर्यैरलाभे तु कौशेयाविकशाटकैः ॥ ३३ ॥
रात्रौ बद्धं दिवा मुञ्चेत् मुञ्चेद्रात्रौ दिवाकृतम् ।
विदाहपरिहारार्थं स्यात् प्रकर्षस्तु शीतले ॥ ३४ ॥
सङ्करः प्रस्तरो नाडीपरिषेकोऽवगाहनम् ।
जेन्ताकोऽश्मघनः कर्षुः कुटीभूः कुम्भिकैव च ॥ ३५ ॥
कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश ।
तान् यथावत् प्रवक्ष्यामि सर्वानेवानुपूर्वशः ॥ ३६ ॥ इति

तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं सङ्करस्वेद इति विद्यात् ॥ ३७ ॥

शूकशमीधान्यपुलाकानां वेशवारपायसकृशरोत्कारिकादीनां वा प्रस्तरे कौशेयाविकोत्तरप्रच्छदे पञ्चाङ्गुलोरुबुकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्वगात्रस्य शयानस्योपरि स्वेदनं प्रस्तरस्वेद इति विद्यात् ॥ ३८ ॥

स्वेदनद्रव्याणां पुनर्मूलफलपत्रशुङ्गादीनां मृगशकुनिपिशितशिरःपादादीनामुष्णस्वभावानां वा यथार्हमम्ललवणस्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुम्भ्यां वाष्पमनुद्वमन्त्यामुत्क्वथितानां नाड्या शरेषीकावंशदलकरञ्जार्कपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्याममात्रया व्यामार्धदीर्घया वा व्यामचतुर्भागाष्टभागमूलाग्रपरिणाहस्रोतसा सर्वतो वातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्वा विनामितया वातहरसिद्धस्नेहाभ्यक्तगात्रस्य वाष्पमुपहरेत् ।

वाष्पो ह्यनूर्ध्वगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः ॥ ३९ ॥

वातिकोत्तरवातिकानां पुनर्मूलादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वर्षुनिकाः प्रनाड़ीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषेचयेदिति परिषेकः॥ ४०॥

वातहरोत्क्वाथक्षीरतैलघृतपिशितरसोष्णसलिलकोष्ठकावगाहस्तु यथोक्त एवावगाहः॥ ४१॥

अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत। तत्र पूर्वस्यां दिश्युत्तरस्यां वा गुणवति प्रशस्ते भूमिभागे कृष्णमृत्तिके सुवर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभूमिभागे सप्ताष्टौ वा अरत्नी सुपक्रम्योदकात् प्राङ्मुखमुदङ्मुखं वाभिमुखतीर्थं कूटागारं कारयेत्॥ ४२॥

उत्सेधविस्तारतः परमरत्नीः षोडश समन्तात् सुवृत्तं मृत्कर्मसम्पन्नमनेकवातायनम्। अस्य कूटागारस्यान्तः समन्ततो भित्तिमरत्नीविस्तारोत्सेधां पिण्डिकां कारयेत् आकपाटात् मध्ये चास्य कूटागारस्य चतुष्किष्कुमात्रं पुरुषप्रमाणं मृण्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकास्तं सपिधानं कारयेत्॥ ४३॥

तच्च खादिराणामाश्वकर्णादीनां मेध्यानां काष्ठानां पूरयित्वा प्रदीपयेत्। स यदा जानीयात् साधुदग्धानि काष्ठानि विगतधूमानि अवतप्तञ्च केवलमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति॥ ४४॥

तत्रैनं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत् प्रवेशयंश्चैनमनुशिष्यात्। सौम्य! प्रविश कल्याणायारोग्याय चेति। प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः। न च त्वया स्वेदमूर्च्छापरीतेनापि सता पिण्डिकैषा विमोक्तव्या आप्राणोच्छ्वासात्। भ्रश्यमानो

द्वातः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः ॥ ४५ ॥

तस्मात् पिण्डिकामिनां न कथञ्चन मुञ्चेथाः त्वं यदा जानीयाः विगताभिष्यन्दमात्मानं सम्यक् प्रस्रुतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघुभूतमपगतविबन्धस्तम्भसुप्तिवेदनागौरवमिति। ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः। निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतोदकमुपस्पृशेथाः। अपगतसन्तापक्लमस्तु मुहूर्त्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीया इति जेन्ताकः स्वेदः ॥ ४६ ॥

शयनस्य प्रमाणेन घनामश्ममयीं शिलाम्।
तापयित्वा मारुतघ्नैर्दारुभिः संप्रदीपितैः ॥ ४७ ॥
व्यपोह्य सर्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा।
तां शिलामथ कुर्वीत कौषेयाविकसंस्तराम् ॥ ४८ ॥
तस्यां स्वभ्यक्तसर्वाङ्गः स्वपन् स्विद्यति ना सुखम्।
रौरवाजिनकौषेयप्रावाराद्यैः सुसंवृतः ॥ ४९ ॥
इत्युक्तोऽश्मघनस्वेदः कर्षूस्वेदः प्रवक्ष्यते।
खानयेच्छयनस्याधः कर्षूं स्थानविभागवित् ॥ ५० ॥
दीप्तैरधूमैरङ्गारैस्तां कर्षूं पूरयेत्ततः।
तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम् ॥ ५१ ॥
अनत्युत्सेधविस्तारां वृत्ताकारामलोचनाम्।
घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः सम्प्रलेपयेत् ॥ ५२ ॥
कुटीमध्ये भिषक् शय्यां स्वास्तीर्णां स्थापयेत्ततः।
प्रावाराजिनकौषेयकुथ्यकम्बलगोलकैः ॥ ५३ ॥
हसन्तिकाभिरङ्गारपूर्णाभिस्तां च सर्वशः।
परिवार्यान्तरारोहेदभ्यक्तः स्विद्यते सुखम् ॥ ५४ ॥
य एवाश्मघनस्वेदविधिर्भूमौ स एव तु।

प्रशस्तायां निवातायां समायामुपदिश्यते ॥ ५५ ॥
कुम्भीं वातहरक्काथपूर्णां भूमौ निखानयेत्।
अर्द्धभागं त्रिभागं वा शयनं तत्र चोपरि ॥ ५६ ॥
स्थापयेदासनं वापि नातिसान्द्रपरिच्छदम्।
अथ कुम्भ्यां सुसन्तप्तान् प्रक्षिपेदयसो गुडान् ॥ ५७ ॥
पाषाणान् वोष्मणा तेन तत्स्थः स्विद्यति ना सुखम्।
सुसंवृताङ्गः स्वभ्यक्तः स्नेहैरनिलनाशनैः ॥ ५८ ॥
कूपं शयनविस्तारं द्विगुणञ्चापि वेधतः।
देशे निवाते शस्ते च कुर्य्यादन्तः सुमार्जितम् ॥ ५९ ॥
हस्त्यश्वगोखरोष्ट्राणां करीषैर्दग्धपूरिते।
स्ववच्छन्नः सुसंस्तीर्णे स्वपन् स्विद्यति ना सुखम् ॥ ६० ॥
धीतिकान्तु करीषाणां यथोक्तानां प्रदीपयेत्।
शयनान्तः प्रमाणेन शय्यामुपरि तत्र च ॥ ६१ ॥
सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत्।
स्ववच्छन्नः स्वपंस्तत्राभ्यक्तः स्विद्यति ना सुखम् ॥ ६२ ॥
होलाकस्वेद इत्येष सुखः प्रोक्तो महर्षिणा।
इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः ॥ ६३ ॥
व्यायाम उष्णसदनं गुरुप्रावरणं क्षुधा।
बहुपानं भयक्रोधावुपनाहाहवातपाः ॥ ६४ ॥
स्वेदयन्ति दशैतानि नरमग्निगुणादृते।
इत्युक्तो द्विविधः स्वेदः संयुक्तोऽग्निगुणैर्न च ॥ ६५ ॥
एकाङ्गसर्वाङ्गगतः स्निग्धो रूक्षस्तथैव च।
इत्येतत् द्विविधं द्वन्द्वं स्वेदमुद्दिश्य कीर्त्तितम् ॥ ६६ ॥
स्निग्धस्वेदैरुपक्रम्य स्विन्नः पथ्याशनो भवेत्।
तदहः स्विन्नगात्रस्तु व्यायामं वर्जयेन्नरः ॥ ६७ ॥
तत्र श्लोकाः। स्वेदो यथा कार्य्यकरो हितो येभ्यश्च यद्विधः।

यत्र देशे यथायोग्यो देशो रक्ष्यश्च यो यथा ॥ ६८ ॥
स्विन्नातिस्विन्नरूपाणि तथातिस्विन्नभेषजम् ।
अस्वेद्याः स्वेदयोग्याश्च स्वेदद्रव्याणि कल्पना ॥ ६९ ॥
त्रयोदशविधः स्वेदो विना दशविधोऽग्निना ।
संग्रहेण च षट् स्वेदाः स्वेदाध्याये निदर्शिताः ॥ ७० ॥
स्वेदाधिकारे यद्वाच्यमुक्तमेतन्महर्षिणा ।
शिष्यैस्तु प्रतिपत्तव्यमुपदेष्टा पुनर्वसुरिति ॥ ७१ ॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते स्वेदाध्यायः समाप्तः ।

---

## पञ्चदशोऽध्यायः ।

अथात उपकल्पनीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

इह खलु राजानं राजमात्रमन्यं वा विपुलद्रव्यं संभृतसम्भारं वमनं विरेचनं वा पाययितुकामेन भिषजा प्रागेवौषधपानात् सम्भारा उपकल्पनीया भवन्ति । सम्यक् चैव हि गच्छत्यौषधे प्रतिभोगार्थाः । व्यापन्ने चौषधे व्यापदः परिसंख्याय प्रतीकारार्थाः । न हि सन्निकृष्टे काले प्रादुर्भूतायामापदि सत्यपि क्रयालये सुकरमाशु सम्भरणमौषधानां यथावदित्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच ॥ १ ॥

ननु भगवन्नादावेव ज्ञानवता तथा प्रतिविधातव्यं यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन । सम्यक् प्रयोगनिमित्ता हि सर्वकर्मणां सिद्धिरिष्टा व्यापच्चासम्यक् प्रयोगनिमित्ता । अथ सम्यगसम्यक् च समारब्धं कर्म सिद्ध्यति व्यापद्यते वा नियमेन । तुल्यं भवति ज्ञानमज्ञानेनेति ॥ २ ॥

तमुवाच भगवानात्रेयः । शक्यं तथा प्रतिविधातुमस्माभिरस्मद्विधैर्वाप्यग्निवेश यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन ।

तच्च प्रयोगसौष्ठवमुपदेष्टुं यथावन्न हि कश्चिदर्हति। य एतदेव-मुपदिष्टमुपधारयितुमुत्सहेत ॥ ३ ॥

उपधार्य्य वा तथा प्रतिपत्तुं प्रयोक्तुं वा सूक्ष्माणि हि दोषभेषजदेशकालबलशरीराहारसात्म्यसत्वप्रकृतिवयसामवस्थान्तराणि ॥ ४ ॥

यान्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्युः किं पुनरल्पबुद्धेः ॥ ५ ॥

तस्मादुभयमेतद्यथावदुपदेक्ष्यामः। सम्यक् प्रयोगञ्चौषधानां व्यापन्नानाञ्च व्यापत्साधनानि सिद्धिषु उत्तरकालम्। इदानीं तावत् सम्भारान् विविधानपि समासेनोपदेक्ष्यामः ॥ ६ ॥

तद्यथा। दृढं निवातं प्रवातैकदेशं सुखप्रविचारमनुपत्यकं धूमातपरजसामनभिगमनीयमनिष्टानाञ्च शब्दस्पर्शरसरूपगन्धानां सोपानोदूखलमुषलवर्चःस्थानस्नानभूमिमहानसोपेतं वास्तुविद्याकुशलः प्रशस्तं गृहमेव तावत् पूर्वमुपकल्पयेत् ॥ ७ ॥

ततः शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नानुपचारकुशलान् सर्वकर्मसु पर्य्यवदातान् सूपौदनपाचकस्नापकसंवाहकोत्थापकसंवेशकौषधपेषकांश्च परिचारकान् सर्वकर्मसु अप्रतिकूलान् तथा गीतवादित्रोल्लापकश्लोकगाथाख्यायिकेतिहासपुराणकुशलानभिप्रायज्ञानानुमतांश्च देशकालविदः पारिषद्यांश्च। तथा लावकपिञ्जलशशहरिणैनकालपुच्छकमृगमातृकोरभ्रान् ॥ ८ ॥

गां दोग्ध्रीं शीलवतीमनातुरां जीवद्वत्सां सुप्रतिविहिततृणशरणपानीयाम्। जल-पात्राचमनीयोदकोष्ठ-मणिक-पिठर-घटकुम्भीकुम्भकुण्ड-शरावदर्वीकपरिपचन-मन्थानचर्म्मचेलसूत्र-कार्पासोर्णादीनि च शयनासनादीनि चोपन्यस्तभृङ्गार-प्रतिग्रहाणि सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानानि स्वापाश्रयाणि

सम्वेशनोपवेशनस्नेहस्वेदाभ्यङ्गप्रदेह परिषेकानुलेपनवमनविरेचनास्थापनानुवासन-शिरोविरेचन-मूत्रोच्चारकर्म्मणामुपचारसुखानि सुप्रक्षालितोपधानाश्च सुश्लक्ष्णखरमध्यमा दृषदः शस्त्राणि चोपकरणार्थानि। धूमनेत्रञ्च वस्तिनेत्रञ्चोत्तरवस्तिकञ्च। कुशहस्तञ्च तुलाञ्च मानभाण्डञ्च घृततैलवसामज्जक्षौद्रफाणितलवणेन्धनोदक-मधुसीधुसुरा-सौवीरक-तुषोदकमैरेयमेदक-दधिमण्डोदश्विद्धान्याम्लमूत्राणि च॥ ८॥

तथा शालिषष्टिकमुद्गमाषयवतिलकुलत्थबदरमृद्वीकाकाश्मर्य्यपरूषकाभयामलकविभीतकानि नानाविधानि च स्नेहस्वेदोपकरणानि द्रव्याणि तथैवोर्द्धहरानुलोमिकोभयभाञ्जि संग्रहणीयदीपनीयपाचनीयोपशमनीयवातहराणि समाख्यातानि चौषधानि यच्चान्यदपि किञ्चिद्व्यापदः परिसंख्यायोपकरणं विद्यात्। यच्च प्रतिभोगार्थं तत् तत् उपकल्पयेत्॥ १०॥

ततस्तं पुरुषं यथोक्ताभ्यां स्नेहस्वेदाभ्यां यथार्हमुपपादयेत्। तञ्चेदस्मिन्नन्तरे मानसः शारीरो वा व्याधिः कश्चित्तीव्रतरः समभ्यागच्छेत्तमेव तावदस्योपावर्त्तयितुं यतेत। ततस्तमुपावर्त्य तावन्तमेवैनं कालं तथाविधेनैव कर्म्मणोपचरेत्। ततस्तं पुरुषं स्नेहस्वेदोपपन्नमनुपहतमनसमभिसमीक्ष्य सुखोषितं प्रजीर्णभक्तं शिरःस्नातमनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतं देवताग्निद्विजगुरुवृद्धवैद्यानर्च्चितवन्तम् इष्टे नक्षत्रे तिथिकरणमुहूर्त्ते कारयित्वा ब्राह्मणान् स्वस्तिवाचनं प्रयुक्ताभिराशीर्भिरभिमन्त्रितां मधुमधुकसैन्धवफाणितोपहितां मदनफलकषायमात्रां पाययेत्॥ ११॥

मदनफलकषायमात्राप्रमाणन्तु खलु सर्व्वसंशोधनमात्राप्रमाणानि च। प्रतिपुरुषमपेक्षितव्यानि भवन्ति यावद्धि यस्य संशोधनं पीतं वैकारिकदोषहरणायोपपद्यते॥ १२॥

न चातियोगायोगाय तावदस्य मात्राप्रमाणं वेदितव्यं भवति ॥ १३ ॥

पीतवन्तन्तु खल्वेनं मुहूर्त्तमनुकाङ्क्षेत्। तस्य यदा जानीयात् स्वेदप्रादुर्भावेण दोषं प्रविलयनमापद्यमानं लोमहर्षेण च स्थानेभ्यः प्रचलितं कुक्षिसमाध्मापनेन च कुक्षिमनुगतं हृल्लासास्यस्रवणाभ्यामप्यूर्द्धमुखीभूतमथास्मै जानुसममसम्बाधं सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानं स्वापाश्रयमासनमुपवेष्टुं प्रयच्छेत् ॥ १४ ॥

प्रतिग्रहांश्चोपचारयेत्। ललाटप्रतिग्रहे पार्श्वोपग्रहणे नाभिप्रपीड़ने पृष्ठोन्मर्दने च अनपत्रपनीयाः सुहृदोऽनुमताः प्रयतेरन्। अथैनमनुशिष्यात्। विवृतोष्ठतालुकण्ठो नातिमहता व्यायामेन वेगानुदीर्णानुदीरयन् किञ्चिदवनम्य ग्रीवामूर्द्धशरीरमुपवेगमप्रवृत्तान् प्रवर्त्तयन् सुपरिलिखितनखाभ्यामङ्गुलीभ्यामुत्पलकुमुदसौगन्धिकनालैर्वा कण्ठमनभिस्पृशन् सुखं प्रवर्त्तयस्वेति ॥ १५ ॥

स तथाविधं कुर्य्यात्। ततोऽस्य वेगान् प्रतिग्रहगतानवेक्षेतावहितः। वेगविशेषदर्शनाद्धि कुशलो योगायोगातियोगविशेषानुपलभेत। वेगविशेषदर्शी पुनः कृत्यं यथार्हमवबुध्येत लक्षणेन। तस्माद्वेगानवेक्षेतावहितः ॥ १६ ॥

तत्र अत्यतियोगयोगातियोगविशेषज्ञानानि भवन्ति। तद्यथा अप्रवृत्तिः कुतश्चित्। केवलस्य वाप्यौषधस्य विभ्रंशो विबन्धो वेगानां योगलक्षणानि भवन्ति॥ १७ ॥

काले प्रवृत्तिरनतिमहती व्यथा यथाक्रमं दोषहरणं स्वयञ्चावस्थानमिति योगलक्षणानि भवन्ति। योगेन तु दोषप्रमाणविशेषेण तीक्ष्णमृदुमध्यविभागो ज्ञेयः। योगाधिक्येन तु फेनिलरक्तचन्द्रिकोपगमनमित्यतियोगलक्षणानि भवन्ति।

तत्रातियोगायोगनिमित्तानिमानुपद्रवान् विद्यात्। आध्मानं परिकर्त्तिका परिस्रावो हृदयोपरोधनमङ्गग्रहो जीवादानं विभ्रंशः स्तम्भः क्लम उपद्रव इति ॥ १८ ॥

योगेन तु खल्वेनं छर्दितवन्तमभिसमीक्ष्य सुप्रक्षालितपाणिपादास्यं मुहूर्त्तमाश्वास्य स्नैहिकवैरेचनिकोपशमनीयानां धूमानामन्यतमं सामर्थ्यतः पाययित्वा पुनरेवोदकमुपस्पर्शयेत्। उपस्पृष्टोदकञ्चैनं निवातमागारमनुप्रवेश्य संवेश्य चानुशिष्यात् ॥१९

उच्चैर्भाष्यमत्यासनमतिस्थानमतिचंक्रमणं क्रोधशोकहिमातपावश्यायातिप्रवातान् यानयानं ग्राम्यधर्ममस्वपनं निशि दिवा स्वप्नम्। विरुद्धाजीर्णासात्म्याकालाप्रमितातिहीनगुरुविषमभोजनवेगसन्धारणोदीरणमिति भावानेतान् मनसाप्यसेवमानः सर्वमाहारमधासीदिति ॥ २० ॥

स तथा कुर्य्यात्। अथैनं सायाह्ने परे वाह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितण्डुलानां स्वक्लिन्नानां मण्डपूर्वां सुखोष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य चैवं द्वितीये तृतीये चान्नकाले चतुर्थे त्वन्नकाले तथाविधानामेव शालितण्डुलानामुत्स्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत्। एवं पञ्चमे षष्ठे चान्नकाले सप्तमे त्वन्नकाले तथाविधानामेव शालीनां द्विप्रसृतं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत्। एवमष्टमे नवमे चान्नकाले। दशमे त्वन्नकाले लावकपिञ्जलादीनामन्यतमस्य मांसरसेनौदकलावणिकेनापि सारवता भोजयेत् उष्णोदकानुपानम्। एवमेकादशे द्वादशे चान्नकाले ॥ २१ ॥

अत, ऊर्द्ध्वमन्नगुणान् क्रमेणोपभुञ्जान' सप्तरात्रेण प्रकृतिभोजनमागच्छेत् ॥ २२ ॥

अथैनं पुनरेव स्नेहस्वेदाभ्यामुपपाद्यानुपहतमनसमभि समीक्ष्य सुखोषित सुप्रजीर्णभक्त कृतहोमबलिमङ्गलजप्यप्रायश्चित्तमिष्टतिथिनक्षत्रकरणमुहूर्त्ते ब्राह्मणान् स्वस्ति वाचयित्वा त्रिवृत्कल्कमक्षमात्रा यथार्हालोडनप्रतिविलीना पाययेत् ॥२३॥

प्रसमीक्ष्य दोषभेषजदेशकालबलशरीराहारसात्म्यसत्वप्रकृतिवयसामवस्थान्तराणि विकाराश्च सम्यक् विरिक्तश्चैनं वमनान्तरोक्तेन धूमवर्जेन विधिनोपपादयेत् आबलवर्णप्रतिलाभात् ॥२४

बलवर्णोपपन्नश्चैनमनुपहतमनसमभिसमीक्ष्य सुखोषित सुप्रजीर्णभक्त शिर स्नातमनुलिप्तगात्र स्रग्विणमनुपहतवस्त्रसवीतमनुरूपालङ्कारालङ्कृत सुहृदा दर्शयित्वा ज्ञातीनां दर्शयेदथैनं कामेष्ववसृजेत् ॥ २५ ॥

भवन्ति चात्र। अनेन विधिना राजा राजमात्रोऽथवा पुन ।
यस्य वा विपुलं द्रव्य स संशोधनमर्हति ॥ २६ ॥
दरिद्रस्त्वापद प्राप्य प्राप्तकाल विरेचनम्।
पिबेत् काममसभृत्य सम्भारानपि दुर्लभान् ॥ २७ ॥
न हि सर्वमनुष्याणा सन्ति सर्वपरिच्छदा ।
न च रोगा न सेवन्ते दरिद्रानपि दारुणा. ॥ २८ ॥
यद्यच्छक्य मनुष्येण कर्त्तुमौषधमापदि।
तत्तत् सेव्यं यथाशक्ति वसनान्यशनानि च ॥ २९ ॥
मलापह रोगहर बलवर्णप्रसादनम्।
पीत्वा संशोधन सम्यगायुषा युज्यते चिरम् ॥ ३० ॥
तत्र श्लोका । ईश्वराणा वसुमता वमन सविरेचनम्।
सम्भारा ये यदर्थंञ्च समानीय प्रयोजयेत् ॥ ३१ ॥
यथा प्रयोज्या या मात्रा यदयोगस्य लक्षणम्।
योगातियोगयोर्यच्च दोषा ये चाप्युपद्रवा ॥ ३२ ॥
यदसेव्य विशुद्धेन यश्च ससर्जनक्रम ।

तत्त्वं कल्पनाध्याये व्याजहार पुनर्वसुः ॥ ३२ ॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पनाचतुष्के
उपकल्पनीयो नाम पञ्चदशोऽध्यायः समाप्तः ।

---

## षोड़शोऽध्यायः ।

अथातः चिकित्साप्राभृतीयमध्यायं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ।

चिकित्साप्राभृतो विद्वान् शास्त्रवान् कर्मतत्परः ।
नरं विरेचयति यं स योगात् सुखमश्नुते ॥ १ ॥
यं वैद्यमानी त्वबुधो विरेचयति मानवम् ।
सोऽतियोगादयोगाच्च मानवो दुःखमश्नुते ॥ २ ॥
दौर्बल्यं लाघवं ग्लानिर्व्याधीनामणुता रुचिः ।
हृद्वर्णशुद्धिः क्षुत्तृष्णा काले वेगप्रवर्त्तनम् ॥ ३ ॥
बुद्धीन्द्रियमनःशुद्धिर्मारुतस्यानुलोमता ।
सम्यग्विरिक्तलिङ्गानि कायाग्नेश्चानुवर्त्तनम् ॥ ४ ॥
ष्ठीवनं हृदयाशुद्धिरुत्क्लेशः श्लेष्मपित्तयोः ।
आध्मानमरुचिश्छर्दिरदौर्बल्यमलाघवम् ॥ ५ ॥
जङ्घोरुसदनं तन्द्रा स्तैमित्यं पीनसागमः ।
लक्षणान्यविरिक्तानां मारुतस्य च निग्रहः ॥ ६ ॥
विट्पित्तश्लेष्मवातानामागतानां यथाक्रमम् ।
परं स्रवति यद्रक्तं मेदोमांसोदकोपमम् ॥ ७ ॥
निःश्लेष्मपित्तमुदकं शोणितं कृष्णमेव वा ।
तृष्यतो मारुतार्त्तस्य सोऽतियोगः प्रयोगतः ॥ ८ ॥
वमनेऽतिकृते लिङ्गान्येतान्येव भवन्ति हि ।
ऊर्द्धगा वातरोगाश्च वाग्ग्रहश्चाधिकोपमः ॥ ९ ॥
चिकित्साप्राभृतं तस्मादुपेयात् शरणं नरः ।

युञ्ज्याद्य एनमत्यन्तमायुषा च सुखेन च ॥ १० ॥
अविपाकोऽरुचिः स्थौल्यं पाण्डुता गौरवं क्लमः ।
पिडकाकोठकण्डूनां सम्भवोऽरतिरेव च ॥ ११ ॥
आलस्यं श्रमदौर्बल्यं दौर्गन्ध्यमवसादकः ।
श्लेष्मपित्तसमुत्क्लेशो निद्रानाशोऽतिनिद्रता ॥ १२ ॥
तन्द्रा क्लैब्यमबुद्धित्वमशस्तस्वप्नदर्शनम् ।
बलवर्णप्रणाशश्च तृप्यतो बृंहणैरपि ॥ १३ ॥
बहुदोषस्य लिङ्गानि तस्मै संशोधनं हितम् ।
ऊर्द्धं चैवानुलोमञ्च यथादोषं यथाबलम् ॥ १४ ॥
एवं विशुद्धकोष्ठस्य कायाग्निरभिवर्द्धते ।
व्याधयश्चोपशाम्यन्ति प्रकृतिश्चानुवर्त्तते ॥ १५ ॥
इन्द्रियाणि मनो बुद्धिर्वर्णश्चास्य प्रसीदति ।
बलं पुष्टिरपत्यञ्च वृषता चास्य जायते ॥ १६ ॥
जरां कृच्छ्रेण लभते चिरं जीवत्यनामयः ।
तस्मात् संशोधनं काले युक्तियुक्तं पिबेन्नरः ॥ १७ ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
जिताः संशोधनैर्ये तु न तेषां पुनरुद्भवः ॥ १८ ॥
दोषाणाञ्च द्रुमाणाञ्च मूलेऽनुपहते सति ।
रोगाणां प्रसवाणाञ्च गतानामागतिर्ध्रुवा ॥ १९ ॥
भेषजक्षपिते पथ्यमाहारैरेव बृंहणम् ।
घृतमांसरसक्षीरहृद्ययूषोपसाधितैः ॥ २० ॥
अभ्यङ्गोत्सादनैः स्नानैर्निरूहैः सानुवासनैः ।
तथा स लभते शर्म युज्यते चायुषा चिरम् ॥ २१ ॥
अतियोगानुबद्धानां सर्पिःपानं प्रशस्यते ।
तैलं मधुरकैः सिद्धमथवाप्यनुवासनम् ॥ २२ ॥
यस्य त्वयोगस्तं स्निग्धं पुनः संशोधयेन्नरम् ।

मात्राकालबलापेक्षी स्मरन् पूर्वमिति क्रमम् ॥ २३ ॥
स्नेहने स्वेदने शुद्धौ रोगाः संसर्जने च ये ।
जायन्तेऽमार्गविहिते तेषां सिद्धिषु साधनम् ॥ २४ ॥
जायन्ते हेतुवैषम्याद्विषमा देहधातवः ।
हेतुसाम्यात् समास्तेषां स्वभावोपरमः सदा ॥ २५ ॥
प्रवृत्तिहेतुर्भावानां न निरोधेऽस्ति कारणम् ।
केचित्तत्रापि मन्यन्ते हेतुं हेतोरवर्त्तनम् ॥ २६ ॥
एवमुक्तार्थमाचार्यमग्निवेशोऽभ्यभाषत ।
स्वभावोपरमे कर्म चिकित्साप्राभृतस्य किम् ॥ २७ ॥
भेषजैर्विषमान् धातून् कान् समीकुरुते भिषक् ।
का वा चिकित्सा भगवन् ! किमर्थं वा प्रयुज्यते ॥ २८ ॥
तच्छिष्यवचनं श्रुत्वा व्याजहार पुनर्वसुः ।
श्रूयतामत्र या सौम्य ! युक्तिर्दृष्टा महर्षिभिः ॥ २९ ॥
न नाशकारणाभावाद्भावानां नाशकारणम् ।

दाता सम्पद्यते वैद्यो दानाद्देहसुखायुषाम्॥ ३६॥

तत्र श्लोकाः। चिकित्साप्राभृतगुणो दोषो यश्चेतनाश्रयः।
योगायोगातियोगानां लक्षणं शुद्धिसंश्रयम्॥ ७॥
बहुदोषस्य लिङ्गानि संशोधनगुणाश्च ये।
चिकित्सासूत्रमात्रञ्च सिद्धिव्यापत्तिसंश्रयम्॥ ८॥
या च युक्तिश्चिकित्सायां यं चार्थं कुरुते भिषक्।
चिकित्साप्राभृतेऽध्याये तत् सर्वमवदन्मुनिः॥ ९॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पनाचतुष्के
चिकित्साप्राभृतीयो नाम षोडशोऽध्यायः समाप्तः।

---

## सप्तदशोऽध्यायः।

अथातः कियन्तःशिरसीयमध्यायं व्याख्यास्यामः।

इति ह स्माह भगवानात्रेयः।

कियन्तःशिरसि प्रोक्ता रोगा हृदि च देहिनाम्॥ १॥
कति चाप्यनिलादीनां रोगा मानविकल्पजाः।
क्षयाः कति समाख्याताः पिडकाः कति चानघ!॥ २॥
गतिः कतिविधा चोक्ता दोषाणां दोषसूदन!।
हुताशवेशस्य वचः तत् श्रुत्वा गुरुरब्रवीत्॥ ३॥
पृष्टवानसि यत् सौम्य! तन्मे शृणु सुविस्तरम्।
दृष्टाः पञ्च शिरोरोगाः पञ्चैव हृदयामयाः॥ ४॥
व्याधीनां द्व्यधिका षष्टिर्दोषमानविकल्पजा।
दशाष्टौ च क्षयाः सप्त पिडका मधुमेहिकाः॥ ५॥
दोषाणां त्रिविधा प्रोक्ता गतिर्विस्तरतः शृणु।
सन्धारणाद्दिवास्वप्नाद्रात्रौ जागरणात् मदात्॥ ६॥
उच्चैर्भाष्यादवश्यायात् प्राग्वातादतिमैथुनात्।
गन्धादसात्म्यादाघ्राताद्रजोधूमहिमातपात्॥ ७॥
गुर्वम्लहरितादानादतिशीताम्बुसेवनात्।

शिरोऽभितापाद्दुष्टामाद्रोदनाद्बाष्पनिग्रहात् ॥ ८ ॥
मेघागमान्मनस्तापाद्देशकालविपर्ययात् ।
वातादयः प्रकुप्यन्ति शिरस्यस्रं प्रदुष्यति ॥ ९ ॥
ततः शिरसि जायन्ते रोगा विविधलक्षणाः ।
प्राणाः प्राणभृतां यत्र श्रिताः सर्वेन्द्रियाणि च ॥ १० ॥
यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते ।
अर्धावभेदको वा स्यात् सर्वं वा रुज्यते शिरः ॥ ११ ॥
प्रतिश्यायमुखनासाक्षिकर्णरोगाः शिरोभ्रमाः ।
अर्दितं शिरसः कम्पो गलमन्याहनुग्रहः ॥ १२ ॥
विविधाश्चापरे रोगा वातादिक्रिमिसम्भवाः ।
पृथग्दृष्टास्तु ये पञ्च संग्रहे परमर्षिणा ।
शिरोगदांस्तान् शृणु मे यथास्वैर्हेतुलक्षणैः ॥ १३ ॥
उच्चैर्भाष्यातिभाष्याभ्यां तीक्ष्णपानात् प्रजागरात् ।
शीतमारुतसंस्पर्शाद्व्यवायाद्वेगनिग्रहात् ।
उपवासादभिघाताद्विरेकाद्वमनादपि ॥ १४ ॥
बाष्पशोकभयत्रासाद्भारमार्गातिकर्षणात् ।
शिरोगताः शिराबद्धो वायुराविश्य कुप्यति ॥ १५ ॥
ततः शूलं महत्तस्य वातात् समुपजायते ।
निस्तुद्येते भृशं शङ्खौ घाटा सम्भिद्यते तथा ॥ १६ ॥
भ्रुवोर्मध्यं ललाटं च तपतीवातिवेदनम् ।
बाध्येते स्वनतः श्रोत्रे निष्कृष्येते इवाक्षिणी ॥ १७ ॥
घूर्णतीव शिरः सर्वं सन्धिभ्य इव मुच्यते ।
स्फुरत्यतिशिराजालं स्तभ्यते च शिरोधरा ॥ १८ ॥
स्निग्धोष्णमुपशेते च शिरोरोगेऽनिलात्मके ॥ १९ ॥
कट्वम्ललवणक्षारमद्यक्रोधातपानलैः ।
पित्तं शिरसि सन्दुष्टं शिरोरोगाय कल्पते ॥ २० ॥ ]

रुध्यते कुप्यते तेन शिरः श्रोत्रेण शूयते ।
दह्येते चक्षुषी तृष्णा भ्रमः स्वेदश्च जायते ॥ २१ ॥
आस्यासुखैः स्वप्नसुखैर्गुरुस्निग्धातिभोजनैः ।
श्लेष्मा शिरसि सन्दुष्टं शिरोरोगाय कल्पते ॥ २२ ॥
शिरो मन्दरुजं तेन सुप्तस्तिमितगौरवम् ।
भवत्युत्पद्यते तन्द्रा तथालस्यमरोचकः ॥ २३ ॥
वातात् शूलं भ्रमः कम्पः पित्ताद्दाहो मदस्तृषा ।
कफाद्गुरुत्वं तन्द्रा च शिरोरोगे त्रिदोषजे ॥ २४ ॥
तिलक्षीरगुडाजीर्णपूर्तिसङ्कीर्णभोजनात् ।
क्लेदोऽसृक्कफमांसानां दोषस्यास्योपजायते ॥ २५ ॥
ततः शिरसि संक्लेदात् क्रिमयः पापकर्मणः ।
जनयन्ति शिरोरोगं जातबीभत्सलक्षणम् ॥ २६ ॥
व्यधच्छेदरुजा कण्डूशोफदौर्गन्ध्यदुःखितम् ।
क्रिमिरोगातुरं विद्यात् क्रिमीणां लक्षणेन च ॥ २७ ॥
शोकोपवासव्यायामशुष्करूक्षाल्पभोजनैः ।
वायुराविश्य हृदयं जनयत्युत्तमां रुजम् ॥ २८ ॥
वेपथुर्वेष्टनं स्तम्भः प्रमोहः शून्यता द्रवः ।
हृदि वातातुरे रूपं जीर्णे चात्यर्थवेदना ॥ २९ ॥
उष्णाम्ललवणक्षारकटुकाजीर्णभोजनैः ।
मद्यक्रोधातपैश्चाशु हृदि पित्तं प्रकुप्यति ॥ ३० ॥
हृद्दाहस्तिक्तता वक्त्रे क्लमः पित्ताम्लकोद्गरः ।
तृष्णा मूर्च्छा भ्रमः स्वेदः पित्तहृद्रोगलक्षणम् ॥ ३१ ॥
अत्यादानं गुरु स्निग्धमचिन्तनमचेष्टनम् ।
निद्रासुखं चाप्यधिकं कफहृद्रोगलक्षणम् ॥ ३२ ॥
हृदयं कफहृद्रोगे सुप्तं स्तिमितभारिकम् ।
तन्द्रारुचिपरीतस्य भवत्यश्माहतं यथा ॥ ३३ ॥

हेतुलक्षणसंसर्गादुच्यते सान्निपातिकः ।
त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते ।
तिलक्षीरगुडादीनि ग्रन्थिस्तस्योपजायते ॥ ३४ ॥
मर्मैकदेशे संक्लेदं रसश्चास्योपगच्छति ।
संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः ॥ ३५ ॥
मर्मैकदेशे ते जाताः सर्पन्तो भक्षयन्ति च ।
तुद्यमानं स हृदयं सूचीभिरिव मन्यते ॥ ३६ ॥
छिद्यमानं यथा शस्त्रैर्जातकण्डूं महारुजम् ।
हृद्रोगं क्रिमिजं त्वेतैर्लिङ्गैर्बुद्ध्वा सुदारुणम् ।
त्वरेत जेतुं तं विद्वान् विकारं शीघ्रकारिणम् ॥ ३७ ॥
द्व्युल्बणैः कोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट् ।
समैश्चैको विकारास्ते सन्निपाते त्रयोदश ॥ ३८ ॥
संसर्गे च षट् तेभ्यः एकवृद्ध्या समैस्त्रयः ।
पृथक् त्रयश्च तैर्वृद्धैर्व्याधयः पञ्चविंशतिः ॥ ३९ ॥
यथा वृद्धैस्तथा क्षीणैर्दोषैः स्युः पञ्चविंशतिः ।
वृद्धिक्षयकृतश्चान्यो विकल्प उपदेक्ष्यते ॥ ४० ॥
वृद्धिरेकस्य समता चैकैकस्य च संक्षयः ।
द्वन्द्ववृद्धिः क्षयश्चैकस्यैका वृद्धिर्द्वयोः क्षयः ॥ ४१ ॥
प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये ।
स्थानादादाय गात्रेषु यत्र यत्र विसर्पति ॥ ४२ ॥
तदा भेदश्च दाहश्च तत्र तत्रानवस्थितः ।
गात्रदेशे भवेत्तस्य श्रमो दौर्बल्यमेव च ॥ ४३ ॥
साम्ये स्थितं कफं वायुः क्षीणे पित्ते यदा बली ।
कर्षेत् कुर्यात्तदा शूलं सशैत्यस्तम्भगौरवम् ॥ ४४ ॥
यदानिलं प्रकृतिगं पित्तं कफपरिक्षये ।
संरुणद्धि तदा दाहः शूलं चास्योपजायते ॥ ४५ ॥

श्लेष्माणं हि समं पित्तं यदा वातपरिक्षये।
निपीडयेत्तदा कुर्य्यात् सतन्द्रागौरवं ज्वरम् ॥ ४६ ॥
प्रवृद्धो हि यदा श्लेष्मा पित्ते क्षीणे समीरणम्।
रुन्ध्यात्तदा प्रकुर्वीत शीतकं गौरवं ज्वरम् ॥ ४७ ॥
समीरणे परिक्षीणे कफः पित्तं समत्वगम्।
कुर्वीत सन्निरुन्धानो मृद्वग्नित्वं शिरोग्रहम् ॥ ४७ ॥
निद्रां तन्द्रां प्रलापञ्च हृद्रोगं गात्रगौरवम्।
नखादीनाञ्च पीतत्वं ष्ठीवनं कफपित्तयोः ॥ ४८ ॥
हीनवातस्य तु कफः पित्तेन सहितश्चरन्।
करोत्यरोचकापाकौ सदनं गौरवं तथा ॥ ५० ॥
हृल्लासमास्यस्रवणं दूयनं पाण्डुतां मदम्।
विरेकस्य हि वैषम्यं वैषम्यमनलस्य च ॥ ५१ ॥
क्षीणपित्तस्य तु श्लेष्मा मारुतेनोपसंहितः।
स्तम्भं शैत्यं च तोदञ्च जनयत्यनवस्थितम् ॥ ५२ ॥
गौरवं मृदुतामग्नेर्भक्ताश्रद्धां प्रवेपनम्।
नखादीनाञ्च शुक्लत्वं गात्रपारुष्यमेव च ॥ ५३ ॥
हीने कफे मारुतस्तु पित्तं तु कुपितं द्वयम्।
करोति यानि लिङ्गानि शृणु तानि समासतः ॥ ५४ ॥
भ्रमम्मुद्वेष्टनन्तोदं दाहं स्फोटनवेपनम्।
अङ्गमर्दं परीशोषं दूयनं धूपनं तथा ॥ ५५ ॥
वातपित्तक्षये श्लेष्मा स्रोतांस्यभिदधच्चरन्।
चेष्टाप्रणाशं मूर्च्छाञ्च वाक्सङ्गञ्च करोति हि ॥ ५६ ॥
श्लेष्मवातक्षये पित्तं देहौजःस्रंसयच्चरन्।
ग्लानिमिन्द्रियदौर्बल्यं तृष्णां मूर्च्छां क्रियाक्षयम् ॥ ५७ ॥
पित्तश्लेष्मक्षये वायुर्मर्माण्यतिनिपीडयन्।
प्रणाशयति संज्ञां च वेपयत्यथ वा नरम् ॥ ५८ ॥

दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथा बलम्।
क्षीणा जहति लिङ्गं स्वं समाः स्वकर्म कुर्वते ॥ ५९ ॥
वातादीनां रसादीनां मलानामोजसस्तथा।
क्षयस्तत्रानिलादीनामुक्तं संक्षीणलक्षणम् ॥ ६० ॥
घट्टते सहते शब्दं नोच्चैर्द्रवति शूयते।
हृदयं ताम्यति स्वल्पचेष्टस्यापि रसक्षये ॥ ६१ ॥
परुषा स्फुटिता म्लाना त्वग्रूक्षा रक्तसंक्षये।
मांसक्षये विशेषेण स्फिग्ग्रीवोदरशुष्कता ॥ ६२ ॥
सन्धीनां स्फुटनं ग्लानिरक्ष्णोरायास एव च।
लक्षणं मेदसि क्षीणे तनुत्वं चोदरस्य च ॥ ६३ ॥
केशलोमनखश्मश्रुद्विजप्रपतनं श्रमः।
ज्ञेयमस्थिक्षये रूपं सन्धिशैथिल्यमेव च ॥ ६४ ॥
शीर्यन्त इव चास्थीनि दुर्बलानि लघूनि च।
प्रततं वातरोगीणि क्षीणे मज्जनि देहिनाम् ॥ ६५ ॥
दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं श्रमः।
क्लैब्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥ ६६ ॥
क्षीणे शकृति चान्त्राणि पीडयन्निव मारुतः।
रूक्षस्योन्नमयन् कुक्षिं तिर्यगूर्ध्वं च गच्छति ॥ ६७ ॥
मूत्रक्षये मूत्रकृच्छ्रं मूत्रवैवर्ण्यमेव च।
पिपासा बाधते चास्य मुखं च परिशुष्यति ॥ ६८ ॥
मलायनानि चान्यानि शून्यानि च लघूनि च।
विशुष्काणि च लक्ष्यन्ते यथास्वं मलसंक्षये ॥ ६९ ॥
बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः।
दुश्छायो दुर्मना रूक्षः क्षामश्चैवोजसः क्षये ॥ ७० ॥
हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम्।
ओजः शरीरे संख्यातं तन्नाशान्ना विनश्यति ॥ ७१

व्यायामोऽनशनं चिन्ता रूक्षाल्पप्रमिताशनम्।
वातातपौ भयं शोको रूक्षपानं प्रजागरः॥ ७२॥
कफशोणितशुक्राणां मलानां चातिवर्त्तनम्।
कालो भूतोपघातश्च ज्ञातव्याः चयहेतवः॥ ७३॥
गुरुस्निग्धाम्ललवणं भजतामतिमात्रशः।
नवमन्नं च पानं च निद्रामास्यासुखानि च॥ ७४॥
त्यक्तव्यायामचिन्तानां संशोधनमकुर्वताम्।
श्लेष्मा पित्तञ्च मेदश्च मांसं चातिप्रवर्द्धते॥ ७५॥
तैरावृतः प्रसादं हि गृहीत्वा याति मारुतः।
यदा वस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्त्तते॥ ७६॥
समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः।
दर्शयत्याकृतिं कृत्वा चयमाप्याय्यते पुनः॥ ७७॥
उपेक्षयास्य जायन्ते पिड़का सप्त दारुणाः।
मांसलेष्ववकाशेषु मर्मस्वपि च सन्धिषु॥ ७८॥
शराविका कच्छपिका जालिनी सर्षपी तथा।
अलजी विनताख्या च विद्रधी चेति सप्तमी॥ ७९॥
अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुजान्विता।
शराविका स्यात् पिडका शरावाकृतिसंस्थिता।
अवगाढ़ार्त्तिनिस्तोदा महावास्तुपरिग्रहा॥ ८०॥
श्लक्ष्णा कच्छपपृष्ठाभा पिड़का कच्छपी मता।
स्तब्धा शिरा जालवती स्निग्धस्रावा महाशया॥ ८१॥
रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी।
पिडका नातिमहती क्षिप्रपाका महारुजा॥ ८२॥
सर्षपी सर्षपाभाभिः पिडकाभिश्चिता भवेत्।
दहति त्वचमुत्थाने तृष्णा मोहज्वरप्रदा॥ ८३॥
विसर्पत्यनिशं दु स्यादहत्यग्निरिवालजी।

अवगाढ़रुजा क्लेदा पृष्ठे वाप्युदरेऽपि वा ॥ ८४ ॥
महती विनता नीला पिड़का विनता मता।
विद्रधिं द्विविधामाहुर्वाह्यामाभ्यन्तरीं तथा ॥ ८५ ॥
वाह्या त्वक्स्नायुमांसोत्था कण्डराभा महारुजा।
शीतकान्नविदाह्युष्णरूक्षशुष्कातिभोजनात् ॥ ८६ ॥
विरुद्धाजीर्णसंक्लिष्टविषमा सात्म्यभोजनात्।
व्यापन्नबहुमद्यत्वाद्वेगसन्धारणात् श्रमात् ॥ ८७ ॥
जिह्मव्यायामशयनादतिभाराध्वमैथुनात्।
अन्तःशरीरे मांसासृगाविशन्ति यदा मलाः ॥ ८८ ॥
तदा सञ्जायते ग्रन्थिर्गम्भीरस्थः सुदारुणः।
हृदये क्लोम्नि यकृति प्लीह्नि कुक्षौ च वृक्कयोः ॥ ८९ ॥
नाभ्यां वंक्षणयोर्वापि वस्तौ वा तीव्रवेदनः।
दुष्टरक्तातिमात्रत्वात् स वै शीघ्रं विदह्यते ॥ ९० ॥
ततः शीघ्रविदाहित्वाद्विद्रधीत्यभिधीयते।
व्यधच्छेदभ्रमानाह शब्दस्फुरणसर्पणैः ॥ ९१ ॥
वातिकीं पैत्तिकीं तृष्णादाहमोहमदज्वरैः।
जृम्भोत्क्लेशारुचिस्तम्भशीतकैः श्लैष्मिकीं विदुः।
सर्वासु च महच्छूलं विद्रधीषूपजायते ॥ ९२ ॥
तप्तैः शस्त्रैर्यथाग्न्येतोल्मुकैरिव दह्यते।
विद्रधौ व्यक्ततां याता वृश्चिकैरिव दश्यते ॥ ९३ ॥
तनुरूक्षारुणं स्रावं फेनिलं वातविद्रधौ।
तिलमाषकुलत्थोदसन्निभं पित्तविद्रधौ ॥ ९४ ॥
श्लैष्मिकी स्रवति श्वेतं बहुलं पिच्छिलं बहु।
लक्षणं सर्वमेवैतद्भजते सान्निपातिकी ॥ ९५ ॥

अथासां विद्रधीनां साध्यासाध्यविशेषज्ञानार्थं स्थानकृतं लिङ्गविशेषमुपदेक्ष्यामः। तत्र प्रधानमर्मजायां विद्रध्यां हृ

रतमकप्रमोहकासाः क्लोमजायां पिपासा मुखशोषगलग्रहाः। यकृज्जायां श्वासः। प्लीहजायामुच्छ्वासोपरोधः। कुक्षिजायां कुक्षिपार्श्वान्तरांसशूलम्। वृक्कजायां पार्श्वपृष्ठकटिग्रहः। नाभिजायां हिक्का। वंक्षणजायां सक्थिसादः। वस्तिजायां कृच्छ्रमूत्रपूतिवर्चस्त्वं चेति॥ ८६॥

पक्वासभिन्नासु ऊर्द्ध्वजासु मुखात् स्रावः स्रवति। अधोजासु गुदात् उभयतस्तु नाभिजायाम्॥ ८७॥

तासां हृन्नाभिवस्तिजाः परिपक्वाः सान्निपातिकी च मरणाय। अवशिष्टाः पुनः कुशलमाशु प्रतिकारिणं चिकित्सकमासाद्योपशाम्यन्ति। तस्मादचिरोत्थितां विद्रधीं शस्त्रसर्पविद्युदग्नितुल्यां स्नेहस्वेदविरेचनैश्चोपक्रमेत्। सर्वशो गुल्मवच्चेति चात्र॥ ८८॥

विना प्रमेहमप्येता जायन्ते दुष्टमेदसः।
तावच्चैता न लक्ष्यन्ते यावद्वस्तुपरिग्रहः॥ ८९॥
शराविका कच्छपिका जालिनी चेति दुःसहाः।
जायन्ते ता ह्यतिबलाः प्रभूतश्लेष्ममेदसाम्॥ १०१॥
सर्षपी चालजी चैव विनता विद्रधी च याः।
सद्यः पित्तोल्बणास्ता हि सम्भवन्त्यल्पमेदसाम्॥ १०२॥
मर्मस्वंसे गुदे पाण्योः स्तने सन्धिषु पादयोः।
जायन्ते यस्य पिड़काः स प्रमेही न जीवति॥ १०३॥
तथान्याः पिड़काः सन्ति रक्तपीतासितारुणाः।
पाण्डुराः पाण्डुवर्णाश्च भस्माभा मेचकप्रभाः॥ १०४॥
मृदवश्च कठिनाश्चान्याः स्थूलाः सूक्ष्मास्तथापराः।
मन्दवेगा महावेगाः स्वल्पशूला महारुजाः॥ १०५॥
ता बुद्ध्वा मारुतादीनां यथास्वैर्हेतुलक्षणैः।
ब्रूयादुपाचरेच्चाशु प्रागुपद्रवदर्शनात्॥ १०६॥

तृट्श्वासमांससंकोथमेहहिक्कामदज्वराः।
वीसर्पमन्दसंरोधाः पिडकानामुपद्रवाः॥ १०७॥
चयः स्थाने च वृद्धिश्च दोषाणां त्रिविधा गतिः।
ऊर्द्ध्वं चाधश्च तिर्य्यक् च विज्ञेया त्रिविधापरा॥ १०८॥
त्रिविधा चापरा कोष्ठशाखामर्मास्थिसन्धिषु।
इत्युक्ता विधिभेदेन दोषाणां त्रिविधा गतिः॥ १०९॥
चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम्।
भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु॥ ११०॥
गतिः कालकृता चैषा चयाद्या पुनरुच्यते।
गतिश्च द्विविधा दृष्टा प्राकृता वैकृता च या॥ १११॥
पित्तादूष्मणः पक्तिर्नराणामुपजायते।
तच्च पित्तं प्रकुपितं विकारान् कुरुते बहून्॥ ११२॥
प्राकृतस्तु बलं श्लेष्मा विकृतो मल उच्यते।
स चैवौजः स्मृतः काये स च पाप्मोपदिश्यते॥ ११३॥
सर्वा हि चेष्टा वातेन स प्राणः प्राणिनां स्मृतः।
तेनैव रोगा जायन्ते तेन चैवोपरुध्यते॥ ११४॥
नित्यं सन्निहितामित्रं समीक्ष्यात्मानमात्मवान्।
नित्यं युक्तः परिचरेत् विच्छिन्नायुरभित्वरम्॥ ११५॥
तत्र श्लोकौ। शिरोरोगाः सहृद्रोगा रोगा मानविकल्पजाः।
क्षयाः सपिडकाश्चोक्ता दोषाणां गतिरेव च॥ ११६॥
कियन्तः शिरसीयेऽस्मिन्नध्याये तत्त्वदर्शिना।
ज्ञानार्थं भिषजाञ्चैव प्रजानाञ्च हितैषिणा॥ ११७॥

इति रोगचतुष्के कियन्तःशिरसीयो नाम सप्तदशोऽध्यायः समाप्तः।

---

# अष्टादशोऽध्यायः ।



अथातस्त्रिशोथीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

त्रयः शोथा भवन्ति । वातपित्तश्लेष्मनिमित्ताः । ते पुनर्द्विविधाः निजागन्तुभेदेन । तत्रागन्तवः । छेदनभेदनक्षणनभञ्जनपिच्छनोत्क्षेपणप्रहारवधबन्धनवेष्टनव्यधनपीडनादिभिर्वा । भल्लातकपुष्पफलरसात्मगुप्ताशूकक्रिमिशूकाहितपत्रलतागुल्मसंस्पर्शनैर्वा स्वेदनपरिसर्पणावमूत्रणैर्वा विषिणाम्। सविषाविषप्राणिदंष्ट्रादन्तविषाणनखनिपातैर्वा । सगरविषवातहिमदहनसंस्पर्शनैर्वा शोथाः समुपजायन्ते । ते यथास्वं हेतुजैर्व्यञ्जनैरादावुपलभ्यन्ते । निजव्यञ्जनैकदेशविपरीतैः व्रणबन्धमन्त्रागदप्रलेपप्रवातनिर्वापणादिभिश्चोपक्रमैरुपक्रम्यमाणाः प्रशान्तिमापद्यन्ते । निजास्तु पुनः स्नेहस्वेदनवमनविरेचनास्थापनानुवासनशिरोविरेचनानामयथावत् प्रयोगात् मिथ्यासंसर्जनाद्वा । छर्द्यलसकविसूचिकाश्वासकासातीसारशोषपाण्डुरोगज्वरोदरप्रदरभगन्दरार्शोविकारातिकर्षणैर्वा । कुष्ठकण्डूपिडकादिभिर्वा छर्दिक्षवथूद्गारशुक्रवातमूत्रपुरीषवेगधारणैर्वा चर्मरोगोपवासकर्शितस्य वा । सहसातिगुर्वम्ललवणपिष्टान्नफलशाकरागदधिहरीतकमद्यमन्दकविरूढयावशूकशमीधान्यानूपौदकपिशितोपयोगात् मृत्पङ्कलोष्टभक्षणाल्लवणातिभक्षणाद्वा । गर्भसम्पीडनादामगर्भप्रपतनात् प्रजातानाञ्च मिथ्योपचारादुदीर्णदोषत्वात् शोथाः प्रादुर्भवन्ति । इत्युक्तः सामान्यो हेतुः । अयं त्वत्र विशेषः । शीतरूक्षलघुविशदश्रमोपवासातिकर्षणक्षेपणादिभिर्वायुः प्रकुपितः त्वङ्मांसशोणितादीन्यभिभूय शोथञ्जनयति । स क्षिप्रोत्थानप्रशमो भवति । श्यावारुणवर्णः प्रकृतिवर्णो वा चलः स्पन्दनः खरपरुषभिन्नत्वग्लोमा छिद्यत इव भिद्यत इव पीड्यत इव सूचीभिरिव तुद्यते पिपी-

लिकाभिरिव संसृप्यते सर्षपकल्कावलिप्त इव चिमिचिमायते संकुच्यते आयम्यते इति वातशोथः। उष्णतीक्ष्णकटुकक्षारलवणाम्लाजीर्णभोजनैरग्न्यातपप्रतापैश्च पित्तं प्रकुपितं त्वङ्मांसशोणितान्यभिभूय शोथञ्जनयति। स क्षिप्रोत्थानप्रशमो भवति। कृष्णपीतनीलताम्रावभास उष्णो मृदुः कपिलताम्रलोमा उष्यते दूयते धूप्यते ऊष्मायते स्विद्यते क्लिद्यते न च स्पर्शमुष्णं वा मृष्यते इति पित्तशोथः। गुरुमधुरशीतस्निग्धैरतिस्वप्नव्यायामादिभिश्च श्लेष्मा प्रकुपितः त्वङ्मांसशोणितादीन्यभिभूय शोथञ्जनयति। स कृच्छ्रोत्थानप्रशमो भवति। पाण्डुः श्वेतावभासः स्निग्धः श्लक्ष्णः गुरुः स्थिरः स्त्यानः शुक्लाग्ररोमा स्पर्शोष्णसहश्चेति श्लेष्मशोथः। यथास्वकारणाकृतिसंसर्गाद्द्विदोषजास्त्रयः शोथाः भवन्ति। तथा स्वकारणाकृतिसन्निपातात् सान्निपातिक एकः। एवं सप्तविधो भेदः। प्रकृतिभिस्ताभिर्भिद्यमानो द्विविधस्त्रिविधः चतुर्विधः सप्तविधश्च शोथ उपलभ्यते। पुनश्चैक एवोत्सेधसामान्यादिति॥ १॥

भवति चात्र। शूयन्ते यस्य गात्राणि स्वपन्तीव रुजन्ति च।
निपीड़िताम्युन्नमन्ति वातशोथन्तमादिशेत्॥ २॥
यश्चाप्यरुणवर्णाभः शोथो नक्तं प्रणश्यति।
स्नेहोष्णमर्दनाभ्याञ्च प्रणश्येत् स च वातिकः॥ ३॥
यः पिपासाज्वरार्त्तस्य दूयतेऽथ विदह्यते।
स्विद्यते क्लिद्यते गन्धी स पित्तश्वयथुः स्मृतः॥ ४॥
यः पीतनेत्रवक्त्रत्वक् पूर्वं मध्यात् प्रसूयते।
तनुत्वक् चातिसारी च पित्तशोथः स उच्यते॥ ५॥
यः शीतलः सक्तगतिः कण्डूमान् पाण्डुरेव च।
निपीड़ितो नोन्नमति श्वयथुः स कफात्मकः॥ ६॥
यस्य शस्त्रकुशच्छेदाच्छोणितं न प्रवर्त्तते।

कृच्छ्रेण पिच्छान् स्रवति स चापि कफसम्भवः ॥ ७ ॥
निदानाकृतिसंसर्गात् श्वयथुः स्याद् द्विदोषजः।
सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रहेतुजः ॥ ८ ॥
यस्तु पादाभिनिर्वृत्तः शोथः सर्वाङ्गगो भवेत्।
जन्तोः स च सुकष्टः स्यात् प्रसृतः स्त्रीमुखाच्च यः ॥ ९ ॥
यश्चापि गुह्यप्रभवः स्त्रियो वा पुरुषस्य वा।
स च कष्टतमो ज्ञेयो यस्य च स्युरुपद्रवाः ॥ १० ॥
छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च।
सप्तकोऽयं सदौर्बल्यः शोथोपद्रवसंग्रहः ॥ ११ ॥
यस्य श्लेष्मा प्रकुपितः जिह्वामूलेऽवतिष्ठते।
आशु सञ्जनयन् शोथं करोति गलशुण्डिकाम् ॥ १२ ॥
यस्य श्लेष्मा प्रकुपितस्तिष्ठत्यन्तर्गले स्थितः।
आशु सञ्जनयन् शोथं गलगण्डोऽस्य जायते ॥ १३ ॥
यस्य श्लेष्मा प्रकुपितो गलबाह्येऽवतिष्ठते।
शनैः सञ्जनयन् शोथं जायतेऽस्य गलग्रहः ॥ १४ ॥
यस्य पित्तं प्रकुपितं सरक्तं त्वचि सर्पति।
शोथं सरागं जनयन्विसर्पस्तस्य जायते ॥ १५ ॥
यस्य पित्तं प्रकुपितं त्वचि रक्तेऽवतिष्ठते।
रागं सशोथञ्जनयन् पिडका तस्य जायते ॥ १६ ॥
यस्य पित्तं प्रकुपितं शङ्खयोरवतिष्ठते।
श्वयथुः शङ्खको नाम दारुणस्तस्य जायते ॥ १७ ॥
यस्य पित्तं प्रकुपितं कर्णमूलेऽवतिष्ठते।
ज्वरान्ते दुर्जयोऽन्ताय शोथस्तस्योपजायते ॥ १८ ॥
वातः प्लीहानमुद्धूय कुपितो यस्य तिष्ठति।
शूलैः परितुदन् पार्श्वं प्लीहा तस्याभिवर्द्धते ॥ १९ ॥
यस्य वायुः प्रकुपितो गुल्मस्थाने च तिष्ठति।

शोथं सशूलञ्जनयन् गुल्मस्तस्योपजायते ॥ २० ॥
यस्य वायुः प्रकुपितः शोथशूलकरश्चरन् ।
वंक्षणाद् वृषणौ याति व्रध्न तस्योपजायते ॥ २१ ॥
यस्य वातः प्रकुपितः त्वङ्मांसान्तरमाश्रितः ।
शोथं सञ्जनयन् कुक्षावुदरं तस्य जायते ॥ २२ ॥
यस्य वातः प्रकुपितः कुक्षिमाश्रित्य तिष्ठति ।
नाधो व्रजति नाप्यूर्द्ध्वमानाहस्तस्य जायते ॥ २३ ॥
रोगाश्चोत्सेधसामान्याद्धिमांसार्बुदादयः ।
विशिष्टा नाम रूपाभ्यां निर्देश्याः शोथसंग्रहे ॥ २४ ॥
वातपित्तकफा यस्य युगपत् कुपितास्त्रयः ।
जिह्वामूलेऽवतिष्ठन्ते विदहन्तः समुच्छ्रिताः ॥ २५ ॥
जनयन्ति भृशं शोथं वेदनाश्च पृथग्विधाः ।
तं शीघ्रकारिणं रोगं रोहिणीकेति निर्दिशेत् ॥ २६ ॥
त्रिरात्रं परमं तस्य जन्तोर्भवति जीवितम् ।
कुशलेन त्वनुप्राप्तः क्षिप्रं सम्पद्यते सुखी ॥ २७ ॥
सन्ति ह्येवंविधा रोगाः साध्या दारुणसम्मताः ।
ये हन्युरनुपक्रान्ता मिथ्यारम्भेण वा पुनः ॥ २८ ॥
साध्याश्चाप्यपरे सन्ति व्याधयो मृदुसम्मताः ।
यत्नायत्नकृतं येषु कर्म सिध्यत्यसंशयम् ॥ २९ ॥
असाध्याश्चापरे सन्ति व्याधयो याप्यसंज्ञिताः ।
सुसाध्येऽपि कृतं येषु कर्म याप्यकरं भवेत् ॥ ३० ॥
सन्ति चाप्यपरे रोगाः कर्म येषु न सिध्यति ।
अपि यत्नकृतं वर्ज्यान्न तान्विद्वानुपाचरेत् ॥ ३१ ॥
साध्याश्चैवाप्यसाध्याश्च व्याधयो द्विविधाः स्मृताः ।
मृदुदारुणभेदेन ते भवन्ति चतुर्विधाः ॥ ३२ ॥
त एवापरिसंख्येया भिद्यमाना भवन्ति हि ।

निदानवेदनावर्णस्थानसंस्थाननामभिः ॥ ३३ ॥
व्यवस्थाकारणं तेषां यथा स्थूलेषु संग्रहः।
तथा प्रकृतिसामान्यं विकारेषूपदिश्यते ॥ ३४ ॥
विकारनामा कुशलो न जिह्रीयात् कदाचन।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा गतिः ॥ ३५ ॥
स एव कुपितो दोषः समुत्थानविशेषतः।
स्थानान्तरगतश्चैव जनयत्यामयान् बहून् ॥ ३६ ॥
तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च।
समुत्थानविशेषांश्च बुद्धा कर्म समाचरेत् ॥ ३७ ॥
यो ह्येतत्त्रिविधं ज्ञात्वा कर्माण्यारभते भिषक्।
ज्ञानपूर्वं यथान्यायं स कर्मसु न मुह्यति ॥ ३८ ॥
नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः।
विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः ॥३९॥
उत्साहोच्छ्वासनिःश्वासचेष्टा धातुगतिः समा।
समो मोक्षो गतिमतां वायोः कर्माविकारजम् ॥ ४० ॥
दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम्।
प्रभा प्रसादो मेधा च पित्तकर्माविकारजम् ॥ ४१ ॥
स्नेहो बन्धः स्थिरत्वञ्च गौरवं वृषता बलम्।
क्षमा धृतिरलोभश्च कफकर्माविकारजम् ॥ ४१ ॥
वातपित्तकफे चैव न्यूने लक्षणमुच्यते।
कर्मणां प्रकृतेर्हानिर्वृद्धिर्वापि विरोधिनाम् ॥ ४२ ॥
दोषप्रकृतिवैशेष्यं नियतं वृद्धिलक्षणम्।
दोषाणां प्रकृतिर्हानिर्वृद्धिर्वापि परीक्ष्यते इति ॥ ४३ ॥
तत्र श्लोकौ। संख्या निमित्तं रूपाणि शोथानां साध्यता न च।
तेषां तेषां विकाराणां त्रिविधं बोध्यसंग्रहम् ॥ ४४ ॥
प्राकृतं कर्म दोषाणां लक्षणं हानिवृद्धिषु।

वीतमोहरजोदोषमोहमानमदस्पृहः ।
व्याख्यातवांस्त्रिशोफीये रोगाध्याये पुनर्वसुः ॥ ४५ ॥

इति त्रयश्चतुष्के त्रिशोफीयोऽष्टादशोऽध्यायः समाप्तः ।

---

## ऊनविंशोऽध्यायः ।

अथातोऽष्टोदरीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

इह खल्वष्टावुदराणि अष्टौ मूत्राघाताः अष्टौ क्षीरदोषा अष्टौ रेतोदोषाः सप्त कुष्ठानि सप्त पिड़काः सप्त वीसर्पाः षड़तीसाराः षडुदावर्ताः पञ्च गुल्माः पञ्च प्लीहदोषाः पञ्च कासाः पञ्च श्वासाः पञ्च हिक्काः पञ्च तृष्णाः पञ्च छर्दयः पञ्च भक्तस्यानशनस्थानानि पञ्च शिरोरोगाः पञ्च हृद्रोगाः पञ्च पाण्डुरोगाः पञ्चोन्मादाः चत्वारोऽपस्माराः चत्वारोऽक्षिरोगाः चत्वारः कर्णरोगाः चत्वारः प्रतिश्यायाः चत्वारो मुखरोगाः चत्वारो ग्रहणीदोषाः चत्वारो मदाः चत्वारो मूर्च्छाः चत्वारः शोषाः चत्वारि क्लैब्यानि त्रयः शोथाः त्रीणि किलासानि त्रिविधं लोहितपित्तं द्वौ ज्वरौ द्वौ व्रणौ द्वावायामौ द्वे गृध्रस्यौ द्वे कामले द्विविधमामं द्विविधं वातरक्तं द्विविधान्यर्शांसि एक ऊरुस्तम्भः एकः सन्न्यासः एको महागदः विंशतिः क्रिमिजातयः विंशतिः प्रमेहाः विंशतिर्योनिव्यापदः। इत्यष्टाचत्वारिंशद्रोगाधिकरणान्यस्मिन् संग्रहे भवन्ति। उद्दिष्टानि एतानि यथोद्देशमभिनिर्देक्ष्यामः ।

अष्टावुदराणीति वातपित्तकफसन्निपातप्लीहबद्धच्छिद्रोदकोदराणीति । अष्टौ मूत्राघाता इति वातपित्तकफसन्निपाताश्मरीशर्कराशुक्रशोणितजाः। अष्टौ क्षीरदोषा इति वैवर्ण्यं वैगन्ध्यं वैरस्यं पैच्छिल्यं फेनसङ्घातो रौक्ष्यं गौरवमतिस्नेहश्चेति। अष्टौ रेतोदोषा इति तनु शुष्कं फेनिलमश्वेतं पूतिपिच्छिलमन्यधातूप

ह्रितमवसादि चेति। सप्त कुष्ठानीति कपालोडुम्बरमण्डलर्ष्य-
जिह्वपुण्डरीकसिध्मकाकणकानि। सप्त पिड़का इति शराविका
कच्छपिका जालिनी सर्षपलजी विनता विद्रधी च। सप्त
वीसर्पा इति वातपित्तकफाग्निकर्दमग्रन्थिसन्निपाताख्याः। षड़-
तीसाराख्या इति वातपित्तकफसन्निपातभयशोकजाः। षड्
उदावर्त्ता इति वातमूत्रपुरीषशुक्रच्छर्दिक्षवथुजाः। पञ्च गुल्मा
इति वातपित्तकफसन्निपातरक्तजाः। पञ्च प्लीहदोषा इति गुल्मै-
र्व्याख्याताः। पञ्च कासा इति वातपित्तकफक्षतक्षयजाः। पञ्च
श्वासा इति महोर्द्धच्छिन्नतमकक्षुद्राः। पञ्च हिक्का इति महती
गम्भीरा व्यपेता क्षुद्रा चान्नजा च। पञ्च तृष्णा इति वातपित्ताम-
क्षयोपसर्गात्मिकाः। पञ्च छर्दय इति द्विष्टान्नसंयोगजा वातपित्त-
कफसन्निपातोद्रेकात्मिकाश्च। पञ्च भक्तस्यानशनस्थानानीति
वातपित्तकफद्वेषायासाः। पञ्च शिरोरोगा इति पूर्वोद्दिष्ट-
मभिसमस्य वातपित्तकफसन्निपातक्रिमिजाः। पञ्च हृद्रोगा
इति शिरोरोगैर्व्याख्याताः। पञ्च पाण्डुरोगा इति वातपित्तकफ-
सन्निपातमृद्भक्षणजाः। पञ्चोन्मादा इति वातपित्तकफसन्निपाता-
गन्तुनिमित्ताः। चत्वारोऽपस्मारा इति वातपित्तकफसन्निपात-
निमित्तजाः। चत्वारोऽक्षिरोगाः चत्वारः कर्णरोगाः चत्वारः
प्रतिश्यायाः चत्वारो मुखरोगाः चत्वारो ग्रहणीदोषाः चत्वारो
मदा चत्वारो मूर्च्छा इति अपस्मारैर्व्याख्याताः। चत्वारः शोषा
इति साहससन्धारणक्षयविषमाशनजाः। चत्वारि क्लैव्यानीति
बीजोपघाताद्ध्वजभङ्गाज्जरायाः शुक्रक्षयाच्च। त्रयः शोथाश्चेति
वातपित्तश्लेष्मनिमित्ताः। त्रीणि किलासानीति रक्तताम्रशुक्लानि।
त्रिविधं लोहितपित्तमित्यूर्द्धभागमधोभागमुभयभागञ्च। द्वौ ज्वरौ
इति उष्णाभिप्रायः शीतसमुत्थश्च शीताभिप्रायश्चोष्णसमुत्थः। द्वौ
व्रणौ इति निजश्चागन्तुजश्च। द्वावायामाविति बाह्यश्चाभ्यन्तरश्च।

द्वे ग्टध्रस्याविति वाताद्वातकफाच्च। द्वे कामले इति कोष्ठाश्रया शाखाश्रया च। द्विविधमाममित्यलसको विसूचिका चेति। द्विविधं वातरक्तमिति गम्भीरमुत्तानञ्च। द्विविधान्यर्शांसीति आर्द्राणि शुष्काणि च। एक ऊरुस्तम्भ इति आमत्रिदोषसमुत्थानः। एकः संन्यास इति। त्रिदोषात्मको मनःशरीराधिष्ठानसमुत्थः। एको महागद इति अतत्त्वाभिनिवेशः। विंशतिः क्रिमिजातय इति यूकाः पिपीलिकाश्चेति द्विविधा वहिर्मलजाः केशादा लोमादा लोमद्वीपाः सौरसा औडुम्बरा जन्तुमातरश्चेति षट् शोणितजाः अन्त्रादा उदरादा हृदयचराः चुरवो दर्भपुष्पाः सौगन्धिका महागुदाश्चेति सप्तकफजाः ककेरुका मकेरुका लेलिहाः सशूलकाः सौसुरादाश्चेति पञ्च पुरीषजा इति। विंशतिः क्रिमिजातयः। विंशतिः प्रमेहा इति उदकमेहश्चेक्षुमेहश्च रसमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्रमेहश्च शीतमेहश्च शनैर्मेहश्च सिकतामेहश्च लालामेहश्चेति दश श्लेष्मनिमित्ताः क्षारमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च मञ्जिष्ठामेहश्च हरिद्रामेहश्चेति षट् पित्तनिमित्ताः। वसामेहश्च मज्जमेहश्च हस्तिमेहश्च मधुमेहश्चेति चत्वारो वातनिमित्ता इति विंशतिः प्रमेहाः। विंशतिर्योनिव्यापद इति वातिकी पैत्तिकी श्लैष्मिकी सान्निपातिकी चेति चतस्रः दोषजाः। दूष्यसंसर्गप्रकृतिनिर्देशैरवशिष्टाः षोड़श निर्दिश्यन्ते। तद्यथा रक्तयोनिश्चारजस्का चाचरणा चातिचरणा च प्राक्चरणा चोपप्लुता चोदावर्त्तिनी च कर्णिनी च पुत्रघ्नी चान्तर्मुखी च सूचीमुखी च शुष्का च वामिनी च षण्ढयोनिश्च महायोनिश्चेति विंशतिर्योनिव्यापदः केवलश्चायमुद्देशः। यथोद्देशमभिनिर्दिष्ट इति।

भवति चात्र। विंशकार्थैककार्थं च विकारोऽष्टास्त्रयस्त्रयः।
द्विकाश्चाष्टौ चतुष्काश्च दश द्वादश पञ्चकाः॥

चत्वारश्चाष्टका वर्गाः षट्कौ द्वौ सप्तकास्त्रयः ।
अष्टोदरीये रोगाणामध्याये सम्प्रकाशिताः ॥ १ ॥

सर्व एव निजविकारा नान्यत्र वातपित्तकफेभ्यो निर्वर्त्तन्ते। यथा शकुनिः सर्वां दिशमपि परिपतन् स्वां छायां नातिवर्त्तते तथा स्वधातुवैषम्यनिमित्ताः सर्वविकारा वातपित्तकफान्नातिवर्त्तन्ते । वातपित्तश्लेष्मणां पुनः समुत्थानस्थानसंस्थानप्रकृतिविशेषानभिसमीक्ष्य तदात्मकानपि च सर्वविकारांस्तानेवोपदिशन्ति बुद्धिमन्त इति ॥ २ ॥

तत्र श्लोकौ । स्वधातु वैषम्यनिमित्तजा ये
विकारसंघा बहवः शरीरे ।
न ते पृथक् पित्तकफानिलेभ्य
आगन्तवस्त्वेव ततो विशिष्टाः ॥ ३ ॥

आगन्तुरन्वेति निजं विकारं निजस्तथागन्तुरतिप्रवृद्धः ।
तत्रानुबन्धं प्रकृतिं च सम्यक् ज्ञात्वा ततः कर्म समारभेत ॥४॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकचतुष्के अष्टोदरीयो नामैकोनविंशोऽध्यायः समाप्तः ।

---

## विंशोऽध्यायः ।

अथातो महारोगाध्यायं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ।

चत्वारो रोगा भवन्ति आगन्तुवातपित्तश्लेष्मनिमित्ताः । तेषां चतुर्णामपि रोगाणां रोगत्वमेकविधं रुक्सामान्यात् । द्विविधा पुनः प्रकृतिरेषामागन्तुनिजविभागात् द्विविधं चैषामधिष्ठानं मनःशरीरविशेषात् । विकाराः पुनरेषामपरिसंख्येयाः प्रकृत्यधिष्ठानलिङ्गायतनविकल्पविशेषाणामपरिसंख्येयत्वात् । मुखानि तु खल्वागन्तोः नखदशनपतनाभिचाराभिशापाभिषङ्गव्यधवन्धपीडनरज्जुदहनमन्त्राशनिभूतोपसर्गादीनि । निजस्य तु मुख

ङ्गुशोषश्च, ग्रीवास्तम्भश्च, मन्यास्तम्भश्च, कण्ठोद्ध्वंसश्च, हनु-
स्भश्च, ओष्ठभेदश्च, दन्तभेदश्च, दन्तशैथिल्यञ्च, मूकत्वञ्च,
क्सङ्गश्च, कषायास्यता च, मुखशोषश्च, अरसज्ञता च, घ्राण-
ाशश्च, कर्णशूलञ्च, अशब्दश्रवणञ्च, उच्चैःश्रुतिश्च, बाधिर्य्यञ्च,
र्त्मस्तम्भश्च, वर्त्मसङ्कोचश्च, तिमिरश्च, अक्षिशूलञ्च, अक्षि-
्युदासश्च, भ्रूव्युदासश्च, शङ्खभेदश्च, ललाटभेदश्च, शिरोरुक् च,
शभूमिस्फुटनञ्च, अर्दितञ्च, एकाङ्गरोगश्च, सर्वाङ्गरोगश्च, पक्ष-
ाधश्च, आक्षेपकश्च, दण्डकश्च, श्रमश्च, भ्रमश्च, वेपथुश्च, जृम्भा
, विषादश्चातिप्रलापश्च, ग्लानिश्च, रौक्ष्यञ्च पारुष्यञ्च, श्यावा-
रुणावभासता च, अस्वप्नश्च, अनवस्थितचित्तत्वञ्चेत्यशीतिर्वात-
विकाराः ॥ १ ॥

वातविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः
सर्वेष्वपि खल्वेतेषु वातविकारेषु अन्येषु चानुक्तेषु वायोरिद-
मात्मरूपमपरिणामि कर्मणश्च स्वलक्षणं यदुपलभ्य तदवयवं वा
विमुक्तसन्देहा वातविकारमेवाध्यवस्यन्ति कुशलाः ॥ २ ॥

तद्यथा। रौक्ष्यं लाघवं वैशद्यं, शैत्यं गतिरमूर्त्तत्वञ्चेति
वायोरात्मरूपाणि। एवंविधत्वाच्च कर्मणश्च स्वलक्षणमिदमस्य
भवति; तं तं शरीरावयवमाविशतः संसभ्रंशव्यासाङ्गभेद-
साद-हर्ष-तर्षावर्त्त-मर्दकम्पचालतोदव्यथचेष्टभङ्गास्तथा खर-
परुषविशदसुषिरतारुणकषायविरसता-शोषशूलसुप्तिसङ्कुचनस्त-
म्भनानि वायोः कर्माणि तैरन्वितं वातविकारमेवाध्यवस्येत् ॥३॥

तं मधुराम्ललवणस्निग्धोष्णैरुपक्रमैरुपक्रमेत। स्वेदस्नेहा-
स्थापनानुवासन-नस्तःकर्म-भोजनाभ्यङ्गोत्सादन परिषेकादिभि-
र्वातहरैर्मात्रां कालञ्च प्रमाणीकृत्यास्थापनानुवासनन्तु सर्वथोप-

मूलं छिनत्ति। तत्रावजिते वातेऽपि शरीरान्तर्गता वातविकाराः प्रशान्तिमापद्यन्ते। यथा वनस्पतेर्मूले छिन्ने स्कन्धशाखावरोहकुसुमफलपलाशादीनां नियतो विनाशस्तद्वत् ॥५॥

पित्तविकाराश्चत्वारिंशदत ऊर्ध्वं व्याख्यास्यन्ते। तद्यथा— ओषश्च, प्लोषश्च, दाहश्च, दवथुश्च, धूमकश्च, अम्लकश्च, विदाहश्च, अन्तर्दाहश्च, अंसदाहश्च, ऊष्माधिक्यञ्च, अतिस्वेदश्चाङ्गगन्धश्च, अङ्गावयवदरणञ्च, शोणितक्लेदश्च, मांसक्लेदश्च, त्वग्दाहश्च, मांसदाहश्च, त्वङ्मांसदरणञ्च, चर्मदरणञ्च, रक्तकोठाश्च, रक्तविस्फोटाश्च, रक्तपित्तञ्च, रक्तमण्डलानि च, हरितत्वञ्च, हारिद्रत्वञ्च, नीलिका च, कक्षा च, कामला च, तिक्तास्यता च, पूतिमुखता च, तृष्णाया आधिक्यञ्च, अतृप्तिश्च, आस्यपाकश्च, गलपाकश्च, अक्षिपाकश्च, गुदपाकश्च, मेढ्रपाकश्च, जीवादानञ्च, तमःप्रवेशश्च, हरितहारिद्रमूत्रनेत्रवर्चस्त्वञ्चेति चत्वारिंशत् पित्तविकाराः। पित्तविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याता भवन्ति ॥ ६ ॥

सर्वेष्वपि खल्वेतेषु पित्तविकारेष्वन्येषु चानुक्तेषु पित्तस्येदमात्मरूपमपरिणामि कर्मणश्च स्वलक्षणं यदुपलभ्य तदवयवं वा विमुक्तसन्देहाः पित्तविकारमेवाध्यवस्यन्ति कुशलाः ॥ ७ ॥

तद्यथा। औष्ण्यं तैक्ष्ण्यं लाघवमनतिस्नेहो वर्णश्च शुक्लारुणवर्जो गन्धश्च विस्रो रसौ च कटुकाम्लौ पित्तस्यात्मरूपाणि। एवंविधत्वाच्च कर्मणः स्वलक्षणमिदमस्य भवति। तं तं शरीरावयवमाविशतो दाहोष्मपाकस्वेदक्लेदकोथस्रावरागाः, यथास्वञ्च गन्धवर्णरसादिभिर्निर्वर्त्तनं पित्तस्य कर्माणि तैरन्वितं पित्तविकारमेवाध्यवस्येत् ॥ ८ ॥

तं मधुरतिक्तकषायशीतैरुपक्रमैरुपक्रमेत स्नेहविरेकप्रदेह-

कृत्य। विरेचनन्तु सर्वोपक्रमेभ्यः पित्ते प्रधानतमं मन्यन्ते भिषजः ॥ ८ ॥

तद्ध्यादित एवामाशयमनुप्रविश्य केवलं वैकारिकं पित्तमूलञ्चापकर्षति। तत्रावजिते पित्तेऽपि शरीरान्तर्गताः पित्तविकाराः प्रशान्तिमापद्यन्ते। यथाग्नौ व्यपोढ़े केवलमग्निगृहञ्च शीतं भवति तद्वत् ॥ १० ॥

श्लेष्मविकाराश्च विंशतिरत ऊर्द्धं व्याख्यास्यन्ते। तद्यथा— तृप्तिश्च, तन्द्रा च, निद्राधिक्यञ्च, स्तैमित्यञ्च, गुरुगात्रता च, आलस्यञ्च, मुखमाधुर्य्यञ्च, मुखस्रावश्च, उद्गारश्च, श्लेष्मोद्गिरणञ्च, मलस्याधिक्यञ्च, कण्ठोपलेपश्च, वलाशश्च, हृदयोपलेपश्च, धमनीप्रतिचयश्च, गलगण्डश्च, अतिस्थौल्यञ्च, शीताग्निता च, उदर्दश्च, श्वेतावभासता च, श्वेतमूत्रनेत्रवर्चस्त्वञ्चेति विंशतिः श्लेष्मविकाराः ॥ ११ ॥

श्लेष्मविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः। सर्वेष्वपि तु खल्वेतेषु श्लेष्मविकारेष्वन्येषु चानुक्तेषु श्लेष्मण इदमात्मरूपमपरिणामि कर्मणश्च स्वलक्षणं यदुपलभ्यते तदवयवं वा विमुक्तसन्देहाः श्लेष्मविकारमध्यवस्यन्ति कुशलाः ॥ १२ ॥

तद्यथा—श्वैत्यशैत्यगौरवमाधुर्य्यमात्स्नर्य्याणि श्लेष्मण आत्मरूपाण्येवंविधत्वाच्च कर्मणः स्वलक्षणमिदमस्य भवति। तं तं शरीरावयवमाविशतः श्वैत्यशैत्य-कण्डू-स्थैर्य्यगौरवस्नेहस्तम्भसुप्तिक्लेदोपदेहबन्धमाधुर्य्यचिरकारित्वानि श्लेष्मणः कर्माणि तैरन्वित श्लेष्मविकारमेवाध्यवस्येत् ॥ १३ ॥

तं कटुकतिक्तकषायतीक्ष्णोष्णरूक्षैरुपक्रमैरुपक्रमेत स्वेदनवमनशिरोविरेचनव्यायामादिभिः श्लेष्महरैर्मात्रां कालञ्च प्रमाणीकृत्य। वमनन्तु सर्वोपक्रमेभ्यः श्लेष्मणि प्रधानतमं मन्यन्ते भिषजः ॥ १४ ॥

गृहा नानीहमानस्य न चैवावदतो मृषा।
न चानिक्षिप्तदण्डस्य परेषामनिकुर्वतः॥ १३॥

---



तद्यथादित एवामाशयमनुप्रविश्य केवलं वैकारिकं श्लेष्ममूलमपकर्षति। तत्रावजिते श्लेष्मण्यपि शरीरान्तर्गताः श्लेष्मविकाराः प्रशान्तिमापद्यन्ते। यथा भिन्ने केदारसेतौ शालियवषष्टिकादीन्यभिष्यन्दमानानि अम्भसा प्रशोषमापद्यन्ते तद्वदिति॥ १५॥

भवन्ति चात्र। रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।
ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत्॥ १६॥
यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक्।
अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया॥ १७॥
यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः।
देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशयम्॥ १८॥
तत्र श्लोकाः। संग्रहः प्रकृतिर्देशो विकारमुखमीरणम्।
असन्देहोऽनुबन्धश्च रोगाणां सम्प्रकाशितः॥ १९॥
दोषस्थानानि रोगाणां गणा नानात्मजाश्च ये।
रूपं पृथक्त्वाद्दोषाणां कर्म चापरिणामि यत्॥ २०॥
पृथक्त्वेन च दोषाणां निर्दिष्टाः समुपक्रमाः।
सम्यक् महति रोगाणामध्याये तत्त्वदर्शिना॥ २१॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने महारोगाध्यायो नाम विंशोऽध्यायः समाप्तः।

---

तत्रातिस्थूलकृशयोर्भूय एवापरे निन्दितविशेषा भवन्ति। अतिस्थूलस्य तावदायुषो ह्रासः जवोपरोधः कृच्छ्रव्यवायता दौर्बल्यं दौर्गन्ध्यं स्वेदाबाधः क्षुदतिमात्रं पिपासातियोगश्चेति भवन्त्यष्टौ दोषाः ॥ २ ॥

तदतिस्थौल्यमतिसंपूरणाद् गुरुमधुरशीतस्निग्धोपयोगादव्यायामादव्यवायाद् दिवास्वप्नाद्धर्षनित्यत्वादचिन्तनाद्बीजस्वभावाच्चोपजायते ॥ ३ ॥

तस्यातिमात्रं मेदस्विनो मेद एवोपचीयते, नेतरे धातवस्तस्मादस्यायुषो ह्रासः, शैथिल्यात् सौकुमार्याद् गुरुत्वाच्च मेदसो जवोपरोधः, शुक्राबहुत्वान्मेदसावृतमार्गत्वाच्च कृच्छ्रव्यवायता, दौर्बल्यमसमत्वाद्धातूनां, दौर्गन्ध्यं मेदोदोषान्मेदसः स्वभावत्वात् स्वेदनत्वाच्च मेदसः, श्लेष्मसंसर्गाद्विष्यन्दित्वाच्च बहुत्वाद्गुरुत्वाद्व्यायामासहत्वात् स्वेदाबाधः, तीक्ष्णाग्नित्वात् प्रभूतकोष्ठवायुत्वाच्च क्षुदतिमात्रं पिपासातियोगश्चेति ॥ ४ ॥

भवन्ति चात्र। मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः।

चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥ ५ ॥

तस्मात् स शीघ्रं जरयत्याहारं चाभिकाङ्क्षति।

विकारांश्चाश्नुते घोरान् किंचित्कालव्यतिक्रमात् ॥ ६ ॥

एतावुपद्रवकरौ विशेषादग्निमारुतौ।

एतौ हि दहतः स्थूलं वनदावो वनं यथा ॥ ७ ॥

मेदस्यतीवसंवृद्धे सहसैवानिलादयः।

विकारान् दारुणान् कृत्वा नाशयन्त्याशु जीवितम् ॥ ८ ॥

मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः।

अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ९ ॥

इति मेदस्विनो दोषा हेतवो रूपमेव च।

निर्दिष्टं वक्ष्यते वाच्यमतिकार्श्येऽप्यतः परम् ॥ १० ॥

विल्वादिपञ्चमूलस्य प्रयोगः चौद्रसंयुतः।
शिलाजतुप्रयोगस्तु साग्निमन्थरसा शिला ॥ २४ ॥
प्रसातिका प्रियङ्गुश्च श्यामाका यवका यवाः।
जूर्णाह्वाः कोद्रवा मुद्गाः कुलत्थाश्चकमर्दकाः ॥ २५ ॥
आढ़कीनाञ्च वीजानि पटोलामलकैः सह।
भोजनार्थं प्रयोज्यानि पानञ्चानु मधूदकम् ॥ २६ ॥
अरिष्टांश्चानुपानार्थे मेदोमांसकफापहान्।
अतिस्थौल्यविनाशाय संविभज्य प्रयोजयेत् ॥ २७ ॥
प्रजागरं व्यवायञ्च व्यायामं चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणाभिप्रवर्द्धयेत् ॥ २८ ॥
स्वप्नो हर्षः सुखा शय्या मनसो निर्वृतिः शमः।
चिन्ताव्यवायव्यायामविरामः प्रियदर्शनम् ॥ २९ ॥
नवान्नानि नवं मद्यं ग्राम्यानूपौदका रसाः।
संस्कृतानि च मांसानि दधि सर्पिः पयांसि च ॥ ३० ॥
इक्षवः शालयो माषा गोधूमा गुडवैकृतम्।
वस्तयः स्निग्धमधुरास्तैलाभ्यङ्गश्च सर्वदा ॥ ३१ ॥
स्निग्धमुद्वर्त्तनं स्नानं गन्धमाल्यनिषेवणम्।
शुक्लो वासो यथाकालं दोषाणामवसेचनम् ॥ ३२ ॥
रसायनानां वृष्याणां योगानामुपसेवनम्।
हत्वातिकार्श्यमादत्ते नृणामुपचयं परम् ॥ ३३ ॥
अचिन्तनाच्च कार्य्याणां ध्रुवं सन्तर्पणेन च।
स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति ॥ ३४ ॥
यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः।
विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः ॥ ३५ ॥
निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम्।
वृषता क्लीवता ज्ञानमज्ञानं जीवितं न च ॥ ३६ ॥

अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता।
सुखायुषी पराकुर्यात्कालरात्रिरिवापरा॥ ३७॥
सैव युक्ता पुनर्युङ्क्ते निद्रा देहं सुखायुषा।
पुरुषं योगिनं सिद्ध्या सत्या बुद्धिरिवागता॥ ३८॥
गीताध्ययनमद्यस्त्रीकर्मभाराध्वकर्शिताः।
अजीर्णिनः क्षताः क्षीणा वृद्धा बालास्तथाऽबलाः॥ ३९॥
तृष्णातीसारशूलार्त्ताः श्वासिनः शूलिनः कृशाः।
पतिताभिहतोन्मत्ताः क्लान्ता यानप्रजागरैः॥ ४०॥
क्रोधशोकभयक्लान्ता दिवास्वप्नोचिताश्च ये।
सर्व एते दिवास्वप्नं सेवेरन् सार्वकालिकम्॥ ४१॥
धातुसाम्यं तथा ह्येषां बलञ्चाप्युपजायते।
श्लेष्मा पुष्णाति चाङ्गानि स्थैर्यं भवति चायुषः॥ ४२॥
ग्रीष्मे त्वादानरूक्षाणां वर्द्धमाने च मारुते।
रात्रीणां चातिसंक्षेपाद्दिवास्वप्नः प्रशस्यते॥ ४३॥
ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नात् प्रकुप्यतः।
श्लेष्मपित्ते दिवास्वप्नस्तस्मात्तेषु न शस्यते॥ ४४॥
मेदस्विनः स्नेहनित्याः श्लेष्मलाः श्लेष्मरोगिणः।
दूषीविषार्त्ताश्च दिवा न शयीरन् कदाचन॥ ४५॥
हलीमकः शिरःशूलं स्तैमित्यं गुरुगात्रता।
अङ्गमर्दोऽग्निनाशश्च प्रलेपो हृदयस्य च॥ ४६॥
शोफारोचकहृल्लासपीनसार्द्धावभेदकाः।
कोठारुःपिडकाः कण्डूस्तन्द्रा कासो गलामयाः॥ ४७॥
स्मृतिबुद्धिप्रमोहश्च संरोधः स्रोतसां ज्वरः।
इन्द्रियाणामसामर्थ्यं विषवेगप्रवर्त्तनम्॥ ४८॥
भवेन्नृणां दिवास्वप्नस्याहितस्य निषेवणात्।
तस्माद्धिताहितं स्वप्नं बुद्ध्वा स्वप्यात् सुखं बुधः॥ ४९॥

रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा।
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥ ५० ॥
देहवृत्तौ यथाऽऽहारः तथा स्वप्नः सुखो मतः।
स्वप्नाहारसमुत्थे च स्थौल्यकार्श्ये विशेषतः ॥ ५१ ॥
अभ्यङ्गोत्सादनं स्नानं ग्राम्यानूपौदका रसाः।
शाल्यन्नं सदधि क्षीरं स्नेहो मद्यं मनःसुखम् ॥ ५२ ॥
मनसोऽनुगुणा गन्धाः शब्दाः संवाहनानि च।
चक्षुषस्तर्पणं लेपः शिरसो वदनस्य च ॥ ५३ ॥
स्वास्तीर्णं शयनं वेश्मसुखं कालस्तथोचितः।
आनयन्त्यचिरान्निद्रां प्रनष्टा या निमित्ततः ॥ ५४ ॥
कायस्य शिरसश्चैव विरेकश्छर्दनं भयम्।
चिन्ता क्रोधस्तथा धूमो व्यायामो रक्तमोक्षणम् ॥ ५५ ॥
उपवासः सुखा शय्या सत्त्वौदार्यं तमो जयः।
निद्राप्रसङ्गमहितं वारयन्ति समुत्थितम् ॥ ५६ ॥
एत एव च विज्ञेया निद्रानाशस्य हेतवः।
कार्यं कालो विकारश्च प्रकृतिर्वायुरेव च ॥ ५७ ॥
तमोभवा श्लेष्मसमुद्भवा च मनःशरीरश्रमसम्भवा च।
आगन्तुकी व्याध्यनुवर्त्तिनी च रात्रिस्वभावप्रभवा च निद्रा ॥५८॥
रात्रिस्वभावप्रभवा मता या तां भूतधात्रीं प्रवदन्ति निद्राम्।
तमोभवामाहुरघस्य मूलं शेषं पुनर्व्याधिषु निर्दिशन्ति ॥ ५९ ॥
तत्र श्लोकाः। निन्दिताः पुरुषास्तेषां यौ विशेषेण निन्दितौ।
वक्ष्यामि कारणं दोषास्तयोर्निन्दितभेषजम् ॥ ६० ॥
येभ्यो यदा हिता निद्रा येभ्यश्चाप्यहिता यदा।
अतिनिद्रानिद्रयोश्च भेषजं यद्भवा च सा ॥ ६१ ॥
या या यथाप्रभावा च निद्रा तत्सर्वमत्रिजः।
अष्टौ निन्दितसंख्याते व्याजहार पुनर्वसुः ॥ ६२ ॥

इति योजनाचतुष्के अष्टौ निन्दितीयो नाम एकविंशोऽध्यायः।

# द्वाविंशोऽध्यायः।

अथातो लङ्घनबृंहणीयमध्यायं व्याख्यास्यामः।

तपःस्वाध्यायनिरतानात्रेयः शिष्यसत्तमान्।
षडग्निवेशप्रमुखाननुक्रम्य परिचोदयन्॥ १ ॥
लङ्घनं बृंहणं काले रूक्षणं स्नेहनं तथा।
स्वेदनं स्तम्भनञ्चैव जानीते यः स वै भिषक्॥ २ ॥
इति तमेवमुक्तवन्तं भगवन्तमात्रेयमग्निवेश उवाच।
भगवंल्लङ्घनं किंस्विल्लङ्घनीयाश्च कीदृशाः।
बृंहणं बृंहणीयाश्च रूक्षणीयाश्च रूक्षणम्॥ ३ ॥
के स्नेहनं के स्नेहनीयाश्च स्वेदाः स्वेद्याश्च के मताः।
स्तम्भनं स्तम्भनीयाश्च वक्तुमर्हसि तद् गुरो॥ ४ ॥
लङ्घनप्रभृतीनाञ्च षण्णामेषां समासतः।
कृताकृतातिवृत्तानां लक्षणं वक्तुमर्हसि॥ ५ ॥
गुरुरुवाच। यत्किञ्चिल्लाघवकरं देहे तल्लङ्घनं स्मृतम्।
बृंहत्वं यच्छरीरस्य जनयेत्तच्च बृंहणम्॥ ६ ॥
रौक्ष्यं खरत्वं वैशद्यं यत् कुर्यात्तद्धि रूक्षणम्।
स्नेहनं स्नेहनिःष्यन्दमार्दवक्लेदकारकम्॥ ७ ॥
स्तम्भगौरवशीतघ्नं स्वेदनं स्वेदकारकम्।
स्तम्भनं स्तम्भयति यद्गतिमन्तं चलं ध्रुवम्॥ ८ ॥
लघूष्णतीक्ष्णविशदं रूक्षं सूक्ष्मं खरं सरम्।
कठिनञ्चैव यद्द्रव्यं प्रायस्तल्लङ्घनं स्मृतम्॥ ९ ॥
गुरुशीतमृदुस्निग्धं बहुलं सूक्ष्मपिच्छिलम्।
प्रायो मन्दं स्थिरं सूक्ष्मं द्रव्यं बृंहणमुच्यते॥ १० ॥
रूक्षं लघु खरं तीक्ष्णमुष्णं स्थिरमपिच्छिलम्।
प्रायशः कठिनञ्चैव यद्द्रव्यं तद्धि रूक्षणम्॥ ११ ॥
द्रवं सूक्ष्मं सरं स्निग्धं पिच्छिलं गुरुशीतलम्।

प्रायो मन्दं मृदु च यद् द्रव्यं तत् स्नेहनं मतम् ॥ १२ ॥
उष्णं तीक्ष्णं सरं स्निग्धं रूक्षं सूक्ष्मं द्रवं स्थिरम्।
द्रव्यं गुरु च यत्प्रायः तद्धि स्वेदनमुच्यते ॥ १३ ॥
शीतं मन्दं मृदु श्लक्ष्णं रूक्षं सूक्ष्मं द्रवं सरम्।
यद्द्रव्यं लघु चोद्दिष्टं प्रायस्तत् स्तम्भनं स्मृतम् ॥ १४ ॥
चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ।
पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥ १५ ॥
प्रभूतश्लेष्मपित्तास्रमलाः संसृष्टमारुताः।
बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः ॥ १६ ॥
येषां मध्यबला रोगाः कफपित्तसमुत्थिताः।
वम्यतीसारहृद्रोगविसूच्यलसकज्वराः ॥ १७ ॥
विबन्धगौरवोद्गारहृल्लासारोचकादयः।
पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत् ॥ १८ ॥
एत एव यथोद्दिष्टा येषामल्पबला गदाः।
पिपासानिग्रहैस्तेषामुपवासैश्च तान् जयेत् ॥ १९ ॥
रोगान् जयेन्मध्यबलान् व्यायामातपमारुतैः।
बलिनां किं पुनर्येषां रोगाणामवरं बलम् ॥ २० ॥
त्वग्दोषिणां प्रमीढानां स्निग्धाभिष्यन्दिबृंहिणाम्।
शिशिरे लङ्घनं शस्तमपि वातविकारिणाम् ॥ २१ ॥
अदिग्धविद्धमक्लिष्टं वयःस्थं सात्म्यचारिणाम्।
मृगमत्स्यविहङ्गानां मांसं बृंहणमुच्यते ॥ २२ ॥
क्षीणाः क्षताः कृशा वृद्धा दुर्बला नित्यमध्वगाः।
स्त्रीमद्यनित्या ग्रीष्मे च बृंहणीया नराः स्मृताः ॥ २३ ॥
शोषार्शोग्रहणीदोषैर्व्याधिभिः कर्शिताश्च ये।
तेषां क्रव्यादमांसानां बृंहणा लाघवो रसाः ॥ २४ ॥
स्नानमुत्सादनं स्वप्नो मधुराः स्नेहबस्तयः।

शर्करा क्षीरसर्पींषि सर्वेषां विद्धि बृंहणम् ॥ २५ ॥
कटुतिक्तकषायाणां सेवनं स्त्रीष्वसंयमः ।
खलीपिण्याकतक्राणां मध्वादीनां च रूक्षणम् ॥ २६ ॥
अभिष्यन्दा महादोषा मर्मस्था व्याधयश्च ये ।
ऊरुस्तम्भप्रभृतयो रूक्षणीया निदर्शिताः ॥ २७ ॥
स्नेह्याः स्नेहयितव्याश्च स्वेद्याः स्वेद्याश्च ये नराः ।
स्नेहाध्याये मयोक्तास्ते स्वेदाख्ये च सविस्तराः ॥ २८ ॥
द्रवं तनु सरं यावच्छीतीकरणमौषधम् ।
स्वादु तिक्तं कषायञ्च स्तम्भनं सर्वमेव तत् ॥ २९ ॥
पित्तक्षाराग्निदग्धा ये वम्यतीसारपीडिताः ।
विषस्वेदातियोगार्त्ताः स्तम्भनीयास्तथापराः ॥ ३० ॥
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥ ३१ ॥
स्वेदे जाते रुचौ चैव क्षुत्पिपासासहोदये ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ ३२ ॥
पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥ ३३ ॥
मनसः सम्भ्रमोऽभीक्ष्णमूर्ध्वं वायुस्तमो हृदि ।
देहाग्निबलनाशश्च लङ्घनेऽतिकृते भवेत् ॥ ३४ ॥
बलं पुष्ट्युपलम्भश्च कार्श्यं दोषविवर्जितम् ।
लक्षणं बृंहिते स्थौल्यमति चात्यर्थबृंहिते ॥ ३५ ॥
कृताकृतस्य चिह्नं यल्लङ्घिते तद्धि रूक्षिते ।
स्तम्भितः स्याद्बले लब्धे यथोक्तैश्चामयैर्जितैः ॥ ३६ ॥
श्यावता स्तब्धगात्रत्वमुद्वेगो हनुसंग्रहः ।
हृद्वर्चोनिग्रहश्च स्यादतिस्तम्भितलक्षणम् ॥ ३७ ॥
लक्षणं चाकृतानां स्यात् षण्णामेषां समासतः ।

तदौषधीनां व्याधीनामशमो वृद्धिरेव वा ॥ ३८ ॥
इति षट् सर्वरोगाणां प्रोक्ताः सम्यगुपक्रमाः ।
साध्यानां साधने सिद्धा मात्राकालानुरोधिन इति ॥ ३९ ॥
भवति चात्र । दोषाणां बहुसंसर्गात् सङ्कीर्यन्ते ह्युपक्रमाः ।
षट्त्वं तु नातिवर्त्तन्ते त्रित्वं वातादयो यथा ॥ ४० ॥
1. इत्यस्मिँल्लङ्घनाध्याये व्याख्याताः षडुपक्रमाः ।
यथाप्रश्नं भगवता चिकित्सा यैः प्रवर्त्तिता ॥ ४१ ॥

इति योजनाचतुष्के षष्ठः लङ्घनीयो नाम द्वाविंशोऽध्यायः समाप्तः ।

---

## त्रयोविंशोऽध्यायः ।

अथातः सन्तर्पणीयमध्यायं व्याख्यास्यामः ।

सन्तर्पयति यः स्निग्धैर्मधुरैर्गुरुपिच्छिलैः ।
नवान्नैर्नवमद्यैश्च मांसैश्चानूपवारिजैः ॥ १ ॥
गोरसैर्गौडिकैश्चान्नैः पैष्टिकैश्चातिमात्रशः ।
चेष्टाद्वेषी दिवास्वप्नशय्यासनसुखे रतः ॥ २ ॥
रोगास्तस्योपजायन्ते सन्तर्पणनिमित्तजाः ।
प्रमेहकण्डूपिडकाः कोठपाण्ड्वामयज्वराः ॥ ३ ॥
कुष्ठान्यामप्रदोषाश्च मूत्रकृच्छ्रमरोचकम् ।
तन्द्रा क्लैब्यमतिस्थौल्यमालस्यं गुरुगात्रता ॥ ४ ॥
इन्द्रियस्रोतसां रोधो बुद्धेर्मोहः प्रमीलकः ।
शोफाश्चैवंविधाश्चान्ये शीघ्रमप्रतिकुर्वतः ॥ ५ ॥
शस्तमुल्लेखनं तेषां विरेको रक्तमोक्षणम् ।
व्यायामश्चोपवासश्च धूमाश्च स्वेदनानि च ॥ ६ ॥
सक्षौद्रश्चाभयाप्राशः प्रायो रूक्षान्नसेवनम् ।
चूर्णप्रदेहा ये चोक्ताः कण्डूकोठविनाशनाः ॥ ७ ॥

त्रिफलारग्वधं पाठां सप्तपर्णं सवत्सकम् ।
मुस्तं निम्बं समदनं जलेनोत्क्वथितं पिबेत् ॥ ८ ॥
तेन मेहादयो यान्ति नाशमभ्यस्यतो ध्रुवम् ।
मात्राकालप्रयुक्तेन सन्तर्पणसमुत्थिताः ॥ ९ ॥
मुस्तमारग्वधः पाठा त्रिफला देवदारु च ।
श्वदंष्ट्रा खदिरो निम्बो हरिद्रात्वक् च वत्सकात् ॥ १० ॥
रसमेषां यथादोषं प्रातः प्रातः पिबेन्नरः ।
सन्तर्पणकृतैः सर्वैर्व्याधिभिर्विप्रमुच्यते ॥ ११ ॥
एभिश्चोद्वर्तनोद्घर्षस्नानयोगोपयोजितैः ।
त्वग्दोषाः प्रशमं यान्ति तथा स्नेहोपसंहितैः ॥ १२ ॥
कुष्ठं गोमेदकं हिङ्गु क्रौञ्चास्थि त्र्यूषणं वचाम् ।
वृषकैले श्वदंष्ट्रां च खराह्वामश्मभेदकम् ॥ १३ ॥
तक्रेण दधिमण्डेन बदराम्लरसेन वा ।
मूत्रकृच्छ्रं प्रमेहञ्च पीतमेतद् व्यपोहति ॥ १४ ॥
तक्राभयाप्रयोगैश्च त्रिफलायास्तथैव च ।
अरिष्टानां प्रयोगैश्च यान्ति मेहादयः शमम् ॥ १५ ॥
त्र्यूषणं त्रिफला क्षौद्रं क्रिमिघ्नं साजमोदकम् ।
मन्थोऽयं सक्तवः सर्पिर्हितो लौहोदकाप्लुतः ।
व्योषं विडङ्गं शिग्रूणि त्रिफला कटुरोहिणी ॥ १६ ॥
बृहत्यौ द्वे हरिद्रे द्वे पाठा सातिविषा स्थिरा ।
हिङ्गुकेबुकमूलानि यवानी धान्यचित्रकम् ॥ १७ ॥
सौवर्चलमजाजी च हपुषां चेति चूर्णयेत् ।
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः ॥ १८ ॥
सक्तूनां षोडशगुणो भागः सन्तर्पणं पिबेत् ।
प्रयोगादस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ॥ १९ ॥
प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ।

प्रोहा पाण्डुामयः शोफो मूत्रकृच्छ्रमरोचकः ॥ २० ॥
हृद्रोगो राजयक्ष्मा च कासः श्वासो गलग्रहः।
क्रिमयो ग्रहणीदोषाः श्वैत्र्यं स्थौल्यमतीव च।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्द्धते ॥ २१ ॥
व्यायामनित्यो जीर्णाशी यवगोधूमभोजनः।
सन्तर्पणकृतैर्दोषैर्मुच्यते स्थौल्यात् विमुच्यते ॥ २२ ॥
उक्तं सन्तर्पणोत्थानामपतर्पणमौषधम्।
वक्ष्यन्ते सौषधायोर्द्ध्वमपतर्पणजा गदाः ॥ २३ ॥
देहाग्निबलवर्णौजःशुक्रमांसबलक्षयः।
ज्वरः कासानुबन्धश्च पार्श्वशूलमरोचकः ॥ २४ ॥
श्रोत्रदौर्बल्यमुन्मादः प्रलापो हृदयव्यथा।
विण्मूत्रसंग्रहः शूलं जङ्घोरुत्रिकसंश्रयम् ॥ २५ ॥
पर्वास्थि-सन्धिभेदश्च ये चान्ये वातजा गदाः।
ऊर्द्ध्ववातादयः सर्वे जायन्ते तेऽपतर्पणात् ॥ २६ ॥
तेषां सन्तर्पणं तज्ज्ञैः पुनराख्यातमौषधम्।
यत्तदात्वे समर्थं स्यादभ्यासे वा तदिष्यते ॥ २७ ॥
सद्यः क्षीणो हि सद्यो वै तर्पणेनोपचीयते।
नर्त्ते सन्तर्पणाभ्यासात् चिरक्षीणस्तु पुष्यति ॥ २८ ॥
देहाग्निदोषभैषज्यमात्राकालानुवर्त्तिना।
कार्य्यमत्वरमाणेन भेषजं चिरदुर्बले ॥ २९ ॥
हिता मांसरसास्तस्मै पयांसि च घृतानि च।
स्नानानि वस्तयोऽभ्यङ्गास्तर्पणास्तर्पणाश्च ये ॥ ३० ॥
ज्वरकासप्रसक्तानां कृशानां मूत्रकृच्छ्रिणाम्।
तृष्यतामूर्द्ध्ववातानां हितं वक्ष्यामि तर्पणम् ॥ ३१ ॥
शर्करापिप्पलीतैलघृतक्षौद्रसमांशकैः।
शक्तु द्विगुणितो ह्यषस्तेषां मन्थः प्रशस्यते ॥ ३२ ॥

शक्तवो मदिरा क्षौद्रं शर्करा चेति तर्पणम् ।
पिबेन्मारुतविण्मूत्रकफपित्तानुलोमनम् ॥ ३३ ॥
फाणितं शक्तवः सर्पिः दधिमण्डोऽम्लकाञ्जिकम् ।
तर्पणं मूत्रकृच्छ्रघ्नमुदावर्त्तहरं पिबेत् ॥ ३४ ॥
मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाड़िमैः ।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ ३५ ॥
स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव वा ।
सद्यः सन्तर्पणो मन्थः स्थैर्यवर्णबलप्रदः ॥ ३६ ॥
तत्र श्लोकः । सन्तर्पणोत्था ये रोगा रोगा ये चापतर्पणात् ।
सन्तर्पणीये तेऽध्याये सौषधाः परिकीर्त्तिताः ॥ ३७ ॥

---

## चतुर्विंशोऽध्यायः ।

अथातो विधिशोणितीयमध्यायं व्याख्यास्यामः ।

विधिना शोणितं जातं शुद्धं भवति देहिनाम् ।
देशकालौकसात्म्यानां विधिर्यः संप्रदर्शितः ॥ १ ॥
तद्विशुद्धं हि रुधिरं बलवर्णसुखायुषा ।
युनक्ति प्राणिनं प्राणः शोणितं ह्यनुवर्त्तते ॥ २ ॥
प्रदुष्टबहुतीक्ष्णोष्णैर्मद्यैरन्यैश्च तद्विधैः ।
तथातिलवणक्षारैरम्लैः कटुभिरेव च ॥ ३ ॥
कुलत्थमाषनिष्पावतिलतैलनिषेवणैः ।
पिण्डालुमूलकादीनां हरितानाञ्च सर्वशः ॥ ४ ॥
जलजानूपबैलानां प्रसहानां च सेवनात् ।
दध्यम्लमस्तुशक्तूनां सुरा सौवीरकस्य च ॥ ५ ॥
विरुद्धानामुपक्लिन्नपूतीनां भक्षणेन च ।
भुक्त्वा दिवा प्रस्वपतां द्रवस्निग्धगुरूणि च ॥ ६ ॥

अत्यादाने तथा क्रोधं भजतां चातपानलौ।
छर्दिवेगप्रतीघातात्काले चानवसेचनात् ॥ ७ ॥
श्रमाभिघातसन्तापैरजीर्णाध्यशनैस्तथा।
शरत्कालस्वभावाच्च शोणितं संप्रदुष्यति ॥ ८ ॥
ततः शोणितजा रोगाः प्रजायन्ते पृथग्विधाः।
मुखपाकोऽक्षिरोगश्च पूतिघ्राणास्यगन्धता ॥ ९ ॥
गुल्मोपदंशवीसर्परक्तपित्तप्रमीलकाः।
विद्रधी रक्तमेहश्च प्रदरो वातशोणितम् ॥ १० ॥
वैवर्ण्यमग्निनाशश्च पिपासा गुरुगात्रता।
सन्तापश्चातिदौर्बल्यमरुचिः शिरसश्च रुक् ॥ ११ ॥
विदाहश्चान्नपानस्य तिक्ताम्लोद्गिरणं क्लमः।
क्रोधप्रचुरता बुद्धेः संमोहो लवणास्यता ॥ १२ ॥
स्वेदः शरीरदौर्गन्ध्यं मदः कम्पः स्वरक्षयः।
तन्द्रा निद्रातियोगश्च तमसश्चातिदर्शनम् ॥ १३ ॥
कण्ड्वरुक् कोठपिडकाः कुष्ठचर्मदलादयः।
विकाराः सर्व एवैते विज्ञेयाः शोणिताश्रयाः ॥१४ ॥
शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः।
सम्यक् साध्या न सिध्यन्ति रक्तजांस्तान् विभावयेत् ॥१५॥
कुर्यात् शोणितरोगेषु रक्तपित्तहरीं क्रियाम्।
विरेकमुपवासं वा स्रावणं शोणितस्य वा ॥ १६ ॥
बलदोषप्रमाणाद्वा विशुद्ध्या रुधिरस्य वा।
रुधिरं स्रावयेज्जन्तो राशयं प्रसमीक्ष्य वा ॥ १७ ॥
अरुणाभं भवेद्वातात् पिच्छिलं फेनिलं तनु।
पित्तात्पीतासितं रक्तं स्त्यायत्यौष्ण्याच्चिरेण च ॥१८॥
ईषत्पाण्डु कफाद्दुष्टं पिच्छिलं तन्तुमद्घनम्।
द्विदोषलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ॥ १९ ॥

तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम्।
गुञ्जाफलसवर्णं च विशुद्धं विद्धि शोणितम्॥ २०॥
नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम्।
तदा शरीरं ह्यनवस्थितासृगग्निर्विशेषेण च रक्षितव्यः॥ २१
प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतपक्तृवेगम्।
सुखान्वितं तुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति॥ २२॥
यदा तु रक्तवाहीनि रससंज्ञावहानि च।
पृथक् पृथक् समस्ता वा स्रोतांसि कुपिता मलाः॥ २३
मलिनाहारशीलस्य रजोमोहावृतात्मनः।
प्रतिहत्यावतिष्ठन्ते जायन्ते व्याधयस्तदा॥ २४॥
मदमूर्च्छायसंन्यासास्तेषां विद्याद्विचक्षणः।
यथोत्तरं बलाधिक्यं हेतुलिङ्गोपशान्तिषु॥ २५॥
दुर्बलश्चेतसः स्थानं यदा वायुः प्रपद्यते।
मनो विक्षोभयन् जन्तोः संज्ञां संमोहयेत्तदा॥ २६॥
पित्तमेवं कफश्चैवं मनोविक्षोभयन् नृणाम्।
संज्ञां नयत्याकुलतां विशेषश्चात्र वक्ष्यते॥ २७॥
सक्तानल्पद्रुताभाषं चलस्खलितचेष्टितम्।
विद्याद्वातमदाविष्टं रूक्षश्यावारुणाकृतिम्॥ २८॥
सक्रोधपरुषाभाषं संप्रहारकलिप्रियम्।
विद्यात्पित्तमदाविष्टं रक्तपीतासिताकृतिम्॥ २९॥
स्वल्पसम्बन्धवचनं तन्द्रालस्यसमन्वितम्।
विद्यात्कफमदाविष्टं पाण्डुं प्रध्यानतत्परम्॥ ३०॥
सर्वाण्येतानि रूपाणि सन्निपातकृते मदे।
जायते शाम्यति त्वाशु मदो मद्यमदाकृतिः॥ ३१॥
यश्च मद्यमदः प्रोक्तो विषजो रौधिरश्च यः।
सर्व एते मदा नर्ते वातपित्तकफत्रयात्॥ ३२॥

नीलं वा यदि वा कृष्णमाकाशमथ वारुणम् ।
पश्यंस्तमः प्रविशति शीघ्रञ्च प्रतिबुध्यते ॥ ३३ ॥
वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च ।
कार्श्यं श्यावारुणा छाया मूर्च्छाये वातसम्भवे ॥ ३४ ॥
रक्तं हरितवर्णं वा वियत्पीतमथापि वा ।
पश्यंस्तमः प्रविशति सस्वेदश्च प्रबुध्यते ॥ ३५ ॥
सपिपासः ससन्तापो रक्तपित्ताकुलेक्षणः ।
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसम्भवे ॥ ३६ ॥
मेघसङ्काशमाकाशमावृतं वा तमोघनैः ।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥ ३७ ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा ।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसम्भवे ॥ ३८ ॥
सर्वाकृतिः सन्निपातादपस्मार इवागतः ।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥ ३९ ॥
दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ।
स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना ॥ ४० ॥
वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।
संन्यस्यन्त्यबलं जन्तुं प्राणायतनसंश्रिताः ॥ ४१ ॥
स ना संन्याससंन्यस्तः काष्ठभूतो मृतोपमः ।
प्राणैर्वियुज्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम् ॥ ४२ ॥
दुर्गेऽम्भसि यथा मज्जद्भाजनन्त्वरया बुधः ।
गृह्णीयात्तलमप्राप्तं तथा संन्यासपीड़ितम् ॥ ४३ ॥
अञ्जनान्यवपीडाश्च धूमः प्रधमनानि च ।
सूचीभिस्तोदनं शस्तं दाहः पीड़ा नखान्तरे ॥ ४४ ॥
लुञ्चनं केशलोम्नां च दन्तैर्दंशनमेव च ।
आत्मगुप्तावघर्षश्च हितास्तस्यावबोधने ॥ ४५ ॥

संमूर्च्छितानि तीक्ष्णानि मद्यानि विविधानि च।
प्रभूतकटुतिक्तानि तस्यास्ये गालयेन्मुहुः ॥ ४६ ॥
मातुलुङ्गरसं तद्वन्महौषधसमायुतम्।
तद्वत्सौवीरकं दद्याद्युक्तं मद्याम्लकाञ्जिकैः ॥ ४७ ॥
हिङ्गूषणसमायुक्तं यावत् संज्ञाप्रबोधनात्।
प्रबुद्धसंज्ञमन्नैश्च लघुभिस्तमुपाचरेत् ॥ ४८ ॥
विस्मापनैः स्मारणैश्च प्रियश्रुतिभिरेव च।
पटुभिर्गीतवादित्रशब्दैश्चित्रैश्च दर्शनैः ॥ ४९ ॥
स्रंसनोल्लेखनैर्धूमैरञ्जनैः कवलग्रहैः।
शोणितस्यावसेकैश्च व्यायामोद्घर्षणैस्तथा ॥ ५० ॥
प्रबुद्धसंज्ञं मतिमाननुबन्धमुपाचरेत्।
तस्य संरक्षितव्यं हि मनः प्रलयहेतुतः ॥ ५१ ॥
स्नेहस्वेदोपपन्नानां यथादोषं यथाबलम्।
पञ्च कर्माणि कुर्वीत मूर्च्छायेषु मदेषु च ॥ ५२ ॥
अष्टाविंशत्यौषधस्योर्द्धमथवा तिक्तसर्पिषः।
प्रयोगः शस्यते तद्वन्महतः षट्पलस्य वा ॥ ५३ ॥
त्रिफलायाः प्रयोगो वा सघृतक्षौद्रशर्करः।
शिलाजतुप्रयोगो वा प्रयोगः पयसोऽपि वा ॥ ५४ ॥
पिप्पलीनां प्रयोगो वा प्रयोगः चित्रकस्य वा।
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥ ५५ ॥
रक्तावसेकात् शास्त्राणां सतां सत्त्ववतामपि।
सेवनात् मदमूर्च्छायाः प्रशाम्यन्ति शरीरिणाम् इति ॥५६॥

तत्र श्लोकौ ॥ विशुद्धञ्चाविशुद्धं च शोणितं तस्य हेतवः।
रक्तप्रदोषजा रोगास्तेषु रोगेषु चौषधम् ॥ ५७ ॥
मदमूर्च्छायसंन्यासहेतुलक्षणभेषजम्।
विधिशोणितकेऽध्याये सर्वमेतत् प्रकाशितम् ॥ ५८ ॥

इति योजनाचतुष्कं विधिशोणितीयाध्यायः समाप्तः।

## पञ्चविंशोऽध्यायः ।

अथातो यज्जःपुरुषीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

पुरा प्रत्यक्षधर्माणं भगवन्तं पुनर्वसुम् ।
समेतानां महर्षीणां प्रादुरासीदियं कथा ॥ १ ॥
आत्मेन्द्रियमनोऽर्थानां योऽयं पुरुषसंज्ञकः ।
राशिरस्यामयानाञ्च प्रागुत्पत्तिविनिश्चये ॥ २ ॥
अथ काशिपतिर्वाक्यं वामकोऽर्थवदन्तरा ।
व्याजहारर्षिसमितिमभिसृत्याभिवाद्य च ॥ ३ ॥
किन्नु स्यात् पुरुषो यज्जस्तज्जास्तस्यामयाः स्मृताः ।
न वेत्युक्ते नरेन्द्रेण प्रोवाचर्षीन् पुनर्वसुः ॥ ४ ॥
सर्व एवामितज्ञानविज्ञानच्छिन्नसंशयाः ।
भवन्तश्छेत्तुमर्हन्ति काशिराजस्य संशयम् ॥ ५ ॥
पारीक्षिस्तत्परीक्ष्याग्रे मौद्गल्यो वाक्यमब्रवीत् ।
आत्मजः पुरुषो रोगाश्चात्मजाः कारणं हि सः ॥ ६ ॥
स चिनोत्युपभुङ्क्ते च कर्म कर्मफलानि च ।
न ह्यृते चेतनाधातोः प्रवृत्तिः सुखदुःखयोः ॥ ७ ॥
शरलोमा तु नेत्याह न ह्यात्माऽऽत्मानमात्मना ।
योजयेद्व्याधिभिर्दुःखैर्दुःखद्वेषी कदाचन ॥ ८ ॥
रजस्तमोभ्यान्तु मनः परीतं सत्त्वसंज्ञकम् ।
शरीरस्य समुत्पत्तौ विकाराणाञ्च कारणम् ॥ ९ ॥
वार्योविदस्तु नेत्याह न ह्येकं कारणं मनः ।
नर्ते शरीरं शारीरा रोगा न मनसः स्थितिः ॥ १० ॥
रसजानि तु भूतानि व्याधयश्च पृथग्विधाः ।
आपो हि व्याधिवत्यस्ताः स्मृता निर्वृत्तिहेतवः ॥ ११ ॥
हिरण्याक्षस्तु नेत्याह न ह्यात्मा रसजः स्मृतः ।

नातीन्द्रियं मनः सन्ति रोगाः शब्दादिजास्तथा ॥ १२ ॥
षड्धातुजस्तु पुरुषो रोगाः षड्धातुजास्तथा ।
राशिः षड्धातुजो ह्येष साङ्ख्यैराद्यैः परीक्षितः ॥ १३ ॥
तथा ब्रुवाणं कुशिकमाह तन्नेति शौनकः ।
कस्मात् मातापितृभ्यां हि विना षड्धातुजो भवेत् ॥१४॥
पुरुषः पुरुषाद्गौर्गोरश्वादश्वः प्रजायते ।
पैत्रा मेहादयश्चोक्ता रोगास्ता एव कारणम् ॥ १५ ॥
भद्रकाप्यस्तु नेत्याह न ह्यन्धोऽन्धात् प्रजायते ।
मातापित्रोश्च ते पूर्वमुत्पत्तिर्नोपपद्यते ॥ १६ ॥
कर्मजस्तु मतो जन्तुः कर्मजास्तस्य चामयाः ।
न ह्यृते कर्मणो जन्म रोगाणां पुरुषस्य च ॥ १७ ॥
भरद्वाजस्तु नेत्याह कर्ता पूर्वं हि कर्मणः ।
दृष्टं न चाकृतं कर्म यस्य स्यात् पुरुषः फलम् ॥ १८ ॥
भावहेतुः स्वभावस्तु व्याधीनां पुरुषस्य च ।
खरद्रवचलोष्णत्वं तेजोऽन्तानां यथैव हि ॥ १९ ॥
काङ्कायनस्तु नेत्याह न ह्यारम्भे फलं भवेत् ।
भवेत् स्वभावाद्भावानामसिद्धिः सिद्धिरेव वा ॥ २० ॥
स्रष्टा त्वमितसङ्कल्पो ब्रह्मापत्यं प्रजापतिः ।
चेतनाचेतनस्यास्य जगतः सुखदुःखयोः ॥ २१ ॥
तन्नेति भिक्षुरात्रेयो न ह्यपत्यं प्रजापतिः ।
प्रजाहितैषी सततं दुःखैर्युञ्ज्यादसाधुवत् ॥ २२ ॥
कालजस्त्वेव पुरुषः कालजास्तस्य चामयाः ।
जगत्कालवशं सर्वं कालः सर्वत्र कारणम् ॥ २३ ॥
तथर्षीणां विवदतामुवाचेदं पुनर्वसुः ।
मैवं वोचत तत्त्वं हि दुष्प्रापं पक्षसंश्रयात् ॥ २४ ॥
वादान् सप्रतिवादान् हि वदन्तो निश्चितानिव ।

पश्चान्तं नैव गच्छन्ति तिलपीड़कवन्नरौ ॥ २५ ॥
मुक्त्वैनं वादसङ्घट्टमध्यात्ममनुचिन्त्यताम्।
नाविधूते तमःस्कन्धे ज्ञेये ज्ञानं प्रवर्त्तते ॥ २६ ॥
येषामेव हि भावानां सम्पत् सञ्जनयेन्नरम्।
तेषामेव विपद्व्याधीन् विविधान् समुदीरयेत् ॥ २७ ॥

अथात्रेयस्य भगवतो वचनमनुनिशम्य पुनरेव वामकः काशिपतिरुवाच भगवन्तमात्रेयम्। भगवन्! सम्पन्निमित्तजस्य पुरुषस्य विपन्निमित्तजानां च रोगाणां किमभिवृद्धिकारणमिति। तमुवाच भगवानात्रेयो हिताहारोपयोगः एक एव पुरुषस्य अभिवृद्धिकरो भवति अहिताहारोपयोगः पुनर्व्याधीनां निमित्तमिति ॥ २८ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच। कथमिह भगवन्। हिताहितानामाहारजातानां लक्षणमनपवादमभिजानीया हितसमाख्यातानां चैव आहारजातानामहितसमाख्यातानाञ्च मात्राकालक्रियाभूमिदेहदोषपुरुषावस्थान्तरेषु विपरीतकारित्वमुपलभामहे इति ॥ २९ ॥

तमुवाच भगवानात्रेयः। यदाहारजातमग्निवेश। समांश्चैव शरीरधातून् प्रकृतौ स्थापयति विषमांश्च समीकरोति इत्येतद्धितं विद्धि विपरीतमहितमिति एतद्धिताहितलक्षणमनपवादं भवति ॥ ३० ॥

एवंवादिनञ्च भगवन्तमात्रेयमग्निवेश उवाच। भगवन्! नन्वेतदेवमुपदिष्टं भूयिष्ठकल्पाः सर्वभिषजो विज्ञास्यन्ति ॥३१॥

तमुवाच भगवानात्रेयः। येषां विदितमाहारतत्त्वमग्निवेश! गुणतो द्रव्यतः कर्मतः सर्वावयवतो मात्रादयो भावास्त एतदेवमुपदिष्टं विज्ञातुमुत्सहन्ते। यथा तु खल्वेतदुपदिष्टं भूयिष्ठकल्पाः सर्वभिषजो विज्ञास्यन्ति तथैतदुपदेक्ष्यामः। मात्रादीन् भावा-

नुदाहरन्तः तेषां हि बहुविधविकल्पा भवन्ति। आहारविधि-
विशेषांस्तु खलु लक्षणतश्चावयवतश्चानुव्याख्यास्यामः ॥ ३२ ॥

आहारत्वम् आहारस्यैकविधमर्थाभेदात् स पुनर्द्वियोनिः स्थावर-
जङ्गमात्मकत्वात्। द्विविधः प्रभावो हिताहितोदर्कविशेषात् चतु-
र्विधोपयोगः पानाशनभक्ष्यलेह्योपयोगात्। षड़ास्वादो रसभेदतः
षड्विधत्वात् विंशतिगुणो गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्ण-
स्थिरसरमृदुकठिनविशदपिच्छिल-श्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवा-
नुगमनात्। अपरिसंख्येयविकल्पो द्रव्यसंयोगकरणबाहुल्यात्तस्य
ये ये विकारावयवा भूयिष्ठमुपयुज्यन्ते। भूयिष्ठकल्पनाय मनु-
ष्याणां प्रकृत्यैव हिततमाश्चाहिततमाश्च तांस्तान् यथावदनु-
व्याख्यास्यामः। तत् यथा लोहितशालयः शूकधान्यानां पथ्यत-
मत्वे श्रेष्ठतमाः। मुद्गाः शमीधान्यानाम्, आन्तरीक्षमुदकानां
सैन्धवं लवणानां जीवन्तीशाकं शाकानाम्। ऐणेयं मृगमांसानां
लावः पक्षिणां गोधा बिलेशयानां रोहितो मत्स्यानां गव्यं सर्पिः
सर्पिषां गोक्षीरं क्षीराणां तिलतैलं स्थावरजातानां स्नेहानां
वराहवसा आनूपमृगवसानां चुलुकीवसा मत्स्यवसानां हंस-
वसा जलचरविहङ्गवसानां कुक्कुटवसा विष्किरशकुनिवसानाम्
अजमेदः शाखादमेदसां शृङ्गवेरं कन्दानां मृद्वीका फलानां
शर्करा इक्षुविकाराणाम् इति प्रकृत्यैव हिततमानामाहारविका-
राणां प्राधान्यतो द्रव्याणि व्याख्यातानि। अहिततमानामप्युप-
देक्ष्यामः। यवकः शूकधान्यानामपथ्यत्वे प्रकृष्टतमा भवन्ति।
माषाः शमीधान्यानां वर्षानादेयम् उदकानाम् औषरं लवणानां
सर्षपशाकं शाकानां गोमांसं मृगमांसानां काणकपोतः पक्षिणां
भेको बिलेशयानां चिलिचिमो मत्स्यानाम् आविकं सर्पिः सर्पि-
षाम् आविक्षीरं क्षीराणां कुसुम्भस्नेहः स्नेहानां स्थावराणां
महिषवसा आनूपमृगवसानां कुम्भीरवसा मत्स्यवसानां काक-

मद्गुवसा जलचरविहङ्गवसानां मूलकं कन्दानां चाटकवसा विष्किरशकुनिवसानां हस्तिमेदः शाखादमेदसां लिकुचं फलानां फाणितमिक्षुविकाराणामिति प्रकृत्यैव अहिततमानामाहारविकाराणां निकृष्टतमानि द्रव्याणि व्याख्यातानि। हिताहितावयवानामाहारविकाराणाम् अतोभूयः कर्मौषधानां प्राधान्यतः सानुबन्धानि द्रव्याणि अनुव्याख्यास्यामः। तद्यथा अन्नं वृत्तिकराणां श्रेष्ठम् उदकमाश्वासकराणां सुरा श्रमहराणां क्षीरं जीवनीयानां मांसं बृंहणीयानां रसस्तर्पणीयानां लवणमन्नद्रव्यरुचिकराणाम् अम्लं हृद्यानां कुक्कुटो बल्यानां नक्ररेतो वृष्याणां मधु श्लेष्मपित्तप्रशमनानां सर्पिर्वातपित्तप्रशमनानां तैलं वातश्लेष्मप्रशमनानां वमनं श्लेष्महराणां विरेचनं पित्तहराणां वस्तिर्वातहराणां स्वेदो मार्दवकराणां व्यायामः स्थैर्यकराणां क्षारः पुंस्त्वोपघातिनां तिन्दुकमन्नद्रव्यरुचिकराणाम् आमं कपित्थमकण्ठ्यानाम् आविकं सर्पिरहृद्यानाम् अजाक्षीरं शोषघ्नस्तन्यसात्म्यरक्तसांग्राहिकरक्तपित्तप्रशमनानाम् अविक्षीरं श्लेष्मपित्तोपचयकराणां महिषीक्षीरं स्वप्नजननानां मन्दकं दध्यभिष्यन्दकराणां गवेधुकान्नं कर्शनीयानाम् उद्दालकान्नं विरूक्षणीयानाम् इक्षुर्मूत्रजननानां यवाः पुरीषजननानां जाम्बवं वातजननानां शष्कुल्यः श्लेष्मपित्तजननानां कुलत्था अम्लपित्तजननानां माषाः श्लेष्मपित्तजननानां मदनफलं वमनास्थापनानुवासनोपयोगिनां त्रिवृत् सुखविरेचनानां चतुरङ्गुलं मृदुविरेचनानां स्नुक्पयस्तीक्ष्णविरेचनानां प्रत्यक्पुष्पी शिरोविरेचनानां विडङ्गं क्रिमिघ्नानां शिरीषो विषघ्नानां खदिरः कुष्ठघ्नानां रास्ना वातहराणाम् आमलकं वयःस्थापनानां हरीतकी पथ्यानाम् एरण्डमूलं वृष्यवातहराणां पिप्पलीमूलं दीपनीयपाचनीयानाहप्रशमनानां चित्रकमूलं दीपनीयगुदशूल-

शोथहराणां पुष्करमूलं हिक्काश्वासकासपार्श्वशूलहराणां मुस्तं संग्राहकदीपनीयपाचनीयानाम् उदीच्यं निर्वापणीयदीपनीयच्छर्द्यतीसारहराणां कट्वङ्गं संग्राहकदीपनीयपाचनीयानाम् अनन्ता संग्राहिकदीपनीयरक्तपित्तप्रशमनानाम् अमृता संग्राहिकवातहरदीपनीयश्लेष्मशोणितविबन्धप्रशमनानां बिल्वं संग्राहिकदीपनीयवातकफप्रशमनानाम् अतिविषा दीपनीयपाचनीयसंग्राहिकसर्वदोषहराणाम् उत्पलकुमुदपद्मकिञ्जल्काः संग्राहकरक्तपित्तप्रशमनानां दुरालभा पित्तश्लेष्मोपशोषणानां गन्धप्रियङ्गुः शोणितपित्तातियोगप्रशमनानां कुटजत्वक् श्लेष्मपित्तरक्तसंग्राहकोपशोषणानां काश्मर्यफलं रक्तसंग्राहकरक्तपित्तप्रशमनानां पृश्निपर्णी संग्राहकवातहरदीपनीयवृष्याणां विदारिगन्धा वृष्यसर्वदोषहराणां बला संग्राहकबल्यवातहराणां गोक्षुरको मूत्रकृच्छ्रानिलहराणां हिङ्गुनिर्यासः छेदनीयदीपनीयभेदनीयानुलोमिकवातकफप्रशमनानां अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातश्लेष्मप्रशमनानां यावशूकः स्रंसनीयपाचनीयार्शोघ्नानां तक्राभ्यासो ग्रहणीदोषार्शोघ्नतव्यापत्प्रशमनानां क्रव्यादमांसाभ्यासो ग्रहणीदोषशोषार्शोघ्नानां घृतक्षीराभ्यासो रसायनानां समघृतसक्तुकाभ्यासो वृष्योदावर्तहराणां तैलगण्डूषाभ्यासो दन्तबलरुचिकराणां चन्दनोडुम्बरं दाहनिर्वापणानां रास्नागुरुणी शीतापनयनप्रलेपनानां लामज्जकोशीरं दाहत्वग्दोषस्वेदापनयनप्रलेपनानां कुष्ठं वातहराभ्यङ्गोपनाहयोगिनां मधुकं चक्षुष्यवृष्यकेश्यकण्ठ्यवर्ण्यवर्ण्यविरजनीयरोपणीयानां वायुः प्राणसंज्ञाप्रदानहेतूनाम् अग्निरामस्तम्भशीतशूलोद्वेपनप्रशमनानाम् जलं स्तम्भनीयानां मृद्भृष्टलोष्ट्रनिर्वापितमुदकं तृष्णातियोगप्रशमनानाम् अतिमात्राशनमामप्रदोषहेतूनां यथाग्न्यभ्यवहरणोऽग्निसन्धुक्षणानां यथासात्म्यं चेष्टाभ्यवहाराः सेव्यानां कालभोजनं

मारोग्यकराणां वेगसन्धारणमनारोग्यकराणां तृप्तिराहारगुणानां मद्यं सौमनस्यजननानां मद्याक्षेपो धीधृतिस्मृतिहराणां गुरुभोजनं दुर्विपाकानाम् एकाशनभोजनं सुखपरिणामकराणां स्त्रीषु अतिप्रसङ्गः शोषकराणां शुक्रवेगनिग्रहः षाण्ढ्यकराणां पराघातनमन्नम् अश्रद्धाजननानाम् अनशनमायुषो ह्रासकराणां प्रमिताशनं कर्शनीयानाम् अजीर्णाध्यशनं ग्रहणीदूषणानां विषमाशनमग्निवैषम्यकराणां विरुद्धवीर्याशनं निन्दितव्याधिकराणां प्रशमः पथ्यानाम् आयासः सर्वापथ्यानां मिथ्यायोगो व्याधिमुखानां रजस्वलाभिगमनमलक्ष्मीकाणां ब्रह्मचर्यमायुष्यकराणां सङ्कल्पो वृष्याणां दौर्मनस्यमवृष्याणाम् अयथाबलमारम्भः प्राणोपरोधिनां विषादो रोगवर्द्धनानां स्नानं श्रमहराणां हर्षः प्रीणनानां शोकः शोषणानां निर्वृतिः पुष्टिकराणाम् अतिस्वप्नस्तन्द्राकराणां सर्वरसाभ्यासो बलकराणाम् एकरसाभ्यासो दौर्बल्यकराणां गर्भशल्यमनाहार्याणाम् अजीर्णमुद्धार्याणां बालो मृदुभेषजीयानां वृद्धो याप्यानां गर्भिणी तीक्ष्णौषधव्यायामवर्जनीयानां सौमनस्यं गर्भधारकाणां सन्निपातो दुश्चिकित्स्यानाम् आमो विषमचिकित्स्यानां ज्वरो रोगाणां कुष्ठं दीर्घरोगाणां राजयक्ष्मा रोगसमूहानां प्रमेहोऽनुषङ्गिनां जलौकसोऽनुशस्त्राणां वस्तिस्तन्त्राणां हिमवानौषधिभूमीनां मरुभूरारोग्यदेशानाम् अनूपमहितदेशानां निर्देशकारित्वमातुरगुणानां भिषक् चिकित्साङ्गानां नास्तिको वर्ज्यानां लौल्यं क्लेशकराणाम् अनिर्देशकारित्वमरिष्टानाम् अनिर्वेदो वार्त्तलक्षणानां योगो वैद्यगुणानां विज्ञानमौषधीनां शास्त्रसहितस्तर्कः साधनानां सम्प्रतिपत्तिः कालज्ञानप्रयोजनानाम् अनुद्योगो व्यवसायकालातिपत्तिहेतूनां दृष्टकर्मता निःसंशयकराणाम् असमर्थता भयकराणां तद्विद्यसम्भाषा बुद्धिवर्द्धनानाम् आचार्यः

कपित्थ-बकुल-बदरकर्कन्धुपीलु-पियालपनसन्यग्रोधाश्वत्थप्लक्ष-पीतनोदुम्बरराजमोदश्रृङ्गाटकशङ्खिनीति फलासवाः षड्विंशतिः। विदारिगन्धाश्वगन्धालक्ष्मणागन्धा-शतावरीश्यामाविवृद्दन्तीद्रवन्ती-विल्वोरुबुकचित्रमूलैरेकादश मूलासवाः। शालप्रियकाश्वकर्ण-चन्दनस्यन्दन-खदिरकदरसप्तपर्णार्जुनासनारिमेदतिन्दुककिणि-हीशमीशुक्तिशिंशपाशिरीषवञ्जुलधन्वनमधूकसारासवा विंशतिः। पद्मोत्पलनलिनकुमुद-सौगन्धिक-पुण्डरीकशतपत्रमधूक-प्रियङ्गु-धातकीपुष्पैर्दशमाः पुष्पासवाः। इक्षुकाण्डेक्षुइक्षुवालिकापुण्ड्रक-चतुर्थाः काण्डासवाः। पटोलताडी पत्रासवौ द्वौ भवतः। तिल्वकलोध्रैलवालुकक्रमुकचतुर्थास्त्वगासवा भवन्ति। शर्करा-सव एक एव। इत्येषामासवानामासुतत्वादासवसंज्ञा एव-मेषामासवानां चतुरशीतिः परस्परेण असंसृष्टानामासवद्रव्या-णामुपनिर्दिष्टाः। द्रव्यसयोगविभागस्त्वेषां बहुविकल्पसंस्का-रश्च यथास्वयोनिसंस्कारसंस्कृताद्याचवाः स्वं कर्म कुर्वन्ति सयोगसंस्कारदेशकालमात्रादयश्च भावास्तेषां तेषामासवानां ते ते समुपदिश्यन्ते तत्तत्कार्यमभिसमीक्ष्येति ॥४१॥

भवति चात्र।

मन.शरीराग्निबलप्रदानामस्वप्नशोकारुचिनाशनानाम्।
सहर्षणानां प्रवरासवानामशीतिरुक्ता चतुरुत्तरैषा ॥ ४२ ॥
शरीरयोगप्रसृतौ मलानि तत्त्वेन चाहारविनिश्चयो च.।
उवाच यज्ञः पुरुषादिकेऽस्मिन्मुनिस्तथाग्र्याणि वरासवांश्च इति॥

इति अन्नपानचतुष्के यज्ञ पुरुषीयोऽध्याय समाप्त।

---

# षड्विंशोऽध्यायः।

अथातो वातेयमत्रकाव्यीयमध्यायं व्याख्यास्यामः।

इति ह स्माह भगवानात्रेयः।

आत्रेयो भद्रकाप्यश्च शाकुन्तेयस्तथैव च।
पूर्णाक्षश्चैव मौद्गल्यो हिरण्याक्षश्च कौशिकः॥१॥
यः कुमारशिरा नाम भरद्वाजः स चानघः।
श्रीमान्वार्योविदश्चैव राजा मतिमतां वरः॥२
निमिश्च राजा वैदेहो वडिशश्च महामतिः।
काङ्कायनश्च वाह्लीको वाह्लीकभिषजां वरः॥ ३॥
एते श्रुतवयोवृद्धा जितात्मानो महर्षयः।
वने चैत्ररथे रम्ये समीयुर्विजिहीर्षवः॥ ४॥
तेषां तत्रोपविष्टानामियमर्थवती कथा।
बभूवार्थविदां सम्यक् रसाहारविनिश्चये॥ ५॥

एक एव रस इत्युवाच भद्रकाप्यो यं पञ्चानामिन्द्रियार्थानामन्यतमं जिह्वा वैषयिकं भावमाचक्षते कुशलाः। स पुनरुदकादनन्य इति॥ ६॥

द्वौ रसाविति शाकुन्तेयो ब्राह्मणश्छेदनीयश्चोपशमनीयश्चेति॥ ७॥

त्रयो रसा इति पूर्णाक्षः मौद्गल्यश्छेदनीयोपशमनीयौ साधारणश्च॥ ८॥

चत्वारो रसा इति हिरण्याक्षः कौशिकः स्वादुर्हितश्च स्वादुरहितश्च अस्वादुरहितश्च अस्वादुर्हितश्चेति॥ ९॥

पञ्चरसा इति कुमारशिरा भरद्वाजो भौमोदकाग्नेयवायवीयान्तरिक्षाः॥ १०॥

षड्रसा इति वार्योविदो राजर्षिः गुरुलघुशीतोष्णस्निग्धरूक्षाः॥ ११॥

सप्त रसा इति निमिर्वैदेहो मधुराम्ललवणकटुकतिक्त-कषायक्षाराः ॥ १२ ॥

अष्टौ रसा इति वड़िशो धामार्गवो मधुराम्ललवणकटुतिक्त-कषायक्षाराव्यक्ताः ॥ १३ ॥

अपरिसंख्येया रसा इति काङ्कायनो वाह्लीकभिषगाश्रय-गुणकर्मसंस्कारविशेषाणामपरिमेयत्वात् ॥ १४ ॥

षड़ेव रसा इत्युवाच भगवानात्रेयः पुनर्वसुः मधुराम्ललवण-कटुतिक्तकषायाः। तेषां षण्णां रसानां योनिरुदकम्। छेदनो-पशमने द्वे कर्मणी। तयोर्मिश्रीभावात् साधारणत्वं स्वाद्वस्वादु-ताभक्तिः। द्वौ हिताहितौ प्रभावौ। पञ्च महाभूतविकारास्त्वा-श्रयाः ॥ १५ ॥

प्रकृतिविकृतिविचारदेशकालवशास्तेषु आश्रयेषु द्रव्यसंज्ञ-केषु गुणा गुरुलघुशीतोष्णस्निग्धरूक्षाद्याः ॥ १६ ॥

क्षरणात् क्षारो नासौ रसो द्रव्यं तदनेकरससमुत्पन्नमनेक-रसं कटुकलवणभूयिष्ठमनेकेन्द्रियार्थसमन्वितं करणाभिनि-र्वृत्तम् ॥ १७ ॥

अव्यक्तीभावस्तु खलु रसानां प्रकृतावनुरसे अनुरससमन्विते वा द्रव्ये ॥ १८ ॥

अपरिसंख्येयत्वं पुनरेतेषामाश्रयादीनां भावानां विशेषा-त्रायते न च तस्मादन्यत्वमुपपद्यते ॥ १९ ॥

परस्परं संसृष्टभूयिष्ठत्वान्न चैषामभिनिर्वृत्तिर्गुणप्रकृतीनाम-परिसङ्ख्येयत्वं भवति। तस्मान्न संसृष्टानां रसानां कर्मोप दिशन्ति बुद्धिमन्तः ॥ २० ॥

तच्चैव कारणमपेक्षमाणाः षण्णां रसानां परस्परेणासंसृष्टानां लक्षणपृथक्त्वमुपदेक्ष्यामः। अग्रे तु तावद्द्रव्यभेदमभिप्रेत्य किञ्चिदभिधास्यामः। सर्वं द्रव्यं पाञ्चभौतिकमस्मिन्नेवार्थे तच्चे-

तनावदचेतनञ्च। तस्य गुणाः शब्दादयो गुर्वादयश्च द्रवान्ता
कर्म पञ्चविधमुक्तं वमनादि ॥ २१ ॥

तत्र द्रव्याणि गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धगुण
बहुलानि पार्थिवानि तान्युपचयसङ्घातगौरवस्थैर्य्यकराणि ॥ २२

द्रव स्निग्ध-शीत-मन्द-मृदु-पिच्छिलरसगुणबहुलान्याप्यानि
तान्युपक्लेदस्नेहबन्धविष्यन्दप्रह्लादकराणि ॥ २३ ॥

उष्णतीक्ष्णसूक्ष्मलघुरूक्षविशदरूपगुणबहुलानि आग्नेयानि
तानि दाहपाकप्रभाप्रकाशवर्णकराणि ॥ २४ ॥

लघुशीतरूक्षखरविशदसूक्ष्मस्पर्शगुणबहुलानि वायव्यानि
तानि रौक्ष्यग्लानिविचारवैशद्यलाघवकराणि ॥ २५ ॥

मृदु लघु सूक्ष्म श्लक्ष्णशब्दगुणबहुलान्याकाशात्मकानि तानि
मार्दवसौषिर्य्यलाघवकराणि ॥ २६ ॥

अनेनोपदेशेन, नानौषधिभूतं जगति किञ्चिद्द्रव्यमुप
लभ्यते। तां युक्तिमर्थञ्च तं तमभिप्रेत्य न च गुणप्रभावादेव
कार्मुकाणि भवन्ति ॥ २७ ॥

द्रव्याणि हि द्रव्यप्रभावाद्गुणप्रभावाद्द्रव्यगुणप्रभावाच्च
तस्मिंस्तस्मिन् काले तत्तदधिष्ठानमासाद्य तां तां युक्तिमर्थ
कुर्वन्ति तत् कर्म, येन कुर्वन्ति तद्वीर्य्यं, यत्र कुर्वन्ति तदधि
करणं यदा कुर्वन्ति स कालो, यथा कुर्वन्ति स उपायो, यत्
साधयन्ति तत् फलम् ॥ २८ ॥

भेदश्चैषां त्रिषष्टिविधिविकल्पो द्रव्यदेशकालप्रभावात् त

त्रिरसानि यथासंख्यं द्रव्याण्युक्तानि विंशतिः।
वक्ष्यन्ते तु चतुष्केण द्रव्याणि दश पञ्च च॥ ३२॥
स्वाद्वम्लौ सहितौ योगं लवणाद्यैः पृथग्गतौ।
योगं शेषैः पृथक् यातः चतुष्कं रससंख्यया॥ ३३॥
सहितौ स्वादुलवणौ तद्वत्कट्वादिभिः पृथक्।
युक्तौ शेषैः पृथग्योगं यातः स्वादूषणौ यथा॥ ३४॥
कट्वाद्यैरम्ललवणौ संयुक्तौ सहितौ पृथक्।
यातः शेषैः पृथग्योगं शेषैरम्लकटू तथा॥ ३५॥
युज्यते तु कषायेण सतिक्तौ लवणोषणौ।
षट् तु पञ्चरसान्याहुरेकैकस्यापवर्जनात्॥ ३६॥
षट् चैवैकरसानि स्युरेकं षड्रसमेव तु।
इति त्रिषष्टिर्द्रव्याणां निर्दिष्टा रससंख्यया॥ ३७॥
त्रिषष्टिः स्यात्त्वसंख्येया रसानुरसकल्पनात्।
रसास्तरतमाभ्यां तां संख्यामतिपतन्ति हि॥ ३८॥
संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा।
रसानां तत्र योग्यत्वात् कल्पिता रसचिन्तकैः॥ ३९॥
क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित्।
दोषौषधादीन् सञ्चिन्त्य भिषजा सिद्धिमिच्छता॥ ४०॥
द्रव्याणि द्विरसादीनि संयुक्तांश्च रसान् बुधः।
रसानेकैकशश्चैव कल्पयन्ति गदान् प्रति॥ ४१॥
यः स्याद्रसविकल्पज्ञः स्याच्च दोषविकल्पवित्।
न स मुह्येद्विकाराणां हेतुलिङ्गोपशान्तिषु॥ ४२॥
व्यक्तः शुक्तस्य चादौ च रसो द्रव्यस्य लक्ष्यते।
विपर्ययेणानुरसो रसो नास्ति हि सप्तमः॥ ४३॥
परापरत्वे युक्तिश्च संख्या संयोग एव च।
विभागश्च पृथक्त्वञ्च परिमाणमथापि च॥ ४४॥

संस्कारोऽभ्यास इत्येते गुणा ज्ञेयाः परादयः ।
सिद्ध्युपायाश्चिकित्साया लक्षणैस्तान् प्रवक्ष्यते ॥ ४५ ॥
देशकालवयोमानपाकवीर्यरसादिषु ।
परापरत्वे युक्तिस्तु योजना या च युज्यते ॥ ४६ ॥
संख्या स्याद्गणितं योगः सह संयोग उच्यते ।
द्रव्याणां द्वन्द्वसर्वैककर्मजोऽनित्य एव च ॥ ४७ ॥
विभागस्तु विभक्तिस्तु वियोगो भागशो ग्रहः ।
पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता ॥ ४८ ॥
परिमाणं पुनर्मानं संस्कारः करणं मतम् ।
भावाभ्यसनमभ्यासः शीलनं सततक्रिया ॥ ४९ ॥
इति स्वलक्षणैरुक्ता गुणाः सर्वे परादयः ।
चिकित्सा यैरविदितैर्न यथावत् प्रवर्त्तते ॥ ५० ॥
गुणा गुणाश्रया नोक्तास्तस्माद्रसगुणान् भिषक् ।
विद्याद्द्रव्यगुणान् कर्त्तुरभिप्रायाः पृथग्विधाः ॥ ५१ ॥
अतश्च प्रकृतिं बुद्ध्वा देशकालान्तराणि च ।
तन्त्रकर्त्तुरभिप्रायानुपायांश्चार्थमादिशेत् ॥ ५२ ॥
परस्मात्तः प्रवक्ष्यन्ते रसानां षड्विभक्तयः ।
षट् पञ्च भूतप्रभवाः संख्याताश्च यथा रसाः ॥ ५३ ॥

सौम्याः खल्वापोऽन्तरिक्षप्रभवाः प्रकृतिशीता लघ्व्यश्च अव्यक्तरसाश्च तास्त्वन्तरिक्षाद्भ्रश्यमाना भ्रष्टाश्च पञ्चमहाभूतविकारगुणसमन्विता जङ्गमस्थावराणां भूतानां मूर्त्तीरभिप्रीणयन्ति तासु मूर्त्तिषु षड् भिर्मूर्च्छन्ति रसाः ॥ ५४ ॥

तेषां षण्णां रसानां सोमगुणातिरेकान्मधुरो रसः, पृथिव्यग्निभूयिष्ठत्वादम्लः सलिलाग्निभूयिष्ठत्वाल्लवणो वाय्वग्निभूयिष्ठत्वात् कटुको वाय्वाकाशातिरेकात् तिक्तः पवनपृथिव्यतिरेकात् कषायः । एवमेषां रसानां षट्त्वमुपपन्नम् ॥ ५५ ॥

न्यूनातिरेकविशेषान्महाभूतानामिव जङ्गमस्थावराणां नानावर्णाकृतिविशेषाः षड्ऋतुकत्वाच्च कालस्य उपपन्नो महाभूतानां न्यूनातिरेकविशेषः ॥ ५६ ॥

तत्राग्निमारुतात्मका रसाः प्रायेणोर्द्ध्वभाजो लाघवात् प्लवकत्वाच्च वायोरूर्द्ध्वज्वलनत्वाच्च वह्नेः सलिलपृथिव्यात्मकास्तु प्रायेणाधोभाजः पृथिव्या गुरुत्वान्निम्नगत्वाच्चोदकस्य व्यामिश्रात्मकास्तु पुनरुभयतो भागभाजः ॥ ५७ ॥

तेषां षण्णां रसानामेकैकस्य यथाद्रव्यगुणकर्माण्यनुव्याख्यास्यामः। तत्र मधुरो रसः शरीरसात्म्याद्रसरुधिरमांसमेदोऽस्थिमज्जौजःशुक्राभिवर्द्धन आयुष्यः षडिन्द्रियप्रसादनो बलवर्णकरः पित्तविषमारुतघ्नस्तृष्णाप्रशमनस्त्वच्यः केश्यः कण्ठ्यः प्रीणनो जीवनस्तर्पणः स्नेहनः स्थैर्य्यकरः क्षीणक्षतसन्धानकरो घ्राणमुखकण्ठौष्ठतालुप्रह्लादनो दाहमूर्च्छाप्रशमनः षट्पदपिपीलिकानामिष्टतमः स्निग्धः शीतो गुरुश्च ॥ ५८ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानः स्थौल्यं मार्दवमालस्यमतिस्वप्नं गौरवमनन्नाभिलाषमग्नेर्दौर्बल्यमास्यकण्ठमांसाभिवृद्धिं श्वासकासप्रतिश्यायालसकशीतज्वरानाहास्यमाधुर्य्यवमथुसंज्ञास्वरप्रणाश-गलगण्डगण्डमालाश्लीपदगलशोफबस्तिधमनी-गुदोपलेपाक्ष्यामयानभिष्यन्दमित्येवं-प्रभृतीन् कफजान् विकारानुपजनयन्ति ॥ ५९ ॥

अम्लो रसो भक्तं रोचयति, अग्निं दीपयति, देहं बृंहयति, जर्जरयति, मनो बोधयति, इन्द्रियाणि दृढीकरोति, बलं वर्द्धयति, वातमनुलोमयति, हृदयं तर्पयति, आस्यं संस्रावयति, भुक्तमपकर्षयति, क्लेदं जनयति, प्रीणयति लघुरुष्णः स्निग्धश्च ॥ ६० ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो दन्तान्

तर्षयति, संमीलयति अक्षिणी, संवेजयति लोमानि, कफं विलापयति, पित्तमभिवर्द्धयति, रक्तं दूषयति, मांसं विदहति, कायं शिथिलीकरोति, क्षीणक्षतकृशदुर्बलानां श्वयथुमापादयति। अपिच क्षताभिहत-दष्ट-भग्नशूलि-च्युतावमूदित-परिसर्पित-मर्दितच्छिन्नविद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात् परिदहति कण्ठमुरो हृदयञ्च ॥ ६१ ॥

लवणो रसः पाचनः क्लेदनो दीपनश्च्यावनश्छेदनो भेदनस्तीक्ष्णः सरो विकास्यधःस्रंस्यवकाशकरो वातहरः स्तम्भबन्धसङ्घातविधमनः सर्वरसप्रत्यनीकभूत आस्यं विस्रावयति, कफं विष्यन्दयति, मार्गान् शोधयति, सर्वशरीरावयवान् मृदु करोति, रोचयत्याहारमाहारयोगी नात्यर्थं गुरुः स्निग्ध उष्णश्च ॥६२॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानः पित्तं कोपयति, रक्तं वर्द्धयति, तर्षयति, मूर्च्छयति, तापयति, दारयति, कुष्णाति मांसानि, प्रगालयति कुष्ठानि, विषं वर्द्धयति, शोफान् स्फोटयति, दन्तान् च्यावयति, पुंस्त्वमुपहन्ति, इन्द्रियाण्युपरुणद्धि, वलीपलितखालित्यमापादयति च लोहितपित्ताम्लपित्तवीसर्पवातरक्तविचर्चिकेन्द्रलुप्तप्रभृतीन् विकारानुपजनयति ॥ ६३ ॥

कटुको रसो वक्त्रं शोधयति, अग्निं दीपयति, भुक्तं शोषयति, घ्राणमास्रावयति, चक्षुर्विरेचयति, स्फुटीकरोतीन्द्रियाणि, अलसकश्वयथूपचयोदर्दाभिष्यन्दस्नेहस्वेदक्लेदमलानुपहन्ति, रोचयत्यशनं, कण्डूर्विनाशयति, व्रणानवसादयति, क्रिमीन् हिनस्ति, मांसं विलिखति, शोणितसङ्घातं भिनत्ति, बन्धांश्छिनत्ति, मार्गान् विवृणोति, श्लेष्माणं शमयति, लघुरुष्णो रूक्षश्च ॥ ६४ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो विपाकप्रभावात्

पौंस्त्वमुपहन्ति, रसवीर्यप्रभावान्मोहयति ग्लापयति सादयति कर्षयति, मूर्च्छयति नमयति तमयति भ्रमयति कण्ठं परिदहति शरीरतापमुपजनयति बलं क्षिणोति तृष्णां जनयति वायुग्निबाहुल्याद् भ्रमभददवथुकम्पतोदभेदैश्चरणभुजपार्श्वपृष्ठप्रभृतिषु मारुतजान् विकारानुपजनयति ॥ ६५ ॥

तिक्तो रसः स्वयमरोचिष्णुररोचकघ्नो विषघ्नः क्रिमिघ्नो मूर्च्छादाहकण्डूकुष्ठतृष्णाप्रशमनः त्वङ्मांसयोः स्थिरीकरणो ज्वरघ्नो दीपनः पाचनः स्तन्यशोधनो लेखनः क्लेदमेदोवसामज्जलसिकापूयस्वेदमूत्रपुरीषपित्तश्लेष्मोपशोषणो रूक्षः शीतोलघुश्च ॥६६॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो रौक्ष्यात् खरविशदस्वभावाच्च रसरुधिरमांसमेदोऽस्थिमज्जशुक्राण्युच्छोषयति स्रोतसां खरत्वमुपपादयति बलमादत्ते कर्षयति मोहयति वदनमुपशोषयति अपरांश्च वातविकारानुपजनयति ॥ ६७ ॥

कषायो रसः संशमनः संग्राही सन्धानकरः पीडनो रोपणः शोषणः स्तम्भनः श्लेष्मरक्तपित्तप्रशमनः शरीरक्लेदस्योपयोक्ता, रूक्षः शीतो गुरुश्च ॥ ६८ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमान आस्यं शोषयति, हृदयं पीडयति, उदरमाध्मापयति, वाचं निगृह्णाति, स्रोतांस्यवबध्नाति, श्यावत्वमापादयति, पौंस्त्वमुपहन्ति, विष्टभ्य जरां गच्छति, वातमूत्रपुरीषाण्यवगृह्णाति, कर्षयति, ग्लापयति, तर्षयति, स्तम्भयति, खरविशदरूक्षत्वात् पक्षवधग्रहापतानकार्दितप्रभृतींश्च वातविकारानुपजनयतीति ॥ ६९ ॥

एवमेते षड्रसाः पृथक्त्वेन वा मात्रशः सम्यगुपयुज्यमाना उपकारकरा भवन्त्यध्यात्मलोकस्यापकारकराः पुनरतोऽन्यथोपयुज्यमानास्तान् विद्वानुपकारार्थमेव मात्रशः सम्यगुपयोजयेदिति ॥ ७० ॥

भवन्ति चात्र। शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः।
तयोरम्लं यदुष्णं च यच्चोष्णं कटुकं तयोः॥ ७१॥
तेषां रसोपदेशेन निर्देश्यो गुणसंग्रहः।
वीर्यतो विपरीतानां पाकतश्चोपदेक्ष्यते॥ ७२॥
यथापयो यथासर्पिर्यथा वा चव्यचित्रकौ।
एवमादीनि चान्यानि निर्दिशेद्रसतो भिषक्॥ ७३॥
मधुरं किञ्चिदुष्णं स्यात् कषायं तिक्तमेव च।
यथा महत्पञ्चमूलं यथाचानूपमामिषम्॥ ७४॥
लवणं सैन्धवं नोष्णमम्लमामलकं तथा।
अर्कागुरुगुडूचीनां तिक्तानामुष्णमुच्यते॥ ७५॥
किञ्चिदम्लं हि संग्राहि किञ्चिदम्लं भिनत्ति च।
यथा कपित्थं संग्राहि भेदि चामलकं तथा।
पिप्पली नागरं वृष्यं कटु चावृष्यमुच्यते॥ ७६॥
कषायः स्तम्भनः शीतः सोऽभयात्वन्यथा मता।
तस्माद्रसोपदेशेन न सर्वं द्रव्यमादिशेत्॥ ७७॥
दृष्टं तुल्यरसेऽप्येवं द्रव्ये द्रव्ये गुणान्तरम्।
रौक्ष्यात् कषायो रूक्षाणामुत्तमो मध्यमः कटुः॥ ७८॥
तिक्तोऽवरस्तथोष्णानामुष्णत्वाल्लवणः परः।
मध्योऽम्लः कटुकश्चान्त्यः स्निग्धानां मधुरः परः।
मध्योऽम्लो लवणश्चान्त्यो रसः स्नेहान्निरुच्यते॥ ७९॥
मध्यः छट्टावराः शैत्यात् कषायस्वादुतिक्तकाः।
तिक्तात् कषायो मधुरः शीतात् शीततरः परः।
स्वादुर्गुरुत्वादधिकः कषायाल्लवणोऽवरः॥ ८०॥
अम्लात् कटुस्ततस्तिक्तो लघुत्वादुत्तमो मतः।
केचिल्लघूनामवरमिच्छन्ति लवणं रसम्॥ ८१॥
गौरवे लाघवे चैव सोऽवरस्तूभयोरपि।

परञ्चातो विपाकानां लक्षणं सम्प्रवक्ष्यते ॥ ८२ ॥
कटुतिक्तकषायाणां विपाकः प्रायशः कटुः।
अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा ॥ ८३ ॥
मधुरो लवणाम्लौ च स्निग्धभावात्त्रयो रसाः।
वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मताः॥ ८४ ॥
कटुतिक्तकषायास्तु रूक्षभावात्त्रयो रसाः।
दुःखा विमोक्षे दृश्यन्ते वातविण्मूत्ररेतसाम् ॥ ८५ ॥
शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः।
मधुरः सृष्टविण्मूत्रो विपाके कफशुक्रलः ॥ ८६ ॥
पित्तकृत् सृष्टविण्मूत्रः पाकोऽम्लः शुक्रनाशनः।
तेषां गुरुः स्यान्मधुरः कटुकाम्लावतोऽन्यथा ॥ ८७ ॥
विपाकलक्षणस्याल्पमध्यभूयस्त्वमेव च।
द्रव्याणां गुणवैशेष्यात्तत्र तत्रोपलक्षयेत् ॥ ८८ ॥
तीक्ष्णं रूक्षं मृदु स्निग्धं लघूष्णं गुरु शीतलम्।
वीर्यमष्टविधं केचित् केचिद्द्विविधमास्थिताः ॥ ८९ ॥
शीतोष्णमिति वीर्यन्तु क्रियते येन या क्रिया।
नावीर्यं कुरुते किञ्चित् सर्वा वीर्यकृता क्रिया ॥ ९० ॥
रसो निपाते द्रव्याणां विपाकः कर्मनिष्ठया।
वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते ॥ ९१ ॥
रसवीर्यविपाकानां सामान्यं यत्र लक्ष्यते।
विशेषः कर्मणाञ्चैव प्रभावस्तस्य च स्मृतः ॥ ९२ ॥
कटुकः कटुकः पाके वीर्य्योष्णश्चित्रको मतः।
तद्वद्दन्ती प्रभावात्तु विरेचयति मानवम् ॥ ९३ ॥
विषं विषघ्नमुक्तं यत्प्रभावस्तत्र कारणम्।
ऊर्द्धानुलोमिकं यच्च तत्प्रभावप्रभावितम् ॥ ९४ ॥
मणीनां धारणीयानां कर्म यद्विविधात्मकम्

तत्प्रभावकृतं तेषां प्रभावोऽचिन्त्य इष्यते ॥ ८५ ॥
किञ्चिद्रसेन कुरुते कर्म वीर्य्येण चापरम् ।
द्रव्यं गुणेन पाकेन प्रभावेण च किञ्चन ॥ ८६ ॥
रसं विपाकस्तौ वीर्यं प्रभावस्तानपोहति ।
गुणसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥ ८७ ॥
सम्यग्विपाकवीर्य्याणि प्रभावश्चाप्युदाहृतः ॥ ८८ ॥
षण्णां रसानां विज्ञानमुपदेक्ष्याम्यतः परम् ।
स्नेहनप्रीणनाह्लादमार्दवैरुपलभ्यते ॥ ८९ ॥
मुखस्थो मधुरश्चास्यं व्याप्नुवंल्लिम्पतीव च ।
दन्तहर्षात् मुखस्रावात् स्वेदनात् मुखबोधनात् ।
विदाहाच्चास्यकण्ठस्य प्राश्यैवाम्लं रसं वदेत् ॥ १०० ॥
प्रलीयन् क्लेदविष्यन्दलाघवं कुरुते मुखे ।
यः शीघ्रं लवणो ज्ञेयः स विदाहात् मुखस्य च ॥ १०१ ॥
संवेजयेद् यो रसनां निपाते तुदतीव च ।
विदहन् मुखनासाक्षि संस्रावी स कटुः स्मृतः ॥ १०२ ॥
प्रतिहन्ति निपाते यो रसनं स्वदते न च ।
स तिक्तो मुखवैशद्यशोषप्रह्लादकारकः ।
वैशद्यस्तम्भजाड्यैर्यो रसनं योजयेद्रसः ॥ १०३ ॥
बध्नातीव च यः कण्ठं कषायः स विकास्यपि इति ॥ १०४

एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच । भगवन् ! श्रुतमेतदवितथमर्थसम्पद्युक्तं भगवतो यथावद्द्रव्यकर्माधिकारं वचः परन्त्वाहारविकाराणां वैरोधिकानां लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषामहे इति ॥ १०५ ॥

तमुवाच भगवानात्रेयः । देहधातुप्रत्यनीकभूतानि द्रव्याणि देहधातुविरोधमापाद्यन्ते परस्परविरुद्धानि कानिचित् संयोगात् संस्कारादपराणि देशकालमात्रादिभिश्चापराणि तथा स्वभावादपराणि ॥ १०६ ॥

तत्र यान्याहारमधिकृत्य भूयिष्ठमुपयुज्यन्ते तेषामेकदेशं वैरोधिकमधिकृत्योपदेक्ष्यामः॥ १०७॥

न मत्स्यान् पयसा सहाभ्यवहरेत् उभयं ह्येतन्मधुरं मधुरविपाकात् महाभिष्यन्दि शीतोष्णत्वाद्विरुद्धवीर्यं विरुद्धवीर्यत्वात् शोणितप्रदूषणाय महाभिष्यन्दित्वात् मार्गोपरोधाय च॥१०८॥

तदनन्तरमात्रेयवचनमनुनिशम्य भद्रकाप्योऽग्निवेशमुवाच। सर्वानेव मत्स्यान् पयसा सहाभ्यवहरेत् अन्यत्रैकस्माच्चिलिचिमात्। स पुनः शकली सर्वतो लोहितराजिः रोहितप्रकारः प्रायो भूमौ चरति तच्चेत् पयसा सहाभ्यवहरेन्निःसंशयं शोणितजानां विबन्धजानां वा व्याधीनामन्यतमं अथवा मरणं प्राप्नुयादिति॥ १०९॥

नेति भगवानात्रेयः। सर्वानेव मत्स्यान्न पयसाभ्यवहरेद्विशेषतस्तु चिलिचिमं स हि महाभिष्यन्दितमत्वात् स्थूललक्षणतरानेतान् व्याधीनुपजनयत्यामविषमुदीरयति च॥ ११०॥

ग्राम्यानूपौदकपिशितानि मधुतिलगुडपयोमाषमूलकबिसैर्विरूढधान्यैर्वा नैकधा अद्यात्। तन्मूलं बाधिर्यान्ध्यवेपथुजाड्यविकलमूकतामैन्मिण्यमथवा मरणमाप्नोति॥ १११॥

न पौष्करं रोहिणीकं वा शाकं न कपोतान् सार्षपतैलभृष्टान् मधुपयोभ्यां सहाभ्यवहरेत्। तन्मूलं हि शोणिताभिष्यन्दधमनीप्रतिचयापस्मारशंखकगलगण्डरोहिणीकानामन्यतमं प्राप्नोत्यथवा मरणमिति॥ ११२॥

न मूलकलशुनकृष्णगन्धार्जकसुमुखसुरसादीनि भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात्॥ ११३॥

न वास्तुशाकं न लिकुचं पक्वं मधुपयोभ्यां सहोपयोज्यम्। एतद्धि मरणायायवा बलवर्णतेजोवीर्योपरोधायालघुव्याधये षाण्ढ्याय च॥ ११४॥

तदेव लिकुचपक्वं न माषसूपगुडसर्पिर्भिः सहोपयोज्यं वैरोधिकत्वात् ॥ ११५ ॥

तथाम्रामकमातुलुङ्गलिकुचकरमर्दमोचदन्तशठबदरकोशाम्रभव्यजाम्बव कपित्थतिन्तिडीकपारावताक्षोटपनसनालिकेरदाडिमामलकान्येवम्प्रकाराणि चान्यानि सर्वं चाम्लं द्रवमद्रवं च पयसा सह विरुद्धम् ॥ ११६ ॥

कङ्गुवरकमकुष्ठककुलत्थमाषनिष्पावाः पयसा सह विरुद्धाः पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहोपयुक्तं विरुद्धं वातञ्चातिकोपयति ॥ ११७ ॥

हारिद्रकः सर्षपतैलभृष्टो विरुद्धपित्तञ्चातिकोपयति पायसो मन्थानुपानोविरुद्धः। उपोदिका तिलकल्कसिद्धा हेतुरतीसारस्य ॥ ११८ ॥

बलाका वारुण्या कुल्माषैरपि विरुद्धा। सैव शूकरवसापरिभृष्टा सद्यो व्यापादयति ॥ ११९ ॥

मायूरमांसमेरण्डसीसकासक्तमेरण्डाग्निप्लुष्टं सद्यो व्यापादयति ॥ १२० ॥

तदेव भस्मपांसुपरिध्वस्तं सक्षौद्रं मरणाय ॥ १२१ ॥

हारीतकमांसं हारिद्राग्निप्लुष्टं सद्यो व्यापादयति।
मत्स्यतैलनिस्तालनसिद्धाः पिप्पल्यस्तथा काकमाची मधु च मरणाय ॥ १२२ ॥

मधु चोष्णमुष्णार्तस्य च मधु मरणाय ॥ १२३ ॥

मधुसर्पिषी तुल्ये मधु वारि चान्तरिक्षं समधृतं मधुपुष्करबीजं मधु पीत्वोष्णोदकं भल्लातकोष्णोदकम् ॥ १२४ ॥

तक्रसिद्धः काम्पिल्लकः पर्युषिता काकमाची अङ्गारशूल्यो भास इति विरुद्धानीत्येतद्यथा प्रश्नमभिनिर्दिष्टम् ॥ १२५ ॥

भवन्ति चात्र श्लोकाः ।

यत्किञ्चिद्दोषमासाद्य न निर्हरति कायतः ।
आहारजातं तत् सर्वमहितायोपपद्यते ॥ १२६ ॥
यच्चापि देशकालाग्निमात्रासात्म्यानिलादिभिः ।
संस्कारतो वीर्य्यतश्च कोष्ठावस्थाक्रमैरपि ॥ १२७ ॥
परिहारोपचाराभ्यां पाकात् संयोगतोऽपि च ।
विरुद्धन्तच्च न हितं हृत्संपद्विधिभिश्च यत् ॥ १२८ ॥
विरुद्धं देशतस्तावद्रूक्षतीक्ष्णादिधन्वनि ।
आनूपे स्निग्धशीतादि भेषजं यन्निषेव्यते ॥ १२९ ॥
कालतोऽपि विरुद्धं यच्छीतरूक्षादिसेवनम् ।
शीते काले तथोष्णे च कटुकोष्णादिसेवनम् ॥ १३० ॥
विरुद्धमनले तद्वदन्नपानं चतुर्विधे ।
मधुसर्पिः समधृतं मात्रया तद्विरुध्यते ॥ १३१ ॥
कटुकोष्णादिसात्म्यस्य स्वादुशीतादिसेवनम् ।
यत्तत् सात्म्यविरुद्धन्तु विरुद्धं त्वनलादिभिः ॥ १३२ ॥
या समानगुणाभ्यासविरुद्धाश्चौषधक्रिया ।
संस्कारतो विरुद्धन्तद्यद्भोज्यं विषवद् व्रजेत् ॥ १३३ ॥
ऐरण्डसीसकासक्तं शिखिमांसं तथैव हि ।
विरुद्धं वीर्य्यतो ज्ञेयं वीर्य्यतः शीतलात्मकम् ॥ १३४ ॥
तत् संयोज्योष्णवीर्य्येण द्रव्येण सह सेव्यते ।
क्रूरकोष्ठस्य चात्यल्पं मन्दवीर्य्यमभेदनम् ॥ १३५ ॥
मृदुकोष्ठस्य गुरुच भेदनीयं तथा बहु ।
एतत् कोष्ठविरुद्धन्तु विरुद्धं स्यादयस्यथा ॥ १३६ ॥
श्रमव्यपायव्यायामसक्तस्यानिलकोपनम् ।
निद्रालसस्यालसस्य भोजनं श्लेष्मकोपनम् ॥ १३७ ॥
यश्चानुत्सृज्य विण्मूत्रं भुंक्ते यश्चाबुभुक्षितः ।

तच्च कर्म विरुद्धं स्याद्यच्चातिमुद्रयानुगः ॥ १३८ ॥
परद्दारविरुद्धन्तु वराहादीन्निषेव्य यत्।
सेवेतोष्णं घृतादींश्च पीत्वा शीतं निषेवते ॥ १३९ ॥
विरुद्धं पाकतश्चापि दुष्टदुर्दारुसाधितम्।
अपक्वतण्डुलात्यर्थपक्वदग्धं च यद्भवेत् ॥ १४० ॥
संयोगतो विरुद्धं तद्यथाम्लं पयसा सह।
अमनोरुचितं यच्च हृद्विरुद्धं तदुच्यते ॥ १४१ ॥
सम्पद्विरुद्धं तद्विद्यादसञ्जातरसन्तु तत्।
अतिक्रान्तरसं वापि विपन्नरसमेव वा ॥ १४२ ॥
ज्ञेयं विधिविरुद्धन्तु भुज्यते निभृतेन यत्।
तदेवंविधमन्नं स्याद्विरुद्धमुपयोजितम् ॥ १४३ ॥
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च।
स्नेहव्यायामबलिनो विरुद्धं वितथं भवेत् ॥ १४४ ॥
पाण्ड्वान्ध्यवीसर्पदकोदराणां विस्फोटकोन्मादभगन्दराणाम्
मूर्च्छामदाध्मानगलग्रहाणां पाण्ड्वामयस्यामविषस्य चैव ॥१४
किलासकुष्ठग्रहणीगदानां शोथाम्लपित्तज्वरपीनसानाम्।
सन्तानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम् ॥ १४६
एषाञ्च खलु परेषाञ्च वैरोधिकनिमित्तानां व्याधीनामि
भावाः प्रतिकाराः। यथा वमनं विरेचनञ्च तद्विरोधिन
द्रव्याणां संशमनार्थमुपयोगस्तथाविधैश्च द्रव्यैः पूर्वमभिसंस्क
शरीरस्येति ॥ १४७ ॥
भवति चात्र। विरुद्धाशनजान् रोगान् प्रतिघ्नन्ति विरेचनम्
वमनं शमनञ्चैव पूर्वं वाहितसेवनम् ॥ १४८ ॥
तत्र श्लोकाः। मतिरासीन् महर्षीणां या या रसविनिश्चये।
द्रव्याणि गुणकर्मभ्यां द्रव्यसंख्या रसाश्रयाः ॥ १४९ ॥
कारणं रससंख्या च रसानुरससञ्चयम्।

परादीनां गुणानाञ्च लक्षणानि पृथक् पृथक् ॥ १५० ॥
यथात्मकानां षट्त्वञ्च रसानां येन हेतुना ।
ऊर्द्धानुलोमभाजश्च यद्गुणातिशयाद्रसाः ॥ १५१ ॥
षण्णां रसानां षट् चैव सुविभक्ता विभक्तयः ।
उद्देशश्चापविद्धश्च द्रव्याणां गुणकर्मणि ॥ १५२ ॥
प्रवरावरमध्यत्वं रसानां गौरवादिषु ।
पाकप्रभावयोर्लिङ्गं वीर्य्यसंख्याविनिश्चयः ॥ १५३ ॥
षण्णामास्वाद्यमानानां रसानां यत् स्वलक्षणम् ।
यद्यद्विरुध्यते यस्माद्येन यत्कारि चैव यत् ॥ १५४ ॥
वैरोधिकनिमित्तानां व्याधीनामौषधञ्च यत् ।
आत्रेयभद्रकाप्यीये तत्सर्वमवदत् मुनिः ॥ १५५ ॥

इत्यन्नपानचतुष्के आत्रेयभद्रकाप्यीयो नाम षड्विंशोऽध्यायः समाप्तः।

---

## सप्तविंशोऽध्यायः ।

अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

इष्टवर्णगन्धरसस्पर्शं विधिविहितमन्नपानं प्राणिनां प्राणसंज्ञकानां प्राणमाचक्षते कुशलाः । प्रत्यक्षफलदर्शनात्तदिन्धना ह्यन्तराग्नेः स्थितिस्तत् एव सत्त्वमूर्जयति । तच्छरीरधातुव्यूहबलवर्णेन्द्रियप्रसादकरं यथोक्तमुपसेव्यमानं विपरीतमहिताय सम्पद्यते ॥ १ ॥

तस्माद्धिताहितावबोधनार्थमन्नपानविधिमखिलेनोपदेक्ष्यामोऽग्निवेश ! ॥ २ ॥

तत् स्वभावादुदकं क्लेदयति, लवणं विष्यन्दयति, क्षारः पाचयति, मधु सन्दधाति, सर्पिः स्नेहयति, क्षीरं जीवयति, मांसं बृंहयति, रसः प्रीणयति, सुरा जर्जरीकरोति, शीधु अव-

धमयति, द्राक्षारसो दीपयति, फाणितमाचिनोति, दधि शोफं जनयति, पिण्याकशाकं ग्लपयति, प्रभूतान्तर्मलो माषसूपदृष्टिघ्नः क्षारः, प्रायः पित्तलमम्लमन्यत्र मधुनः पुराणाच्छालियवगोधूमात्, प्रायः सर्वं तिक्तं वातलमवृष्यञ्चान्यत्र वेत्राग्रपटोलात्, प्रायः कटुकं वातलमवृष्यञ्चान्यत्र पिप्पलीविश्वभेषजात् ॥ ३ ॥

परमतो वर्गसंग्रहेणाहारद्रव्याण्यनुव्याख्यास्यामः ॥ ४ ॥

शूकधान्यशमीधान्यमांसशाकफलाश्रयान् ।
वर्गान् हरितमद्याम्बुगोरसेक्षुविकारिकान् ॥ ५ ॥
दश द्वौ च परौ वर्गौ कृतान्नाहारयोगिनाम् ।
रसवीर्यविपाकैश्च प्रभावैश्चोपदेक्ष्यते ॥ ६ ॥

अथ शूकधान्यवर्गः ।

रक्तशालिर्महाशालिः कलमः शकुनाहृतः ।
तूर्णको दीर्घशूकश्च गौरः पाण्डुकलाङ्कुलौ ॥ ७ ॥
सुगन्धिकालोहवालाः शारिवाख्याः प्रमोदकाः ।
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥ ८ ॥
शीता रसे विपाके च मधुराः स्वल्पमारुताः ।
बद्धाल्पवर्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः ॥ ९ ॥
रक्तशालिर्वरस्तेषां तृष्णाघ्नस्त्रिमलापहः ।
महांस्तस्यानु कलमस्तस्याप्यनु ततः परे ॥ १० ॥
यवका हायनाः पांशुवाप्यौ नैषधकादयः ।
शालीनां शालयः कुर्वन्त्यनुकारं गुणागुणैः ॥ ११ ॥
शीतः स्निग्धो गुरुः स्वादुस्त्रिदोषघ्नः स्थिरात्मकः ।
षष्टिकः प्रवरो गौरः कृष्णगौरस्ततोऽनु च ॥ १२ ॥
वरकोद्दालकौ चीनशारदोज्ज्वलदर्दुराः ।
गन्धनाः कुरुविन्दाश्च षष्टिकाल्पान्तरा गुणैः ॥ १३ ॥

मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ १४ ॥
सकोरदूषः श्यामाकः कषायमधुरो लघुः ।
वातलः कफपित्तघ्नः शीतसंग्राहिशोषणः ॥ १५ ॥
हस्तिश्यामाकनीवारतोयपर्णीगवेधुकाः ।
प्रशान्तिकाम्भःश्यामाकलौहित्याणुप्रियङ्गवः ॥ १६ ॥
मुकुन्दझिण्टिगर्मूटीवरुकावरकास्तथा ।
शिबिरोत्कटजूर्णाह्वः श्यामाकसदृशा गुणैः ॥ १७ ॥
रूक्षःशीतो गुरुः स्वादुः बहुवातशकृद्यवः ।
स्थैर्यकृत् सकषायस्तु बल्यः श्लेष्मविकारनुत् ॥ १८ ॥
रूक्षः कषायानुरसो मधुरः कफपित्तहा ।
मेदः क्रिमिविषघ्नश्च बल्यो वेणुयवो मतः ॥ १९ ॥
सन्धानकृद्वातहरो गोधूमः स्वादुशीतलः ।
जीवनो बृंहणो वृष्यः स्निग्धः स्थैर्यकरो गुरुः ॥ २० ॥
नान्दीमुखी मधूली च मधुरस्निग्धशीतले ।
इत्ययं शूकधान्यानां पूर्वो वर्गः समाप्यते ॥२१ ॥

इति शूकधान्यवर्गः ।

अथ शमीधान्यवर्गः ।

कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः ।
विशदः श्लेष्मपित्तघ्नो मुद्गः सूप्योत्तमो मतः ॥ २२ ॥
रूक्षश्चैव कषायश्च वातलः श्लेष्मपित्तहा ।
विष्टम्भी चाप्यवृष्यश्च राजमाषः प्रकीर्त्तितः ॥ २३ ॥
वृष्यः परं वातहरः स्निग्धोष्णमधुरो गुरुः ।
बल्यो बहुमलः पुंस्त्वं माषः शीघ्रं ददाति च ॥ २४ ॥
उष्णाः कषायाः पाकेऽम्लाः कफशुक्रानिलापहाः ।
कुलत्था ग्राहिणः कासहिक्काश्वासार्शसां हिताः ॥ २५ ॥

मधुरा मधुराः पाके ग्राहिणो रूक्षशीतलाः ।
मकुष्ठकाः प्रशस्यन्ते रक्तपित्तज्वरादिषु ॥ २६ ॥
चणकाश्च मसूराश्च खण्डिकाः सहरेणवः ।
लघवः शीतमधुराः सकषाया विरूक्षणाः ॥ २७ ॥
पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च ।
तेषां मसूरः संग्राही कलायो वातलः परम् ॥ २८ ॥
स्निग्धोष्णमधुरस्तीक्ष्णः कषायः कटुकस्तिलः ।
त्वच्यः केश्यश्च बल्यश्च वातघ्नः कफपित्तकृत् ॥ २९ ॥
गुर्व्योऽथ मधुराः शीता बलघ्ना रूक्षणात्मिकाः ।
सस्नेहा बलिभिर्भोज्या विविधाः शिम्बिजातयः ॥ ३० ॥
आढकी कफपित्तघ्नी वातला कफवातनुत् ।
अवल्गुजः सैडगजो निष्पावा वातपित्तलाः ॥ ३१ ॥
काकाण्डोलात्मगुप्तानां माषवत् फलमादिशेत् ।
द्वितीयोऽयं शमीधान्यवर्गः प्रोक्तो महर्षिणा ॥ ३२ ॥

इति शमीधान्यवर्गः ।

अथ मांसवर्गः ।

गोखराश्वतरोष्ट्राश्व द्वीपिसिंहर्क्षवानराः ।
वृको व्याघ्रस्तरक्षुश्च बभ्रुमार्जारमूषिकाः ॥ ३३ ॥
लोपाको जम्बुकः श्येनो वान्तादश्चापवायसौ ।
शशघ्नी मधुहा भासो गृध्रोलूककुलिङ्गकाः ॥ ३४ ॥
धूमीका कुररश्चेति प्रसहा मृगपक्षिणः ।
श्वेतः श्यामश्चित्रपृष्ठः कालकः काकुलीमृगः ॥ ३५ ॥
कूर्चीका चिल्लटो भेको गोधा शल्लकगण्डकौ ।
कदली नकुलः श्वाविदिति भूमिशयाः स्मृताः ॥ ३६ ॥
सृमरश्चमरः खड्गो महिषो गवयो गजः ।
न्यङ्कुर्वराहश्चानूपा मृगाः सर्वे रुरुस्तथा ॥ ३७ ॥

कूर्मः कर्कटको मत्स्यः शिशुमारस्तिमिङ्गिलः।
शुक्तिशङ्खोद्रकुम्भीरचुलुकी मकरादयः॥ ३८॥
इति वारिशयाः प्रोक्ता वक्ष्यन्ते वारिचारिणः।
हंसः क्रौञ्चो बलाका च बकः कारण्डवः प्लवः॥ ३९॥
शरारी पुष्कराह्वश्च केशरी मानतुण्डिकः।
मृणालकण्ठो मद्गुश्च कादम्बः काकतुण्डकः॥ ४०॥
उत्क्रोशः पुण्डरीकाक्षो मेघरावोऽम्बुकुक्कुटी।
आरानन्दीमुखीवाटीसुमुखाः सहचारिणः॥ ४१॥
रोहिणी कामकाली च सारसो रक्तशीर्षकः।
चक्रवाकास्तथान्ये च खगाः सन्त्यम्बुचारिणः॥ ४२॥
पृषत, शरभो रामः श्वदंष्ट्रा मृगमातृकाः।
शशोरणौ कुरङ्गश्च गोकर्णः कोट्टकारकः॥ ४३॥
चारुष्को हरिणैणौ च शम्बरः कालपुच्छकः।
ऋष्यश्च वरपोतश्च विज्ञेया जाङ्गला मृगाः॥ ४४॥
लावो वर्तीरकश्चैव वार्तीकः सकपिञ्जलः।
चकोरश्चोपचक्रश्च कुक्कुटो रक्तवर्त्मकः॥ ४५॥
लावाद्या विष्किरास्त्वेते वक्ष्यन्ते वर्त्तकादयः।
वर्त्तको वर्त्तिकाचैव वर्ही तित्तिरिकुक्कुटौ॥ ४६॥
कङ्कमारपदेन्द्राभगोनर्दगिरिवर्त्तकाः।
क्रकरोऽवकरश्चैव वराहश्चेति विष्किराः॥ ४७॥
शतपत्रो भृङ्गराजः कोयष्टी जीवजीवकः।
कैरातः कोकिलोऽत्यूहो गोपापुत्रः प्रियात्मजः॥ ४८॥
लट्वा लट्टषकोवभ्रुर्वटहा डिण्डिमानकः।
जटी दुन्दुभिवाकावलोहपृष्ठकुलिङ्गकाः॥ ४९॥
कपोतशुकसारङ्गाश्चिरिटीकङ्कुयष्टिका।
शारिका कलविङ्कश्च चटकोऽङ्गारचूडकः॥ ५०॥

पारावतः सारपदिक इत्युक्ताः प्रतुदा द्विजाः ।
प्रसह्य भक्षयन्तीति प्रसहास्तेन संज्ञिताः ॥ ५१ ॥
भूशया बिलवासित्वादानूपानूपसंश्रयात् ।
जले निवासाज्जलजा जलचर्य्याज्जलेचराः ।
स्थलजा जाङ्गलाः प्रोक्ता मृगा जाङ्गलचारिणः ॥ ५२ ॥
विकीर्य्य विष्किरश्चेति प्रतुद्य प्रतुदाः स्मृताः ।
योनिरष्टविधा त्वेवं मांसानां परिकीर्त्तिता ॥ ५३ ॥
प्रसहा भूशयानूपवारिजा वारिचारिणः ।
गुरूष्णस्निग्धमधुरा बलोपचयवर्द्धनाः ॥ ५४ ॥
वृष्याः परं वातहराः कफपित्ताभिवर्द्धनाः ।
हिता व्यायामनित्यानां नरा दीप्ताग्नयश्च ये ॥ ५५ ॥
प्रसहानां विशेषेण मांसं मांसाशिनो भिषक् ।
जीर्णार्शोग्रहणीदोषशोषार्त्तानां प्रयोजयेत् ॥ ५६ ॥
लावाद्यो वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः ।
लघवः शीतमधुराः सकषाया हिता नृणाम् ॥ ५७ ॥
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ।
विष्किरावर्त्तकाद्यास्तु प्रसहाद्यास्त्वरा गुणैः ॥ ५८ ॥
नातिशीतगुरुस्निग्धं मांसमाजमदोषलम् ।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥ ५९ ॥
मांसं मधुरशीतत्वाद् गुरु बृंहणमाविकम् ।
योन्यावजाविके मिश्रगोचरत्वादनिश्चिते ॥ ६० ॥
सामान्येनोपदिष्टानां मांसानां स्वगुणैः पृथक् ।
केषाञ्चिद् गुणवैशेष्याद्विशेष उपदेक्ष्यते ॥ ६१ ॥
दर्शनश्रोत्रमेधाग्निवयोवर्णस्वरायुषाम् ।
बर्ही हिततमो बल्यो वातघ्नो मांसशुक्रलः ॥ ६२ ॥
गुरूष्णस्निग्धमधुराः स्वरवर्णबलप्रदाः ।

रोहितो दीपनीयश्च लघुपाको महाबलः ।
गुरूष्णमधुरा बल्या बृंहणाः पवनापहाः ॥ ७६ ॥
मत्स्याः स्निग्धाश्च वृष्याश्च बहुदोषाः प्रकीर्त्तिताः ।
स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलापहम् ॥ ७७ ॥
सल्यो वातहरो वृष्यश्चक्षुष्यो बलवर्द्धनः ।
मेधास्मृतिकरः पथ्यः शोषघ्नः कूर्म उच्यते ।
वराहपिशितं बल्यं रोचनं स्वेदनं गुरु ॥ ७८ ॥
गव्यं केवलवातेषु पीनसे विषमज्वरे ।
शुष्ककासश्रमात्यग्निमांसक्षयहितञ्च यत् ॥ ७९ ॥
स्निग्धोष्णमधुरं वृष्यं माहिषङ्गुरु तर्पणम् ।
दार्ढ्यं बृहत्त्वमुत्साहं स्वप्नञ्च जनयत्यपि ॥ ८० ॥
धार्त्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि ।
चटकानाञ्च यानि स्युरण्डानि च हितानि च ॥ ८१ ॥
रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च ।
मधुराण्यविदाहीनि सद्यो बलकराणि च ॥ ८२ ॥
शरीरबृंहणे नान्यत् दार्ढ्यं मांसाद्विशिष्यते ।
इति वर्गस्तृतीयोऽयं मांसानां परिकीर्त्तितः ॥ ८३ ॥

इति मांसवर्गः ।

अथ शाकवर्गः ।

पाठा शुषा शठी शाकं वास्तुकं सुनिषण्णकम् ।
विद्यात् ग्राहि त्रिदोषघ्नं भिन्नवर्चस्तु वास्तुकम् ॥ ८४ ॥
त्रिदोषशमनी वृष्या काकमाची रसायनी ।
नात्युष्णशीतवीर्य्या च भेदनी कुष्ठनाशनी ॥ ८५ ॥
राजक्षवकशाकन्तु त्रिदोषशमनं लघु ।
ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणाम् ॥ ८६ ॥
कालशाकन्तु कटुकं दीपनं गरशोफजित् ।

पुष्पं ग्राहि प्रशस्तञ्च रक्तपित्ते विशेषतः ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः ॥ १०० ॥
कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम् ।
वायुं वत्सादनी हन्यात् कफं गण्डीरचित्रकौ ॥१०१॥
श्रेयसी बिल्वपर्णी च बिल्वपत्त्रन्तु वातनुत् ।
भाण्डी शतावरी शाकं बलाजीवन्तिजञ्च यत् ॥१०२॥
पर्वण्याः पर्वपुष्प्याश्च वातपित्तहरं स्मृतम् ।
लघु भिन्नशकृत्तिक्तं लाङ्गलक्युरुवुकयोः ॥ १०३ ॥
तिलवेतसशाकञ्च शाकं पञ्चाङ्गुलस्य वा ।
वातलं कटुतिक्ताम्लमधोमार्गप्रवर्त्तकम् ॥ १०४ ॥
रूक्षाम्लमुष्णं कौसुम्भं कफघ्नं पित्तवर्द्धनम् ।
त्रपुसैर्वारुकं स्वादु गुरु विष्टम्भि शीतलम् ॥ १०५ ॥
मुखप्रियञ्च रूक्षञ्च मूत्रलं त्रपुसं त्वति ।
एर्वारुकञ्च संपक्वं दाहतृष्णाक्लमार्त्तिनुत् ।
वर्चोभेदीन्यलाबूनि रूक्षशीतगुरूणि च ॥ १०६ ॥
चिर्भिटैर्वारुके तद्वद्वर्चोभेदहिते तु ते ।
कुष्माण्डमुक्तं सक्षारं मधुराम्लं तथा लघु ॥ १०७ ॥
सृष्टमूत्रपुरीषञ्च सर्वदोषनिवर्हणम् ।
केलूटञ्च कदम्बञ्च नदीमाषकमैन्दुकम् ॥ १०८ ॥
विषदं गुरु शीतं च समभिष्यन्दि चोच्यते ॥ १०९ ॥
उत्पलानि कषायाणि पित्तरक्तहराणि च ।
तथा तालप्रलम्बञ्च उरःक्षतरुजापहम् ।
खर्जूरं तालशस्यञ्च रक्तपित्तक्षयापहम् ॥ ११० ॥
भरुटं विसशालूकक्रौञ्चादनकशेरुकम् ।
शृङ्गाटकं कलोद्यञ्च गुरु विष्टम्भि शीतलम् ।
कुमुदोत्पलनालास्तु सपुष्पाः सफलाः स्मृताः ॥ १११ ॥

तालशस्यानि सिद्धानि नारिकेलफलानि च।
बृंहणस्निग्धशीतानि बल्यानि मधुराणि च ॥ १२५ ॥
मधुराम्लकषायञ्च विष्टम्भि गुरुशीतलम्।
पित्तश्लेष्महरं भव्यं ग्राहि वक्त्रविशोधनम् ॥ १२६ ॥
अम्लं परूषकं द्राक्षा बदर्य्यारुकाणि च।
पित्तश्लेष्मप्रकोपीणि कर्कन्धुलकुचान्यपि ॥ १२७ ॥
नात्युष्णं गुरु सम्पक्कं स्वादुप्रायं मुखप्रियम्।
बृंहणं जीर्य्यति चिरं नातिदोषलमारुकम् ॥ १२८ ॥
द्विविधं शीतमुष्णञ्च मधुरञ्चाम्लमेव च।
गुरु पाके च तं श्रेयमरुच्यत्यग्निनाशनम् ॥ १२९ ॥
भव्यादल्पान्तरगुणं काश्मर्य्यफलमुच्यते।
तथयाल्पान्तरगुणन्तूदमम्लं परूषकम् ॥ १३० ॥
कषायमधुरं टङ्कं वातलं गुरुशीतलम्।
कपित्थं विषकण्ठघ्नमामं संग्राहि वातलम् ॥ १३१ ॥
मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम्।
परिपक्वं सदोषघ्नं विषघ्नं ग्राहि गुर्वपि ॥ १३२ ॥
दुर्जरं बिल्वसिद्धन्तु दोषलं पूतिमारुतम्।
स्निग्धोष्णतीक्ष्णं तद्बालं दीपनं कफवातजित् ॥ १३३ ॥
वातपित्तकरं बालमापूर्णं पित्तवर्द्धनम्।
पक्वमाम्रं जयेद्वायुं मांसशुक्रबलप्रदम् ॥ १३४ ॥
कषायमधुरप्रायं गुरु विष्टम्भि शीतलम्।
जाम्बवं कफपित्तघ्नं ग्राहि वातकरं परम् ॥ १३५ ॥
मधुरं बदरं स्निग्धं भेदनं वातपित्तजित्।
तच्छुष्कं कफवातघ्नं पित्तेन च विरुध्यते।
कषायमधुरं शीतं ग्राहि सिञ्चितिकाफलम् ॥ १३६ ॥
गाङ्गेरुकीकरीरञ्च बिम्बी तोदनधन्वनम्।

मधुरं सकषायञ्च शीतं पित्तकफापहम्॥ १३७॥
चौरिकं पनसं मोचं राजादनफलानि च।
स्वादूनि सकषायाणि स्निग्धशीतगुरूणि च॥ १३८॥
कषायविशदत्वाच्च सौगन्ध्याच्च रुचिप्रदम्।
अवदंशक्षमं हृद्यं वातलं लवलीफलम्॥ १३९॥
नीपं शताह्वकं पीलु तृणशून्यं विकङ्कतम्।
प्राचीनामलकञ्चैव दोषघ्नं गरहारि च॥ १४०॥
इङ्गुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित्।
तिन्दुकं कफपित्तघ्नं कषायमधुरं लघु॥ १४१॥
विद्यादामलके सर्वान् रसान् लवणवर्जितान्।
स्वेदमेदःकफोत्क्लेदपित्तरोगविनाशनम्॥ १४२॥
रूक्षं स्वादु कषायाम्लं कफपित्तहरं परम्।
रसासृङ्मांसमेदोजान् दोषान् हन्ति विभीतकम्॥ १४३॥
अम्लं कषायमधुरं वातघ्नं ग्राहि दीपनम्।
स्निग्धोष्णं दाडिमं हृद्यं कफपित्ताविरोधि च॥ १४४॥
रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनम्।
मधुरं पित्तनुत्तेषाम् तद्धि दाडिममुत्तमम्॥ १४५॥
वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्मणि शस्यते।
अम्लिकायाः फलं पक्वं तस्मादल्पान्तरं गुणैः॥ १४६॥
गुणैस्तैरेव संयुक्तं भेदनन्त्वम्लवेतसम्।
शूलेऽरुचौ विबन्धे च मन्देऽग्नौ मद्यविप्लवे॥ १४७॥
हिक्काश्वासे च कासे च वम्यां वर्चोगदेषु च।
वातश्लेष्मसमुत्थेषु सर्वेष्वेतेषु दिश्यते॥ १४८॥
केशरं मातुलुङ्गस्य लघु शीतमतोऽन्यथा।
रोचनो दीपनो हृद्यः सुगन्धिस्त्वग्निवर्जितः॥ १४९॥
कर्चूरः कफवातघ्नः श्वासहिक्कार्शसां हितः।

मधुरं किञ्चिदम्लञ्च हृद्यं भक्तप्ररोचनम् ॥ १५० ॥
दुर्जरं वातशमनं नागरङ्गफलं गुरु ।
वातामाभिषुकाक्षोटमुकूलकनिकोचकाः ॥ १५१ ॥
गुरूष्णस्निग्धमधुराः सोरुमाणाः बलप्रदाः ।
वातघ्ना बृंहणा वृष्याः कफपित्ताभिवर्द्धनाः ॥ १५२ ॥
पियालमेषां सदृशं विद्यादौष्ण्यं विना गुणैः ।
श्लेष्मलं मधुरं शीतं श्लेष्मातकफलं गुरु ॥ १५३ ॥
श्लेष्मलं गुरु विष्टम्भि चाङ्कोटफलमग्निजित् ।
गुरूष्णमधुरं रूक्षं केशघ्नं च शमीफलम् ॥ १५४ ॥
विष्टम्भयति कारञ्जं पित्तश्लेष्माविरोधि च ।
आम्रातकं दन्तशठमम्लं सकरमर्दकम् ॥ १५५ ॥
रक्तपित्तकरं विद्यादैरावतकमेव च ।
वातघ्नं दीपनञ्चैव वार्ताकं कटुतिक्तकम् ॥ १५६ ॥
वातलं कफपित्तघ्नं विद्यात् पर्पटकीफलम् ।
पित्तश्लेष्मघ्नमम्लञ्च वातिकञ्चाचिकीफलम् ॥ १५७ ॥
मधुराण्यविपाकीनि वातपित्तहराणि च ।
अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां फलानि च ॥ १५८ ॥
कषायमधुराम्लानि वातलानि गुरूणि च ।
भल्लातकास्थ्यग्निसमं त्वङ्मांसं स्वादु शीतलम् ॥ १५९ ॥
पञ्चमः फलवर्गोऽयमुक्तः प्रायोपयोगिकः ॥१६०॥

इति फलवर्गः ।

अथ हरितवर्गः ।

रोचनं दीपनं वृष्यमार्द्रकं विश्वभेषजम् ।
वातश्लेष्मविबन्धेषु रसस्तस्योपदिश्यते ॥ १६१ ॥
रोचनो दीपनस्तीक्ष्णः सुगन्धिर्मुखबोधनः ।
जम्बीरः कफवातघ्नः क्रिमिघ्नो भुक्तपाचनः ॥ १६२ ॥

बालं दोषहरं वृद्धं त्रिदोषं मारुतापहम्।
स्निग्धसिद्धं विशुष्कन्तु मूलकं कफवातजित्॥ १६३॥
हिक्काकासविषश्वासपार्श्वशूलविनाशनः।
पित्तकृत्कफवातघ्नः सुरसः पूतिगन्धनुत्॥ १६४॥
यवानी चार्जकश्चैव शिग्रु शालेय मृष्टकम्।
हृद्यान्यास्वादनीयानि पित्तमुत्क्लेशयन्ति च॥ १६५॥
गण्डीरो जलपिप्पल्यस्तुम्बुरुः शृङ्गवेरिका।
तीक्ष्णोष्णकटुरूक्षाणि कफवातहराणि च॥ १६६॥
पुंस्त्वघ्नः कटुरूक्षोष्णो भूस्तृणो वक्त्रशोधनः।
खराह्वा कफवातघ्नी वस्तिरोगरुजापहा॥ १६७॥
धान्यकं चाजगन्धा च सुमुखश्चेति रोचनाः।
सुगन्धा नातिकटुका दोषानुत्क्लेशयन्ति तु॥ १६८॥
ग्राही गृञ्जनकस्तीक्ष्णो वातश्लेष्मार्शसां हितः।
स्वेदनेऽभ्यवहार्य्ये च योजयेत् तमपित्तिनाम्॥ १६९॥
श्लेष्मलो मारुतघ्नश्च पलाण्डुर्न च पित्तनुत्।
आहारयोगी बल्यश्च गुरुर्वृष्योऽथ रोचनः॥ १७०॥
क्रिमिकुष्ठकिलासघ्नो वातघ्नो गुल्मनाशनः।
स्निग्धश्चोष्णश्च वृष्यश्च लशुनः कटुको गुरुः॥ १७१॥
शुष्काणि कफवातघ्नान्येतान्येषां फलानि तु।
हरितानामयं चैषां षष्ठो वर्गः समाप्यते॥ १७२॥

इति हरितवर्गः।

अथ मद्यवर्गः।

प्रकृत्या मद्यमम्लोष्णमम्लं चोक्तं विपाकतः।
सर्वं सामान्यतस्तस्य विशेष उपदेक्ष्यते॥ १७३॥
कृशानां सक्तमूत्राणां ग्रहण्यर्शोविकारिणाम्।
सुरा प्रशस्ता वातघ्नी स्तन्यरक्तक्षयेषु च॥ १७४॥

हिक्काश्वासप्रतिश्यायकासवर्चोग्रहारुचौ ।
वम्यानाहविबन्धेषु वातघ्नी मदिरा हिता ॥ १७५ ॥
शूलप्रवाहिकाटोपकफवातार्शसां हितः ।
जगलो ग्राहिरूक्षोष्णः शोफघ्नो भुक्तपाचनः ॥ १७६ ॥
शोफार्शोग्रहणीदोषपाण्डुरोगारुचिज्वरान् ।
हन्त्यरिष्टः कफकृतान् रोगान् रोचनदीपनः ॥ १७७ ॥
मुखप्रियः सुखमदः सुगन्धिर्बस्तिरोगनुत् ।
जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्करः ॥१७८॥
रोचनो दीपनो हृद्यः शोषशोफार्शसां हितः ।
स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः ॥१७९॥
जरणीयो विबन्धघ्नः स्वरवर्णविशोधनः ।
लेखनः शीतरसिको हितः शोफोदरार्शसाम् ॥ १८० ॥
सृष्टो भिन्नशकृद्वातो गौडस्तर्पणदीपनः ।
पाण्डुरोगव्रणहिता दीपनी चाक्षिकी मता ॥ १८१ ॥
सुरासवस्तीव्रमदो वातघ्नो वदनप्रियः ।
छेदी मध्वासवस्तीक्ष्णो मैरेयो मधुरो गुरुः ॥ १८२ ॥
धातक्यभिषुतो हृद्यो रूक्षो रोचनदीपनः ।
माध्वीकवन्न चात्युष्णो मृद्वीकेक्षुरसासवः ॥ १८३ ॥
रोचनं दीपनं हृद्यं बल्यं पित्ताविरोधि च ।
विबन्धघ्नं कफघ्नञ्च मधु लघ्वल्पमारुतम् ॥ १८४ ॥
सुरा समण्डा रूक्षोष्णा यवानां वातपित्तला ।
गुर्वी जीर्यति विष्टभ्य श्लेष्मलस्तु मधूलकः ॥ १८५ ॥
दीपनं जरणीयञ्च हृत्पाण्डुक्रिमिरोगनुत् ।
ग्रहण्यर्शोहितं भेदि सौवीरकतुषोदकम् ॥ १८६ ॥
दाहज्वरापहं स्पर्शात् पानाद्वातकफापहम् ।
विबन्धघ्नमविस्रंसि दीपनञ्चाम्लकाञ्जिकम् ॥ १८७ ॥

प्रायशोऽभिनवं मद्यं गुरुदोषसमीरणम्।
स्रोतसां शोधनं जीर्णं दीपनं लघु रोचनम्॥ १८८॥
हर्षणं प्रीणनं वल्यं भयशोकश्रमापहम्।
प्रागल्भ्यवीर्य्यप्रतिभातुष्टिपुष्टिवलप्रदम्।
सात्त्विकैर्विधिवद्युक्त्या पीतं स्यादमृतं यथा॥ १८९॥
वर्गोऽयं सप्तमो मद्यमधिकृत्य प्रकीर्त्तितः॥ १९०॥

इति मद्यवर्गः।

अथ जलवर्गः।

जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात्।
तत् पतत् पतितञ्चैव देशकालावपेक्षते॥ १९१॥
खात् पतत् सोमवाय्वर्कैः स्पृष्टं कालानुवर्त्तिभिः।
शीतोष्णस्निग्धरूक्षाद्यैर्यथासन्नं महीगुणैः॥ १९२॥
शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम्।
प्रकृत्या दिव्यमुदकं भ्रष्टं पात्रमपेक्षते॥ १९३॥
श्वेते कषायं भवति पाण्डरे चैव तिक्तकम्।
कपिले क्षारसंसृष्टमूषरे लवणान्वितम्।
कटु पर्वतविस्तारे मधुरं कृष्णमृत्तिके॥ १९४॥
एतत् षड्गुणमाख्यातं महीस्थस्य जलस्य हि।
तथाव्यक्तरसं विद्यादैन्द्रं कारं हिमञ्च तत्॥ १९५॥

यदन्तरीक्षात् पततीन्द्रसृष्टं
चोक्तैश्च पात्रैः परिगृह्यतेऽम्भः।
तदैन्द्रमित्येव वदन्ति धीरा
नरेन्द्रपेयं सलिलं प्रधानम्॥ १९६॥

ऋताहृताविह्राख्याता सर्व एवाम्भसो गुणाः।
ईषत् कषायमधुरं सुसूक्ष्मं विशदं लघु॥ १९७॥
अरूक्षमनभिष्यन्दि सर्वं पानीयमुत्तमम्।

गुर्वभिष्यन्दि पानीयं वार्षिकं मधुरं लघु ॥ १९८ ॥
तनु लघ्वनभिष्यन्दि प्रायः शरदि वर्षति ।
तत्तु ये सुकुमाराः स्युः स्निग्धभूयिष्ठभोजिनः ॥ १९९ ॥
तेषां भोज्ये च भोज्ये च लेह्ये पेये च शस्यते ।
हैमन्ते सलिलं स्निग्धं वृष्यं बल्यं हितं गुरुः ॥ २०० ॥
किञ्चित्ततो लघुतरं शिशिरे कफवातजित् ।
कषायमधुरं रूक्षं विद्याद्वासन्तिकं जलम् ।
ग्रैष्मिकं त्वनभिष्यन्दि जलमित्येव निश्चयम् ॥ २०१ ॥
विभ्रान्तेष्वृतुकालेषु यत् प्रयच्छन्ति तोयदाः ।
सलिलं तत्तु दोषाय युज्यते नात्र संशयः ॥ २०२ ॥
राजभीराजमात्रैश्च सुकुमारैश्च मानवैः ।
सङ्गृहीताः शरद्यापः प्रयोक्तव्या विशेषतः ॥ २०३ ॥
नद्यः पाषाणविच्छिन्नविक्षुब्धा विमलोदकाः ।
हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः ॥ २०४ ॥
नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः ।
मलयप्रभवा याश्च जलं तास्वमृतोपमम् ॥ २०५ ॥
पश्चिमाभिमुखा याश्च पथ्यास्ता निर्मलोदकाः ।
प्रायो मृदुवहा गुर्व्यो याश्च पूर्वसमुद्रगाः ॥ २०६ ॥
पारियात्रभवा याश्च विन्ध्यसह्यभवाश्च याः ।
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ॥ २०७ ॥
वसुधाकीटमण्डूकमूत्रपुरीषसंदूषितोदकाः ।
वर्षाजलवहा नद्यः सर्वदोषसमीरणाः ॥ २०८ ॥
वापीकूपतडागोत्समरःप्रस्रवणादिषु ।
आनूपशैलधन्वानां गुणदोषैर्विभावयेत् ॥ २०९ ॥
पिच्छिलं क्रिमिलं क्लिन्नं पर्णशैवालकर्दमैः ।
विवर्णं विरसं सान्द्रं दुर्गन्धि न हितं जलम् ॥ २१० ॥

विस्रं विदोषं लवणमम्बु यद्वरुणालयम्।
इत्यम्बुवर्गः प्रोक्तोऽयमष्टमः सुविनिश्चितः॥ २११॥

इति अम्बुवर्गः।

अथ दुग्धवर्गः।

स्वादु शीतं मृदु स्निग्धं वहलं श्लक्ष्णपिच्छिलम्।
गुरु मन्दं प्रसन्नञ्च गव्यं दशगुणं पयः॥ २१२॥
तदेवं गुणमेवौजः सामान्यादभिवर्द्धयेत्।
प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम्॥ २१३॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः।
स्नेहान्न्यूनमनिद्राय हितमत्यग्नये च तत्॥ २१४॥
रूक्षोष्णं क्षीरमुष्ट्रीणामीषत् सलवणं लघु।
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम्॥ २१५॥
वल्यं स्थैर्य्यकरं सर्वमुष्णञ्चैकशफं पयः।
माल्लं सलवणं रूक्षं शाखायातहरं लघु॥ २१६॥
छागं कषायमधुरं शीतं ग्राहि पयो लघु।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम्॥ २१७॥
हिक्काश्वासकरन्तूष्णं पित्तश्लेष्मलमाविकम्।
हस्तिनीनां पयो वल्यं गुरु स्थैर्य्यकरं परम्॥ २१८॥
जीवनं वृंहणं सात्म्यं स्नेहनं मानुषं पयः।
नावणं रक्तपित्ते च तर्पणञ्चाक्षिशूलिनाम्॥ २१९॥
रोचनं दीपनं वृष्यं स्नेहनं वलवर्द्धनम्।
पाकेऽम्लमुष्णं वातघ्नं मङ्गलं वृंहणं दधि॥ २२०॥
पीनसे चातिसारे च शीतके विषमज्वरे।
अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते॥ २२१॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।
रक्तपित्तकफोत्थेषु विकारेष्वहितञ्च तत्॥ २२२॥

विदोषं मन्दकं जातं वातघ्नं दधि शुक्रलम् ।
सरः श्लेष्मानिलघ्नस्तु मण्डः स्रोतोविशोधनः ॥ २२३ ॥
शोफार्शोग्रहणीदोषमूत्रकृच्छ्रोदरारुचि ।
स्नेहव्यापदि पाण्डुत्वे तक्रं दद्याद्गरेषु च ॥ २२४ ॥
संग्राहि दीपनं हृद्यं नवनीतं नवोद्धृतम् ।
ग्रहण्यर्शोविकारघ्नमर्दितारुचिनाशनम् ॥ २२५ ॥
स्मृतिबुद्ध्यग्निशुक्रौजःकफमेदोविवर्धनम् ।
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥ २२६ ॥
सर्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः ।
सहस्रवीर्यं विधिभिर्घृतं कर्मसहस्रकृत् ॥ २२७ ॥
मदापस्मारमूर्च्छायशोषोन्मादगरज्वरान् ।
योनिकर्णशिरःशूलं घृतं जीर्णमपोहति ॥ २२८ ॥
सर्पींष्यजाविमहिषीक्षीरवत् स्वानि निर्दिशेत् ।
पीयूषो मोरटश्चैव किलाटा विविधाश्च ये ॥ २२९ ॥
दीप्ताग्नीनामनिद्राणां सर्व एते सुखप्रदाः ।
गुरवस्तर्पणा वृष्या बृंहणाः पवनापहाः ॥ २३० ॥
विशदा गुरवो रूक्षा ग्राहिणस्तक्रपिण्डकाः ।
गोरसानामयं वर्गो नवमः परिकीर्तितः ॥ २३१ ॥

इति गोरसवर्गः ।

अथेक्षुवर्गः ।

वृष्यः शीतः स्थिरः स्निग्धो बृंहणो मधुरो रसः ।
श्लेष्मलो भक्षितस्येक्षोर्यान्त्रिकस्तु विदह्यते ॥ २३२ ॥
शैत्यात् प्रसादान्माधुर्यात् पौण्ड्रकाद्वंशको वरः ।
प्रभूतक्रिमिमज्जासृङ्मेदोमांसकरो गुडः ॥ २३३ ॥
क्षुद्रो गुडश्चतुर्भागत्रिभागार्धावशेषितः ।
रसो गुरुर्यथापूर्वं धौतं स्वल्पमलो गुडः ॥ २३४ ॥

ततो मत्स्यण्डिकाखण्डशर्करा विमलाः परम् ।
यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा ॥ २३५ ॥
वृष्याः क्षीणक्षतहिताः सस्नेहा गुडशर्कराः ।
कषायमधुराः शीताः सतिक्ता यासशर्करा ॥ २३६ ॥
रूक्षा वम्यतिसारघ्नी च्छेदनी मधुशर्करा ।
तृष्णासृक्पित्तदाहेषु प्रशस्ताः सर्वशर्कराः ॥ २३७ ॥
माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः ।
माक्षिकं प्रवरं तेषां विशेषाद् भ्रामरं गुरु ॥ २३८ ॥
माक्षिकं तैलवर्णं स्यात् श्वेतं भ्रामरमुच्यते ।
क्षौद्रन्तु कपिलं विद्याद् घृतवर्णन्तु पौत्तिकम् ॥ २३९॥
वातलं गुरु शीतञ्च रक्तपित्तकफापहम् ।
सन्धातृच्छेदनं रूक्षं कषायमधुरं मधु ॥ २४० ॥
हन्यान्मधूष्णमुष्णार्त्तमथवा सविषान्वयात् ।
गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ॥ २४१ ॥
नातः कष्टतमं किञ्चिन्मध्वामात् तद्धि मानवम् ।
उपक्रमविरोधित्वात् सद्यो हन्याद्यथा विषम् ॥ २४२ ॥
आमे सोष्णा क्रिया कार्य्या सा मध्वामे विरुध्यते ।
मध्वामं दारुणं तस्मात् सद्यो हन्याद् यथा विषम् ॥२४३॥
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ।
इतीक्षुविकृतिप्रायो वर्गोऽयं दशमो मत. ॥ २४४ ॥

इति इक्षुवर्गः ।

अथ कृतान्नवर्गः ।

क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगविनाशिनी ।
स्वेदाग्निजननी पेया वातवर्चोऽनुलोमनी ॥ २४५ ॥
तर्पणी ग्राहिणी लघ्वी हृद्या चापि विलेपिका ।
सतः पिप्पलिशुण्ठीभ्यां युक्ता लाजाम्लदाडिमैः ॥ २४६ ॥

मण्डस्तु दीपयत्यग्निं वातञ्चाप्यनुलोमयेत् ।
मृदूकरोति स्रोतांसि स्वेदं संजनयत्यपि ॥ २४७ ॥
लङ्घितानां विरिक्तानां जीर्णे स्नेहे च तृष्यताम् ।
दीपनत्वाल्लघुत्वाच्च मण्डः स्यात् प्राणधारणः ॥ २४८ ॥
तृष्णातीसारशमनो धातुसाम्यकरः शिवः ।
लाजमण्डोऽग्निजननो दाहमूर्च्छानिवारणः ॥ २४९ ॥
मन्दाग्निविषमाग्नीनां बालस्थविरयोषिताम् ।
देयश्च सुकुमाराणां लाजमण्डः सुसंस्कृतः ।
क्षुत्पिपासासहः पथ्यः शुद्धानान्तु मलापहः ॥ २५० ॥
सुधौतः प्रस्रुतः स्विन्नः सन्तप्तश्चौदनो लघुः ।
भृष्टतण्डुलमिच्छन्ति गरश्लेष्मामयेष्वपि ॥ २५१ ॥
अधौतः प्रस्रुतः स्विन्नः शीतश्चाप्योदनो गुरुः ॥ २५२ ॥
मांसशाकवसातैलघृतमज्जफलौदनाः ।
बल्याः सन्तर्पणा हृद्या गुरवो बृंहयन्ति च ॥ २५३ ॥
तद्वन्माषतिलक्षीरमुद्गसंयोगसाधिताः ।
कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः ॥ २५४ ॥
स्विन्नभक्ष्यास्तु ये केचित् सौप्यगौधूमयावकाः ।
भिषक् तेषां यथाद्रव्यमादिशेद् गुरुलाघवम् ॥ २५५ ॥
अकृतं कृतयूषञ्च तनु संस्कारितं रसम् ।
सूपमम्लमनम्लञ्च गुरुं विद्याद्यथोत्तरम् ॥ २५६ ॥
सक्तवो वातला रूक्षा बहुवर्चोऽनुलोमिनः ।
तर्पयन्ति नरं सद्यः पीताः सद्योबलाय ते ॥ २५७ ॥
मधुरा लघवः शीताः सक्तवः शालिसम्भवाः ।
ग्राहिणो रक्तपित्तघ्नास्तृष्णाच्छर्दिज्वरापहाः ॥ २५८ ॥
हन्याद्व्याधीन् यवापूपो यावको वाट्य एव च ।
उदावर्त्तप्रतिश्यायकासमेहगलग्रहान् ॥ २५९ ॥

धानासंज्ञास्तु ये भक्ष्याः प्रायस्ते लेखनात्मकाः।
शुष्कत्वात् तर्पणाश्चैव विष्टम्भित्वाच्च दुर्जराः॥ २६०॥
विरूढधानाः शष्कुल्यो मधुक्रोडाः सपिण्डिकाः।
पूपाः पूपलिकाद्याश्च गुरवः पैष्टिकाः परम्॥ २६१॥
फलमांसवसाशाकपललक्षौद्रसंस्कृताः।
भक्ष्या वृष्याश्च बल्याश्च गुरवो बृंहणात्मकाः॥ २६२॥
वेशवारो गुरुः स्निग्धो बलोपचयवर्द्धनः।
गुरवस्तर्पणा वृष्याः क्षीरेक्षुरसपूपकाः॥ २६३॥
सगुडाः सतिलाश्चैव सक्षीरक्षौद्रशर्कराः।
वृष्या बल्याश्च भक्ष्यास्तु ते परं गुरवः स्मृताः॥ २६४॥
सस्नेहाः स्नेहसिद्धाश्च भक्ष्या विविधलक्षणाः।
गुरवस्तर्पणा वृष्या हृद्या गोधूमिका मताः॥ २६५॥
संस्काराल्लघवः सन्ति भक्ष्या गोधूमपैष्टिकाः।
धाना पर्पटपूपाद्यास्तान् बुद्ध्वा निर्दिशेत् तथा॥ २६६॥
पृथुका गुरवो भृष्टान् भक्षयेदल्पशस्तु तान्।
यावा विष्टभ्य जीर्यन्ति सतुषा भिन्नवर्चसः॥ २६७॥
सूप्यान्नविकृता भक्ष्या वातला रूक्षशीतलाः।
सकटुस्नेहलवणानल्पशो भक्षयेत् तु तान्॥ २६८॥
मृदुपाकाश्च ये भक्ष्याः स्थूलाश्च कठिनाश्च ये।
गुरवस्तेऽप्यतिक्रान्तपाकाः पुष्टिबलप्रदाः॥ २६९॥
द्रव्यसंयोगसंस्कारं द्रव्यमानं पृथक् तथा।
भक्ष्याणामादिशेद्बुद्ध्वा यथास्वं गुरुलाघवम्॥ २७०॥
रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा।
स्नेहनं तर्पणं हृद्यं वातघ्नं सगुडं दधि॥ २७१॥
द्राक्षाखर्जूरकोलानां गुरु विष्टम्भि पानकम्।
परूषकाणां क्षौद्रस्य यच्चेत्युपविकृतिं प्रति॥ २७२॥

तेषां कट्वम्लसंयोगाः पानकानां पृथक् पृथक् ।
द्रव्यमानञ्च विज्ञाय गुणकर्माणि चादिशेत् ॥ २७३ ॥
कट्वम्लस्वादुलवणा लघवो रागषाड़वाः ।
मुखप्रियाश्च हृद्याश्च दीपना भक्तरोचनाः ॥ २७४ ॥
आम्रामलकलेहाश्च वृंहणा बलवर्द्धनाः ।
रोचनास्तर्पणाश्चोक्ताः स्नेहमाधुर्य्यगौरवात् ॥ २७५ ॥
बुद्धा संयोगसंस्कारं द्रव्यमानञ्च तत् कृतम् ।
गुणकर्माणि लेहानां तेषां तेषां तथा वदेत् ॥ २७६ ॥
रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ।
कन्दमूलफलाद्यञ्च तद्वद्विद्यात् तदासुतम् ॥ २७७ ॥
शिण्डाकी चासुतञ्चान्यत् कालाम्लं रोचनं लघु ।
विद्याद्वर्गं कृतान्नानामेकादशतमं भिषक् ॥ २७८ ॥

इति कृतान्नवर्गः ।

अथाहारयोगवर्गः ।

कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ।
पित्तलं बद्धविण्मूत्रं न च श्लेष्माभिवर्द्धनम् ॥ २७९ ॥
वातघ्नेषूत्तमं बल्यं त्वच्यं मेधाग्निवर्द्धनम् ।
तैलं संयोगसंस्कारात् सर्वरोगापहं मतम् ॥२८०॥
तैलप्रयोगादजरा निर्विकारा जितश्रमाः ।
आसन्नतिबलाः संख्ये दैत्याधिपतयः पुरा ॥ २८१ ॥
ऐरण्डतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम् ।
वातासृग्गुल्महृद्रोगजीर्णज्वरहरं परम् ॥ २८२ ॥
कटूष्णं सार्षपं तैलं रक्तपित्तप्रदूषणम् ।
कफशुक्रानिलहरं कण्डूकोठविनाशनम् ॥ २८३ ॥
पियालतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम् ।
हितमिच्छन्ति नात्यौष्ण्यात् संयोगे वातपित्तयोः ॥२८४

आतर्ष्यं मधुराम्लन्तु विपाके कटुकं तथा।
उष्णवीर्य्यं हितं वाते रक्तपित्तप्रकोपनम्॥ २८५॥
कुसुम्भतैलमुष्णञ्च विपाके कटुकं गुरु।
विदाहि च विशेषेण सर्वरोगप्रकोपणम्॥ २८६॥
फलानां यानि चान्यानि तैलान्याहारसन्निधौ।
युज्यन्ते गुणकर्मभ्यां तानि ब्रूयाद् यथायथम्॥ २८७॥
मधुरो बृंहणो वृष्यो बल्यो मज्जा तथा वसा।
यथासत्त्वन्तु शैत्योष्णे वसामज्ज्ञोर्विनिर्दिशेत्॥२८८॥
सस्नेहं दीपनं वृष्यमुष्णं वातकफापहम्।
विपाकमधुरं हृद्यं रोचनं विश्वभेषजम्॥ २८९॥
श्लेष्मला मधुरा चार्द्रा गुर्वी स्निग्धा च पिप्पली।
सा शुष्का कफवातघ्नी कटुका वृष्यसम्मता॥ २९०॥
नात्यर्थमुष्णं मरिचमवृष्यं लघु रोचनम्।
छेदित्वाच्छोषणत्वाच्च दीपनं कफवातजित्॥ २९१॥
वातश्लेष्मविबन्धघ्नं कटुकं दीपनं लघु।
हिङ्गु शूलप्रशमनं विद्यात् पाचनरोचनम्॥ २९२॥
रोचनं दीपनं वृष्यं चक्षुष्यमविदाहि च।
त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तमम्॥ २९३॥
सौक्ष्म्यादौष्ण्याल्लघुत्वाच्च सौगन्ध्याच्च रुचिप्रदम्।
सौवर्चलं विबन्धघ्नं हृद्यमुद्गारशोधि च॥ २९४॥
तैक्ष्ण्यादौष्ण्याद्व्यवायित्वाद्दीपनं शूलनाशनम्।
ऊर्द्ध्वञ्चाधश्च वातानामानुलोम्यकरं विडम्॥ २९५॥
सतिक्तकटु सक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम्।
न काललवणे गन्धः सौवर्चलगुणाश्च ते॥ २९६॥
सामुद्रकं समधुरं सतिक्तं कटुपांशुजम्।
रोचनं लवणं सर्वं पाकि स्रंस्यनिलापहम्॥ २९७॥

हृत्पाण्डुग्रहणीदोषप्लीहानाहगलग्रहान् ।
कासं कफजमर्शांसि यावशूको व्यपोहति ॥ २९८ ॥
तीक्ष्णोष्णो लघुरुक्षश्च क्लेदी पाकी विदारणः ।
दहनो दीपनश्छेत्ता सर्वः क्षारोऽग्निसन्निभः ॥ २९९ ॥
कारव्यः कुञ्चिकाजाजी कवरी धान्यतुम्बुरुः ।
रोचनं दीपनं वातकफदौर्गन्ध्यनाशनम् ॥ ३०० ॥
आहारयोगिनां भक्तिनिश्चयो न तु विद्यते ।
समाप्तो द्वादशश्चायं वर्ग आहारयोगिनाम् ॥ ३०१ ॥
इत्याहारयोगवर्गः ।
शूकधान्यं शमीधान्यं समातीतं प्रशस्यते ।
पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु ॥ ३०२ ॥
यद्यदागच्छति क्षिप्रं तत्तल्लघुतरं स्मृतम् ॥ ३०३ ॥
निस्तुषं युक्तिभृष्टन्तु सूप्यं लघु विपच्यते ॥ ३०४ ॥
मृतं कृशातिमेध्यञ्च वृद्धं बालं विषैर्हतम् ।
अगोचरभृतं व्याड़सूदितं मांसमुत्सृजेत् ॥ ३०५ ॥
अतोऽन्यथा हितं मांसं बृंहणं बलवर्द्धनम् ।
प्रीणनः सर्वभूतानां हृद्यो मांसरसः परम् ॥ ३०६ ॥
शुष्यतां व्याधियुक्तानां कृशानां क्षीणरेतसाम् ।
बलवर्णार्थिनाञ्चैव रसं विद्याद्यथामृतम् ॥ ३०७ ॥
सर्वरोगप्रशमनं यथास्वं विहितं रसम् ।
विद्यात् स्वर्यं बलकरं वयोबुद्धीन्द्रियायुषाम् ॥ ३०८ ॥
व्यायामनित्याः स्त्रीनित्या मद्यनित्याश्च ये नराः ।
नित्यं मांसरसाहारा नातुराः स्युर्न दुर्बलाः ॥ ३०९ ॥
क्रिमिवातातपहतं शुष्कं जीर्णमनार्त्तवम् ।
शाकं निःस्नेहसिद्धञ्च वर्ज्यं यच्चापरिस्रुतम् ॥ ३१० ॥
पुराणमामं संक्लिष्टं क्रिमिव्यालहिमातपैः ।

अदेशाकालजं क्लिन्नं यत् स्यात् फलमसाधु तत् ॥ ३११ ॥
हरितानां यथाशाकं निर्देशः साधनादृते ॥ ३१२ ॥
मद्याम्बुगोरसादीनां स्वे स्वे वर्गे विनिश्चयः ॥ ३१३ ॥
यदाहारगुणैः पानं विपरीतं तदिष्यते ।
अन्नानुपानं धातूनां दृष्टं यन्न विरोधि च ॥ ३१४ ॥
आसवानां समुद्दिष्टा अशीतिश्चतुरुत्तरा ॥ ३१५ ॥
जलं पेयमपेयञ्च परीक्ष्यानुपिबेद्धितम् ॥ ३१६ ॥
स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम् ।
कफेऽनुपानं रूक्षोष्णं क्षये मांसरसः परम् ॥ ३१७ ॥
उपवासाध्वभाष्यस्त्रीमारुतातपकर्मभिः ।
क्लान्तानामनुपानार्थं पयः पथ्यं यथामृतम् ॥ ३१८ ॥
सुरा कृशानां पुष्ट्यर्थमनुपानं प्रशस्यते ।
कार्श्यार्थं स्थूलदेहानामनुशस्तं मधूदकम् ॥ ३१९ ॥
अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः ।
मद्यमांसोचितानाञ्च मद्यमेवानुशस्यते ॥ ३२० ॥

अथानुपानकर्म प्रवक्ष्यामि । अनुपानं तर्पयति प्रीणयति ऊर्जयति पर्याप्तिमभिनिर्वर्त्तयति भुक्तमवसादयति अन्नसङ्घातं भिनत्ति मार्दवमापादयति क्लेदयति जरयति सुखपरिणामितामाशुव्यवायिताञ्चाहारस्योपजनयतीति ॥ ३२१ ॥

तत्र श्लोकाः । अनुपानं हितं युक्तं तर्पयत्याशु मानवम् ।
सुखं पचति चाहारमायुषे च बलाय च ॥ ३२२ ॥
नोर्द्ध्वजत्रुगदाविष्टा न हिक्काश्वासकासिनः ।
न गीतभाष्याध्ययनप्रसक्ता नोरसि क्षताः ॥ ३२३ ॥
पिबेयुरुदकं भुक्त्वा तद्धि कण्ठोरसि स्थितम् ।
स्नेहमाहारजं हत्वा भूयो दोषाय कल्पते ॥ ३२४ ॥
अनुपानैकदेशोऽयमुक्तः प्रायोपयोगिकः ।

द्रव्यन्तु न हि निर्दिष्टुं शक्यं कात्स्न्येन नामभिः ॥ २२५ ॥
यथानामौषधं किञ्चिद्देशजानां वचो यथा ।
द्रव्यं तत्तत्तथा वाच्यमनुक्तमिह तद्भवेत् ॥ २२६ ॥
चराः शरीरावयवाः स्वभावो धातवः क्रिया ।
लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते ॥ २२७ ॥
चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधिः ।
जलजानूपजाश्चैव जलानूपचराश्च ये ॥ २२८ ॥
गुरुभक्ष्याश्च ये सत्त्वाः सर्वे ते गुरवः स्मृताः ।
लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः ॥ १२९ ॥
शरीरावयवाः सक्थिशिरःस्कन्धादयस्तथा ।
सक्थिमांसाद्गुरुः स्कन्धस्ततः क्रोडस्ततः शिरः ॥२३० ॥
वृषणौ चर्म मेढ्रञ्च श्रोणी वृक्कौ यकृद्गुदम् ।
मांसाद्गुरुतरं विद्याद् यथास्वं मध्यमस्थि च ॥ २३१ ॥
स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः ।
स्वभावाद्गुरवो माषा वराहमहिषास्तथा ॥ २३२ ॥
धातूनां शोणितादीनां गुरुं विद्याद्यथोत्तरम् ।
अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः ॥ २३३ ॥
गौरवे लिङ्गसामान्ये पुंसां स्त्रीणाञ्च लाघवम् ।
महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा ॥ २३४ ॥
गुरूणां लाघवं विद्यात् संस्कारात् सविपर्ययम् ।
व्रीहेर्लाजा यथा च स्युः सक्तूनां सिद्धपिण्डकाः ॥ २३५ ॥
अल्पादाने गुरूणाञ्च लघूनां चातिसेवने ।
मात्राकारणमुद्दिष्टं द्रव्याणां गुरुलाघवे ॥ २३६ ॥
गुरूणामल्पमादेयं लघूनां तृप्तिरिष्यते ।
मात्रामपेक्षते द्रव्यं मात्रा चाग्निमपेक्षते ॥ २३७ ॥
बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः ।

अनुपानेन्यगैर्याभिर्दीर्य्यति शाम्यतेऽन्यथा ॥ ३३८ ॥
गुरुलाघवचिन्तेयं प्रायेणाल्पबलान् प्रति।
मन्दकर्म्माननारोग्यान् सुकुमारान् सुखोचितान् ॥ ३३९ ॥
दीप्ताग्नयः खराहाराः कर्म्मनित्या महोदराः।
ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरु लाघवम् ॥ ३४० ॥
हिताभिर्जुहुयान्नित्यमन्तराग्निं समाहितः।
अनुपानसमिद्भिर्ना मात्राकालौ विचारयन् ॥ ३४१ ॥
आहिताग्निः सदा पथ्यान्यन्तराग्नौ जुहोति यः।
दिवसे दिवसे ब्रह्म जपत्यथ ददाति च।
नरं निःश्रेयसे युक्तं सात्म्यज्ञं पानभोजने ॥ ३४२ ॥
भजन्ते नामयाः केचिद्भाविनोऽप्यन्तराहते।
षट्त्रिंशच्च सहस्राणि रात्रीणां हितभोजनः ॥ ३४३ ॥
जीवत्यनातुरो जन्तुर्जितात्मा सम्मतः सतामिति।
तत्र श्लोकाः। अनुपानगुणाः सांग्रा वर्गा द्वादश निश्चिताः।
सगुणान्यन्नपानानि गुरुलाघवसंग्रहः ॥ ३४४ ॥
अनुपानविधावुक्तं तत्परीक्ष्यं विशेषतः।
प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति ॥ ३४५ ॥
वर्णप्रसादः सौस्वर्यं जीवितं प्रतिभा सुखम्।
तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम् ॥ ३४६ ॥
लौकिकं कर्म्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम्।
कर्म्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम् ॥ ३४७ ॥

इत्यन्नपानचतुष्के ऽन्नपानविधिर्नामाध्यायः।

## अष्टाविंशोऽध्यायः।

अथातो विविधाशितपीतीयमध्यायं व्याख्यास्यामः।

इति ह स्माह भगवानात्रेयः।

विविधमशितपीतलीढखादितं जन्तोर्हितमन्तरग्नि सन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानं कालवदनवस्थितसर्वधातुपाकमनुपहतसर्वधातूष्ममारुतस्रोतः केवलं शरीरमुपचयबलवर्णसुखायुषा योजयतीति शरीरधातूनूर्जयत् धातवो हि धात्वाहाराः प्रकृतिमनुवर्त्तन्ते॥ १॥

तत्राहारप्रसादाख्यो रसः किट्टञ्च मलाख्यमभिनिर्वर्त्तते किट्टात् मूत्रस्वेदपुरीषवातपित्तश्लेष्माणः कर्णाक्षिनासिकास्यलोमकूपप्रजननमलकेशश्मश्रुलोमनखादयश्चावयवाः॥ २॥

पुष्यन्ति त्वाहाररसात् रसरुधिरमांसमेदोऽस्थिमज्जशुक्रौजांसि पञ्चेन्द्रियद्रव्याणि धातुप्रसादसंज्ञकानि शरीरसन्धिबन्धपिच्छादयश्चावयवाः ते सर्व्व एव धातवो मलाख्याः प्रसादाख्याश्च रसमलाभ्यां पुष्यन्तः स्वं मानमनुवर्त्तन्ते॥ ३॥

यथा वयःशरीरम् एवं रसमलौ स्वप्रमाणावस्थितौ आश्रयस्य समधातोर्धातुसाम्यमनुवर्त्तयतो निमित्ततस्तु क्षीणातिवृद्धानां प्रसादाख्यानां धातूनां वृद्धिक्षयाभ्यामाहारमूलाभ्यां रसः साम्यमुत्पादयते चारोग्याय॥ ४॥

किट्टञ्च मलानामेवमेव। स्वमानातिरिक्ताः पुनरुत्सर्गिणः शीतोष्णपर्य्यायगुणैश्चोपचर्य्यमाणा मलाः शरीरधातुसाम्यकराः समुपलभ्यन्ते॥ ५॥

तेषान्तु मलप्रसादाख्यानां धातूनां स्रोतांस्ययनमुखानि तानि यथाविभागेन यथास्वं धातुना पूरयन्त्येवमिदं शरीरमशितपीतलीढखादितप्रभवम्। अशितलीढखादितप्रभवाश्चास्मिन् शरीरे व्याधयो भवन्ति॥ ६॥

हिताहितोपयोगविशेषास्त्वत्र शुभाशुभविशेषकरा भवन्ति इति ॥ ७ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच। दृश्यन्ते हि भगवन्! हितसमाख्यातमप्याहारमुपयुञ्जाना व्याधिमन्तश्चागदाश्च तथैवाहितसमाख्यातमेवं दृष्टे कथं हिताहितोपयोगविशेषात्मकं शुभाशुभविशेषमुपलभेमहीति ॥ ८ ॥

तमुवाच भगवानात्रेयः। न हिताहारोपयोगिनामग्निवेश! तन्निमित्ता व्याधयो जायन्ते। न च केवलं हिताहारोपयोगादेव सर्वं व्याधिभयमतिक्रान्तं भवति। सन्ति हि ऋतेऽपि हिताहारोपयोगादन्या रोगप्रकृतयः। तद्यथा:—

कालविपर्ययः प्रज्ञापराधः परिणामश्च शब्दस्पर्शरूपरसगन्धाश्चासात्म्या इति। ताश्च रोगप्रकृतयो रसान् सम्यगुपयुञ्जानं पुरुषमशुभेनोपपादयन्ति। तस्माद्धिताहारोपयोगिनोऽपि दृश्यन्ते व्याधिमन्तः। अहिताहारोपयोगिनां पुनः कारणतो न सद्यो दोषवान् भवत्यपचारो न हि सर्वाण्यपथ्यानि तुल्यदोषकराणि। न च सर्वे दोषास्तुल्यबला। न च सर्वाणि शरीराणि व्याधिक्षमत्वे समर्थानि। तदेव ह्यपथ्य देशकालसंयोग-वीर्यप्रमाणातियोगाद्भूयस्तरमपथ्यं सम्पद्यते। स एव दोषः संसृष्टयोनिर्विरुद्धोपक्रमो गम्भीरानुगतः प्राणायतनसमुत्थो मर्मोपघाती वा भूयान् कष्टतमः क्षिप्रकारितमश्च सम्पद्यते ॥ ९ ॥

शरीराणि चातिस्थूलानि अतिकृशानि अनिविष्टमांसशोणितास्थीनि दुर्बलानि असात्म्याहारोपचितान्यल्पाहाराण्यल्पसत्त्वानि वा भवन्त्यव्याधिसहानि ॥ १० ॥

विपरीतानि पुनर्व्याधिसहानि एभ्यश्चैवापथ्याहारदोषशरीरविशेषेभ्यो व्याधयो मृदवो दारुणाः क्षिप्रसमुत्थाश्चिरकारिणश्च भवन्ति ॥ ११ ॥

अतएव च वातपित्तश्लेष्माणः स्थानविशेषे प्रकुपिता व्याधिविशेषानभिनिर्वर्त्तयन्ति अग्निवेश! तत्र रसादिषु स्थानेषु प्रकुपितानां दोषाणां यस्मिन् यस्मिन् स्थाने ये ये व्याधयः सम्भवन्ति तांस्तान् यथावदनुव्याख्यास्यामः ॥ १२ ॥

अश्रद्धा चारुचिश्चास्यवैरस्यमरसज्ञता ।
हृल्लासो गौरवं तन्द्रा साङ्गमर्दो ज्वरस्तमः ॥ १३ ॥
पाण्डुत्वं स्रोतसां रोधः क्लैब्यं सादः कृशाङ्गता ।
नाशोऽग्नेरयथाकालं वलयः पलितानि च ।
रसप्रदोषजा रोगा वक्ष्यन्ते रक्तदोषजाः ॥ १४ ॥
कुष्ठवीसर्पपिडका रक्तपित्तमसृग् दरः ।
गुदमेढ्रास्यपाकश्च प्लीहा गुल्मोऽथ विद्रधी ॥ १५ ॥
नीलिका कामला व्यङ्गः पिप्लवस्तिलकालकाः ।
दद्रुश्चर्मदलं श्वित्रः पामा कोठास्रमण्डलम् ।
रक्तप्रदोषाज्जायन्ते शृणु मांसप्रदोषजान् ॥ १६ ॥
अधिमांसार्बुदं कीलगलशालूकशुण्डिकाः ।
पूतिमांसालजीगण्डगण्डमालोपजिह्विकाः ॥ १७ ॥
विद्यात् मांसाश्रयान् मेदःसंश्रयांस्तु प्रवक्ष्यते ।
निदानानि प्रमेहाणां पूर्वरूपाणि यानि च ॥ १८ ॥
अध्यस्थिदन्तदन्तास्थिभेदः शूलं विवर्णता ।
केशलोमनखश्मश्रुदोषाश्चास्थिप्रकोपजाः ॥ १९ ॥
रुक् पर्वणां भ्रमो मूर्च्छा दर्शनं तमसो मतः ।
अरुषां स्थूलमूलानां पर्वजानाञ्च दर्शनम् ॥ २० ॥
मज्जप्रदोषात् शुक्रस्य दोषात् क्लैब्यमहर्षणम् ।
रोगिणं क्लीवमल्पायुं विरूपं वा प्रजायते ॥ २१ ॥
न वा सञ्जायते गर्भः पतति प्रस्रवत्यपि ।
शुक्रं हि दुष्टं सापत्यं सदारं बाधते नरम् ॥ २२ ॥

इन्द्रियाणि समाश्रित्य प्रकुप्यन्ति यदा मलाः।
उपतापोपघाताभ्यां योजयन्तीन्द्रियाणि ते ॥ २३ ॥
स्नायौ शिराकण्डरयोर्दुष्टाः क्लिश्नन्ति मानवम्।
स्तम्भसङ्कोचखल्लीभिर्ग्रन्थिस्फुरणसुप्तिभिः ॥ २४ ॥
मलानाश्रित्य कुपिता भेददोषप्रदूषणम्।
दोषा मलानां कुर्वन्ति सङ्गोत्सर्गावतीव च ॥ २५ ॥
विविधादशितात् पीतादहिताल्लीढखादितात्।
भवन्त्येते मनुष्याणां विकारा य उदाहृताः ॥ २६ ॥
तेषामिच्छन्ननुत्पत्तिं सेवेत मतिमान् सदा।
हितान्येवाशितादीनि न स्युस्तज्जास्तथामयाः ॥ २७ ॥
रसजानां विकाराणां सर्वं लङ्घनमौषधम्।
विधिशोणितकेऽध्याये रक्तजानां भिषग्जितम् ॥ २८ ॥
मांसजानान्तु संशुद्धिः शस्त्रक्षाराग्निकर्म च।
अष्टौ निन्दितसंख्याते मेदोजानां चिकित्सितम् ॥ २९ ॥
अस्थ्याश्रयाणां व्याधीनां पञ्चकर्माणि भेषजम्।
वस्तयः क्षीरसर्पींषि तिक्तकोपहितानि च ॥ ३० ॥
मज्जाशुक्रसमुत्थानामौषधं स्वादुतिक्तकम्।
अन्नं व्यवायव्यायामौ शुद्धिः काले च मात्रया ॥ ३१ ॥
शान्तिरिन्द्रियजानान्तु त्रिमर्मीये प्रवक्ष्यते ॥ ३२ ॥
स्नाय्वादिजानां प्रशमो वक्ष्यते वातरोगिके।
नवेगान्धारणेऽध्याये चिकित्सासंग्रहः कृतः ॥ ३३ ॥
मलजानां विकाराणां सिद्धिश्चोक्ता क्वचित् क्वचित् ॥३४॥
व्यायामादूष्मणस्तैक्ष्ण्याद्धितस्यानवधारणात्।
कोष्ठाच्छाखा मला यान्ति द्रुतत्वान्मारुतस्य ॥ ३५ ॥
तत्रस्थाश्च विलम्बन्ते कदाचिन्नसमीरिताः।
नादेशकाले कुप्यन्ति भूयो हेतुप्रतीक्षिणः ॥ ३६ ॥

वृद्ध्याभिष्यन्दनात् पाकात् स्रोतोमुखविशोधनात् ।
शाखां मुक्त्वा मलाः कोष्ठं यान्ति वायोश्च निग्रहात् ॥३७॥
अजातानामनुत्पत्तौ जातानां विनिवृत्तये ।
रोगाणां यो विधिर्दृष्टः सुखार्थी तं समाचरेत् ॥ ३८ ॥
सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।
ज्ञानाज्ञानविशेषात् तु मार्गामार्गप्रवृत्तयः ॥ ३९ ॥
हितमेवानुरुध्यन्ते प्रसमीक्ष्य परीक्षकाः ।
रजोमोहावृतात्मानः प्रियमेव तु लौकिकाः ॥ ४० ॥
श्रुतं बुद्धिः स्मृतिर्दाक्ष्यं धृतिर्हितनिषेवणम् ।
वाग्विशुद्धिः शमो धैर्यमाश्रयन्ति परीक्षकम् ॥ ४१ ॥
लौकिकं नाश्रयन्त्येते गुणा मोहरजःश्रितम् ।
तन्मूला बहवश्चैव रोगाः शारीरमानसाः ॥ ४२ ॥
प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते ।
सन्धारयति वेगांश्च सेवते साहसानि च ॥ ४३ ॥
तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते ।
रज्यते न तु विज्ञाता विज्ञाने ह्यमलीकृते ॥ ४४ ॥
न रागान्नाप्यविज्ञानादाहारानुपयोजयेत् ।
परीक्ष्य हितमश्नीयाद्देहो ह्याहारसम्भवः ॥ ४५ ॥
आहारस्य विधावष्टौ विशेषा हेतुसंज्ञकाः ।
शुभाशुभसमुत्पत्तौ तान् परीक्ष्योपयोजयेत् ॥ ४६ ॥
परिहार्याण्यपथ्यानि सदा परिहरन् नरः ।
भवत्यनृणतां प्राप्तः साधूनामिह पण्डितः ॥ ४७ ॥
यत् तु रोगसमुत्थानमशक्यमिह केनचित् ।
परिहर्तुं न तत् प्राप्य शोचितव्यं मनीषिणा ॥ ४८ ॥
तत्र श्लोकाः । आहारसम्भवं वस्तु रोगाश्चाहारसम्भवाः ।
हिताहितविशेषाच्च विशेषः सुखदुःखयोः ॥ ४९ ॥

महत्त्वे चामहत्त्वे च दुःखानां देहसत्त्वयोः ।
विशेषो रोगसङ्घाश्च धातुजा ये पृथक् पृथक् ॥ ५० ॥
तेषाञ्चैव प्रशमनं कोष्ठाच्छाखा उपेत्य च ।
दोषा यथा प्रकुप्यन्ति शाखाभ्यः कोष्ठमेत्य च ॥ ५१ ॥
प्राज्ञाज्ञयोर्विशेषश्च स्वस्थातुरहितञ्च यत् ।
विविधाशितपीतीये तत् सर्वं सम्प्रकाशितम् ॥ ५२ ॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सूत्रस्थाने अन्नपानचतुष्के विविधाशितपीतीयो नाम अष्टाविंशोऽध्यायः समाप्तः ।

---

## एकोनत्रिंशोऽध्यायः ।

### दशप्राणायतनीयः ।

अथातो दशप्राणायतनीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः ।
शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम् ॥ १ ॥
तानीन्द्रियाणि विज्ञानं चेतनाहेतुमामयम् ।
जानीते यः स विद्वान् वै प्राणाभिसर उच्यते इति ॥ २ ॥

द्विविधास्तु खलु भिषजो भवन्ति अग्निवेश । प्राणानामेकेऽभिसरा हन्तारो रोगाणां, रोगाणामेकेऽभिसरा हन्तारः प्राणानामिति ॥ ३ ॥

एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच भगवन् । ते कथमस्माभिर्वेदितव्या भवेयुरिति ॥ ४ ॥

भगवानुवाच य इमे कुलीनाः पर्यवदातश्रुताः परिदृष्टकर्माणो दक्षाः शुचयो जितहस्ता जितात्मानः सर्वोपकरणवन्तः सर्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञास्ते प्राणिनामभिसरा हन्तारो रोगाणां तथाविधा हि केवले शरीरज्ञाने शरीराभि-

निवृत्तिज्ञाने प्रकृतिविकारज्ञाने च निःसंशयाः सुखसाध्यकृच्छ्रसाध्ययाप्यप्रत्याख्येयानाञ्च रोगाणां समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषविज्ञाने व्यपगतसन्देहाः त्रिविधस्यायुर्वेदसूत्रस्य ससंग्रहव्याकरणस्य सत्रिविधौषधग्रामस्य प्रवक्तारः ॥ ५ ॥

पञ्चत्रिंशतश्च मूलफलानां चतुर्णां महास्नेहानां पञ्चानां लवणानामष्टानाञ्च मूत्राणामष्टानाञ्च क्षीराणां क्षीरत्वग्वृक्षाणाञ्च षण्णां शिरोविरेचनादेश्च पञ्चकर्माश्रयस्यौषधगणस्याष्टाविंशतेश्च यवागूनां द्वात्रिंशतश्च चूर्णप्रदेहानां षण्णां विरेचनशतानां पञ्चानाञ्च कषायशतानामिति स्वस्थवृत्ते च *भोजनपाननियमस्थानचङ्क्रमणशय्यासन-मात्रा-द्रव्याञ्जनधूमनावनाभ्यञ्जन-परिमार्जनवेगविधारणाविधारण-व्यायामसात्म्येन्द्रियपरीक्षोपक्रमसद्वृत्तकुशलाः* ॥ ६ ॥

चतुष्पादोपगृहीते च भेषजे षोडशकले सविनिग्रहे सत्रिपर्यषणे सवातकलाकलज्ञाने व्यपगतसन्देहाः। चतुर्विधस्य च स्नेहस्य चतुर्विंशत्युपनयनस्य उपकल्पनीयोक्त चतुःषष्टिपर्यन्तस्य व्यवस्थापयितारो बहुविधविधान-युक्तानाञ्च स्नेहस्वेद्यवम्यविरेच्यौषधोपचाराणां कुशलाः। शिरोरोगादेश्च दोषांशविकल्पजस्य व्याधिसंग्रहस्य सक्षयपिडकाविद्रधेः त्रयाणाञ्च शोफानां बहुविधशोफानुबन्धानामष्टचत्वारिंशतश्च रोगाधिकरणानां चत्वारिंशदधिकस्य च नानात्मजस्य व्याधिशतस्य। तथा विगर्हितातिस्थूलातिकृशानां सहेतुलक्षणोपक्रमाणां स्वप्नस्य च हिताहितस्यास्वप्नातिस्वप्नस्य च सहेतूपक्रमस्य षण्णाञ्च लङ्घनादीनामुपक्रमाणां सन्तर्पणापतर्पणजानां रोगाणां सरूपप्रशमनानां शोणितजानाञ्च व्याधीनां मदमूर्च्छायसंन्यासानाञ्च सकारणरूपौषधानां कुशलाः। कुशलाश्चाहारविधिविनिश्चयस्य प्रकृत्या हिततमानामाहारविकाराणामग्र्यसंग्रहस्यासवानाञ्च चतुरशीतेः द्रव्यगुणविनिश्चयस्य

रसानुरससंश्रयस्य सविकल्पकवैरोधिकस्य द्वादशवर्गाश्रयस्य चान्नपानस्य सगुणप्रभावस्य सानुपानगुणस्य विविधस्यान्नसंग्रहस्य आहारगतेश्च हिताहितोपयोगविशेषात्मकस्य च शुभाशुभविशेषस्य धात्वाश्रयाणाञ्च रोगाणामौषधसंग्रहाणाञ्च दशानाञ्च प्राणायतनानां यञ्च वक्ष्याम्यर्थे दशमहामूलीये त्रिंशत्तमाध्याये तत्र च कृत्स्नस्य तन्त्रोद्देशलक्षणस्य तन्त्रस्य च ग्रहणधारणविज्ञानप्रयोगकर्मकार्य्यकालकर्तृकरणकुशलाः॥ ७॥

कुशलाश्च स्मृतिमतिशास्त्रयुक्तिज्ञानस्यात्मनः शीलगुणैरविसम्वादनेन सम्पादनेन सर्वप्राणिषु च चेतसो मैत्रस्य मातृपितृभ्रातृबन्धुवदेवं युक्ता भवन्ति अग्निवेश! प्राणानामभिसरा हन्तारो रोगाणामिति॥ ८॥

अतो विपरीता रोगाणामभिसरा हन्तारः प्राणिनामिति। भिषक्छद्मप्रतिच्छन्नाः कण्टकभूता लोकस्य प्रतिरूपिकसधर्म्माणो राज्ञां प्रमादाच्चरन्ति राष्ट्राणि। तेषामिदं विशेषविज्ञानमत्यर्थं वैद्यवेशेन श्लाघमाना विशिखान्तरमनुचरन्ति कर्म्मलोभात्। श्रुत्वा च कस्यचिदातुर्य्यमभितः परिपतन्ति सश्रवणे चास्यात्मनो वैद्यगुणानुच्चैर्वदन्ति यश्चास्य वैद्यः प्रतिकर्म्म करोति तस्य च दोषान् मुहुर्मुहुरुदाहरन्ति आतुरमित्राणि च प्रहर्षणोपजापोपसेवाभिरिच्छन्ति आत्मीकर्त्तुं मल्पेच्छतास्वात्मनः ख्यापयन्ति कर्म्म चासाद्य मुहुर्मुहुरवलोकयन्ति दाक्ष्येणाज्ञानमात्मनः छादयितुकामा व्याधिञ्चापवर्त्तयितुमशक्नुवन्तो व्याधितमेवानुपकरणमपचारिकमनात्मवन्तमुद्दिशन्ति अन्तर्गतञ्चाभिसमीक्ष्यान्यमाश्रयन्ति देशमपदेशमात्मन: कृत्वा। प्राकृतजनसन्निपाते चात्मनः कौशलमकुशलवद्वर्णयन्ति अधीरवञ्च धैर्य्यमपवदन्ति धीराणाम्। विद्वज्जनसन्निपातञ्चाभिसमीक्ष्य प्रतिभयमिव कान्तारमध्वगाः परिहरन्ति दूरात्॥ ९॥

यश्चैषां कश्चित् सूत्रावयव उपयुक्तस्तं प्रकृते प्रकृतान्तरे सततमुदाहरन्ति न चानुयोगमिच्छन्ति अनुयोक्तुं वा मृत्यो- चानुयोगादुद्विजन्ते। न चैषामाचार्यः शिष्यो वा सब्रह्मच- वैवादिको वा कश्चित् प्रज्ञायते इति ॥ १० ॥

भिषक्छद्म प्रविश्यैवं व्याधितांस्तर्पयन्ति ये।
वितंसमिव संश्रित्य वने शाकुन्तिको द्विजान्।
श्रुतदृष्टक्रियाकालमात्राज्ञानबहिष्कृताः।
वर्जनीया हि ते मृत्योश्चरन्त्यनुचरा भुवि ॥ ११ ॥
वृत्तिहेतोर्भिषङ्मानपूर्णान् मूर्खविशारदान्।
वर्जयेदातुरो विद्वान् सर्पास्ते पीतमारुताः ॥ १२ ॥
ये तु शास्त्रविदो दक्षाः शुचयः कर्मकोविदाः।
जितहस्ता जितात्मानः तेभ्यो नित्यकृतं नमः ॥ १३ ॥

तत्र श्लोकः। दशप्राणायतनिके श्लोकस्थानार्थसंग्रहः।
द्विविधा भिषजश्चोक्ताः प्राणस्यायतनानि च ॥ १४ ॥

इति दशप्राणायतनीयो नामोनत्रिंशोऽध्यायः समाप्तः।

---

## त्रिंशत्तमोऽध्यायः।

अथातोऽर्थेदशमहामूलीयमध्यायं व्याख्यास्यामः।
इति ह स्माह भगवानात्रेयः॥

अर्थे दश महामूलाः समासक्ता महाफलाः।
महच्चार्थश्च हृदयं पर्यायैरुच्यते बुधैः ॥ १ ॥
षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम्।
आत्मा च सगुणश्चेतश्चिन्त्यञ्च हृदि संश्रितम् ॥ २ ॥
प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते।
गोपानसीनामागारकर्णिकेवार्थचिन्तकैः ॥ ३ ॥
तस्योपघातान्मूर्च्छायं भेदान्मरणमृच्छति।

यद्धि तत् स्पर्शविज्ञानं धारि तत् तत्र संश्रितम् ॥ ४ ॥
तत्परस्यौजसः स्थानं तत्र चैतन्यसंग्रहः।
हृदयं महदर्थश्च तस्मादुक्तं चिकित्सकैः ॥ ५ ॥
तेन मूलेन महता महामूला मता दश।
ओजोवहाः शरीरे था विधम्यन्ते समन्ततः ॥ ६ ॥
येनौजसा वर्त्तयन्ति प्रीणिताः सर्वदेहिनः।
यदृते सर्वभूतानां जीवितं नावतिष्ठते ॥ ७ ॥
यत् सारमादौ गर्भस्य योऽसौ गर्भरसाद्रसः।
संवर्द्धमानं हृदयं समाविशति यत् पुरा ॥ ८ ॥
यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितम्।
यः शरीररसः स्नेहः प्राणा यत्र प्रतिष्ठिताः ॥ ९॥
तत्फला विविधा वाताः फलन्तीति महाफलाः।
ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात् सिराः ॥ १० ॥
तन्महत्ता महामूलास्तच्चौजः परिरक्षता।
परिहार्य्या विशेषेण मनसो दुःखहेतवः ॥ ११ ॥
हृद्यं यत् स्याद्यदौजस्यं स्रोतसां यत्प्रसादनम्।
तत्तत् सेव्यं प्रयत्नेन प्रशमो ज्ञानमेव च ॥ १२ ॥

अथ खलु एकं प्राणवर्द्धनानामुत्कृष्टतममेकं बलवर्द्धनानामेकं बृंहणानामेकं नन्दनानाम् एकं हर्षणानामेकमयनानामिति। तत्राहिंसा प्राणिनां प्राणवर्द्धनानामुत्कृष्टतमम्। वीर्य्यं बलवर्द्धनानाम्। विद्या बृंहणानाम्। इन्द्रियजयो नन्दनानाम्। तत्त्वावबोधो हर्षणानाम्। ब्रह्मचर्य्यमयनानामित्यायुर्वेदविदो मन्यन्ते ॥ १३ ॥

तत्रायुर्वेदविदस्तन्त्रस्थानाध्यायप्रश्नानां पृथक्त्वेन वाक्यशो वाक्यार्थशोऽर्थावयवशश्च प्रवक्तारो मन्तव्याः ॥ १४ ॥

अत्राह कथं तन्त्रादीनि वाक्यशो वाक्यार्थशोऽवयवशश्चेति

उक्तानि भवन्ति, अत्रोच्यते तन्त्रमार्षं कार्त्स्न्येन यथास्थानमुच्यमानं वाक्यशो भवत्युक्तम्। बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं वाग्भिर्वा ससमास-प्रतिज्ञाहेतूदाहरणोपनयनि-गमनयुक्ताभिः त्रिविधशिष्यबुद्धिगम्याभिरुच्यमानं वाक्यार्थशो भवत्युक्तम्। तन्त्रनियतानामर्थदुर्गाणां पुनर्भावनैरुक्तमर्थावयवशो भवत्युक्तम्। तत्र चेत् प्रष्टारः स्युः चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्ति आयुर्वेदविदः। किमायुः कस्मादायुर्वेदः किंचायमायुर्वेदः शाश्वतोऽशाश्वत इति। कानि चास्याङ्गानि कैश्चायमध्येतव्यः किमर्थश्चेति॥ १५॥

तत्र भिषजा पृष्टेनैवंचतुर्णामृक्सामयजुरथर्ववेदानां आत्मनोऽथर्ववेदे भक्तिरादेश्या वेदो ह्याथर्वणः स्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रादिपरिग्रहाच्चिकित्सां प्राह। चिकित्सा चायुषो हितायोपदिश्यते वेदश्चोपदिश्य आयुर्वाच्यम्। तत्र आयुश्चेतनानुवृत्तिर्जीवितमनुबन्धो धारि चेत्येकोऽर्थः तत्र आयुर्वेदयतीत्यायुर्वेदः कथमित्युच्यते स्वलक्षणतः सुखासुखतो हिताहिततः प्रमाणाप्रमाणतश्च। यतश्चायुष्यानायुष्याणि च द्रव्यगुणकर्माणि वेदयत्यतोऽप्यायुर्वेदः। तत्र आयुष्याणि अनायुष्याणि च द्रव्यगुणकर्माणि केवलेनोपदेक्ष्यन्ते॥ १६॥

तस्य तत्रायुरुक्तं स्वलक्षणतो यथावदिहैव तत्र शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य विशेषेण यौवनवतः समर्थानुगतबलवीर्ययशःपौरुषपराक्रमस्य ज्ञानविज्ञानेन्द्रियेन्द्रियार्थबलसमुदाये वर्तमानस्य परमर्द्धिरुचिरविविधोपभोगस्य समृद्धसर्वारम्भस्य यथेष्टविचारिणः सुखमायुरुच्यते असुखमतो विपर्ययेण॥ १७॥

हितैषिणः पुनर्भूतानां परस्वात् उपरतस्य सत्यवादिनः शमपरस्य परीक्ष्यकारिणोऽप्रमत्तस्य त्रिवर्गं परस्परेणानुपहतमुपसेवमानस्य पूजार्हसम्पूजकस्य ज्ञानविज्ञानोपशमशीलस्य वृद्धो-

पसेविनः सुनियतरागेर्ष्यामदमानवेगस्य सततं विविधप्रदान-परस्य तपोज्ञानप्रशमनित्यस्य अध्यात्मविदस्तत्परस्य लोक-मिमञ्चामुञ्चावेक्षमाणस्य स्मृतिमतिमतो हितमायुरुच्यते। अहितमतो विपर्य्ययेण ॥ १८ ॥

प्रमाणमायुषस्त्वर्थेन्द्रियमनोबुद्धिचेष्टादीनां खेनाभिभूतस्य विकृतिलक्षणेरुपलभ्यते अनिमित्तैरिदमस्मात् क्षणान्मुहूर्त्ता-द्दिवसात् त्रिपञ्चदशसप्तदशद्वादशाहात् पक्षात् मासात् षण्मा-सात् संवत्सराद्वा स्वभावमापत्स्यते इति। तत्र स्वभावः प्रवृत्ते-रुपरमो मरणमनित्यतानिरोध इत्येकोऽर्थः। इत्यायुषः प्रमाण-मतो विपरीतमप्रमाणम् ॥ १८ ॥

अरिष्टाधिकारे देहप्रकृतिलक्षणमधिकृत्य चोपदिष्टमायुषः प्रमाणमायुर्वेदे। प्रयोजनञ्चास्य स्वस्थस्य स्वास्थ्यरक्षणमातुरस्य विकारप्रशमनम्। सोऽयमायुर्वेदः शाश्वतो निर्दिश्यतेऽनादि-त्वात् स्वभावसंसिद्धलक्षणत्वाद्भावस्वभावनित्यत्वाच्च। न हि नाभूत् कदाचिदायुषः सन्तानो बुद्धिसन्तानो वा शाश्वतश्चायुषो वेदिता अनादिमच्च सुखदुःखं सद्रव्यहेतुलक्षणमपरापरयोगात्ते्य चार्थसंग्रहो विभाव्यते। आयुर्वेदलक्षणमिति यत् पुनः गुरुलघु-शीतोष्णस्निग्धरूक्षादीनाञ्च द्रव्याणां सामान्यविशेषाभ्यां वृद्धि-ह्रासौ यथोक्तं गुरुभिरभ्यस्यमानैर्गुरूणामुपचयो भवत्यपचयो लघूनाम् एवमेवेतरेषामित्येष भावस्वभावो नित्यः। स्वस्वलक्षणञ्च द्रव्याणां पृथिव्यादीनां सन्ति तु द्रव्याणि गुणाश्च नित्यानित्याः॥२०

*न हि आयुर्वेदस्याभूत्वोत्पत्तिरुपलभ्यते।* अन्यत्रावबोधोप-देशाभ्यामेतद्वै द्वयमधिकृत्य उत्पत्तिमुपदिशन्त्येके स्वाभाविक-ञ्चास्य लक्षणमभिकृत्य यदुक्तम् इह चाद्ये अध्याये यथाग्नेरौष्ण्य-मपां द्रवत्वं भावस्वभावनित्यत्वमपि चास्य यथोक्तं गुरुभिरभ्यस्य-मानैर्गुरूणामुपचयो भवत्यपचयो लघूनामित्येवमादि ॥ २१ ॥

तस्यायुर्वेदस्य अङ्गानि अष्टौ ।

तद्यथा । कायचिकित्सा शालाक्यं शल्यापहर्तृकं विषगरवैरोधिकप्रशमनं भूतविद्या कौमारभृत्यकं रसायनानि वाजीकरणमिति । स चाध्येतव्यो ब्राह्मणराजन्यवैश्यैः । तत्रानुग्रहार्थं प्राणिनां ब्राह्मणैरात्मरक्षार्थं राजन्यैर्वृत्त्यर्थं वैश्यैः सामान्यतो वा धर्मार्थकामपरिग्रहार्थं सर्वैः । तत्र च यदध्यात्मविदां धर्मपथस्थानां धर्मप्रकाशानां वा मातृपितृभ्रातृबन्धुगुरुजनस्य वा विकारप्रशमने प्रयत्नवान् भवति । यच्चायुर्वेदोक्तमध्यात्ममनुध्यायत्यवैत्यधीते वा सोऽप्यस्य परो धर्मः ॥ १२ ॥

या पुनरीश्वराणां वसुमतां वा सकाशात् सुखोपहारनिमित्ता भवत्यर्थलवावाप्तिरवेक्षणञ्च या च स्वपरिगृहीतानां प्राणिनामातुर्य्याद् रक्षाचमत्वस्यार्थः । यत् पुनरस्य विद्वद्ग्रहणं यशः शरण्यत्वं या च सम्मानशुश्रूषा यदिष्टानां जनानामारोग्यमाधत्ते सोऽस्य काम इति ॥ २३ ॥

यथा प्रश्नमुक्तमशेषेण । अथ भिषगादित एव भिषजा प्रष्टव्य इति अष्टविधम् । तद्यथा,—

तन्त्रं तन्त्रार्थं स्थानानि स्थानार्थानध्यायानध्यायार्थान् प्रश्नान् प्रश्नार्थांश्चेति ॥ २४ ॥

पृष्टे चैतद्व्याख्येयमशेषेण वाक्यशो वाक्यार्थशोऽर्थावयवशश्चेति ॥ २५ ॥

तत्रायुर्वेदः शाखा विद्या सूत्रं ज्ञानं शास्त्रं लक्षणं तन्त्रमित्यनर्थान्तरम् । तन्त्रार्थः पुनः स्वलक्षणेनोपदिष्टः स चार्थः प्रकरणैर्विभाव्यमानो भूय एव शरीरवृत्तिहेतुव्याधिकर्मकार्यकालकर्तृकरणविधिविनिश्चयोद्देशप्रकरणाः तानि च प्रकरणानि केवलेनोपदेक्ष्यन्ते तन्त्रेण ॥ २६ ॥

तत्राष्टौ स्थानानि । तद्यथा,—

श्लोक-निदान विमान-शारीरेन्द्रिय-चिकित्सित-कल्प-सिद्धि

स्थानानि। तत्र त्रिंशदध्यायकं श्लोकस्थानम्। अष्टाध्यायकानि निदानविमानशरीरस्थानानि। द्वादशकमिन्द्रियाणाम्। त्रिंशकं चिकित्सितानाम्। द्वादशके कल्पसिद्धिस्थाने इति ॥२७॥

भवति चात्र।

द्वात्रिंशके द्वादशकात्रयञ्च त्रीण्यष्टकान्येषु समासिरुक्ता।
श्लोकौषधारिष्टविकल्पसिद्धिनिदानमानाश्रयसंज्ञकेषु ॥२८॥
स्वे स्वे स्थाने यथास्वञ्च स्थानार्थं उपदेक्ष्यते।
सत्रिंशमध्यायशतं शृणु नाम क्रमागतम् ॥ २९ ॥
दीर्घञ्जीवोऽप्यपामार्गतण्डुलारग्वधादिकौ।
षड्विरेकाश्रयश्चेति चतुष्को भेषजाश्रयः ॥ ३० ॥
मात्रातस्याशितीयौ च न वेगान् धारणं तथा।
इन्द्रियोपक्रमश्चेति चत्वारः स्वास्थ्यवृत्तिकाः ॥ ३१ ॥
खुड्डाकश्च चतुष्पादो महांस्तिस्रैषणस्तथा।
सह वातकलाख्येन विद्यान्नैर्देशिकान् बुधः ॥ ३२ ॥
स्नेहनस्वेदनाध्यायावुभौ यश्चोपकल्पनः।
चिकित्साप्रभृतश्चैव सर्वा एवोपकल्पना ॥ ३३ ॥
कियन्तःशिरसीयश्च त्रिशोफाष्टोदरादिकौ।
रोगाध्यायो महांश्चैव रोगाध्यायचतुष्टयम् ॥ ३४ ॥
अष्टौ निन्दितसंख्यातस्तथा लङ्घनतर्पणौ।
विधिशोणितकश्चेति व्याख्यातास्तत्र योजनाः ॥ ३५ ॥
यज्जःपुरुषकः स्यातो भद्रकाप्योऽन्नपानिकौ।
विविधाशितपीतश्च चत्वारोऽन्नाविनिश्चये ॥ ३६ ॥
दशप्राणायतनिकस्तथार्थे दशमूलिकः।
द्वावेतौ प्राणदेहार्थौ प्रोक्तौ वैद्यगुणाश्रयौ ॥ ३७ ॥
औषधस्वस्थनिर्देशकल्पनारोगयोजनाः।
चतुष्काः षट् क्रमेणोक्ताः सप्तमश्चान्नपानिकः ॥ ३८ ॥

द्वौ चान्यौ संग्रहाध्यायाविति त्रिंशकमर्थवत् ।
श्लोकस्थानं समुद्दिष्टं तन्त्रस्यास्य शिरः शुभम् ॥ ३९ ॥
चतुष्काणां महार्थानां स्थानेऽस्मिन् सङ्ग्रहः कृतः ।
श्लोकार्थः संग्रहार्थश्च श्लोकस्थानमतः स्मृतः ॥ ४० ॥
ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः ।
शोषोन्मादनिदाने च स्यादपस्मारिणश्च यत् ॥ ४१ ॥
इत्यध्यायाष्टकमिदं निदानस्थानमुच्यते ।
रसेषु त्रिविधे कुक्षौ ध्वंसे जनपदस्य च ॥ ४२ ॥
त्रिविधे रोगविज्ञाने स्रोतःस्वपि च वर्त्तते ।
रोगानीके व्याधिरूपे रोगाणाञ्च भिषग्जिते ॥ ४३ ॥
अष्टौ विमानान्युक्तानि मानार्थानि महर्षिणा ।
कतिधापुरुषीयञ्च गोत्रेणातुल्यमेव च ॥ ४४ ॥
खुड्डीका महती चैव गर्भावक्रान्तिरुच्यते ।
पुरुषस्य शरीरस्य विचयौ द्वौ विनिश्चितौ ॥ ४५ ॥
शरीरसंख्या सूत्रञ्च जातेरष्टम उच्यते ।
इत्युद्दिष्टानि मुनिना शारीराण्यविसुना ॥ ४६ ॥
वर्णस्वरीयं पुष्पाख्यस्तथैव परिमर्षणः ।
तथैव चेन्द्रियानीकः पौर्वरूपकमेव च ॥ ४७ ॥
कतमानि शरीरीयः पन्नरूपोऽप्ययावाक्शिराः ।
यस्य श्यावनिमित्तञ्च सद्योमरण एव च ॥ ४८ ॥
अणुज्योतिरिति ख्यातस्तथा गोमयचूर्णवान् ।
द्वादशाध्यायकं स्थानमिन्द्रियाणां प्रकीर्त्तितम् ॥ ४९ ॥
अभयामलकीयञ्च प्राणकामीयमेव च ।
करप्रचितिकं वेदसमुत्थानं रसायनम् ॥ ५० ॥
संयोगशरमूलीयमासक्षीरकं तथा ।
माषपर्णभृतीयञ्च पुमान् जातबलादिकम् ॥ ५१ ॥

इति सर्वं यथाप्रश्नमष्टकं सम्प्रकाशितम्।
कार्त्स्न्येन चोक्तस्तन्त्रस्य संग्रहः सुविनिश्चितः॥ ६५॥
सन्ति पाखण्डविकोत्पाताः संक्षोभं जनयन्ति ये।
वर्त्तकानामिवोत्पाताः सहसैव विभाविताः।
तस्मात् तान् पूर्वसंजल्पे सर्वत्राष्टकमादिशेत्॥ ६६॥
परापरपरीक्षार्थं नात्र शास्त्रविदां बलम्।
शब्दमात्रेण तन्त्रस्य केवलस्यैकदेशिकाः।
भ्रमन्त्यल्पबलास्तन्त्रे ज्याशब्देनैव वर्त्तकाः॥ ६७॥
पशुः पशूनां दौर्बल्यात् कश्चिन्मध्ये वृकायते।
स सत्यं वृकमासाद्य प्रकृतिं भजते पशुः॥ ६८॥
तद्वदज्ञोऽज्ञमध्यस्थः कश्चिन्मौखर्य्यसाधनः।
स्थापयत्याप्तमात्मानमाप्तन्त्वासाद्य भिद्यते॥ ६९॥
बभ्रुर्गूढ इवोर्णाभिरबुद्धिरबहुश्रुतः।
किं वै वक्ष्यति संजल्पे कुण्डभेदी जडो यथा॥ ७०॥
सद्वृत्तैर्न विगृह्णीयाद्भिषगल्पश्रुतैरपि।
हन्यात् प्रश्नाष्टकेनादावितरांस्त्वाप्तमानिनः॥ ७१॥
दम्भिनो मुखरा ह्यज्ञाः प्रभूता बद्धभाषिणः॥ ७२॥
प्रायः प्रायेण सुमुखा सन्तो युक्ताल्पभाषिणः।
तत्त्वज्ञानप्रकाशार्थमहङ्कारमनाश्रिताः॥ ७३॥
स्वल्पाधाराज्ञमुखरान् मर्षयेयुर्न विवादिनः।
परो भूतेष्वनुक्रोशस्तत्त्वज्ञाने परा दया॥ ७४॥
येषां तेषामसद्वादनिग्रहे निरता मतिः।
असत्पक्षाक्षणित्वार्तिदम्भपारुष्यसाधनाः॥ ७५॥
भवन्त्यनाप्ताः स्वे तन्त्रे प्रायः परविकत्थनाः।
तत्कान्पाशसदृशान् वर्जयेच्छास्त्रदूषकान्॥ ७६॥
प्रशमज्ञानविज्ञानपूर्णाः सेव्या भिषक्तमाः।

ग्रहमात्रं चिकित्सायाः चिकित्सितेषु चोत्तरकालं यथोद्दिष्टं विकारानुव्याख्यास्यामः ॥ ३ ॥

इह खलु ज्वर एवादौ विकाराणामुपदिश्यते। तत् प्रथमत्वात् शरीराणाम्। अथ खलु अष्टाभ्यः कारणेभ्यो ज्वरः सञ्जायते मनुष्याणां तद्यथा वातात् पित्तात् कफाद्वातपित्ताभ्यां पित्तश्लेष्मभ्यां वातश्लेष्मभ्यां वातपित्तश्लेष्मभ्यः आगन्तोरष्टमात् कारणात् तस्य निदानपूर्वरूपलिङ्गोपचयविशेषाननुपदेक्ष्यामः। तत् यथा रूक्षलघुशीतव्यायाम-वमनविरेचनास्थापन-शिरोविरेचनातियोग-वेगसन्धारणानशनाभिघातव्यवायोद्वेगशोकशोणितातिसेकजागरणविषमशरीरन्यासेभ्योऽतिसेवितेभ्यो वायुः प्रकोपमापद्यते। स यदा प्रकुपितः प्रविश्यामाशयमुष्मणः स्थानमुष्मणा सह मिश्रीभूत आद्यमाहारपरिणामधातुं रसनामानमन्वेत्य रसस्वेदवहानि च स्रोतांसि च पिधाय अग्निं उपहत्य पक्तिस्थाना दुष्मार्णं बहिः तस्य केवलं शरीरमनुपद्यते तदा ज्वरमभिनिर्वर्त्तयति तस्येमानि लिङ्गानि भवन्ति। तद्यथा विषमारम्भविसर्गित्वमूष्मणो वैषम्यं वेगतनुभायानवस्थानानि ज्वरस्य जरणान्ते दिवसान्ते घर्मान्ते वा ज्वराभ्यागमनमभिवृद्धिर्वा ज्वरस्य विशेषेण परुषारुणवर्णत्वं नखनयनवदनमूत्रपुरीषत्वचामत्यर्थं क्लिष्टीभावश्चानेकविधोपमाश्चलाचलाश्च वेदनाः तेषां तेषामङ्गावयवानाम्। तद्यथा पादयोः सुप्तता पिण्डिकयोरुद्वेष्टनं जानुनोः केवलानाञ्च सन्धीनां विश्लेषणमूर्वोः सादः कटीपार्श्वपृष्ठस्कन्ध बाह्वंसोरसाञ्च भग्नरुग्णमृदितमथितचटितावपीडितावतुन्नत्वमिव हन्वोरप्रसिद्धिः स्वनश्च कर्णयोः शङ्खयोर्निस्तोदः कषायास्यत्वमास्यवैरस्यं वा मुखतालुकण्ठशोषः पिपासाहृदयग्रहः शुष्कच्छर्दिः शुष्ककासः क्षवथूद्गारविनिग्रहोऽन्नरसखेदः प्रसेकारोचकाविपाकाः विषादविजृम्भाविनामवेपथुश्रम-भ्रम-प्रलापजागरणलोमहर्षदन्तहर्षा-

# प्रथमोऽध्यायः ।

## अथातो निदानस्थानं लिख्यते।

अथातो ज्वरनिदानं व्याख्यास्याम ।

इति ह स्माह भगवान् आत्रेयः ।

इह खलु हेतुर्निमित्तमायतनं कर्त्ता कारणं प्रत्ययः समुत्थानं निदानमित्यनर्थान्तरम् । तत्त्रिविधम् असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति । अतस्त्रिविधविकल्पा व्याधयः प्रादुर्भवन्त्याग्नेयसौम्यवायव्याः द्विविधाश्चापरे राजसास्तामसाश्च । तत्र व्याधिरामयो गद आतङ्को यक्ष्मा ज्वरो विकार इत्यनर्थान्तरम् । तस्योपलब्धिर्निदानपूर्वरूपलिङ्गोपशयसम्प्राप्तितश्च । तत्र निदानं कारणमित्युक्तमग्रे पूर्वरूपं प्रागुत्पत्तिलक्षणं व्याधेः । प्रादुर्भूतलक्षणं पुनर्लिङ्गं तत्र लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरम् अस्मिन्नर्थे । उपशयः पुनर्हेतुव्याधिविपरीतानां विपरीतार्थकारिणाञ्चौषधाहारविहाराणां उपयोगः सुखानुबन्धः । सम्प्राप्तिर्जातिरागतिरित्यनर्थान्तरं व्याधेः सा संख्या प्राधान्यविधिविकल्पबलकालविशेषैर्भिद्यते । संख्या यथाष्टौ ज्वराः पञ्चगुल्माः सप्त कुष्ठान्येवमादि । प्राधान्यं पुनर्दोषाणां तरतमयोगेनोपलभ्यते तत्र द्वयोस्तरस्त्रिषु तम इति । विधिर्नाम द्विविधा व्याधयो निजागन्तुभेदेन त्रिविधास्त्रिदोषभेदेन चतुर्विधाः साध्यासाध्यमृदुदारुणभेदेन पृथक् । विकल्पो नाम समवेतानां पुनर्दोषाणामंशांशबलविकल्पोऽस्मिन्नर्थे । बलकालविशेषः पुनर्व्याधीनामृत्वहोरात्राहारकालविधिनियतो भवति । तस्माद्व्याधीन् भिषगनुपहतसत्त्वबुद्धिर्हेत्वादिभिर्भावैर्यथावदनुबुध्येत । इत्यर्थसंग्रहो निदानस्थानस्योद्दिष्टः भवति तं विस्तरेण भूयः परमतोऽनुव्याख्यास्यामः । तत्र प्रथम एव तावदाद्यास्लोभाभिद्रोहकोपप्रभवानष्टौ व्याधीन्निदानपूर्वेण क्रमेण अनुव्याख्यास्यामः । तथा सूत्र-

संग्रहमात्रं चिकित्सायाः चिकित्सितेषु चोत्तरकालं यथोद्दिष्टं विकाराननुव्याख्यास्यामः ॥ १ ॥

इह खलु ज्वर एवादौ विकाराणामुपदिश्यते। तत् प्रथमत्वात् शारीराणाम्। अथ खल्वष्टाभ्यः कारणेभ्यो ज्वरः सञ्जायते मनुष्याणां तद्यथा वातात् पित्तात् कफाद्वातपित्ताभ्यां पित्तश्लेष्मभ्यां वातश्लेष्मभ्यां वातपित्तश्लेष्मभ्यः आगन्तोरष्टमात् कारणात् तस्य निदानपूर्वरूपलिङ्गोपशयविशेषाननुपदेक्ष्यामः। तत् यथा रूक्षलघुशीतव्यायाम-वमनविरेचनास्थापन-शिरोविरेचनातियोग-वेगसन्धारणानशनाभिघातव्यवायोद्वेगशोकशोणितातिसेकजागरणविषमशरीरन्यासेभ्योऽतिसेवितेभ्यो वायुः प्रकोपमापद्यते। स यदा प्रकुपितः प्रविश्यामाशयमूष्मणः स्थानमूष्मणा सह मिश्रीभूत आद्यमाहारपरिणामधातुं रसनामानमन्ववेत्य रसस्वेदवहानि च स्रोतांसि च पिधाय अग्निं उपहत्य पक्तिस्थाना दुष्मणं बहिः निरस्य केवलं शरीरमनुपद्यते तदा ज्वरमभिनिर्वर्त्तयति तस्येमानि लिङ्गानि भवन्ति। तद्यथा विषमारम्भविसर्गित्वमूष्मणो वैषम्यं तीव्रतनुभावानवस्थानानि ज्वरस्य जरणान्ते दिवसान्ते धर्मान्ते वा ज्वराभ्यागमनमभिवृद्धिर्वा ज्वरस्य विशेषेण परुषारुणवर्णत्वं नखनयनवदनमूत्रपुरीषत्वचामत्यर्थं क्लिमीभावश्चानेकविधोपमाश्चचलाचलाश्च वेदनाः तेषां तेषामङ्गावयवानाम्। तद्यथा पादयोः सुप्तता पिण्डिकयोरुद्वेष्टनं जानुनोः केवलानाञ्च सन्धीनां विश्लेषणमूर्वोः सादः कटीपार्श्वपृष्ठस्कन्ध बाह्वंसोरसाञ्च भग्नरुग्णमृदितमथितचटितावपीड़िताववतुन्नत्वमिव हन्वोरप्रसिद्धिः स्वनश्च कर्णयोः शङ्खयोर्निस्तोदः कषायास्यत्वमास्यवैरस्यं वा मुखतालुकण्ठशोषः पिपासाहृदयग्रहः शुष्कच्छर्दिः शुष्ककासः क्षवथूद्गारविनिग्रहोऽन्नरसखेदः प्रसेकारोचकाविपाकाः विषाद-विजृम्भाविनामवेपथुश्रम-भ्रम-प्रलापजागरणलोमहर्षदन्तहर्षा-

स्तथोष्णाभिप्रायता निदानोक्तानामनुपचयो विपरीतोपचयश्चेति वातज्वरलिङ्गानि स्युः । उष्णाम्ललवणक्षारकटुकाजीर्णभोजनेभ्योऽतिसेवितेभ्यस्तथातितीक्ष्णातपाग्निसन्ताप-श्रम-क्रोधविषमाहारेभ्यः पित्तं प्रकोपमापद्यते । तद्यथा प्रकुपितमामाशयादेवोष्माणमुपसंसृज्याद्यमाहारपरिणामधातुं रसनामानमन्वेत्य रसस्वेदवहानि च स्रोतांसि पिधाय द्रवत्वादग्निमुपहत्य पक्तिस्थानादूष्माणं बहिर्द्वारं निरस्य प्रपीडयन् केवलं शरीरमुपपद्यते तदा ज्वरमभिनिर्वर्त्तयति तस्येमानि लिङ्गानि भवन्ति। तद्यथा युगपदेव केवले शरीरे ज्वराभ्यागमनमभिवृद्धिर्वा । भुक्तस्य विदाहकाले मध्यन्दिनेऽर्द्धरात्रे शरदि वा विशेषेण कटुकास्यता घ्राणमुखकण्ठोष्ठतालुपाकस्तृष्णा भ्रमो मदो मूर्च्छा पित्तच्छर्दनमतीसारोऽन्नद्वेषः सदनं खेदः प्रलापो रक्तकोठाभिनिर्वृत्तिः शरीरे हरितहारिद्रत्वं नखनयनवदनमूत्रपुरीषत्वचामत्यर्थमुष्णस्तीव्रभावोऽतिमात्रं दाहः शीताभिप्रायता निदानोक्तानामनुपचयो विपरीतोपचयश्चेति पित्तज्वरलिङ्गानि भवन्ति। स्निग्धमधुरगुरु-शीत-पिच्छिलाम्ल-लवण-दिवास्वप्न-हर्षाव्यायामेभ्योऽतिसेवितेभ्यः श्लेष्मा प्रकोपमापद्यते । स यदा प्रकुपितः प्रविश्यामाशयमूष्मणा सह मिश्रीभूतमाद्यमाहारपरिणामधातुं रसनामानमन्वेत्य रसस्वेदवहानि च स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानादूष्माणं वा बहिः निरस्य प्रपीडयन् केवलं शरीरमुपपद्यते तदा ज्वरमभिनिर्वर्त्तयति । तस्येमानि लिङ्गानि भवन्ति । तद्यथा युगपदेव केवले शरीरे ज्वराभ्यागमनमभिवृद्धिर्वा भुक्तमात्रे पूर्वाह्णे पूर्वरात्रे वसन्तकाले वा विशेषेण गुरुगात्रत्वमनन्नाभिलाषः श्लेष्मप्रसेको मुखस्य च माधुर्यं हृल्लासो हृदयोपलेपः स्तिमितत्वं छर्दिर्मृदग्निता निद्राया आधिक्यं स्तम्भः तन्द्रा श्वासः कासः प्रतिश्यायः शैत्यं श्वैत्यञ्च नयननखवदनमूत्रपुरीषत्वचामत्यर्थं शीतपिड़का

अश्लेष्मभ्यश्च उत्तिष्ठति उष्णाभिप्रायता निदानोक्तानामनुपचयो विपरीतोपचयश्चेति श्लेष्मज्वरलिङ्गानि भवन्ति। विषमाशनाद् अनशनादन्नस्य अपरिवर्त्ताद्दृतुव्यापत्तेः असात्म्यगन्धोपघ्राणात् विषोपहतस्योदकस्य उपयोगाद्गरेभ्यो गिरीणामुपश्लेषात् स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचनानाम् अयथावत् प्रयोगात् स्त्रीणाञ्च विषमप्रजननात् प्रजातानाञ्च मिथ्योपचारात् यथोक्तानाञ्च हेतूनां मिश्रीभावाद्यथानिदानं द्वन्द्वानामन्यतमः सर्वे वा त्रयो दोषा युगपत्प्रकोपमापद्यन्ते। ते प्रकुपितास्तयैवानुपूर्व्या ज्वरमभिनिर्वर्त्तयन्ति तत्र यथोक्तानां ज्वरलिङ्गानां मिश्रीभावविशेषदर्शनाद्द्वान्द्विकमन्यतमं ज्वरं सान्निपातिकं वा विद्यात्। अभिघाताभिषङ्गाभिचाराभिशापेभ्य आगन्तुर्व्यथापूर्वो ज्वरोऽष्टमो भवति। स कञ्चित्कालमागन्तुः केवलो भूत्वा पश्चात् दोषैरनुबध्यते। अभिघातजो वायुना दुष्टशोणिताधिष्ठानेन अभिषङ्गजः पुनर्वातपित्ताभ्याम् अभिचाराभिशापजौ तु सन्निपातेन उपनिबध्यते। सप्तविधाज्ज्वराद्विशिष्टलिङ्गोपक्रमसमुत्थितत्वाद्विशिष्टो वेदितव्यः। कर्मणा साधारणेन चोपक्रम्येति अष्टविधा ज्वरप्रकृतिरुक्ता। ज्वरस्त्वेक एव सन्तापलक्षणस्तमेवाभिप्रायविशेषाद् द्विविधमाचक्षते निजागन्तुविशेषाच्च तत्र निजं द्विविधं त्रिविधं चतुर्विधं सप्तविधञ्चाहुर्वातादिविकल्पात्तस्येमानि पूर्वरूपाणि। तद्यथा मुखवैरस्यं गुरुगात्रत्वमनन्नाभिलाषश्चक्षुषोराकुलत्वमस्रागमनं निद्राया आधिक्यमरतिर्जृम्भा विनामो वेपथुः श्रमभ्रमप्रलापजागरणलोमहर्षशब्दशीतवातातपासहत्वमरोचकाविपाकौ दौर्बल्यमङ्गमर्दः सदनमल्पप्राणता दीर्घसूत्रता आलस्यमुपचितस्य कर्मणो हानिः प्रतीपता स्वकार्य्येषु गुरूणां वाक्येषु अभ्यसूया बालेषु प्रद्वेषः स्वधर्मेषु अचिन्ता माल्यानुलेपनभोजनक्लेशनं मधुरेषु भक्ष्येषु प्रद्वेषोऽम्ललवणकटुकप्रियता चेति

ज्वरपूर्वरूपाणि। प्राक् सन्तापादपि चैनं सन्तापार्त्तमनुबन्धन्तीत्येतानि एकैकज्वरलिङ्गानि विस्तरसमासाभ्याम्। ज्वरस्तु खलु महेश्वरकोपप्रभवः सर्वप्राणिनां प्राणहरो देहेन्द्रियमनस्तापकरः प्रज्ञाबलवर्णहर्षोत्साहसादनार्त्तिभ्रमक्लमम्मोहाहारोपरोधसञ्जननो ज्वरयति शरीराणि इति ज्वरः। नान्ये व्याधयः तथा दारुणा बहूपद्रवा दुश्चिकित्स्या यथायमिति। सर्वरोगाधिपतिर्ज्वरः नानातिर्य्यग्योनिषु बहुविधैः शब्दैरभिधीयते सर्वप्राणभृतश्च सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते समहामोहाः तेनाभिभूताः प्राग्दैहिकं देहिनः कर्म किञ्चित् न स्मरन्ति सर्वप्राणिभ्यश्च ज्वर एव प्राणानादत्ते। तत्रास्य पूर्वरूपदर्शने ज्वरादौ वा हितं लघ्वशनमतर्पणं वा ज्वरस्यामाशयसमुत्थत्वात्। ततः कषायपानाभ्यङ्गस्वेदप्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासनोपशमननस्तः कर्म धूपधूमपानाञ्जनक्षीरभोजनविधानं यथास्वं युक्त्या जीर्णज्वरेषु सर्वेष्वेव सर्पिषः पानं प्रशस्यते। यथास्वमौषधसिद्धस्य सर्पिर्हि स्नेहाद्वातं शमयति संस्कारात् कफं शैत्यात्पित्तम् ऊष्माणं च तस्माज्जीर्णज्वरेषु तु सर्वेष्वेव सर्पिर्हितमुदकमिवाग्निप्लुष्टेषु द्रव्येष्विति ॥ २ ॥

तत्र श्लोकाः। यथा प्रज्वलितं वेश्म परिषिञ्चन्ति वारिणा।
नराः शान्तिमभिप्रेत्य तथा जीर्णज्वरे घृतम् ॥ ३ ॥
स्नेहाद्वातं शमयति शैत्यात्पित्तं नियच्छति।
घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम् ॥ ४ ॥
नान्यः स्नेहः तथा कश्चित् संस्कारमनुवर्त्तते।
यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं परम् ॥ ५ ॥
गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते।
तद्व्यक्ति व्यवसायार्थं द्विरुक्तः स न गर्ह्यते ॥ ६ ॥
त्रिविधं नाम पर्यायैर्हेतुं पञ्चविधान् गदान्।

यदलक्षणपर्य्यायैः व्याधेः पञ्चविधं ग्रहम् ॥ ७ ॥
ज्वरमष्टविधं तस्य प्रकृष्टासन्नकारणम्।
पूर्वरूपञ्च रूपञ्च संग्रहे भेषजस्य च ॥ ८ ॥
व्याख्यातवान् ज्वरस्याग्रे निदाने विगतज्वरः।
भगवानग्निवेशाय प्रणताय पुनर्वसुः ॥ ९ ॥

इति चरकप्रतिसंस्कृते तन्त्रे ज्वरनिदानो नाम प्रथमोऽध्यायः।

---

## द्वितीयोऽध्यायः।

### रक्तपित्तनिदानम्।

अथातो रक्तपित्तनिदानं व्याख्यास्यामः।

इति ह स्माह भगवान् आत्रेयः।

पित्तं यथाभूतं लोहितपित्तमिति संज्ञां लभते तत् तथानुव्याख्यास्यामः। यदा यस्तु जन्तुर्यवकोद्दालकोरदूषकप्रायाण्यन्नानि नित्यं भुङ्क्ते भूयोऽत्युष्णतीक्ष्णमपि चान्यदन्नजातं निष्पावमाषकुलत्थक्षारसूपोपहितं दधिमण्डोदश्वित्कट्वम्लकाञ्जिकोपहितं वाराहमाहिषाविकमत्स्यगव्यपिशितं पिण्याकं पिण्डालुकशुष्कशाकोपहितं मूलकसर्षपलशुनकरञ्जशिग्रुकखडयूषभूस्तृणसुमुखसुरसकुठेरगण्डीरकालमालकपर्णासक्षवकफणिज्झकोपदंशं सुरासौवीर-तुषोदक-मैरेयमेचकमधूलकशुक्तकुवलबदराम्ल-प्रायान्न-पानपिष्टान्नोत्तरभूयिष्ठमुष्णाभितप्तोऽतिमात्रमतिवेलं वा पयसा समश्नाति रोहिणीकालकपोतमांसं वा सर्षपतैलक्षारसिद्धं कुलत्थमाषपिण्याकजाम्बवलकुचपक्वैः शौक्तिकैर्वा सह क्षीरमाममतिमात्रमथवा पिबत्युष्णाभितप्तस्तस्यैवमाचरतः पित्तं प्रकोपमापद्यते। लोहितञ्च स्वप्रमाणमतिवर्त्तते ॥ १ ॥

दिष्टमहेतुकं वा वादकालेऽभ्युपगच्छन्ति भिषजः । तद्यथा ;— द्रव्यं न प्रधानमिति कृत्वा वक्ष्यामः । गुणः प्रधानम् इति कृत्वा वक्ष्याम इत्येवमादिश्चतुर्विधः सिद्धान्तः ॥ ३९ ॥

शब्दो नाम वर्णसमाम्नायः स चतुर्विधः दृष्टार्थश्चादृष्टार्थश्च सत्यश्चानृतश्चेति । तत्र दृष्टार्थस्त्रिभिर्हेतुभिर्दोषाः प्रकुप्यन्ति षड्भिरुपक्रमैश्च प्रशाम्यन्ति । श्रोत्रादिसद्भावे शब्दादिग्रहणमिति अदृष्टार्थः पुनरस्ति प्रेत्यभावोऽस्ति मोक्ष इति । सत्यो नाम यथार्थभूतः । सन्त्यायुर्वेदोपदेशाः । सन्त्युपायाः साध्यानाम् । सन्त्यारम्भफलानीति । सत्यविपर्ययाच्चानृतम् ॥ ३८ ॥

अथ प्रत्यक्षम् । प्रत्यक्षं नाम तद्यदात्मना पञ्चेन्द्रियैश्च स्वयमुपलभ्यते । तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः । शब्दादयस्त्विन्द्रियप्रत्यक्षाः ॥ ४० ॥

अनुमानं नाम तर्को युक्त्यपेक्षो यथोक्तम् अग्निं जरणशक्त्या बलं व्यायामशक्त्या श्रोत्रादीनि शब्दादिग्रहणेनेन्द्रियाणीत्येवमादिः ॥ ४१ ॥

अथ औपम्यम् । औपम्यं नाम यदन्येनान्यस्य सादृश्यमधिकृत्य प्रकाशनं यथा दण्डेन दण्डकस्य धनुषा धनुष्टम्भस्य इष्वासिना आरोग्यदस्येति ॥ ४२ ॥

अथ ऐतिह्यम् । ऐतिह्यं नाम आप्तोपदेशो वेदादिः ॥ ४३ ॥

अथ संशयः । संशयो नाम सन्दिग्धेष्वर्थेषु अनिश्चयः । यथा किमकालमृत्युरस्ति नास्तीति ॥ ४४ ॥

अथ प्रयोजनम् । प्रयोजनं नाम यदर्थमारभ्यन्त आरम्भाः । यथा यद्यकालमृत्युरस्ति ततोऽहमात्मानमायुष्यैरुपचरिष्यामि अनायुष्याणि च परिहरिष्यामि कथं मामकालमृत्युः प्रसहेतेति ॥ ४५ ॥

अथ सव्यभिचारम् । सव्यभिचारं नाम यद्व्यभिचरणं यथा भवेदिदमौषधं तस्मिन् व्याधौ यौगिकमथवा नेति ॥ ४६ ॥

अथ जिज्ञासा। जिज्ञासा नाम परीक्षा यथा भेषजपरीक्षोत्तरकालमुपदेक्ष्यते ॥ ४७ ॥

अथ व्यवसायः। व्यवसायो नाम निश्चयः यथा वातिक एवायं व्याधिरिदमेवास्य भेषजमिति ॥ ४८ ॥

अथार्थप्राप्तिः। अर्थप्राप्तिर्नाम यत्रैकेनार्थेनोक्तेन अपरस्यार्थस्यानुक्तस्य सिद्धिः। यथा नायं सन्तर्पणसाध्यो व्याधिरित्युक्ते भवत्यर्थप्राप्तिरपतर्पणसाध्योऽयमिति। नानेन दिवा भोक्तव्यम् इति उक्ते भवत्यर्थप्राप्तिर्निशि भोक्तव्यमिति ॥ ४९ ॥

अथ सम्भवः। सम्भवो नाम यो यतः सम्भवति स तस्य सम्भवः। यथा षट् धातवो गर्भस्य व्याधेरहितं हितमारोग्यस्येति ॥ ५० ॥

अथानुयोज्यम्। अनुयोज्यं नाम यद्वाक्यं वाक्यदोषयुक्तं तदनुयोज्यमुच्यते। सामान्योदाहृतेष्वर्थेषु वा विशेषग्रहणार्थं तद्वाक्यमनुयोज्यम्। यथा संशोधनसाध्योऽयं व्याधिरित्युक्ते किं वमनसाध्यः किं विरेचनसाध्य इत्यनुयुज्यते ॥ ५१ ॥

अथाननुयोज्यम्। अननुयोज्यं नामातो विपर्ययेण यथा, अयमसाध्यः ॥ ५२ ॥

अथ अनुयोगः। अनुयोगो नाम यत् तद्विद्यानां तद्विद्यैरेव सार्द्धं तन्त्रे तन्त्रैकदेशे वा प्रश्नः प्रश्नैकदेशो वा ज्ञानविज्ञानवचनपरीक्षार्थमादिश्यते। अथवा नित्यः पुरुष इति प्रतिज्ञाते यत् परः को हेतुरित्याह सोऽनुयोगः ॥ ५३ ॥

अथ प्रत्यनुयोगो नाम अनुयोगस्यानुयोगः। यथा अनुयोगस्य पुनः को हेतुरिति ॥ ५४ ॥

अथ वाक्यदोषः। वाक्यदोषो नाम यथा खल्वस्मिन् अर्थे न्यूनमधिकमनर्थकमपार्थकं विरुद्धञ्चेति ॥ ५५ ॥

अत्र हेतूदाहरणोपनयनिगमनानामन्यतमेनापि न्यूनं न्यून

भवति यद्वा बहूपदिष्टहेतुकमेकेन साध्यते हेतुना तच्च न्यूनम् एतानि ह्यन्तरेण प्रकृतोऽप्यर्थः प्रणश्येत् ॥ ५६ ॥

अथ आधिक्यम्। आधिक्यं नाम यदायुर्वेदे भाष्यमाणे बार्हस्पत्यमौशनसमन्यद्वा प्रतिसम्बद्धार्थमुच्यते यद्वा पुनः प्रतिसम्बद्धार्थमपि द्विरभिधीयते, तत् पुनरुक्तत्वादधिकं, तच्च पुनरुक्तं द्विविधम् अर्थपुनरुक्तं शब्दपुनरुक्तञ्च। तत्रार्थपुनरुक्तं नाम यथा भेषजमौषधं साधनमिति, शब्दपुनरुक्तञ्च भेषजं भेषजमिति ॥ ५७ ॥

अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात् पञ्चवर्गवन्न चार्थतो गृह्यते ॥ ५८ ॥

अपार्थकं नाम यदर्थवच्च परस्परेण चायुज्यमानार्थं यथा चक्रनक्रवंशवज्रनिशाकरा इति ॥ ५९ ॥

विरुद्धं नाम यद्दृष्टान्तसिद्धान्तसमयैर्विरुद्धं तत्र पूर्वं दृष्टान्तसिद्धान्तावुक्तौ। समयः पुनस्त्रिधा भवति यथायुर्वैदिकसमयो याज्ञियसमयो मोक्षशास्त्रिकसमय इति। तत्रायुर्वैदिकसमयश्चतुष्पादसिद्धिः। आलभ्या यजमानैः पशव इति याज्ञियसमयः। सर्वभूतेष्वहिंसेति मोक्षशास्त्रिकसमयस्तत्र स्वसमयविपरीतमुच्यमानं विरुद्धमिति वाक्यदोषाः ॥ ६० ॥

वाक्यप्रशंसा नाम यथा अन्यूनमनधिकमर्थवदनपार्थकमविरुद्धमधिगतपदार्थञ्च तद्वाक्यमननुयोज्यमिति प्रशस्यते ॥ ६१ ॥

छलं नाम परिशठमर्थाभासमनर्थकं वाग्वस्तुमात्रमेव। तद्द्विविधं वाक्छलं सामान्यच्छलञ्च। तत्र वाक्छलं नाम यथा कश्चिद् ब्रूयात् नवतन्त्रोऽयं भिषगिति, भिषग् ब्रूयात् नाहं नवतन्त्र एकतन्त्रोऽहमिति। परो ब्रूयात् नाहं ब्रवीमि नव तन्त्राणि तवेति, अथ तु नवाभ्यस्तं ते तन्त्रमिति, भिषक् ब्रूयात् न मया नवाभ्यस्तं तन्त्रम् अनेकशताभ्यस्तं मया तन्त्रमिति वाक्छलम् ॥ ६२ ॥

सामान्यच्छलं नाम यथा व्याधिप्रशमनायौषधमित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति किन्नु भवानाह सद्रोगः सदौषधं यदि च सत् सत्प्रशमनाय भवति तत्र सत्कासः सत्क्षयः सत्सामान्यात् कासः क्षयप्रशमनाय भविष्यतीति एतत् सामान्यच्छलम् ॥ ६३ ॥

अहेतुर्नाम प्रकरणसमः संशयसमो वर्ण्यसम इति। तत्र प्रकरणसमो नामाहेतुर्यथान्यः शरीरादात्मा नित्य इति पक्षे परो ब्रूयाच्छरीरादन्य आत्मा तस्माच्चित्यः शरीरमनित्यमतो विधर्मिणानेन च भवितव्यम् एष चाहेतुर्न हि य एव पक्षः स एव हेतुः ॥ ६४ ॥

संशयसमो नामाहेतुर्य एव संशयहेतुः स एव संशयच्छेदहेतुर्यथा अयमायुर्वेदैकदेशमाह किन्वयं चिकित्सकः स्यात् न वेति संशये परो ब्रूयात् यस्मादयमायुर्वेदैकदेशमाह तस्मात् चिकित्सकोऽयमिति। न च संशयच्छेदे हेतुं विशेषयत्येष चाहेतुः न हि य एव संशय हेतुः स एव संशयच्छेदहेतुः ॥६५॥

वर्ण्यसमो नामाहेतुर्यो हेतुर्वर्ण्याविशिष्टः यथा परो ब्रूयात् अस्पर्शत्वात् बुद्धिरनित्या शब्दवदिति तत्र वर्ण्यः शब्दो बुद्धिरपि वर्ण्या तदुभयवर्ण्याविशिष्टत्वात् वर्ण्यसमोऽप्यहेतुः ॥ ६६ ॥

अतीतकालम्। अतीतकालं नाम यत् पूर्वं वाच्यं तत् पश्चादुच्यते. तत्कालातीतत्वादग्राह्यं भवति परं वा निग्रहप्राप्तमनिगृह्य परिगृह्य पक्षान्तरितं पश्चान्निगृह्णीते तत् तस्य अतीतकालत्वान्निग्रहवचनसमर्थं भवतीति ॥ ६७ ॥

उपालम्भो नाम हेतोर्दोषवचनं यथा पूर्वमहेतवो हेत्वाभासा व्याख्याता. ॥ ६८ ॥

परिहारो नाम तस्यैव दोषवचनस्य परिहरणं यथा नित्यमात्मनि शरीरस्थे जीवलिङ्गान्युपलभ्यन्ते तस्य चापगमान्नोपलभ्यन्ते तस्मादन्यः शरीरादात्मा नित्यः शरीराच्चेति ॥६९॥

प्रतिज्ञाहानिः। प्रतिज्ञाहानिर्नाम यः पूर्वपरिगृहीतां प्रतिज्ञां पर्य्यनुयुक्तः परित्यजति यथा प्राक् प्रतिज्ञां कृत्वा नित्यः पुरुष इति पर्य्यनुयुक्तस्त्वाह अनित्य इति ॥ ७० ॥

अभ्यनुज्ञा नाम य इष्टानिष्टाभ्युपगमः ॥ ७१ ॥

हेत्वन्तरं नाम प्रकृतहेतौ वाच्ये यद्विकारहेतुमाह ॥७२॥

अर्थान्तरं नाम ज्वरलक्षणे वाच्ये प्रमेहलक्षणमाह ॥७३॥

निग्रहस्थानं नाम पराजयप्राप्तिस्तच्च त्रिरुक्तस्य वाक्यस्य अविज्ञानं परिषदि विज्ञानवत्याम् ॥ ७४ ॥

यद्वा अननुयोज्यस्यानुयोगो अनुयोज्यस्य चाननुयोगः प्रतिज्ञाहानिरभ्यनुज्ञाकालातीतवचनमहेतुः न्यूनमतिरिक्तं व्यर्थमनर्थकं पुनरुक्तं विरुद्धं हेत्वन्तरमर्थान्तरं निग्रहस्थानमिति वादमर्य्यादापदानि यथोद्देशमभिनिर्दिष्टानि ॥ ७५ ॥

वादस्तु खलु भिषजां वर्त्तमानो वर्त्तेतायुर्वेद एव नान्यत्र ॥७६

तत्र हि वाक्यप्रतिवाक्यविस्ताराः केवलाश्चोपपत्तयश्च सर्वाधिकरणेषु ताः सर्वाः सम्यगवेक्ष्यावेक्ष्य सर्वं वाक्यं ब्रूयात् नाप्रकृतिकमशास्त्रमपरीक्षितमसाधकमाकुलमव्यापकं वा सर्वञ्च हेतुमद्ब्रूयात् हेतुमन्तो ह्यकलुषाः सर्व एव वादविग्रहाश्चिकित्सिते कारणभूताः। प्रशस्तबुद्धिवर्द्धकत्वात् सर्वारम्भसिद्धिं हि आवहति अनुपहता बुद्धिः ॥ ७७ ॥

इमानि खलु तावदिह कानिचित् प्रकरणानि ब्रूमः। ज्ञानपूर्वकं कर्म्मणां समारम्भं प्रशंसन्ति कुशलाः ॥ ७८ ॥

ज्ञात्वा हि कारणकरणकार्य्ययोनिकार्य्यकार्य्यफलानुबन्धदेशकालप्रवृत्त्युपायान् सम्यगभिनिर्वर्त्त्यमानः कार्य्याभिनिर्वृत्तौ इष्टफलानुबन्धकं कार्य्यमभिनिर्वर्त्तयति अनतिमहता प्रयत्नेन कर्त्ता ॥ ७९ ॥

तत्र कारणं नाम तद्यत् करोति स एव हेतुः कर्त्ता सः ॥८०

करणं पुनस्तद्यदुपकरणायोपकल्पते कर्त्तुः कार्य्याभिनिर्वृत्तौ प्रयतमानस्य ॥ ८१ ॥

कार्य्ययोनिस्तु सा या विक्रियमाणा कार्य्यत्वमापद्यते ॥ ८२

कार्य्यन्तु तद्यस्याभिनिर्वृत्तिमभिसन्धाय प्रवर्त्तते कर्त्ता ॥८३

कार्य्यफलं पुनस्तद् यत् प्रयोजना कार्य्याभिनिर्वृत्तिरिष्यते ॥ ८४ ॥

अनुबन्धस्तु कर्त्तारमवश्यमनुबध्नाति कार्य्यादुत्तरकालं कार्य्यनिमित्तः शुभो वाप्यशुभो वा भावः ॥ ८५ ॥

देशस्त्वधिष्ठानम् ॥ ८६ ॥

कालः पुनः परिणामः ॥ ८७ ॥

प्रवृत्तिस्तु खलु चेष्टा कार्य्यार्था सैव क्रिया कर्म यत्नः कार्य्यसमारम्भश्च ॥ ८८ ॥

उपायाः पुनः कारणादीनां सौष्ठवम् अभिसन्धानञ्च सम्यक् कार्य्यकार्य्यफलानुबन्धोपायवर्ज्यानां कार्य्याणामभिनिर्वर्त्तक इत्यतो अभ्युपायः कृतेनोपायार्थोऽस्ति न च विद्यते तदात्वे कृताच्चोत्तरकालं फलं फलाच्चानुबन्ध इति व्याख्यातं दशविधम् ॥८९॥

अग्रे परीक्ष्यं ततोऽनन्तरं कार्य्यार्था प्रवृत्तिरिष्टा तस्मात् भिषक् कार्य्यं चिकीर्षुः प्राक् कार्य्यसमारम्भात् परीक्षया केवलं परीक्ष्यं परीक्ष्यार्थकर्म समारभेत कर्त्तुम् ॥ ९० ॥

तत्र चेद्भिषगभिषग् वा भिषजं कश्चित् पृच्छेद्वमनविरेचनास्थापनानुवासनशिरोविरेचनानि प्रयोक्तुकामेन भिषजा कतिविधया परीक्षया कतिविधमेव परीक्ष्यं कश्चात्र परीक्ष्यविशेषः कथञ्च परीक्षितव्यं किंप्रयोजना च परीक्षा क्व च वमनादीनां प्रवृत्तिः क्व च निवृत्तिः प्रवृत्तिनिवृत्तिसंयोगे च किं नैष्ठिकं कानि च वमनादीनां भेषजद्रव्याणि उपयोगं गच्छन्तीति। स एव पृष्टो यदि मोहयितुमिच्छेत् ब्रूयादेनं बहुविधा हि परीक्षा

तथा परीक्ष्यविधिभेदः। कतमेन विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्य भेदार्थं भवान् पृच्छति आख्यायमानं नेदानीं भवतोऽन्येन विधिभेदप्रकृत्यन्तरेण भिन्नया परीक्षया अन्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्याभिलषितमर्थं श्रोतुमहमन्येन परीक्षाविधिभेदेन अन्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यं भिन्नार्थमाचचाण इच्छां प्रपूरयेयमिति ॥ ८१ ॥

स यदुत्तरं ब्रूयात् तत् परीक्ष्योत्तरं वाच्यं स्यात् यथोक्तं प्रतिवचनम् अवेक्ष्य सम्यग् यदि तु ब्रूयात् न चैनं मोहयितुमिच्छेत् प्राप्तन्तु वचनकालं मन्येत काममस्मै ब्रूयात् आप्तमेव निखिलेन ॥ ८२ ॥

द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानञ्च, एतत् तु द्वयमुपदेशश्च परीक्षात्रयम् एवमेषा द्विविधा परीक्षा त्रिविधा वा सहोपदेशेन ॥ ८३ ॥

दशविधन्तु परीक्ष्यं कारणादि यदुक्तमग्रे तदिह भिषगादिषु समार्थ्य सन्दर्शयिष्यामः, इह कार्य्यप्राप्तौ कारणं भिषक्, करणं पुनर्भेषजं, कार्य्ययोनिर्धातुवैषम्यं, कार्य्यं धातुसाम्यं, कार्य्यफलं सुखावाप्तिः, अनुबन्ध आयुः, देशो भूमिरातुरश्च, कालः सवत्संरश्चातुरावस्था च, प्रवृत्तिः प्रतिकर्मसमारम्भः, उपायो भिषगादीनां सौष्ठवम् अभिसन्धानञ्च सम्यक् इहापि अस्योपायस्य विषयः पूर्व्वैवोपायविशेषेण व्याख्यात इति कारणादीनि दश। दशसु भिषगादिषु संसार्य्य सन्दर्शितानि, तथैवानुपूर्व्या एतद्दशविधं परीक्ष्यमुक्तञ्च ॥ ८४ ॥

तस्य यो यो परीक्ष्य विशेषो यथा यथा च परीक्षितव्यः स स तथा तथा व्याख्यास्यते। कारणं भिषगित्युक्तमग्रे तस्य परीक्षा भिषक् नाम स यो भेषजति यः सूत्रार्थप्रयोगकुशलः यस्य चायुः सर्व्वथा विदितम् ॥ ८५ ॥

यथावत् सर्व्वधातुसाम्यं चिकीर्षन्नात्मानमेवादितः परीक्षेत।

गुणिषु गुणतः कार्य्याभिनिर्वृत्तिं पश्यन् कश्चिदहमस्य कार्य्यस्य अभिनिर्वर्त्तने समर्थो न वेति ॥ ८६ ॥

तत्रेमे भिषग् गुणा यैरुपपन्नो भिषग् धातुसाम्याभिनिर्वर्त्तने समर्थभवति तद्यथा पर्य्यवदातश्रुतता परिदृष्टकर्मता दाक्ष्यं शौचं जितहस्तता उपकरणवत्ता सर्वेन्द्रियोपपन्नता प्रकृतिज्ञता प्रतिपत्तिज्ञता चेति ॥ ८७ ॥

करणं पुनर्भेषजम्। भेषजं नाम तद्यदुपकरणायोपकल्पते, भिषजो धातुसाम्याभिनिर्वृत्तौ प्रयतमानस्य, विशेषतश्चोपायान्तरेभ्यः तद्द्विविधं व्यपाश्रयभेदात् दैवव्यपाश्रयं युक्तिव्यपाश्रयञ्च। तत्र दैवव्यपाश्रयं मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवास-दान-स्वस्त्ययन-प्रणिपातगमनादि। युक्तिव्यपाश्रयं संशोधनोपशमने चेष्टाश्च दृष्टफलाः, एतच्चैव भेषजमङ्गभेदादपि द्विविधं द्रव्यभूतमद्रव्यभूतञ्च तत्र यद् अद्रव्यभूत तदुपायाभिप्लुतम्। उपायो नाम भयदर्शनविस्मापनक्षोभणहर्षणभर्त्सनवधबन्धस्वप्नसंवाहनादिरमूर्त्तो भावो यथोक्ताः सिद्ध्युपायाश्च। यत् तु द्रव्यभूतं तद्वमनादिषु योगमुपैति ॥८८॥

तस्यापि इयं परीक्षा इदमेवं प्रकृत्या एवंगुणमेवंप्रभावमस्मिन् देशे जातमस्मिन् ऋतौ एवं गृहीतमेवं निहितमेवमुपस्कृतमनया मात्रया युक्तमस्मिन् रोगे एवंविधस्य पुरुषस्यैतावन्तं दोषमपकर्षयति उपशमयति वा अन्यदपि चैवंविधं भेषजं भवेत् तच्चानेनान्येन वा विशेषेण युक्तमिति ॥ ८९ ॥

कार्य्ययोनिर्धातुवैषम्यं तस्य लक्षणं विकारागमः, परीक्षा त्वस्य विकारप्रकृतेश्चैवोनातिरिक्तलिङ्गविशेषावेक्षणं विकारस्य च साध्यासाध्यमृदुदारुणलिङ्गविशेषावेक्षणमिति ॥ १०० ॥

कार्य्यं धातुसाम्यं, तस्य लक्षणं विकारोपशमः, परीक्षा त्वस्य रुगुपशमनं स्वरवर्णयोगः शरीरोपचयः बलवृद्धिरभ्यव-

हार्य्याभिलाषो रुचिराहारकालेऽभ्यवहृतस्य चाहृतस्य चाहारस्य सम्यग् जरणं निद्रालाभो यथाकालं,वैकारिकाणां स्वप्नानामदर्शनं सुखेन च प्रतिबोधनं वातमूत्रपुरीषरेतसां मुक्तिः। सर्वाकारैर्मनोबुद्धीन्द्रियाणाञ्च अव्यापत्तिरिति ॥ १०१ ॥

कार्य्यफलं सुखावाप्तिस्तस्य; लक्षणं मनोबुद्धीन्द्रियशरीरतुष्टिः ॥ १०२ ॥

अनुबन्धस्तु खलु आयुस्तस्य लक्षणं प्राणैः संयोगः ॥१०३॥

देशस्तु भूमिरातुरश्च, तत्र भूमिपरीक्षा आतुरस्य परिज्ञानहेतोर्वा स्यादौषधपरिज्ञानहेतोर्वा। तत्र तावदियमातुरपरिज्ञानहेतोः। तद्यथा—अयं कस्मिन् भूमिदेशे जातः संवृद्धो व्याधितो वेति तस्मिंश्च भूमिदेशे मनुष्याणामिदमाहारजातमिदं विहारजातमेतद्बलमेवंविधं सत्त्वमेवंविधं सात्म्यमेवंविधो दोषो भक्तिरियमिमे व्याधयो हितमिदमहितमिदमिति प्रायोग्रहणेन ॥ १०४ ॥

औषधपरिज्ञानहेतोस्तु कल्पेषु भूमिपरीक्षा वक्ष्यते ॥१०५॥

आतुरस्तु खलु कार्य्यदेशस्तस्य परीक्षा आयुषः प्रमाणज्ञानहेतोर्वा स्याद् बलदोषप्रमाणज्ञानहेतोर्वा ॥ १०६ ॥

तत्र तावदियं बलदोषविशेषप्रमाणापेक्षा,सहसा हि अतिबलमौषधमपरीक्षकप्रयुक्तमल्पबलमातुरमभिघातयेत्, न हि अतिबलान्याग्नेयसौम्यवायवीयान्यौषधान्यग्निक्षारशस्त्रकर्माणि वा शक्यन्तेऽल्पबलैः सोढुमविषह्यातितीक्ष्णवेगत्वाद्धि सद्यःप्राणहराणि स्युः ॥ १०७ ॥

एतच्चैव कारणमवेक्षमाणा हीनबलमातुरमविपादकरैर्मृदु-सुकुमारप्रायैरुत्तरोत्तर-गुरुभिरविभ्रमैरनात्ययिकैश्चोपचरन्त्यौषधैः विशेषतश्च नारीः ता ह्यनवस्थितमृदुविवृतविक्लवहृदयाः प्रायः सुकुमारा नार्य्योऽबलाः परसंस्तभ्याश्च ॥१०८॥

तथा बलवति बलवत् व्याधिपरिगते स्वल्पबलमौषधमपरीक्षकप्रयुक्तमसाधकं भवति तस्मादातुरं परीक्षेत प्रकृतितश्च विकृतितश्च सारतश्च संहननतश्च प्रमाणतश्च सात्म्यतश्च सत्त्वतश्चाहारशक्तितश्च व्यायामशक्तितश्च वयस्तश्चेति ॥ १०८ ॥

बलप्रमाणविशेषग्रहणहेतोः तत्रामी प्रकृत्यादयो भावाः। तद्यथा—शुक्रशोणितप्रकृतिं कालगर्भाशयप्रकृतिम् आतुराहारविहार-प्रकृतिं महा-भूतविकार-प्रकृतिञ्च गर्भशरीरमपेक्षते। एता हि येन येन दोषेणाधिकतमेनैकेनानेकेन वा समनुबध्यन्ते तेन तेन दोषेण गर्भोऽनुबध्यते। ततः सा सा दोषप्रकृतिरुच्यते मनुष्याणां गर्भादिप्रवृत्ता। तस्माद्वातलाः प्रकृत्या केचित् पित्तलाः केचित् श्लेष्मलाः केचित् संसृष्टाः समधातवः प्रकृत्या केचित् भवन्ति। तेषां हि लक्षणानि व्याख्यास्यामः ॥ ११० ॥

श्लेष्मा हि स्निग्धश्लक्ष्णमृदुमधुरसारसान्द्रमन्दस्तिमितगुरुशीतविज्जलाच्छः। तस्य स्नेहात् श्लेष्मलाः स्निग्धाङ्गाः, श्लक्ष्णत्वात् श्लक्ष्णाङ्गाः, मृदुत्वात् दृष्टिसुखसुकुमारावदातशरीराः, माधुर्यात् प्रभूतशुक्रव्यवायापत्याः, सारत्वात् सारसंहतस्थिरशरीराः, सान्द्रत्वादुपचितपरिपूर्णसर्वगात्राः, मन्दत्वान्मन्दचेष्टाहारविहाराः, स्तैमित्यादशीघ्रारम्भक्षोभविकाराः, गुरुत्वात् साराधिष्ठितगतयः, शैत्यादल्प-क्षुत्तृष्णा-सन्ताप-स्वेद-दोषाः, विज्जलत्वात् सुश्लिष्टसारबन्धसन्धानाः तथाच्छत्वात् प्रसन्नदर्शनाननाः प्रसन्नस्निग्धवर्णस्वराश्च भवन्ति। त एवं गुणयोगात् श्लेष्मला बलवन्तो वसुमन्तो विद्यावन्त ओजस्विनः शान्ता आयुष्मन्तश्च भवन्ति ॥ १११ ॥

पित्तमुष्णं तीक्ष्णं द्रवं विस्रमम्लं कटुकञ्च। तस्यौष्ण्यात् पित्तला भवन्ति उष्णासहाः शुष्कसुकुमारावदातगात्राः प्रभूतपिप्लुव्यङ्ग-

तिलकपिड़काः क्षुत्पिपासावन्तः क्षिप्रवलीपलितखालित्यदोषाः प्रायो मृद्वल्पकपिलश्मश्रुलोमकेशाः तैक्ष्ण्यात् तीक्ष्णपराक्रमाः तीक्ष्णाग्नयः प्रभूताशनपानाः क्लेशासहिष्णवो दन्दशूकाः द्रवत्वाच्छिथिलमृदुसन्धिबन्धमांसाः प्रभूतसृष्टस्वेदमूत्रपुरीषाश्च विस्रत्वात् प्रभूतपूतिवक्त्रः कक्षास्कन्धास्यशिरः शरीरगन्धाः कट्वम्लत्वादल्पशुक्रव्यवायापत्याः। त एवं गुणयोगात् पित्तला मध्यबला मध्यायुषो मध्यज्ञानविज्ञानवित्तोपकरणवन्तश्च भवन्ति ॥११२॥

वातस्तु रूक्षलघुचलबहुशीघ्रशीतपरुषविशदः तस्य रौक्ष्याद्वातला रूक्षापचिताल्पशरीराः प्रततरूक्षक्षामभिन्नसक्तजर्जरस्वरा जागरूकाश्च भवन्ति लघुत्वाच्च लघुचपलगतिचेष्टाहारविहाराः चलत्वादनवस्थितसन्ध्यक्षिभ्रूहन्वोष्ठजिह्वाशिरःस्कन्धपाणिपादाः बहुत्वात् बहुप्रलापकण्डराशिराप्रतानाः शीघ्रत्वात् शीघ्रसमारम्भक्षोभविकाराः शीघ्रोत्रासरागविरागाः श्रुतग्राहिणः अल्पस्मृतयश्च शैत्यात् शीतासहिष्णवः प्रततशीतकोद्वेपकस्तम्भाः पारुष्यात् परुषकेशश्मश्रुरोमनखदशनवदनपाणिपादाङ्गाः वैशद्यात् स्फुटिताङ्गावयवाः सततसन्धिशब्दगामिनश्च भवन्ति। त एवं गुणयोगात् वातलाः प्रायेणाल्पबलाश्चाल्पायुषश्चाल्पापत्याश्चाल्पसाधनाश्चाधन्याश्च ॥ ११३ ॥

संसर्गात् संसृष्टलक्षणाः सर्वगुणसमुदितास्तु समधातवः इत्येवं प्रकृतितः परीक्षेत ॥ ११४ ॥

विकृतितश्चेति। विकृतिरुच्यते विकारः। तत्र विकारं हेतुदोषदूष्यप्रकृतिदेशकालबलविशेषैर्लिङ्गतश्च परीक्षेत। न ह्यन्तरेण हेत्वादीनां बलविशेषं व्याधिबलविशेषोपलब्धिः। यस्य हि व्याधेर्दूष्यदोषप्रकृतिदेशकालसाम्यं भवति महच्च हेतुलिङ्गबलं स व्याधिर्बलवान् तद्विपर्ययाच्चाल्पबलः। मध्यबलस्तु दूष्यादीनामन्यतमसामान्याद्धेतुलिङ्गमध्यबलत्वाच्चोपलभ्यते ॥११५॥

सारतश्चेति साराणि अष्टौ पुरुषाणां बलमानविशेषज्ञानार्थमुपदिश्यन्ते। तद्यथा,—त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्त्वानि। तत्र स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगम्भीरसुकुमारलोमा सप्रभा च त्वक्साराणाम्। सा सारता सुखसौभाग्यैश्वर्योपभोगबुद्धिविद्यारोग्यप्रहर्षणानि आयुष्यत्वञ्चाचष्टे ॥ ११६ ॥

कर्णाक्षि-मुख-जिह्वानासौष्ठपाणि-पादतल-नख-ललाटमेहनानि स्निग्धरक्तानि श्रीमन्ति भ्राजिष्णूनि रक्तसाराणाम्। सा सारता सुखमुदग्रतां मेधां मनस्वित्वं सौकुमार्यमनतिबलमक्लेशसहिष्णुत्वञ्चाचष्टे ॥ ११७ ॥

शङ्ख-ललाट-कृकाटिकाक्षिगण्डहनुग्रीवास्कन्धोदरकक्षवक्षःपाणिपादसन्धयः स्थिरगुरुशुभमांसोपचिता मांससाराणाम्। सा सारता क्षमां धृतिमलौल्यं वित्तं विद्यां सुखमार्जवमारोग्यं बलमायुश्च दीर्घमाचष्टे ॥ ११८ ॥

वर्णस्वरनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषतः स्नेहो मेदःसाराणाम्। सा सारता वित्तैश्वर्यसुखोपभोगप्रदानान्यार्जवं सुकुमारोपचारतामाचष्टे ॥ ११९ ॥

पार्ष्णिगुल्फजान्वरत्निजत्रुचिबुकशिरःपर्वस्थूलाः स्थूलास्थिनखदन्ताश्चास्थिसारास्ते महोत्साहाः क्रियावन्तश्च क्लेशसहाः सारस्थिरशरीरा भवन्ति आयुष्मन्तश्च ॥ १२० ॥

तन्वङ्गा बलवन्तः स्निग्धवर्णस्वराः स्थूलदीर्घवृत्तसन्धयश्च मज्जसारास्ते दीर्घायुषो बलवन्तः ॥ १२१ ॥

श्रुतविज्ञानवित्तापत्यसम्मानभाजश्च सौम्याः सौम्यप्रेक्षिणश्च क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्धवृत्तसारसमसंहतशिखरदशनाः प्रसन्नस्निग्धवर्णस्वरा भ्राजिष्णवो महास्फिजश्च शुक्रसाराः ते स्त्रीप्रियाः प्रियोपभोगा बलवन्तः ॥ १२२ ॥

सुखैश्वर्यारोग्यवित्तसम्मानापत्यभाजः स्मृतिमन्तो भक्ति-

मन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहा दक्षा धीराः समरविक्रान्तयोधिनः त्यक्तविषादाः सुव्यवस्थिता गम्भीरबुद्धिचेतसः कल्याणाभिनिवेशिनश्च सत्त्वसाराः॥ १२३॥

तेषां स्वलक्षणैरेव गुणा व्याख्याताः॥ १२४॥

तत्र सर्वैः सारैरुपेताः पुरुषा भवन्त्यतिबलाः परं गौरवयुक्ताः क्लेशसहाः सर्वारम्भेष्वात्मनि जातप्रत्ययाः कल्याणाभिनिवेशिनः स्थिरसमाहितशरीराः सुसमाहितगतयः सानुनादस्निग्धगम्भीरमहास्वराः सुखैश्वर्यवित्तोपभोगसम्मानभाजो मन्दजरसो मन्दविकाराः प्रायस्तुल्यगुणविस्तीर्णापत्याः चिरजीविनश्च॥ १२५॥

अतो विपरीतास्त्वसाराः॥ १२६॥

मध्यानां मध्यैः सारविशेषैर्गुणविशेषा व्याख्याताः। इति साराण्यष्टौ पुरुषाणां बलप्रमाणविशेषज्ञानार्थानि॥ १२७॥

कथं नु शरीरमात्रदर्शनादेव भिषक् मुह्येदयमुपचितत्वाद्बलवानयम् अल्पबलः कृशत्वात् महाबलवानयं महाशरीरत्वादयमल्पशरीरत्वादल्पबल इति। दृश्यन्ते ह्यल्पशरीराः कृशाश्चैके बलवन्तः तत्र पिपीलिकाभारहरणवत् सिद्धिः। अतश्च सारतः परीक्षेत इत्युक्तम्॥ १२८॥

संहननतश्चेति संहननं सङ्घातः संयोजनमित्येकोऽर्थः॥१२९

तत्र समसुविभक्तास्थिसुवद्धसन्धिसुनिविष्टमांसशोणितं सुसंहतं शरीरमित्युच्यते। तत्र सुसंहतशरीराः पुरुषा बलवन्तो विपर्ययेण अल्पबलाः प्रवरावरमध्यत्वात् संहननस्य मध्यबला भवन्ति॥ १३०॥

प्रमाणतश्चेति शरीरप्रमाणं पुनर्यथा स्वेनाङ्गुलिप्रमाणेनोपदेक्ष्यते। उत्सेधविस्तारायामैर्यथाक्रमम्॥ १३१॥

तत्र पादौ चत्वारि षट् चतुर्दश चाङ्गुलानि, जङ्घे त्वष्टा-

वर्षशतं खलु आयुषः प्रमाणमस्मिन् काले। सन्ति पुनरधिकोनवर्षशतजीविनो मनुष्याः। तेषां विकृतिवर्ज्यैः प्रकृत्यादिबलविशेषैरायुषो लक्षणतश्च प्रमाणमुपलभ्य वयसस्त्रित्वं विभजेत्। एवं प्रकृत्यादीनां विकृतिवर्ज्यानां भावानां प्रवरमध्यावरविभागेन बलविशेषं विभजेत्। विकृतिबलत्रैविध्येन तु दोषबलं त्रिविधमनुमीयते। ततो भैषज्यस्य तीक्ष्णमृदुमध्यविभागेन त्रित्वं विभज्य यथादोषं भैषज्यमवचारयेदिति॥१४२॥

आयुषः प्रमाणज्ञानहेतोः पुनरिन्द्रियेषु जातिसूत्रीये च लक्षणान्युपदेक्ष्यन्ते॥ १४३॥

कालः पुनः संवत्सरश्चातुरावस्था च। तत्र संवत्सरो द्विधा त्रिधा षोढा द्वादशधा भूयश्चातः प्रविभज्यते तत् तत् कार्यमभिसमीक्ष्य॥ १४४॥

तत्र खलु तावत् षोढा प्रविभज्य कार्यमुपदेक्ष्यते। हेमन्तो ग्रीष्मो वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रयः ऋतवो भवन्ति। तेषाम् अन्तरेष्वितरे साधारणलक्षणास्त्रयः ऋतवः प्रावृट्शरद्वसन्ता इति। प्रावृट् इति प्रथमः प्रवृष्टेः कालस्तस्य अनुबन्धो वर्षा एवमेते संशोधनमधिकृत्य षड् विभज्यन्ते ऋतवः॥ १४५॥

तत्र साधारणलक्षणेष्वृतुषु वमनादीनां प्रवृत्तिर्विधीयते निवृत्तिरितरेषु। साधारणलक्षणा हि मन्दशीतोष्णवर्षत्वात् सुखतमाश्च भवन्ति अविकल्पकाश्च शरीरौषधानाम् इतरे पुनरत्यर्थशीतोष्णवर्षत्वात् दुःखतमाश्च भवन्ति विकल्पकाश्च शरीरौषधानाम्॥ १४६॥

तत्र हेमन्ते ह्यतिमात्रशीतोपहतत्वात् शरीरमसुखोपपन्नं भवति। अतिशीतवाताध्मातमतिदारुणीभूतमवनद्धदोषम्। भेषजं पुनःसंशोधनार्थमुष्णस्वभावम् अन्ते शीतोपहतत्वान्मन्दवीर्यत्वमापद्यते। तस्मात् तयोः संयोगे संशोधनमयोगायोपपद्यते शरीरञ्च वातोपद्रवाय॥ १४७॥

ग्रीष्मे पुनर्घर्मशोषोपहतत्वात् शरीरमसुखोपपन्नं भवति। उष्णवातातपाध्मातमतिशिथिलमत्यन्तमविलीनदोषं भेषजं पुनः संशोधनार्थ-मुष्णस्वभावमेवात्युष्णानुगमनात् तीक्ष्णतरत्वमापद्यते। तस्मात् तयोः संयोगे संशोधनमतियोगायोपपद्यते शरीरम् अपि पिपासोपद्रवाय ॥ १४८ ॥

वर्षासु तु मेघजालावतते गूढार्कचन्द्रतारे धाराकुले वियति भूमौ पङ्कजलपटलसंहतायाम् अत्यर्थोपक्लिन्नशरीरेषु भूतेषु विहतस्वभावेषु च केवलेषु औषधग्रामेषु तोयदानुगतमारुतसंसर्गोपहतेषु गुरुप्रवृत्तीनि वमनादीनि भवन्ति। गुरुसमुत्थानानि शरीराणि। तस्माद्वमनादीनां निवृत्तिर्विधीयते वर्षान्तेषु ऋतुषु न चेदात्ययिकं कर्म ॥ १४९ ॥

आत्ययिके पुनः कर्मणि काममृतुं विकल्प्य कृत्रिमगुणोपधानेन यथर्तुगुणविपरीतेन भेषज्यं संयोगसंस्कारप्रमाणविकल्पेन उपपाद्यप्रमाणवीर्यसमं कृत्वा ततः प्रयोजयेदुत्तमेन यत्नेन अवहितः ॥ १५० ॥

आतुरावस्थास्वपि तु कार्याकार्यं प्रति कालाकालसंज्ञा तद्यथा—अस्यामवस्थायामस्य भेषजस्य कालोऽकालः पुनरस्येति ॥ १५१ ॥

एतदपि भवति अवस्थाविशेषेण तस्मादातुरावस्थास्वपि हि कालाकालसंज्ञा। तस्य परीक्षा मुहुर्मुहुरातुरस्य सर्वावस्थाविशेषावेक्षणं यथावत् भेषजप्रयोगार्थम्। न ह्यतिपतितकालमप्राप्तकालं वा भेषजमुपयुज्यमानं यौगिकं भवति। कालो हि भैषज्यप्रयोगपर्याप्तिमभिनिर्वर्त्तयति ॥ १५२ ॥

प्रवृत्तिस्तु प्रतिकर्म्म समारम्भः। तस्य लक्षणं भिषगातुरौषधपरिचारकाणां क्रियासमायोगः ॥ १५३ ॥

उपायः पुनर्भिषगादीनां सौष्ठवमभिसन्धानञ्च सम्यक्। तस्य

लक्षणं भिषगादीनां यथोक्तगुणसम्पद्देशकालप्रमाणसात्म्यक्रियादिभिश्च सिद्धिकारणैः सम्यगुपपादितस्यौषधस्यावचारणमिति। एवमेते दश परीक्ष्यविशेषाः पृथक् पृथक् परीक्षितव्याः भवन्ति। परीक्षायास्तु खलु प्रयोजनं प्रतिपत्तिज्ञानम् ॥ १५४ ॥

प्रतिपत्तिर्नाम स यस्तु विकारः यथा प्रतिपत्तव्यस्तस्य तथानुष्ठानज्ञानम् ॥ १५५ ॥

यत्र तु खलु वमनादीनां प्रवृत्तिर्यत्र च निवृत्तिस्तद्व्यासतः सिद्धिपूत्तरकालमुपदेक्ष्यते। प्रवृत्तिनिवृत्तिलक्षणसंयोगे तु खलु गुरुलाघवं संप्रधार्य सम्यगध्यवस्येत् अन्यतरनिष्ठायाम्। सन्ति हि व्याधयः शास्त्रेषु उत्सर्गापवादैरुपक्रमं प्रति निर्दिष्टाः। तस्मात् गुरुलाघवं सम्प्रधार्य सम्यगध्यवस्येदित्युक्तम् ॥ १५६ ॥

यानि तु खलु वमनादिषु भेषजद्रव्याण्युपयोगं गच्छन्ति तान्यनुव्याख्यास्यन्ते। तद्यथा—फलजीमूतकेक्ष्वाकुधामार्गवकुटजकाण्डिकाक्षतवेधनफलानि। जीमूतकेक्ष्वाकुकुटजकृतवेधनपत्रपुष्पाणि। आरग्वधवृक्षकमदनस्वादुकण्टकपाठापाटलाशार्ङ्गष्टामूर्वा-सप्तपर्णनक्तमाल-पिचुमर्दपटोलसुषवी-गुडूचीसोमवल्कचित्रकद्वीपिशिग्रुमूलकषायेषु। मधुमधूककोविदारकर्बुदारनीपनिचुलविम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्पीकषायैश्च एलाहरेणुप्रियङ्गु-पृथ्वीका-कुस्तुम्बुरुतगरनलदह्रीवेरतालीशोशीरकषायैश्च। इक्षुकाण्डेक्षुवालिकादर्भपोटगलकालङ्कृतकषायैश्च। सुमनाः सौमनस्यायनीहरिद्रा-दारुहरिद्रा-वृश्चीरपुनर्नवामहासहाक्षुद्रसहाकषायैश्च शाल्मलिशाल्मलकभद्रपर्णीलार्ग्वेलोदिकोद्दालकधन्वनराजादनोपचित्रागोपी-शृङ्गाटिका-कपिकच्छुकषायैश्च। पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरसर्षपफाणितक्षीरक्षारलवणोदकैश्च यथोपलाभं यथेष्टं वाप्युपसंस्कृत्य वर्तिक्रियाचूर्णावलेहस्नेहकषाय-मांसरस-यवागूयूपकाम्बलिकक्षीरोपधेयान्

मोदकानन्यांश्च योगान् विविधाननुविधाय यथार्हं वमनार्हाय दद्यात् विधिवद्वमनमिति कल्पसंग्रहो वमनद्रव्याणां कल्पस्त्वेषां विस्तरेणोत्तरकालमुपदेक्ष्यते ॥१५७॥

विरेचनद्रव्याणि तु श्यामात्रिवृच्चतुरङ्गुलतिल्वकमहावृक्षसप्तलाशङ्खिनीदन्तीद्रवन्तीनां क्षीरमूलत्वक्पत्रपुष्पफलानि यथायोगमेतैश्चैव क्षीरमूलत्वक्पत्रफलपुष्पफलैर्विकल्पिताविकल्पितैः अजगन्धाश्वगन्धाजशृङ्गीक्षीरिणीनीलिनीक्लीतककषायैश्च प्रकीर्योदकीर्यामसूरविदलाकम्पिल्लकविडङ्गगवाक्षीकषायैश्च पीलुप्रियालमृद्वीकाकाश्मर्यपरूषक-बदरदाडिमामलक-हरीतकीविभीतकवृश्चीरपुनर्नवाविदारिगन्धादिकषायैश्च सीधुसुरासौवीरकतुषोदकमैरेयमेदक-मदिरामधुमधूलकधान्याम्लकुवलबदर-खर्जूरकर्कन्धुभिश्च दधिदधिमण्डोदश्विद्भिश्च गोमहिष्यजावीनाञ्च क्षीरमूत्रैर्यथोपलाभं यथेष्टं वाप्युपसंस्कृत्य वर्त्तिक्रियाचूर्णावलेहस्नेहकषायमांसरसयूषकाम्बलिकयवागूक्षीरोपधेयान् मोदकानन्यांश्च भक्ष्यविकारान् विविधांश्च योगानभिविधाय यथार्हं विरेचनार्हाय दद्याद्विरेचनमिति कल्पसंग्रहो विरेचनद्रव्याणाम्। कल्पस्त्वेषां विस्तरेणोपदेक्ष्यते उत्तरकालम् ॥ १५८ ॥

आस्थापनेषु तु भूयिष्ठकल्पानि सुद्रव्याणि नामतो विस्तरेणोपदिश्यमानानि अपरिसंख्येयानि स्युरतिबहुत्वात्। इष्टश्चानतिसंक्षेपविस्तरोपदेशस्तन्त्रे इष्टञ्च केवलं ज्ञानं तस्माद्रसत एव तान्यनुव्याख्यास्यन्ते ॥ १५९ ॥

रससंसर्गविकल्पविस्तारो ह्येषामपरिसंख्येयः समवेतानां रसानाम् अंशांशबलविकल्पातिबहुत्वात् तस्माद् द्रव्याणाञ्चैकदेशमुदाहरणार्थं रसेष्वनुविभज्य रसैकैकदेशेन च नामलक्षणार्थञ्च षडास्थापनस्कन्धा रसतोऽनुविभज्य व्याख्यास्यन्ते। यत् तु षड्विधमास्थापनमाचक्षते भिषजस्तद्दुर्लभतरं संसृष्टरस-

भूयिष्ठत्वाद् द्रव्याणाम्। तस्मात् मधुराणि मधुरप्रायाणि मधुरप्रभावाणि मधुरप्रभावप्रायाण्यपि च मधुरस्कन्धे मधुराण्येव कृत्वोपदेक्ष्यन्ते। *तथा इतराणि द्रव्याण्यपि तद्यथा,*— जीवकर्षभकौ जीवन्तीवीरातामलकीकाकोली क्षीरकाकोली मुद्गपर्णीमाषपर्णी शालपर्णी पृश्निपर्ण्य समपर्णी-मेदामहामेदा कर्कटशृङ्गीशृङ्गाटिकाछिन्नरुहाच्छत्रातिच्छत्रा श्रावणीमहाश्रावणी मलम्बुषा सहदेवा विश्वदेवाशुक्लाक्षीरशुक्लाबलाति-बलाविदारी, क्षीरविदारी, क्षुद्रसहा महासहा-ऋष्यगन्धाश्वगन्धा-पयस्यावृश्चीर-पुनर्नवा बृहती-कण्टकारिकैरण्डमोरटश्वदंष्ट्रासंहर्षाशतावरीशतपुष्पा मधूकपुष्पीयष्टिमधुमधूलिकामृद्वीका खर्जूर-परूषकात्मगुप्तापुष्करबीज-कशेरुका राजकशेरुका कतकतककाश्मर्य्यशीतपाक्योदनपाकी तालखर्जूरमस्तकेक्षुक्षुवालिका दर्भकुशकाशशालिगुन्द्रेत्कटक शरमूलराजक्षवकर्षप्रोक्ता--द्वारदाभारद्वाजीवनत्रपुष्यभीरुपत्री--हंसपदीकाकनासाकुलिङ्गाक्षी-क्षीरवल्लीकपोतवल्लीगोपवल्लीमधुवल्लीसोमवल्लीति। एषामेवंविधानामन्येषाञ्च मधुरवर्गपरिसंख्यातानाम् औषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालितायां स्थाल्यां समवाप्य पयसार्द्धोदकेनाभ्यासिच्य साधयेद्दर्व्या सततमुपघट्टयन् तदुपयुक्तभूयिष्ठेऽम्भसि गतरसेष्वौषधेषु पयसि चानुपदग्धे स्थालीमुपहृत्य परिस्रुतं पूतं पयः सुखोष्णं घृततैलवसामज्जलवणफाणितोपहितं वस्तिं वातविकारिणे विधिज्ञो विधिवद्दद्यात्। शीतन्तु मधुसर्पिर्भ्यांमुपसंसृज्य पित्तविकारिणे दद्यादिति मधुरस्कन्धः ॥१६०॥

आम्राम्रातकलकुचकरमर्दवृक्षाम्लाम्लवेतसकुवलवदरदाडिममातुलुङ्गकण्डीरामलकनन्दीतकशीतकतिन्तिडीकदन्तशठैरावत-[illegible]नानां फलानि पत्राणि च अश्मन्तकचाङ्गेरीणां

चतुर्विधानां चाम्लिकानां द्वयोः कोलयोर्द्वयोश्च आमशुष्कयोः द्वयोश्च शुष्काम्लिकयोर्ग्राम्यारण्ययोश्चासवद्रव्याणि च सुरासौ-वीर-तुषोदक-मैरेयमेदकमदिरामधुशीधुशुक्तदधि दधिमण्डोद-श्विद् धान्याम्लादीनि एषामेवंविधानाञ्चान्येषाञ्चाम्लवर्ग-परि संख्यातानामौषधद्रव्याणां छेद्यानि खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा द्रवैः स्थितानि अवसिच्य साधयित्वोपसंस्कृत्य यथावत् तैलवसामधुमज्जलवणफाणितोपहितं सुखोष्णं वस्तिं वातविकारिणे विधिवद्दद्यात् इति अम्लस्कन्धः ॥ १६१ ॥

सैन्धवसौवर्चलकालविड्पाक्यानूपकूप्यबालकैलमूलकसामु-द्ररोमकौद्भिदौषरपाटेयकपांशुजानीति एवंप्रकाराणि चान्यानि लवणवर्गपरिसंख्यातानि एतानि अम्लोपहितानि उष्णोदकोप-हितानि वा स्नेहवन्ति सुखोष्णं वस्तिं वातविकारिणे विधिज्ञो विधिवद्दद्यात् इति लवणस्कन्धः ॥ १६२ ॥

पिप्पलीपिप्पलीमूलहस्तिपिप्पली चव्यचित्रकशृङ्गवेरमरि-चाजमोदार्द्रकविडङ्गकुस्तुम्बुरुपीलुतेजोवत्येलाकुष्ठभल्लातकास्थि-हिङ्गुकिलिममूलकसर्षप-लशुन-करञ्जशिग्रुकमधुरा-शिग्रुकखर-पुष्पाभूस्तृणसुमुखसुरस-कुठेरक-काण्डीरकालमालकपर्णासक्षव-कफणिज्झकक्षारमूत्रपित्तानाम् एषामेवंविधानाञ्चान्येषां कटु-कवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा गोमूत्रेण सह साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद्दद्यात् इति कटुकस्कन्धः ॥ १६३ ॥

चन्दननलदकृतमालनक्तमालनिम्बतुम्बुरुकुटजहरिद्रादारु-हरिद्रामुस्तमूर्वा किराततिक्तककटुरोहिणीत्रायमाणाकरवीर-केबुककठिल्लकवृषमण्डूकपर्णीकर्कोटकवार्ताकुकर्कशकाकमाची-कारवेल्लकाकोडुम्बरिकासुषव्यतिविषा पटोलकुलकपाठागुडू-

धीवेरोग्रवेतसविकङ्कतवकुलसोमवल्कसप्तपर्णसुमनोऽर्कावल्गुज-वचातगरागुरुवालकोशीराणाम्। एषामेवंविधानाञ्चान्येषां तिक्तवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेनाभ्यासिच्य साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद्दद्यात्। शीतन्तु मधुसर्पिर्भ्यामुपसंस्कृत्य पित्तविकारिणे दद्यात् इति तिक्तस्कन्धः॥ १६४॥

प्रियङ्ग्वनन्ताम्रास्थि अम्बष्ठकीकटङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मापद्मकेशरजम्ब्वाम्रप्लक्षवटकपीतनोदुम्बराश्वत्थभल्लातकाश्मन्तकाशिरीषशिंशपासोमवल्कतिन्दुकपियालबदरखदिरसप्तपर्णाश्वकर्णस्यन्दनार्जुनासनारिमेदैलवालुकपरिपेलवकदम्बशल्लकीजिङ्गिनीकाशकशेरुकाराजकशेरुकाकट्फलवंशपद्मकाशोकशालधवसर्जभूर्जशणपुष्पीशमीमाचीकवरकतुङ्गाजकर्णाश्वकर्णस्फूर्जकविभीतककुम्भीकपुष्करबीजबिसमृणालतालखर्जूरतरुणीनाम् एषाम् एवंविधानाञ्चान्येषां कषायवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेन सह साधयित्वोपसंस्कृत्य यथावत् मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे दद्यात् इति। शीतन्तु मधुसर्पिर्भ्यामुपसंस्कृत्य पित्तविकारिणे दद्यात् इति कषायस्कन्धः॥ १६५॥

तत्र श्लोकाः। षड्वर्गाः परिसंख्याता य एते रसभेदतः।
आस्थापनमभिप्रेत्य तान् विद्यात् सार्वयौगिकान्॥ १६६॥
सर्वतो हि प्रणिहिताः सर्वरोगेषु जानता।
सर्वान् रोगान् नियच्छन्ति येभ्य आस्थापनं हितम्॥१६७॥
येषां येषां प्रशान्त्यर्थं ये ये न परिकीर्त्तिताः।
द्रव्यवर्गा विकाराणां तेषां ते परिकोपकाः॥ १६८॥

इत्येते षड़ास्थापनस्कन्धा रसतोऽनुविभज्य व्याख्याताः। तेभ्यो भिषग् बुद्धिमान् परिसंख्यातमपि यद्द्रव्यमयौगिकं मन्येत तदपकर्षयेत्। यद् यच्चानुक्तमपि यौगिकं वा मन्येत तत् तद्दद्यात्। वर्गमपि वर्गेण उपसंसृजेदेकमेकेन अनेकेन वा युक्तिं प्रमाणीकृत्य। प्रचरणमिव भिक्षुकस्य बीजमिव कर्षकस्य सूत्रं बुद्धिमतामल्पमपि अनल्पज्ञानाय भवति ॥ ९९ ॥

तस्मात् बुद्धिमतामूहापोहवितर्का मन्दबुद्धेस्तु यथोक्तानुगमनमेव श्रेयः ॥ १०० ॥

यथोक्तं हि मार्गमनुगच्छन् भिषक् संसाधयति वा कार्यमनतिमहत्त्वादनतिह्रस्वत्वादुदाहरणस्येति ॥ १०१ ॥

अतःपरमनुवासनद्रव्याणि अनुव्याख्यास्यन्ते। अनुवासनन्तु स्नेह एव। स्नेहस्तु द्विविधः। स्थावरो जङ्गमात्मकश्च। तत्र स्थावरात्मकः स्नेहः तैलमतैलञ्च। तत्र तैलमेव कृत्वोपदिश्यते सर्वतस्तैलप्राधान्यात्। जङ्गमात्मकस्तु वसामज्जासर्पिरिति ॥१०२ ॥

तेषां तैलवसामज्जसर्पिषान्तु यथापूर्वं श्रेष्ठम्। वातश्लेष्मविकारेषु अनुवासनीयेषु यथोत्तरं पित्तविकारेषु सर्व एव वा सर्वेषु योगमायान्ति संस्कारविधिविशेषादिति ॥ १०३ ॥

शिरोविरेचनद्रव्याणि पुनः अपामार्गपिप्पलीमरिचविडङ्गशिग्रुशिरीष-कुस्तुम्बुरु-बिल्वाजाज्याजमोदावार्त्ताकीपृथ्वीकैलाहरेणुफलानि च। सुमुखसुरसकुठेरकागण्डीरककालमालकपर्णासक्षवकफणिज्झकहरिद्राशृङ्गवेरमूलकलशुनतर्करीसर्षपपत्राणि च। अर्कालर्ककुष्ठनागदन्तीवचापामार्गश्वेताज्योतिष्मतीगवाक्षीगण्डीरावाक्पुष्पीवृश्चिकालीवयस्थातिविषामूलानि च। हरिद्राशृङ्गवेरमूलकलशुनकन्दाश्च लोध्रमदनसप्तपर्णनिम्बार्कपुष्पाणि च। देवदार्वगुरुसरलशल्लकीजिङ्गिन्यसनहिङ्गुनिर्यासाश्च तेजोवतीइङ्गुदीशोभाञ्जनबृहतीकण्टकारिकाफलानि। शिरोविरेचनं सप्तविधं फलपत्रमूलकन्दपुष्पनिर्यासत्वगाश्रयभेदात् ॥ १०४ ॥

लवणकटुतिक्तकषायाणि च इन्द्रियोपशयानि तथापराण्युक्तान्यपि द्रव्याणि यथायोगविहितानि शिरोविरेचनार्थमुपदिश्यन्ते इति ॥ १७५ ॥

तत्र श्लोकाः ।

लक्षणाचार्य्यशिष्याणां परीक्षा कारणञ्च यत् ।
अध्येयाध्यापनविधिः सम्भाषाविधिरेव च ॥ १७६ ॥
षड्भिर्न्यूनानि पञ्चाशद्वादशार्थपदानि च ।
पदानि दश चान्यानि कारणादीनि तत्त्वतः ॥ १७७ ॥
सम्यक्च परीक्षादेर्नवको वमनादिषु ।
भिषग्जितीये रोगाणां विमाने सम्प्रदर्शितः ॥१७८॥
बहुविधमिदमुक्तमर्थजातं बहुविधवाक्यविचित्रमर्थजातम् ।
बहुविधशुभशब्दसन्धियुक्तं बहुविधवादनिसूदनं परेषाम् ॥१७९॥
इमां मतिं बहुविधहेतुसंश्रयां विजज्ञिवान् परमतवादसूदनीम् ।
निलीयते परवचनावमर्दनैर्न शक्यते परवचनैश्च मर्दितुम् ॥१८०॥
दोषादीनान्तु भावानां सर्वेषामेव हेतुना ।
मानात् समस्तमानानि निरुक्तानि विभागशः ॥१८१॥

विमानस्थानं समाप्तम् ।

---

## शारीरस्थानम् ।

प्रथमोऽध्यायः ।

कतिधापुरुषीयम् ।

अग्निवेश उवाच । कतिधा पुरुषो धीमन् ! धातुभेदेन भिद्यते ।
पुरुषः कारणं कस्मात् प्रभवः पुरुषस्य कः ॥ १ ॥
किमज्ञोऽज्ञः स नित्य. किं किमनित्यो निदर्शितः ।
प्रकृतिः का विकाराः के किं लिङ्गं पुरुषस्य च ॥ २ ॥

निष्क्रियश्च स्वतन्त्रश्च वशिनं सर्वगं विभुम् ।
वदन्त्यात्मानमात्मज्ञाः क्षेत्रज्ञं साक्षिणं तथा ॥ ३ ॥
निष्क्रियस्य क्रिया तस्य भगवन् ! विद्यते कथम् ।
स्वतन्त्रश्चेदनिष्टासु कथं योनिषु जायते ॥ ४ ॥
वशी यद्यसुखैः कस्माद्भावैराक्रम्यते बलात् ।
सर्वाः सर्वगतत्वाच्च वेदनाः किं न वेत्ति सः ॥ ५ ॥
न पश्यति विभुः कस्माच्छैलकुड्यतिरस्कृतम् ।
क्षेत्रज्ञः क्षेत्रमथवा किं पूर्वमिति संशयः ॥ ६ ॥
ज्ञेयं क्षेत्रं विना पूर्वं क्षेत्रज्ञो हि न युज्यते ।
क्षेत्रञ्च यदि पूर्वं स्यात् क्षेत्रज्ञः स्यादशाश्वतः ॥ ७ ॥
साक्षिभूतश्च कस्यायं कर्त्ता ह्यन्यो न विद्यते ।
स्यात् कथञ्चाविकारस्य विशेषो वेदनाकृतः ॥ ८ ॥
अथ चार्त्तस्य भगवंस्तिसृणां कां चिकित्सति ।
अतीतां वेदनां वैद्यो वर्त्तमानां भविष्यतीम् ॥ ९ ॥
भविष्यन्त्या असंप्राप्तिरतीताया अनागमः ।
साम्प्रतिक्या अपि स्थानं नास्त्यर्त्तेः संशयो ह्यतः ॥ १० ॥
कारणं वेदनानां किं किमधिष्ठानमुच्यते ।
क्व चैता वेदनाः सर्वा निवृत्तिं यान्त्यशेषतः ॥ ११ ॥
सर्ववित् सर्वसंन्यासी सर्वसंयोगनिःसृतः ।
एकः प्रशान्तो भूतात्मा कैर्लिङ्गैरुपलभ्यते ॥ १२ ॥
वच इत्यग्निवेशस्य श्रुत्वा मतिमतांवरः ।
सर्वं यथावत् प्रोवाच प्रशान्तात्मा पुनर्वसुः ॥ १३ ॥
खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः ।
चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः ॥ १४ ॥
पुनश्च धातुभेदेन चतुर्विंशतिकः स्मृतः ।
मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी ॥ १५ ॥

लक्षणं मनसो ज्ञानस्याभावो भाव एव वा।
सति ह्यात्मेन्द्रियार्थानां सन्निकर्षे न वर्त्तते ॥ १६ ॥
वैवृत्यान्मनसो ज्ञानं सान्निध्यात् तच्च वर्त्तते।
अणुत्वमथचैकत्वं द्वौ गुणौ मनसः स्मृतौ ॥ १७ ॥
चिन्त्यं विचार्य्यमूह्यञ्च ध्येयं सङ्कल्प्यमेव च।
यत् किञ्चिन्मनसो ज्ञेयं तत् सर्वं ह्यर्थसंज्ञकम् ॥ १८ ॥
इन्द्रियाभिग्रहः कर्म्म मनसस्तस्य निग्रहः।
ऊहो विचारश्च ततः परं बुद्धिः प्रवर्त्तते ॥ १९ ॥
इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते।
कल्प्यते मनसाप्यूर्द्ध्वं गुणतो दोषतो यथा ॥ २० ॥
जायते विषये तत्र या बुद्धिर्निश्चयात्मिका।
व्यवस्यति तया वक्तुं कर्त्तुं वा बुद्धिपूर्व्वकम् ॥ २१ ॥
एकैकाधिकयुक्तानि खादीनामिन्द्रियाणि तु।
पञ्चकर्म्मानुमेयानि येभ्यो बुद्धिः प्रवर्त्तते ॥२२ ॥
हस्तपादं गुदोपस्थं जिह्वेन्द्रियमथापि वा।
कर्म्मेन्द्रियाणि पञ्चैव पादौ गमनकर्म्मणि ॥ २३ ॥
पायूपस्थौ विसर्गार्थे हस्तौ ग्रहणधारणे।
जिह्वा वागिन्द्रियं वाक् च सत्या ज्योतिस्तमोऽनृता ॥ २४ ॥
महाभूतानि खं वायुरग्निरापः क्षितिस्तथा।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः ॥ २५ ॥
तेषामेको गुणः पूर्व्वो गुणवृद्धिः परे परे।
पूर्व्वः पूर्व्वो गुणश्चैव क्रमशो गुणिषु स्मृतः ॥ २६ ॥
खरद्रवचलोष्णत्वं भूजलानिलतेजसाम्।
आकाशस्याप्रतीघातो दृष्टं लिङ्गं यथाक्रमम् ॥ २७ ॥
लक्षणं सर्व्वमेवैतत् स्पर्शनेन्द्रियगोचरः।
स्पर्शनेन्द्रियविज्ञेयः स्पर्शो हि सविपर्य्ययः ॥ २८ ॥

गुणाः शरीरे गुणिनां निर्दिष्टाश्चिह्नमेव च।
अर्था शब्दादयो ज्ञेया गोचरा विषया गुणाः॥ २९॥
या यदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्त्तते।
याति सा तेन निर्देश्यं मनसा च मनोभवा॥ ३०॥
भेदात् कार्य्येन्द्रियार्थानां बह्व्यो वै बुद्धयः स्मृताः।
आत्मेन्द्रियमनोऽर्थानामेकैका सन्निकर्षजा॥ ३१॥
अङ्गुल्यङ्गुष्ठतलजस्तन्त्रीवीणानखोद्भवः।
दृष्टः शब्दो यथा बुद्धिर्दृष्टा संयोगजा तथा॥ ३२॥
बुद्धीन्द्रियमनोऽर्थानां विद्याद् योगधरं परम्।
चतुर्विंशक इत्येष राशिः पुरुषसंज्ञकः॥ ३३॥
रजस्तमोभ्यां युक्तस्य संयोगोऽयमनन्तवान्।
ताभ्यां निराकृताभ्यान्तु सत्त्ववृद्ध्या निवर्त्तते॥ ३४॥
अत्र कर्म्मफलञ्चात्र ज्ञानञ्चात्र प्रतिष्ठितम्।
अत्र मोहः सुखं दुःखं जीवितं मरणं स्वता॥ ३५॥
एवं यो वेद तत्त्वेन स वेद प्रलयोदयौ॥ ३६॥
पारम्पर्य्यं चिकित्सा च ज्ञातव्यं यच्च किञ्चन॥ ३७॥
भास्तमः सत्यमनृतं वेदः कर्म्म शुभाशुभम्।
न स्यात् कर्त्ता वेदिता च पुरुषो न भवेद् यदि॥ ३८॥
नाश्रयो न सुखं नार्त्तिर्न गतिर्नागतिर्न वाक्।
न विज्ञानं न शास्त्राणि न जन्ममरणं न च॥ ३९॥
न बन्धो न च मोक्षः स्यात् पुरुषो न भवेद् यदि।
कारणं पुरुषस्तस्मात् कारणज्ञैरुदाहृतः॥ ४०॥
न च कारणमात्मा स्यात् खादयः स्युरहेतुकाः।
न चैषु सम्भवेत् ज्ञानं न च तैः स्यात् प्रयोजनम्॥ ४१॥
मृद्दण्डचक्रैश्च कृतं कुम्भकारादृते घटम्।
कृतं मृत्तृणकाष्ठैश्च गृहकाराद्विना गृहम्॥ ४२॥

यो वदेद् स वदेद्देहं सम्भूयकरणैः कृतम्।
विना कर्त्तारमज्ञानाद् युक्त्यागमबहिष्कृतः ॥ ४३ ॥
कारणं पुरुषः सर्वैः प्रमाणैरुपलभ्यते।
येभ्यः प्रमेयं सर्वेभ्य आगमेभ्यः प्रतीयते ॥ ४४ ॥
न ते तत्सदृशास्त्वन्ये पारम्पर्य्यसमुत्थिताः।
सारूप्याद्ये त एवेति निर्दिश्यन्ते नवा नवाः ॥ ४५ ॥
भावास्तेषां समुदयो निरीशः सत्त्वसंज्ञकः।
कर्त्ता भोक्ता न स पुमानिति केचिद्व्यवस्थिताः ॥ ४६ ॥
तेषामन्यैः कृतस्यान्ये भावाभावैर्नराः फलम्।
भुञ्जते सदृशाः प्राप्तं यैरात्मा नोपदिश्यते ॥ ४७ ॥
कारणान्यन्यता दृष्टा कर्त्तुः कर्त्ता स एव तु।
कर्त्ता हि करणैर्युक्तः कारणं सर्वकर्मणाम् ॥ ४८ ॥
निमेषकालाद्भावानां कालः शीघ्रतरोऽत्यये।
भग्नानां च पुनर्भावः कृतं नान्यमुपैति च ॥ ४९ ॥
मतं तत्त्वविदामेतद् यस्मात् कर्त्ता स कारणम्।
क्रियोपभोगे भूतानां नित्यः पुरुषसञ्ज्ञकः ॥ ५० ॥
अहङ्कारः फलं कर्म देहान्तरगतिः स्मृतिः।
विद्यते सति भूतानां कारणे देहमन्तरा ॥ ५१ ॥
प्रभवो न ह्यनादित्वाद्विद्यते परमात्मनः।
पुरुषो राशिसंज्ञस्तु मोहेच्छाद्वेषकर्मजः ॥ ५२ ॥
आत्मज्ञः करणैर्योगात् ज्ञानं तस्य प्रवर्त्तते।
करणानामवैमल्यादयोगाद्वा न वर्त्तते ॥ ५३ ॥
पश्यतोऽपि यथादर्शे संक्लिष्टे नास्ति दर्शनम्।
तद्वज्जले वा कलुषे चेतस्युपहते तथा ॥ ५४ ॥
करणानि मनो बुद्धिर्बुद्धिकर्मेन्द्रियाणि च।
कर्त्तुः संयोगजं कर्म वेदना बुद्धिरेव च ॥ ५५ ॥

नैकः प्रवर्त्तते कर्त्तुं भूतात्मा नाश्नुते फलम् ।
संयोगाद्वर्त्तते सर्वं तमृते नास्ति किञ्चन ॥ ५६ ॥
न ह्येको वर्त्तते भावो वर्त्तते नाप्यहेतुकः ।
शीघ्रगत्वात् स्वभावात् तु भावो न व्यतिवर्त्तते ॥ ५७ ॥
अनादिः पुरुषो नित्यो विपरीतस्तु हेतुजः ।
सदा कारणवन्नित्यं दृष्टं हेतुमदन्यथा ॥ ५८ ॥
तदेव भावादग्राह्यं नित्यत्वान्न कुतश्चन ।
भावात् ज्ञेयं तदव्यक्तमचिन्त्यं व्यक्तमन्यथा ॥ ५९ ॥
अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः ।
तस्मात् यदन्यत् तद्व्यक्तं वक्ष्यते चापरं द्वयम् ॥ ६० ॥
व्यक्तमैन्द्रियकञ्चैव गृह्यते तद् यदिन्द्रियैः ।
अतोऽन्यत् पुनरव्यक्तं लिङ्गग्राह्यमतीन्द्रियम् ॥ ६१ ॥
खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः ।
भूतप्रकृतिरुद्दिष्टा विकाराश्चैव षोडश ॥ ६२ ॥
बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ।
समनस्काश्च पञ्चार्था विकारा इति सञ्ज्ञिताः ॥ ६३ ॥
इति क्षेत्रं समुद्दिष्टं सर्वमव्यक्तवर्जितम् ।
अव्यक्तमस्य क्षेत्रस्य क्षेत्रज्ञमृषयो विदुः ॥ ६४ ॥
जायते बुद्धिरव्यक्ताद् बुद्ध्याहमिति मन्यते ।
परं खादीन्यहङ्कार उपादत्ते यथाक्रमम् ॥ ६५ ॥
ततः सम्पूर्णसर्वाङ्गो जातोऽभ्युदित उच्यते ।
पुरुषः प्रलये चेष्टैः पुनर्भावैर्वियुज्यते ॥ ६६ ॥
अव्यक्ताद्व्यक्ततां याति व्यक्तादव्यक्ततां पुनः ।
रजस्तमोभ्यामाविष्टश्चक्रवत् परिवर्त्तते ॥ ६७ ॥
येषां द्वन्द्वे परासक्तिरहङ्कारपराश्च ये ।
उदयप्रलयौ तेषां न तेषां ये त्वतोऽन्यथा ॥ ६८ ॥

प्राणापानौ निमेषाद्या जीवनं मनसो गतिः ।
इन्द्रियान्तरसञ्चारः प्रेरणं धारणञ्च यत् ॥ ६९ ॥
देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा ।
दृष्टस्य दक्षिणेनाक्ष्णा सव्येनावगमस्तथा ॥ ७० ॥
इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः ।
बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ॥ ७१ ॥
यस्मात् समुपलभ्यन्ते लिङ्गान्येतानि जीवतः ।
न मृतस्यात्मलिङ्गानि तस्मादाहुर्महर्षयः ॥ ७२ ॥
शरीरं हि गते तस्मिन् शून्यागारमचेतनम् ।
पञ्चभूतावशेषत्वात् पञ्चत्वं गतमुच्यते ॥ ७३ ॥
अचेतनं क्रियावच्च मनश्चेतयिता परः ।
युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः ॥ ७४ ॥
चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते ।
अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ॥ ७५ ॥
यथा स्वेनात्मनः सर्वं मनः सर्वासु योनिषु ।
प्राणैस्तन्त्रयते प्राणी न ह्यन्योऽस्यस्य तन्त्रकः ॥ ७६ ॥
वशी तत् कुरुते कर्म यत् कृत्वा फलमश्नुते ।
वशी चेतः समाधत्ते वशी सर्वं निरस्यति ॥ ७७ ॥
देही सर्वगतो ह्यात्मा स्वे स्वे संस्पर्शनेन्द्रिये ।
सर्वाः सर्वाश्रयस्थास्तु नात्मातो वेत्ति वेदनाः ॥ ७८ ॥
विभुत्वमत एवास्य यस्मात् सर्वगतो महान् ।
मनसश्च समाधानात् पश्यत्यात्मा तिरस्कृतम् ॥ ७९ ॥
नित्यानुबन्धं मनसा देहकर्मानुपातिना ।
सर्वयोनिगतं विद्यादेकयोनावपि स्थितम् ॥ ८० ॥
आदिर्नास्त्यात्मनः क्षेत्रपारम्पर्य्यमनादिकम् ।
अतस्तयोरनादित्वात् किं पूर्वमिति नोच्यते ॥ ८१ ॥

ज्ञः साक्षीत्युच्यते नाज्ञः साक्षी ह्यात्मा यतः स्मृतः ।
सर्वभावा हि सर्वेषां भूतानामात्मसाक्षिकाः ॥ ८२ ॥
नैकः कदाचिद्भूतात्मा लक्षणैरुपलभ्यते ।
विशेषोऽनुपलभ्यस्य तस्य नैकस्य विद्यते ॥ ८३ ॥
संयोगः पुरुषस्येष्टो विशेषो वेदनाकृतः ।
वेदना यत्र नियता विशेषस्तत्र तत्कृतः ॥ ८४ ॥
चिकित्सति भिषक् सर्वास्त्रिकाला वेदना इति ।
यया युक्त्या वदन्त्येके सा युक्तिरुपधार्यताम् ॥ ८५ ॥
पुनस्तच्छिरसः शूलं ज्वरः स पुनरागतः ।
पुनः स कासो बलवांश्छर्दिः सा पुनरागता ॥ ८६ ॥
एभिः प्रसिद्धैर्वचनैरतीतागमनं मतम् ।
कालश्चायमतीतानामार्त्तीनां पुनरागतः ॥ ८७ ॥
तमार्त्तिकालमुद्दिश्य भेषजं यत् प्रयुज्यते ।
अतीतानां प्रशमनं वेदनानां तदुच्यते ॥ ८८ ॥
आपस्ताः पुनरागुर्या याभिः शस्यं पुरा हतम् ।
तथा प्रक्रियते सेतुः प्रतिकर्म तथाश्रयेत् ॥ ८९ ॥
पूर्वरूपं विकाराणां दृष्ट्वा प्रादुर्भविष्यताम् ।
या क्रिया क्रियते सा च वेदनां हन्त्यनागताम् ॥ ९० ॥
पारम्पर्य्यानुबन्धस्तु दुःखानां विनिवर्त्तते ।
सुखहेतूपचारेण सुखञ्चापि प्रवर्त्तते ॥ ९१ ॥
न समा यान्ति वैषम्यं विषमाः समतां न च ।
हेतुभिः सदृशा नित्यं जायन्ते देहधातवः ॥ ९२ ॥
युक्तिमेतां पुरस्कृत्य त्रिकालां वेदनां भिषक् ।
हन्तीत्युक्ता चिकित्सा सा नैष्ठिकी या विनोपधा ॥ ९३ ॥
उपधा हि परो हेतुर्दुःखदुःखाश्रयप्रदः ।
त्यागः सर्वोपधानाञ्च सर्वदुःखव्यपोहकः ॥ ९४ ॥

कोषकारो यथा ह्यंशूनुपादत्ते वधप्रदान्।
उपादत्ते तथार्थेभ्यस्तृष्णामज्ञः सदातुरः ॥ ९५ ॥
यस्त्वग्निकल्पानर्थान् ज्ञो ज्ञात्वा तेभ्यो निवर्त्तते।
अनारम्भादसंयोगात् तं दुःखं नोपतिष्ठते ॥ ९६ ॥
धीधृतिस्मृतिविभ्रंशः सम्प्राप्तिः कालकर्मणाम्।
असात्म्यार्थागमश्चेति ज्ञातव्या दुःखहेतवः ॥ ९७ ॥
विषमाभिनिवेशो यो नित्यानित्ये हिताहिते।
ज्ञेयः स बुद्धिविभ्रंशः समं बुद्धिर्हि पश्यति ॥ ९८ ॥
विषयप्रवणं चित्तं धृतिभ्रंशान्न शक्यते।
नियन्तुमहितादर्थाद्धृतिर्हि नियमात्मिका ॥ ९९ ॥
तत्त्वज्ञाने स्मृतिर्यस्य रजोमोहावृतात्मनः।
भ्रश्यते स स्मृतिभ्रंशः स्मर्त्तव्यं हि स्मृतौ स्थितम् ॥ १०० ॥
धीधृतिस्मृतिविभ्रष्टः कर्म यत् कुरुतेऽशुभम्।
प्रज्ञापराधं तं विद्यात् सर्वदोषप्रकोपणम् ॥ १०१ ॥
उदीरणं गतिमतामुदीर्णानाञ्च निग्रहः।
सेवनं साहसानाञ्च नारीणाञ्चातिसेवनम् ॥ १०२ ॥
कर्मकालातिपातश्च मिथ्यारम्भश्च कर्मणाम्।
विनयाचारलोपश्च पूज्यानाञ्चाभिधर्षणम् ॥ १०३ ॥
ज्ञातानां स्वयमर्थानामहितानां निषेवणम्।
परमौन्मादिकानाञ्च प्रत्ययानां निषेवणम् ॥ १०४ ॥
अकालादेशसञ्चारौ मैत्री संक्लिष्टकर्मभिः।
इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्जनम् ॥ १०५ ॥
ईर्ष्यामानमदक्रोधलोभमोहमदभ्रमाः।
तज्जं वा कर्म यत् क्लिष्टं क्लिष्टं यद्देहकर्म च ॥ १०६ ॥
यच्चान्यदीदृशं कर्म रजोमोहसमुत्थितम्।
प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम् ॥ १०७ ॥

बुद्ध्या विषमविज्ञानं विषमञ्च प्रवर्त्तनम्।
प्रज्ञापराधं जानीयात् मनसो गोचरं हि तत्॥ १०८॥
निर्दिष्टा कालसम्प्राप्तिर्व्याधीनां हेतुसंग्रहे।
चयप्रकोपप्रशमाः पित्तादीनां यथा पुरा॥ १०९॥
मिथ्यातिहीनलिङ्गाश्च वर्षान्ता रोगहेतवः।
जीर्णभुक्तं प्रजीर्णान्न कालाकालस्थितिश्च या॥ ११०॥
पूर्वमध्यापराह्णाश्च रात्र्या यामास्त्रयश्च ये।
येषु कालेषु नियता ये रोगास्ते च कालजाः॥ १११॥
अन्येद्युष्को द्व्यहग्राही तृतीयकचतुर्थकौ।
स्वे स्वे काले प्रवर्त्तन्ते काले ह्येषां बलागमः॥ ११२॥
एते चान्ये च ये केचित् कालजा विविधा गदाः।
अनागते चिकित्स्यास्ते बलकालौ विजानता॥ ११३॥
कालस्य परिणामेन जरामृत्युनिमित्तजाः।
रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः॥ ११४॥
निर्दिष्टं दैवशब्देन कर्म यत् पौर्वदेहिकम्।
हेतुस्तदपि कालेन रोगाणामुपलभ्यते॥ ११५॥
न हि कर्म महत् किञ्चित् फलं यस्य न भुज्यते।
क्रियाघ्नाः कर्मजा रोगाः प्रशमं यान्ति तत्क्षयात्॥११६॥
अत्युग्रशब्दश्रवणात् श्रवणात् सर्वशो न च।
शब्दानाञ्चातिहीनानां भवन्ति श्रवणाज्जड़ाः॥ ११७॥
परुषोद्भीषणाशस्ताप्रियव्यसनसूचकैः।
शब्दैः श्रवणसंयोगो मिथ्यायोगः स उच्यते॥ ११८॥
असंस्पर्शोऽतिसंस्पर्शो हीनसंस्पर्श एव च।
स्पृश्यानां संग्रहेणोक्तः स्पर्शनेन्द्रियबाधकः॥ ११९॥
यो भूतविषवातानामकाले नागतश्च यः।
स्नेहशीतोष्णसंस्पर्शो मिथ्यायोगः स उच्यते॥ १२०॥

रूपाणां भास्वतां दृष्टिर्विनश्यति च दर्शनात् ॥ १२१ ॥
दर्शनाच्चातिसूक्ष्माणां सर्वशश्चाप्यदर्शनात् ।
द्विष्टभैरवबीभत्सदूरातिश्लिष्टदर्शनात् ॥ १२२ ॥
तामसानाञ्च रूपाणां मिथ्यासंयोग उच्यते ।
अत्यादानमनादानमोकसात्म्यादिभिश्च यत् ॥ १२३ ॥
रसानां विषमादानमल्पादानञ्च दूषणम् ।
अतिमृद्वतितीक्ष्णानां गन्धानामुपसेवनम् ॥ १२४ ॥
असेवनं सर्वशश्च घ्राणेन्द्रियविनाशनम् ।
पूतिभूतविषद्विष्टा गन्धा ये चाप्यनार्त्तवाः ॥ १२५ ॥
तैर्गन्धैर्घ्राणसंयोगो मिथ्यायोगः स उच्यते ।
इत्यसात्म्यार्थसंयोगस्त्रिविधो दोषकोपनः ॥ १२६ ॥
असात्म्यमिति तद्विद्याद् यन्न याति सहात्मताम् ॥१२७॥
मिथ्यातिहीनयोगेभ्यो यो व्याधिरुपजायते ।
शब्दादीनां स विज्ञेयो व्याधिरैन्द्रियको बुधैः ॥ १२८ ॥
वेदनानामशातानामित्येते हेतवः स्मृताः ।
सुखहेतुर्मतस्त्वेकः समयोगः सुदुर्लभः ॥ १२९ ॥
नेन्द्रियाणि न चैवार्थाः सुखदुःखस्य हेतवः ।
हेतुस्तु सुखदुःखस्य योगो दृष्टश्चतुर्विधः ॥ १३० ॥
सन्तीन्द्रियाणि सन्त्यर्था योगो न च न चास्ति रुक् ।
न सुखं कारणं तस्माद् योग एव चतुर्विधः ॥ १३१ ॥
नात्मेन्द्रियं मनोबुद्धिगोचरं कर्म वा विना ।
सुखं दुःखं यथा यच्च बोद्धव्यं तत् तथोच्यते ॥ १३२ ॥
स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च ।
द्विविधः सुखदुःखानां वेदनानां प्रवर्त्तकः ॥ १३३ ॥
इच्छाद्वेषात्मिका तृष्णा सुखदुःखात् प्रवर्त्तते ।
तृष्णा च सुखदुःखानां कारणं पुनरुच्यते ॥ १३४ ॥

उपादत्ते हि सा भावान् वेदनाश्रयसंज्ञकान् ।
स्पृश्यते नानुपादानो नास्पृष्टो वेत्ति वेदनाः ॥ १३५ ॥
वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः ।
केशलोमनखाग्रान्नमलद्रवगुणैर्विना ॥ १३६ ॥
योगे मोक्षे च सर्वासां वेदनानामवर्त्तनम् ।
मोक्षो निवृत्तिर्निःशेषा योगो मोक्षप्रवर्त्तकः ॥ १३७ ॥
आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्त्तते ।
सुखं दुःखमनारम्भादात्मस्थे मनसि स्थिते ॥ १३८ ॥
निवर्त्तते तदुभयं वशित्वञ्चोपजायते ।
सशरीरस्य योगज्ञास्तं योगमृषयो विदुः ॥ १३९ ॥
आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया ।
दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥ १४० ॥
इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम् ।
शुद्धसत्त्वसमाधानात् तत् सर्वमुपजायते ॥ १४१ ॥
मोक्षो रजस्तमोऽभावाद्बलवत्कर्मसंक्षयात् ।
वियोगः कर्मसंयोगैरपुनर्भाव उच्यते ॥ १४२ ॥
सतामुपासनं सम्यगसतां परिवर्जनम् ।
व्रतचर्य्योपवासौ च नियमाश्च पृथग्विधाः ॥ १४३ ॥
धारणं धर्मशास्त्राणां विज्ञानं विजने रतिः ।
विषयेष्वरतिर्मोक्षे व्यवसायः परा धृतिः ॥ १४४ ॥
कर्मणामसमारम्भः कृतानाञ्च परिक्षयः ।
नैष्क्रम्यमनहङ्कारः संयोगे भयदर्शनम् ॥ १४५ ॥
मनोबुद्धिसमाधानमर्थतत्त्वपरीक्षणम् ।
तत्त्व स्मृतेरुपस्थानात् सर्वमेतत् प्रवर्त्तते ॥ १४६ ॥
स्मृतिः सत्सेवनाद्यैश्च धृत्यन्तैरुपलभ्यते ।
स्मृत्वा स्वभावं भावानां स्मरन् दुःखात् प्रमुच्यते ॥ १४७ ॥

वक्ष्यन्ते कारणान्यष्टौ स्मृतिर्यैरुपजायते।
निमित्तरूपग्रहणात् सादृश्यात् सविपर्ययात् ॥१४८॥
सत्त्वानुबन्धादभ्यासात् ज्ञानयोगात् पुनः श्रुतात्।
दृष्टश्रुतानुभूतानां स्मरणात् स्मृतिरुच्यते ॥ १४९ ॥
एतत् तदेकमयनं मुक्तैर्मोक्षस्य दर्शितम्।
तत्त्वस्मृतिबलं येन गता न पुनरागताः ॥ १५० ॥
अयनं पुनराख्यातमेतद् योगस्य योगिभिः।
संख्यातधर्मैः सांख्यैश्च मुक्तैर्मोक्षस्य चायनम् ॥ १५१ ॥
सर्वं कारणवद्दुःखमस्वञ्चानित्यमेव च।
न चात्मकृतकं तद्धि तत्र चोत्पद्यते स्वता ॥ १५२ ॥
यावन्नोत्पद्यते सत्या बुद्धिर्नैतदहं यया।
नैतन्मम च विज्ञाय ज्ञः सर्वमतिवर्तते ॥ १५३ ॥
तस्मिंश्चरमसंन्यासे समूलाः सर्ववेदनाः।
ससंज्ञा ज्ञानविज्ञानाः निवृत्तिं यान्त्यशेषतः ॥ १५४ ॥
अतःपरं ब्रह्मभूतो भूतात्मा नोपलभ्यते।
निःसृतः सर्वभावेभ्यश्चिह्नं यस्य न विद्यते ॥ १५५ ॥
गतिर्ब्रह्मविदां ब्रह्म तच्चाक्षरमलक्षणम्।
ज्ञानं ब्रह्मविदाञ्चात्र नाज्ञस्तज्ज्ञातुमर्हति ॥ १५६ ॥
प्रश्नाः पुरुषमाश्रित्य त्रयोविंशतिरुत्तमाः।
कतिधापुरुषीयेऽस्मिन् निर्णीतास्तत्त्वदर्शिना ॥ १५७ ॥

---

## द्वितीयोऽध्यायः।

### अतुल्यगोत्रीयम्।

अतुल्यगोत्रस्य रजःक्षयान्ते रहोविसृष्टं मिथुनीकृतस्य।
किं स्याच्चतुष्पात्प्रभवञ्च षड्भ्यो यत् स्त्रीषु गर्भत्वमुपैति पुंसः ॥१॥

शुक्रं तदस्य प्रवदन्ति धीरा यद्धीयते गर्भसमुद्भवाय।
वाय्वग्निभूम्यब्गुणपादवत्तं षड्भ्यो रसेभ्यः प्रभवश्च तस्य ॥ २ ॥
सम्पूर्णदेहः समये सुखञ्च गर्भः कथं केन च जायते स्त्री।
गर्भं चिराद्विन्दति सप्रजापि भूत्वाथवा नश्यति केन गर्भः ॥३॥
शुक्रासृगात्माशयकालसम्पद् यस्योपचारश्च हितैस्तथार्थैः।
गर्भश्च काले च सुखी सुखञ्च सञ्जायते सम्परिपूर्णदेहः ॥ ४ ॥
योनिप्रदोषान्मनसोऽभितापाच्छुक्रासृगाहारविहारदोषात्।
अकालयोगाद्बलसंक्षयाच्च गर्भं चिराद्विन्दति सप्रजापि ॥ ५ ॥
असृङ्निरुद्धं पवनेन नार्य्या गर्भं व्यवस्यन्त्यबुधाः कदाचित्।
गर्भस्य रूपं हि करोति तस्यास्तदासृगस्रावि विवर्द्धमानम् ॥६॥
तदग्निसूर्य्यश्रमशोकरोगैरुष्णान्नपानैरथवा प्रवृत्तम्।
दृष्टासृगेकेन च गर्भसंज्ञाः केचिन्नरा भूतहृतं वदन्ति ॥ ७ ॥
ओजोऽशनानां रजनीचराणामाहारहेतोर्न शरीरमिष्टम्।
गर्भं हरेयुर्यदि तेन मातुर्लब्धावकाशं न हरेयुरोजः ॥ ८ ॥
कन्यां सुतं वा सहितौ पृथग्वा सुतौ सुते वा तनयान् बहून् वा।
कस्मात् प्रसूते सुचिरेण गर्भमेकोऽभिवृद्धिश्च यमेऽभ्युपैति ॥ ९ ॥
रक्तेन कन्यामधिकेन पुत्रं शुक्रेण तेन द्विविधीकृतेन।
बीजेन कन्याञ्च सुतञ्च सूते यथास्वबीजान्यतराधिकेन ॥ १० ॥
शुक्राधिकं द्वैधमुपैति बीजं यस्याः सुतौ सा सहितौ प्रसूते।
रक्ताधिकं वा यदि भेदमेति द्विधासुते सा सहिते प्रसूते ॥११॥
भिनत्ति यावद्बहुधा प्रपन्नः शुक्रार्त्तवं वायुरतिप्रवृद्धः।
तावन्त्यपत्यानि यथाविभागं कर्मात्मकान्यस्ववशात् प्रसूते ॥१२॥
आहारमाप्नोति यदा न गर्भः शोषं समाप्नोति परिस्रुतिं वा।
तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात् ॥१३॥
कर्मात्मकत्वाद्विषमांशभेदाच्छुक्रासृजं वृद्धिमुपैति कुक्षौ।
एकोऽधिकोन्यूनतरो द्वितीय एवं यमेऽप्यभ्यधिको विशेषः ॥१४ ॥

कस्माद्द्विरेताः पवनेन्द्रियो वा संस्कारवाही नरनारिषण्डः।
वक्री तथेर्ष्याभिरतिः कथं वा सञ्जायते वातिकषण्डको वा ॥१५॥
बीजात् समांशादुपतप्तबीजात् स्त्रीपुंसलिङ्गी भवति द्विरेताः।
शुक्राशयं गर्भगतस्य हत्वा करोति वायुः पवनेन्द्रियत्वम् ॥१६॥
शुक्राशयद्वारविघट्टनेन संस्कारवाहं हि करोति वायुः।
मन्दाल्पबीजावबलावहर्षौ क्लीबौ च हेतुर्विकृतिद्वयस्य ॥१७॥
मातुर्व्यवायप्रतिघेन वक्री स्याद्बीजदौर्बल्यतया पितुश्च।
ईर्ष्याभिभूतावपि मन्दहर्षावीर्ष्यारतेरेव वदन्ति हेतुम् ॥ १८ ॥
वाय्वग्निदोषाद्वृषणौ तु यस्य नाशं गतौ वातिकषण्डकः सः।
इत्येवमष्टौ विकृतिप्रकाराः कर्मात्मकानामुपलक्षणीयाः ॥१९॥
गर्भस्य सद्योऽनुगतस्य कुक्षौ स्त्रीपुंनपुंसामुदरस्थितानाम्।
किं लक्षणं कारणमिष्यते किं सरूपतां येन च यात्यपत्यम् ॥२०॥
निष्ठीविका गौरवमङ्गसादस्तन्द्राप्रहर्षौ हृदयव्यथा च।
तृप्तिश्च बीजग्रहणञ्च योन्या गर्भस्य सद्योऽनुगतस्य लिङ्गम् ॥२१॥
सव्याङ्गचेष्टा पुरुषार्थिनी स्त्री स्त्रीस्वप्नपानाशनशीलचेष्टा।
सव्याङ्गगर्भा न च वृत्तगर्भा सव्यप्रदुग्धा स्त्रियमेव सूते ॥२२॥
पुत्रं त्वतो लिङ्गविपर्ययेण व्यामिश्रलिङ्गा प्रकृतिं तृतीयाम्।
गर्भोपपत्तौ तु मनःस्त्रियाः यं जन्तुं व्रजेत् तत् सदृशं प्रसूते ॥२३॥
गर्भस्य चत्वारि चतुर्विधानि भूतानि मातापितृसम्भवानि।
आहारजान्यात्मकृतानि चैव सर्वस्य सर्वाणि भवन्ति देहे ॥२४॥
तेषां विशेषाद्बलवन्ति यानि भवन्ति मातापितृकर्मजानि।
तानि व्यवस्येत् सदृशत्वलिङ्गं सत्त्वं यथानूकमपि व्यवस्येत् ॥२५॥
कस्मात् प्रजां स्त्री विकृतां प्रसूते हीनाधिकाङ्गीं विकलेन्द्रियां वा।
देहात् कथं देहमुपैति चान्यमात्मा सदा कैरनुबध्यते च ॥२६॥
बीजात्मकर्माशयकालदोषैर्मातुस्तथाहारविहारदोषैः।
कुर्वन्ति दोषा विविधानि दुष्टाः संस्थानवर्णेन्द्रियवैकृतानि ॥२७॥

वर्षासु काष्ठाश्मघनाम्बुवेगास्तरोः सरित्स्रोतसि संस्थितस्य।
यथैव कुर्य्युर्विकृतिं तथैव गर्भस्य कुक्षौ नियतस्य दोषाः॥२८॥
भूतैश्चतुर्भिः सहितःसुसूक्ष्मैर्मनोजवो देहमुपैति देहात्।
कर्म्मात्मकत्वान्न तु तस्य दृश्यं दिव्यं विनादर्शनमस्ति रूपम्॥२९॥
स सर्वगः सर्वशरीरभृच्च स विश्वकर्म्मा स च विश्वरूपः।
स चेतना धातुरतीन्द्रियश्च स नित्ययुक् सानुशयः स एव॥ ३०॥
रसात्ममातापितृसम्भवानि भूतानि विद्याद्दश षट् च देहे।
चत्वारि तत्रात्मनि संश्रितानि स्थितस्तथात्मा च चतुर्षु तेषु॥३१॥
भूतानि मातापितृसम्भवानि रजश्च शुक्रञ्च वदन्ति गर्भे।
आप्याय्यते शुक्रमसृक् च भूतैर्यैस्तानि भूतानि रसोद्भवानि॥३२॥
भूतानि चत्वारि तु कर्म्मजानि यान्यात्मलीनानि विशन्ति गर्भम्।
स बीजधर्म्मा ह्यपरापराणि देहान्तराण्यात्मनि याति याति॥३३॥
रूपाद्धि रूपप्रभवः प्रसिद्धः कर्म्मात्मकानां मनसो मनस्तः।
भवन्ति ये त्वाकृतिबुद्धिभेदा रजस्तमस्तत्र च कर्म्महेतुः॥ ३४॥
अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तरूपः।
न कर्म्मणा नैव मनोमतिभ्यां न चाप्यहङ्कारविकारदोषैः॥३५॥
रजस्तमोभ्यान्तु मनोऽनुबद्धं ज्ञानं विना तत्र हि सर्वदोषाः।
गतिप्रवृत्त्योस्तु निमित्तमुक्तं मनः सदोषं बलवच्च कर्म्म॥ ३६॥
रोगाः कुतः संशमनं किमेषां हर्षस्य शोकस्य च किं निमित्तम्।
शरीरसत्त्वप्रभवा विकाराः कथं न शान्ताः पुनरापतेयुः॥ ३७॥
प्रज्ञापराधो विषमास्तदर्था हेतुस्तृतीयः परिणामकालः।
सर्वामयानां त्रिविधा च शान्तिर्ज्ञानार्थकालाः समयोगयुक्ताः॥३८
धर्म्याः क्रिया हर्षनिमित्तमुक्तास्ततोऽन्यथा शोकवशं नयन्ति।
शरीरसत्त्वप्रभवास्तु दोषास्तयोरवृत्त्या न भवन्ति भूयः॥ ३९॥
रूपस्य सत्त्वस्य च सन्ततिर्यानोक्तस्तदादिर्न हि सोऽस्ति कश्चित्।
तयोरवृत्तिः क्रियते पराभ्यां धृतिस्मृतिभ्यां परया धिया च॥४०॥

सत्त्वाश्रये वा द्विविधे यथोक्ते पूर्वं गदेभ्यः प्रतिकर्म्म नित्यम्।
जितेन्द्रियं नानुपतन्ति रोगास्तत् कालयुक्तं यदि नास्ति दैवम्॥४१
दैवं पुरा यत् कृतमुच्यते तु तत् पौरुषं यत्त्विह कर्म्म दृष्टम्।
प्रवृत्तिहेतुर्विषमः स दृष्टो निवृत्तिहेतुस्तु समः स एव ॥ ४२ ॥
हैमन्तिकं दोषचयं वसन्ते प्रवाहयन् ग्रैष्मिकमभ्रकाले।
घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्न जातु ॥४३॥
नरो हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥ ४४ ॥
मतिर्वचः कर्म्म सुखानुबन्धि सत्त्वं विधेयं विशदा च बुद्धिः।
ज्ञानं तपस्तत्परता च योगे यस्यास्ति तं नानुपतन्ति रोगाः ॥४५॥

तत्र श्लोकः।

इहाग्निवेशस्य महार्थयुक्तं षड्विंशकं प्रश्नगणं महर्षिः।
चतुष्पदोक्ते भगवान् यथावद्व्यगीतवान् ज्ञानविवर्द्धनार्थम् ॥४६॥

---

## तृतीयोऽध्यायः।

### खुड्डीका गर्भावक्रान्तिः।

पुरुषस्यानुपहतरेतसः स्त्रियाश्चाप्रदुष्टयोनिशोणितगर्भाशयाया यदा भवति संसर्गः ऋतुकाले। यदा चानयोस्तथैव युक्तयोः संसर्गे तु शुक्रशोणितसंसर्गमन्तर्गर्भाशयगतं जीवोऽवक्रामति सत्त्वसम्प्रयोगात् तदा गर्भोऽभिनिर्वर्त्तते ॥ १ ॥

स सात्म्यरसोपयोगादरोगोऽभिसंवर्द्धते सम्यगुपचारैश्चोपचर्य्यमाणः। ततः प्राप्तकालः सर्वेन्द्रियोपपन्नः परिपूर्णसर्वशरीरो बलवर्णसत्त्वसंहननसम्पदुपेतः सुखेन जायते समुदायादेषां भावानाम् ॥ २ ॥

मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्चास्ति च सत्त्वमौपपादुकमिति होवाच भगवानात्रेयः ॥३॥

नेति भरद्वाजः। किं कारणं हि न माता न पिता नात्मा न सात्म्यं न पानाशनभक्ष्यलेह्योपयोगा गर्भं जनयन्ति। न च परलोकादेत्य गर्भं सत्त्वसंज्ञकमवक्रामति। यदि हि मातापितरौ गर्भं जनयेतां भूयस्यश्च स्त्रियः पुमांसश्च भूयांसः पुत्रकामाः, ते सर्वे पुत्रजन्माभिसन्धाय मैथुनधर्ममापद्यमानाः पुत्रानेव जनयेयुर्दुहितॄर्वा दुहितृकामाः। न च काश्चित् स्त्रियः केचिद्वा पुरुषा निरपत्याः स्युः अपत्यकामाश्च परिदेवेरन्। न चात्मात्मानं जनयति। यदि ह्यात्मात्मानं जनयेज्जातो वा जनयेदात्मानमजातो वा जनयति। तच्च उभयथाप्ययुक्तम्। न हि जातो जनयति सत्त्वात् न चैव वा जातो जनयेत् सत्त्वात् तस्मात् उभयथाप्यनुपपत्तिस्तिष्ठतु। अथ तावदेतत् यदि अयमात्मानं शक्तो जनयितुं स्यात् न तु एनमिष्टास्वेव कथं योनिषु जनयेद्वशिनमप्रतिहतगतिं कामरूपिणं तेजोबलजववर्ण-सत्त्वसंहननसमुदितमजरमरुजममरमेवं विधं हि आत्मात्मान-मिच्छन् नित्यतो वा भूयः॥ ४॥

असात्म्यजश्चायं गर्भो यदि हि सात्म्यजः स्यात् तर्हि सात्म्य-सेविनामेवैकान्तेन प्रजा स्यात्। असात्म्यसेविनश्च निखि-लेन अनपत्याः स्युस्तच्चोभयमुभयत्रैव दृश्यते॥ ५॥

अरसजश्चायं गर्भो यदि हि रसजः स्यान्न केचित् स्त्रीपुरुषेषु अनपत्याः स्युर्न हि कश्चिदस्त्येषां यो रसान्नोपयुङ्क्ते। श्रेष्ठ-रसोपयोगिनां चेद्गर्भा जायन्ते इत्यतोऽभिप्रेतमित्येवं सति। आजौरभ्रमार्गमायूरगोक्षीर-दधि-घृत-मधु-तैल-सैन्धवेक्षुरसमुद्ग-शालिभृतानामेव एकान्तेन प्रजा स्यात्। श्यामाकवरकोद्दाल-कालीरदूषककन्दमूलभक्ष्याश्च निखिलेनानपत्याः स्युः तच्चोभय-मुभयत्रैव दृश्यते॥ ६॥

न खलु अपि परलोकादेत्य सत्त्वं गर्भमवक्रामति। यदि-

त्वेगमवक्रामिन्नास्य किञ्चिदेव पौर्वदेहिकं स्यादविदितमश्रुतमदृष्टं वा। स च किञ्चिदपि न स्मरति तस्मादेतद्‌ब्रूमहे। अमातृजश्चायं गर्भः अपितृजश्चानात्मजश्चासात्म्यजश्चारसजश्च न चास्ति सत्त्वमौपपादिकमिति होवाच भरद्वाजः॥ ७॥

नेति भगवानात्रेयः। सर्वेभ्य एभ्यो भावेभ्यः समुदितेभ्यो गर्भोऽभिनिर्वर्त्तते। मातृजश्चायं गर्भो न हि मातुर्विना गर्भोपपत्तिः स्यात् न च जन्म जरायुजानाम्। यानि खलु अस्य गर्भस्य मातृजानि यानि चास्य मातृतः सम्भवतः सम्भवन्ति तानि अनुव्याख्यास्यामः। तद्यथा,—त्वक् च लोहितञ्च मांसञ्च मेदश्च नाभिश्च हृदयञ्च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधानञ्चामाशयश्च पक्वाशयश्चोत्तरगुदञ्चाधरगुदञ्च क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च वपा च वपावहनञ्चेति मातृजानि॥ ८॥

पितृजश्चायं गर्भो न हि पितुर्ऋते गर्भोत्पत्तिः स्यान्न च जन्म जरायुजानाम्। यानि खलु अस्य गर्भस्य पितृजानि यानि चास्य पितृतः सम्भवतः सम्भवन्ति तानि अनुव्याख्यास्यामः। तद्यथा,—केशश्मश्रुनखलोमदन्तास्थिसिरास्नायुधमन्यः शुक्रमिति पितृजानि॥ ९॥

आत्मजश्चायं गर्भो गर्भात्मा ह्यन्तरात्मा यस्तमेनं जीव इत्याचक्षते। शाश्वतमरुजमजरममरमक्षयमभेद्यमच्छेद्यमक्षोभ्यं विश्वरूपं विश्वकर्माणमव्यक्तमनादिमनिधनमक्षरमपि। स गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयत्यात्मनात्मानमात्मसंज्ञा हि गर्भे तस्य पुनरात्मनो जन्मादिमत्त्वान्नोपपद्यते तस्मादजात एवायं जातं गर्भं जनयति जातोऽप्यजातश्च गर्भं जनयति। स चैव गर्भः कालान्तरेण बालयुवस्थविरभावानवाप्नोति॥ १०॥

स यस्यां यस्यामवस्थायां वर्त्तते तस्यां तस्यां जातो भवति

या त्वस्य पुरस्कृता तस्यां जनिष्यमाणश्च तस्मात् स एव जातश्चाजातश्च युगपद्भवति तस्मिंश्चैतदुभयं सम्भवति जातत्वञ्चैव जनिष्यमाणत्वञ्च। स जातो जन्यते स चैवानागतेष्ववस्थान्तरेषु अजातो जनयत्यात्मनात्मानम्। सतो ह्यवस्थान्तरगमनमात्रमेव हि जन्म चोच्यते तत्र तत्र वयसि तस्यां तस्यामवस्थायाम्। यथा सतामेव शुक्रशोणितजीवानां प्राक् संयोगाद्गर्भत्वं न भवति तच्च संयोगाद्भवति। यथा सतस्तस्यैव पुरुषस्य प्रागपत्यात् पितृत्वं न भवति तच्चापत्याद्भवति। तथा सतस्तस्यैव गर्भस्य तस्यां तस्यामवस्थायां जातत्वमजातत्वञ्चोच्यते॥ ११॥

न तु खलु गर्भस्य मातुर्न पितुर्नात्मनः सर्वभावेषु यथेष्टकारित्वमस्ति। ते किञ्चित् स्ववशात् कुर्वन्ति किञ्चित् कर्मवशात् क्वचिच्चैषां करणशक्तिर्भवति क्वचित् न भवति। यत्र सत्त्वादिकरणसम्पत् तत्र यथाबलमेव यथेष्टकारित्वमतोऽन्यथा विपर्ययः। न च करणदोषादकारणमात्मा गर्भजनने सम्भवति॥ १२॥

दृष्टञ्च चेष्टा योनिरैश्वर्य्यं मोक्षश्चात्मविज्ञिगात्मायत्तम्। न ह्यन्यः सुखदुःखयोः कर्त्ता न चान्यतो गर्भो जायते जायमानो न च अङ्कुरोत्पत्तिरबीजात्॥ १३॥

यानि तु खलु अस्य गर्भस्यात्मजानि यानि च अस्यात्मतः सम्भवतः सम्भवन्ति तानि अनुव्याख्यास्यामः। तद्यथा,—तासु तासु योनिषु उत्पत्तिरायुरात्मज्ञानं मन इन्द्रियाणि प्राणापानौ प्रेरणं धारणमाकृतिस्वरवर्णविशेषाः सुखदुःखे इच्छाद्वेषौ चेतना-धृतिर्बुद्धिस्मृतिरहङ्कारः प्रयत्नश्चेत्यात्मजानि॥ १४॥

सात्म्यजश्चायं गर्भः न हि असात्म्यसेवित्वमन्तरेण स्त्रीपुरुषयोर्वन्ध्यत्वमस्ति गर्भेषु वा अनिष्टो भावः। यावत् खलु असात्म्यसेविनां स्त्रीपुरुषाणां त्रयो दोषाः प्रकुपिताः शरीरमुप-

सर्पन्तो न शुक्रशोणितगर्भाशयोपघातायोपपद्यन्ते तावत् समर्था गर्भजननाय भवन्ति। सात्म्यसेविनां पुनः स्त्रीपुरुषाणामनुपहतशुक्रशोणितगर्भाशयानामृतुकाले सन्निपातितानां जीवस्यानवक्रमणाद्गर्भा न प्रादुर्भवन्ति। न हि केवलं सात्म्यजं एवायं गर्भः समुदायोऽत्र कारणमुच्यते ॥ १५ ॥

यानि तु खल्वस्य गर्भस्य सात्म्यजानि यानि च अस्य सात्म्यतःसम्भवतः सम्भवन्ति तानि अनुव्याख्यास्यामः। तद्यथा—आरोग्यमनालस्यमलोलुपत्वमिन्द्रियप्रसादः स्वरवर्णबीजसम्पत् प्रहर्षभूयस्त्वञ्चेति सात्म्यजानि ॥ १६ ॥

रसजश्चायं गर्भो न हि रसादृते मातुः प्राणयात्रापि स्यात् किं पुनर्गर्भजन्म। न चैवास्य सम्यगुपयुज्यमाना रसा गर्भमभि-निर्वर्त्तयन्ति। न च केवलं सम्यगुपयोगादेव रसानां गर्भाभि-निर्वृत्तिर्भवति समुदायोऽप्यत्र कारणमुच्यते ॥ १७ ॥

यानि तु खल्वस्य गर्भस्य रसजानि यानि चास्य रसतः सम्भवतः सम्भवन्ति तान्यनुव्याख्यास्यामः। तद्यथा ;—शरीरस्याभिनिर्वृत्तिरभिवृद्धिः प्राणानुबन्धस्तृप्तिः पुष्टिरुत्साहश्चेति रसजानि ॥ १८ ॥

अस्ति खल्वपि सत्त्वमौपपादिकं यज्जीवस्पृक् शरीरेणाभि-सम्बध्नाति। यस्मिन्नपगमनपुरस्कृते शीलमस्य व्यावर्त्तते भक्ति-र्विपर्यस्यते सर्वेन्द्रियाण्युपतप्यन्ते बलं हीयते व्याधय आप्या-यन्ते। यस्माद्धीनः प्राणान् जहाति यदिन्द्रियाणामभिग्राहकश्च मन इत्यभिधीयते तत् त्रिविधमाख्यायते शुद्धं राजसं तामसञ्च इति ॥ १९ ॥

' येनास्य खलु मनसो भूयिष्ठं तेन द्वितीयायामाजातौ सम्प्रयोगो भवति। यदा तु तेनैव शुद्धेन संयुज्यते तदा जातेरतिक्रान्ताया अपि स्मरति स्मार्त्तं हि ज्ञानमात्मनस्तस्यैव मनसोऽनुबन्धा-

दनुवर्त्तते यस्यानुवृत्तिं पुरस्कृत्य पुरुषो जातिस्मर इत्युच्यते इति सत्त्वमुक्तम् ॥ २० ॥

यानि खल्वस्य गर्भस्य सत्त्वजानि यानि च अस्य सत्त्वतः सम्भवतः सम्भवन्ति तानि अनुव्याख्यास्यामः। तद्यथा—भक्तिः शीलं शौचं द्वेषः स्मृतिर्मोहस्त्यागो मात्सर्यं शौर्यं भयं क्रोधस्तन्द्रा उत्साहस्तैक्ष्ण्यं मार्दवं गाम्भीर्यमनवस्थितत्वमित्येवमादयश्चान्ये ते सत्त्वजा विकारा यानुत्तरकालं सत्त्वभेदमधिकृत्य उपदेक्ष्यामः इति सत्त्वजानि। नानाविधानि तु खलु सत्त्वानि तानि सर्वाणि एकपुरुषे भवन्ति न च भवन्ति एककालम्, एकन्तु प्रायोऽनुवृत्त्याह। एवमयं नानाविधानामेषां गर्भकराणां भावानां समुदायादभिनिर्वर्त्तते गर्भः ॥ २१ ॥

यथा कूटागारं नानाद्रव्यसमुदायाद्यथा वा रथो नानारथाङ्गसमुदायात् तस्मादेतदवोचाम मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्च। अस्ति सत्त्वमौपपादिकमितिहोवाच भगवानात्रेयः ॥ २२ ॥

भरद्वाज उवाच। यद्ययमेषां नानाविधानां गर्भकराणां भावानां समुदायादभिनिर्वर्त्तते गर्भः कथमयं सन्धीयते। यदि चापि सन्धीयते कस्मात् समुदायप्रभवः सन् गर्भो मनुष्यविग्रहेण जायते मनुष्यश्च मनुष्यप्रभव उच्यते। तत्र चेदिष्टमेतद् यस्मात् मनुष्यो मनुष्यप्रभवः तस्मात् मनुष्यविग्रहेण जायते। यथा गौर्गोप्रभवः यथा चाश्वोऽश्वप्रभव इत्येवं यदुक्तमग्रे समुदायात्मक इति तदयुक्तं यदि च मनुष्यो मनुष्यप्रभवः कस्माज्जडान्धकुब्जमूकवामनमिन्मिनव्यङ्गोन्मत्तकुष्ठकिलासिभ्यो जाताः पितृसदृशरूपा न भवन्ति। अथात्रापि बुद्धिरेवं स्यात् स्वेनैवायमात्मा चक्षुषा रूपाणि वेत्ति श्रोत्रेण शब्दान् घ्राणेन गन्धान् रसनेन रसान् स्पर्शनेन स्पर्शान् बुद्ध्या बोद्धव्यमित्यनेन हेतुना

जड़ादिभ्यो जाताः पितृसदृशा भवन्ति। अत्रापि प्रतिज्ञाहानिदोषः स्यादेवमुक्ते ह्यात्मा सत्स्विन्द्रियेषु ज्ञः स्यादसत्स्वज्ञो यत्र चैतदुभयं सम्भवति ज्ञत्वमज्ञत्वञ्च स विकारप्रकृतिकश्चात्मा निर्विकारो न्नय। यदि च दर्शनादिभिरात्मा विषयान् वेत्ति निरिन्द्रियो दर्शनादिविरहादज्ञः स्यादज्ञत्वाच्च कारणमकारणत्वाच्चानात्मेति वाग्वस्तुमात्रमेतद्वचनमनर्थकं स्यादिति होवाच भरद्वाजः॥ २३॥

आत्रेय उवाच। पुरस्तादेतत् प्रतिज्ञातं सत्त्वं जीवस्पृक् शरीरेणाभिसम्बध्नातीति। यस्मात् तु समुदायप्रभवः सन् गर्भो मनुष्यविग्रहेण जायते मनुष्यश्च मनुष्यप्रभव इत्युच्यते तद्वक्ष्यामः॥ २४॥

भूतानां चतुर्विधा योनिर्भवति जरायुजाण्डस्वेदोद्भिदः। तासां खलु चतसृणामपि योनीनामेकैका योनिरपरिसंख्येयभेदा भवति भूतानामाकृतिविशेषापरिसंख्येयत्वात्। तत्र जरायुजानामण्डजानां प्राणिनामेते गर्भकरा भावा यां यां योनिमापद्यन्ते तस्यां तस्यां योनौ तथातथा रूपा भवन्ति। तद्यथा— कनकरजतताम्रत्रपुसीसा आसिच्यमानास्तेषु तेषु मधूच्छिष्टविम्बेषु ते यदा मनुष्यविम्बमापद्यन्ते तदा मनुष्यविग्रहेण जायन्ते। तस्मात् समुदायात्मकः सन् गर्भो मनुष्यविग्रहेण जायते मनुष्यो मनुष्यप्रभव इत्युच्यते तद्योनित्वात्॥ २५॥

यच्चोक्तं यदि च मनुष्यो मनुष्यप्रभवः कस्मान्न जड़ादिभ्यो जाताः पितृसदृशरूपा भवन्तीति तत्र उच्यते यस्य यस्य हि अङ्गावयवस्य वीजे वीजभाव उपतप्तो भवति तस्य तस्याङ्गावयवस्य विकृतिरुपजायते न उपजायते च अनुतापात् तस्मात् उभयोपपत्तिरपि अत्र सर्वस्य चात्मजानि इन्द्रियाणि तेषां भावाभावहेतुर्दैवं तस्मान्नैकान्ततो जड़ादिभ्यो जाताः पितृसदृशरूपा भवन्ति॥ २६॥

न चात्मा सत्स्विन्द्रियेषु यज्ञोऽसत्सु वा भवत्यज्ञो न ह्यसत्त्वः कदाचिदात्मा सत्त्वविशेषाच्च उपलभ्यते ज्ञानविशेष इति ॥२७॥

भवन्ति चात्र।

न कर्त्तुरिन्द्रियाभावात् कार्य्यज्ञानं प्रवर्त्तते।
यैः क्रिया वर्त्तते या तु सा विना तैर्न वर्त्तते ॥ २८ ॥
जानन्नपि मृदो भावात् कुम्भकृन्न प्रवर्त्तते।
श्रूयताञ्चेदमध्यात्ममात्मज्ञानबलं महत् ॥ २९ ॥
देहेन्द्रियाणि संक्षिप्य मनः संरुह्य चञ्चलम्।
प्रविश्याध्यात्ममात्मज्ञः स्वे ज्ञाने पर्य्यवस्थितः ॥ ३० ॥
सर्वत्र विहितज्ञानः सर्वभावान् परीक्षते।
गृह्णीष्व चेदमपरं भरद्वाज विनिर्णयम् ॥ ३१ ॥
निवृत्तेन्द्रियवाक्चेष्टः सुप्तः स्वप्नगतो यदा।
विषयान् सुखदुःखे च वेत्ति नात्मोऽन्यतः स्मृतः ॥ ३२ ॥
नात्मा ज्ञानादृते चैकं ज्ञानं किञ्चित् प्रवर्त्तते।
न ह्येको वर्त्तते भावो वर्त्तते नाप्यहेतुकः ॥ ३३ ॥
तस्मात् ज्ञः प्रकृतिर्यात्मा द्रष्टा कारणमेव च।
सर्वमेतद्भरद्वाज! निर्णीतं जहि संशयमिति ॥ ३४ ॥

तत्र श्लोकौ।

हेतुर्गर्भस्य निर्वृत्तौ वृद्धौ जन्मनि चैव यः।
पुनर्वसुमतिर्या च भरद्वाजमतिश्च या ॥ ३५ ॥
प्रतिज्ञा प्रतिषेधश्च विशदश्चात्मनिर्णयः।
गर्भावक्रान्तिमुद्दिश्य क्षुड्डीकां सम्प्रकाशितम् ॥ ३६ ॥

---

## चतुर्थोऽध्यायः।—महती गर्भावक्रान्तिः।

यतश्च गर्भः सम्भवति यस्मिंश्च गर्भसंज्ञा यद्विकारश्च गर्भो या चानुपूर्व्याभिनिर्वर्त्तते कुक्षौ यश्चास्य वृद्धिहेतुर्यतश्चास्या-

हृद्भिर्भवति यतश्च जायमानः कुक्षौ विनाशं प्राप्नोति यतश्च कार्त्स्न्येनाविनश्यन् विकृतिमापद्यते तदनुव्याख्यास्यामः ॥१॥

मातृतः पितृत आत्मतः सात्म्यतो रसतः सत्त्वत इत्येतेभ्यो भावेभ्यः समुदितेभ्यो गर्भः सम्भवति । तस्य ये येऽवयवा यतो यतः सम्भवतः सम्भवन्ति तान् विभज्य मातृजादीनवयवान् पृथक् पृथगुक्तमग्रे । शुक्रशोणितजीवसंयोगे तु खलु कुक्षिगते गर्भसंज्ञा भवति ॥ २ ॥

गर्भस्तु खलु अन्तरीक्षवायुग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः एवमनयैव युक्त्या पञ्चमहाभूतविकारसमुदायात्मको गर्भश्चेतनाधातुरधिष्ठानभूतः स ह्यस्य षष्ठो धातुरुक्तः ॥ ३ ॥

यथा त्वानुपूर्व्याभिनिर्वर्त्तते कुक्षौ तदनुव्याख्यास्यामः। गते पुराणे रजसि नवे च अवस्थिते पुनः शुद्धस्नातां स्त्रियमव्यापन्नयोनिशोणितगर्भाशयामृतुमतीमाचक्ष्महे । तया सह तथाभूतया यदा पुमानव्यापन्नबीजो मिश्रीभावं गच्छति तस्य हर्षोदीरितः परः शरीरधात्वात्मा शुक्रभूतोऽङ्गादङ्गात् सम्भवति। स तथा हर्षभूतेनात्मनोदीरितश्च अधिष्ठितबीजधातुः पुरुषशरीरादभिनिष्पत्त्योचितेन हि तेन पथा गर्भाशयमनुप्रविश्यार्त्तवेनाभिसंसर्गमेति । तत्र पूर्वं चेतनाधातुः सत्त्वकरणो गुणग्रहणाय पुनः प्रवर्त्तते । स हि हेतुः कारणं निमित्तमक्षरं कर्त्ता मन्ता वेदिता बोद्धा द्रष्टा धाता ब्रह्मा विश्वकर्मा विश्वरूपः पुरुषः प्रभवोऽव्ययो नित्यः गुणी ग्रहणं प्राधान्यमव्यक्तं जीवो ज्ञः प्रकुलश्चेतनावान् विभुर्भूतात्मा चेन्द्रियात्मा चान्तरात्मा चेति ॥४॥

स गुणोपादानकालेऽन्तरीक्षं पूर्वतरमन्येभ्यो गुणेभ्य उपादत्ते यथा प्रलयात्यये सिसृक्षुर्भूतान्यक्षरभूतः सत्त्वोपादानं पूर्वतरमाकाशं सृजति । ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादीश्चतुरः । तथा देहग्रहणेऽपि प्रवर्त्तमान, पूर्वतरमाकाश-

मेवोपादत्ते ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादींश्चतुरः। सर्वमपि तु खल्वेतद्गुणोपादानमणुना कालेन भवति ॥५॥

स सर्वगुणवान् गर्भत्वमापन्नः प्रथमे मासि संमूर्च्छितः सर्वधातुकलुषीकृतः खेटभूतो भवति अव्यक्तविग्रहः स च सदसद्भूताङ्गावयवः ॥ ६ ॥

द्वितीये मासि घनः सम्पद्यते पिण्डं पेश्यर्वुदं वा तत्र घनः पुरुषः स्त्रीपेशी अर्वुदं नपुंसकम् ॥ ७ ॥

तृतीये मासि सर्वेन्द्रियाणि सर्वाङ्गावयवाश्च यौगपद्येन अभिनिर्वर्त्तन्ते ॥ ८ ॥

तत्रास्य केचिदङ्गावयवा मातृजादीनवयवान् विभज्य पूर्वमुक्ता यथावत् महाभूतविकारप्रविभागेन तु इदानीमस्य तांश्चैव अङ्गावयवान् कांश्चित् पर्य्यायान्तरेण परांश्च अनुव्याख्यास्यामः ॥ ९ ॥

मातृजादयोऽप्यस्य महाभूतविकारा एव तत्रास्याकाशात्मकः शब्दः श्रोत्रं लाघवं सौक्ष्म्यं विवेकश्च ॥ १० ॥

वाय्वात्मकं स्पर्शः स्पर्शनञ्च रौक्ष्यं प्रेरणं धातुव्यूहनं चेष्टाश्च शारीर्यः ॥ ११ ॥

अग्न्यात्मकं रूपं दर्शनं प्रकाशः पक्तिरौष्ण्यञ्च ॥ १२ ॥

अबात्मकं रसो रसनं शैत्यं मार्दवः स्नेहः क्लेदश्च ॥ १३॥

पृथिव्यात्मको गन्धः घ्राणं गौरवं स्थैर्य्यं मूर्त्तिश्च ॥ १४ ॥

एवमयं लोकसम्मतः पुरुषः। यावन्तो हि लोके भावविशेषाः तावन्तः पुरुषे यावन्तः पुरुषे तावन्तो लोके इति बुधास्त्वेवं द्रष्टुमिच्छन्ति ॥ १५ ॥

एवमस्येन्द्रियाणि अङ्गावयवाश्च यौगपद्येनाभिनिर्वर्त्तन्ते अन्यत्र तेभ्यो भावेभ्यो येऽस्य जातस्योत्तरकालं जायन्ते तद्यथा, दन्ता व्यञ्जनानि व्यक्तीभावः तथा युक्तानि चापराणि एषा प्रकृतिः

विकृतिः पुनरतोऽन्यथा। सन्ति खलु अस्मिन् गर्भे नित्या भावाः सन्ति चानित्याः तस्य य एवाङ्गावयवाः सन्तिष्ठन्ते त एव स्त्रीलिङ्गं पुरुषलिङ्गं नपुंसकलिङ्गं वा बिभ्रति ॥ १६ ॥

ततः स्त्रीपुरुषयोर्ये वैशेषिका भावाः प्रधानसंश्रया गुणसंश्रयाश्च तेषां यतो भूयस्त्वं ततोऽन्यतरभावः। तद्यथा क्लैब्यं भीरुत्वमवैशारद्यं मोहोऽवस्थानमधोगुरुत्वमसंहननं शैथिल्यं मार्दवं गर्भाशयबीजभागस्तथा युक्तानि चापराणि स्त्रीकराणि। अतो विपरीतानि पुरुषकराणि उभयभागभावानि नपुंसककराणि। यस्य यत्कालमेव इन्द्रियाणि सन्तिष्ठन्ते तत्कालमेवास्य चेतसि वेदनाभिबन्धं प्राप्नोति। तस्मात् तदा प्रभृति गर्भः स्पन्दते प्रार्थयते च जन्मान्तरानुभूतमिह यत् किञ्चित् तद्दौहृदय्यमाचक्षते वृद्धाः। मातृजञ्चास्य हृदयं मातृहृदयाभिसम्बद्धं रसवाहिनीभिः संवाहिनीभिस्तस्मात् तयोस्ताभिर्भक्तिः सम्पद्यते। तच्चैव कारणमवेक्षमाणा न दौहृदस्य विमानितं गर्भमिच्छन्ति कर्त्तुं विमाने ह्यस्य दृश्यते विनाशो विकृतिर्वा ॥ १७ ॥

समानयोगक्षेमा हि माता तदा गर्भेण केषुचिदर्थेषु तस्मात् प्रियहिताभ्यां गर्भिणीं विशेषेणोपचरन्ति कुशलाः ॥ १८ ॥

तस्या दौहृदय्यस्य च विज्ञानार्थं लिङ्गानि समासेन उपदेक्ष्यामः ॥ १९ ॥

उपचारसंबोधनं ह्यस्याग्रे दीपज्ञानञ्च लिङ्गतस्तस्मादिष्टो लिङ्गोपदेशस्तद्यथा आर्त्तवादर्शनमास्यसंस्रवणमनन्नाभिलापश्छर्दिररोचकोऽम्लकामता च विशेषेण। श्रद्धाप्रणयनञ्चोच्चावचेषु भावेषु गुरुगात्रत्वं चक्षुषो ग्लानिः स्तनयोः स्तन्यमोष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यमत्यर्थं श्वयथुः पादयोरीपल्लोमराज्युद्गमो योन्याश्चाटालत्वमिति गर्भे पर्य्यागते रूपाणि भवन्ति ॥ २० ॥

सा यत् यत् इच्छेत् तत्तदस्यै दद्यादन्यत्र गर्भोपघातकरेभ्यो

भावेभ्यः। गर्भोपघातकरास्त्विमे भावाः तद्यथा सर्वमतिगुरूष्णतीक्ष्णदारुणाश्च चेष्टा इमांश्चान्यानुपदिशन्ति वृद्धाः। देवतारक्षोऽनुचरपरिरक्षणार्थं न रक्तानि वासांसि बिभृयात् न मदकराणि चाद्यान्नाभ्यवहरेन्न यानमधिरोहेन्न मांसमश्नीयात् सर्वेन्द्रियप्रतिकूलांश्च भावान् दूरतः परिवर्जयेत्॥ २१॥

यच्चान्यदपि किञ्चित् स्त्रियो विदुस्तीत्रायास्तु खलु प्रार्थनायां काममहितमप्यस्यै हितेनोपसंहितं दद्यात् प्रार्थनाविलयनार्थम्। प्रार्थनासन्धारणाद्धि वायुः कुपितोऽन्तःशरीरमनुचरन् गर्भस्यापद्यमानस्य विनाशं वैरूप्यं वा कुर्यात्॥२२॥

चतुर्थे मासि स्थिरत्वमापद्यते गर्भस्तस्मात् तदा गर्भिणी गुरुगात्रत्वमधिकमापद्यते विशेषेण॥ २३॥

पञ्चमे मासि गर्भस्य मांसशोणितोपचयो भवति अधिकमन्येभ्यो मासेभ्यस्तस्मात् तदा गर्भिणी कार्श्यमापद्यते विशेषेण॥ २४॥

षष्ठे मासि गर्भस्य बलवर्णोपचयो भवति अधिकमन्येभ्यो मासेभ्यस्तस्मात् तदा गर्भिणी बलवर्णहानिमापद्यते विशेषेण॥२५॥

सप्तमे मासि गर्भः सर्वभावैराप्यायतेऽस्याः। तस्मात् तदा गर्भिणी सर्वाकारैः क्लान्ततमा भवति॥ २६॥

अष्टमे मासि गर्भश्च मातृतो गर्भतश्च माता रसवाहिनीभिः संवाहिनीभिर्मुहुर्मुहुरोजः परस्परत आददाति गर्भस्य सम्पूर्णत्वात् तस्मात् तदा गर्भिणी मुहुर्मुहुः मुदा युक्ता भवति मुहुर्मुहुश्च ग्लाना तस्मात् तदा गर्भस्य जन्मव्यापत्तिमद्भवत्योजसोऽनवस्थितत्वात् तञ्चैवमभिसमीक्ष्याष्टमं मासमगण्यमित्याचक्षते कुशलाः॥२७॥

तस्मिन्नेकदिवसातिक्रान्तेऽपि नवमं मासमुपादाय प्रसवकालमित्याहुरादशमान्मासादेतावान् कालो वैकारिकम्॥२८॥

अतःपरं कुक्षौ स्थानं गर्भस्य। एवमनयानुपूर्व्याभिनिर्वर्तते कुक्षौ॥ २९॥

एतेन मातृजानां पितृजानाञ्चावयवानां विकृतिव्याख्यानेन सात्म्यजानां रसजानां सत्त्वजानाञ्चावयवानां विकृतिर्व्याख्याता ॥ ३९ ॥

निर्विकारः परस्त्वात्मा सर्वभूतानां निर्विशेषः सत्त्वशरीरयोस्तु विशेषाद्विशेषोपलब्धिः ॥ ४० ॥

तत्र त्रयस्तु शारीरदोषा वातपित्तश्लेष्माणस्ते शरीरं दूषयन्ति ॥ ४१ ॥

द्वौ पुनः सत्त्वदोषौ रजस्तमश्च। तौ सत्त्वं दूषयतस्ताभ्याञ्च सत्त्वशरीराभ्यां दुष्टाभ्यां विकृतिरुपजायते नोपजायते चाप्रदुष्टाभ्याम् ॥ ४२ ॥

तत्र शरीरं योनिविशेषाच्चतुर्विधमुक्तमग्रे त्रिविधं खलु सत्त्वं शुद्धं राजसं तामसमिति। तत्र शुद्धमदोषमाख्यातं कल्याणांशत्वात्। राजसं सदोषमाख्यातं रोषांशत्वात्। तथा तामसमपि सदोषमाख्यातं मोहांशत्वात् ॥ ४३ ॥

तेषान्तु त्रयाणामपि सत्त्वानाम् एकैकस्य भेदाग्रमपरिसंख्येयं तरतमयोगाच्छरीरयोनिविशेषेभ्यश्चान्योन्यानुविधानत्वाच्च। शरीरमपि सत्त्वमनुविधीयते सत्त्वञ्च शरीरं तस्मात् कतिचिच्च सत्त्वभेदाननूकसाहश्याभिनिर्देशेन निदर्शनार्थमनुव्याख्यास्यामः ॥ ४४ ॥

तद्यथा शुचिं सत्याभिसन्धं जितात्मानं संविभागिनं ज्ञानविज्ञानवचनप्रतिवचनशक्तिसम्पन्नं स्मृतिमन्तं कामक्रोधलोभमानमोहेर्ष्याहर्षापेतं समं सर्वभूतेषु ब्राह्मं विद्यात् ॥ ४५ ॥

इज्याध्ययनव्रतहोमब्रह्मचर्यमतिथिव्रत-मुपशान्तमदमानरागद्वेषमोहलोभरोषं प्रतिभावचनविज्ञानोपधारणशक्तिसम्पन्नम् आर्षं विद्यात् ॥ ४६ ॥

ऐश्वर्यवन्तमादेयवाक्यं यज्वानं शूरमोजस्विनं तेजसोपेत-

मक्लिष्टकर्माणं दीर्घदर्शिनं धर्मार्थकामाभिरतमैन्द्रं विद्यात् ॥४७

लेखास्थवृत्तं प्राप्तकारिणमसंहार्य्यमुत्थानवन्तं स्मृतिमन्तमैश्वर्यालम्बिनं व्यपगतरागद्वेषमोहं याम्यं विद्यात् ॥ ४८ ॥

शूरं धीरं शुचिमशुचिद्वेषिणं यज्वानमम्भोविहाररतिमक्लिष्टकर्माणं स्थानकोपप्रसादं वारुणं विद्यात् ॥ ४९ ॥

स्थानमानोपभोगं परिवारसम्पन्नं सुखविहारं धर्मार्थकामनित्य शुचिं व्यक्तकोपप्रसादं कौवेरं विद्यात् ॥ ५० ॥

प्रियनृत्यगीतवादित्रोल्लापकं श्लोकाख्यायिकेतिहासपुराणेषु कुशलं गन्धमाल्यानुलेपनवसनस्त्रीविहारकामिनित्यमनसूयकं गान्धर्वं विद्यात् ॥ ५१ ॥

इत्येवं शुद्धस्य सत्त्वस्य सप्तविधं भेदांशं विद्यात् कल्याणांशत्वात् तत्संयोगात् तु ब्राह्ममत्यन्तशुद्धं व्यवस्येत् ॥ ५२ ॥

शूरं चण्डमसूयकमैश्वर्य्यवन्तमौदरिकं रौद्रमननुक्रोशकमात्मपूजकमासुरं विद्यात् ॥ ५३ ॥

अमर्षिणमनुबन्धकोपच्छिद्रप्रहारिणं क्रूरमाहारातिमात्ररुचिमामिषप्रियतमं स्वप्नायासबहुलमीर्षुं राक्षसं विद्यात् ॥५४॥

महाशनं स्त्रैणं स्त्रीरहस्कामम् अशुचिं शुचिद्वेषिणं भीरुं भीषयितारं विकृतिविहाराहारशीलं पैशाचं विद्यात् ॥ ५५ ॥

क्रुद्धं शूरं अक्रुद्धभीरुं तीक्ष्णमायासबहुलं सन्त्रस्तगोचरमाहारविहारपरं सार्पं विद्यात् ॥ ५६ ॥

आहारकाममतिदुःखशीलाचारोपचारमसूयकमसंविभागिनमतिलोलुपमकर्मशीलं प्रैतं विद्यात् ॥ ५७ ॥

अनुषक्तकाममजस्रमाहारविहारपरम् अनवस्थितममर्षिणमसञ्चय शाकुनं विद्यात् ॥ ५८ ॥

इत्येवं खलु राजसस्य सत्त्वस्य षड्विधं भेदांशं विद्यात् रोषांश[illegible]त् ॥ ५९ ॥

निराकरिष्णुमधमवेशमजुगुप्सितारम् आहारविहारमैथुनपरं स्वप्नशीलं पाशवं विद्यात् ॥ ६० ॥

भीरुमबुधमाहारलुब्धमनवस्थितमनुषक्तकामक्रोधं सरणशीलं तोयकामं मात्स्यं विद्यात् ॥ ६१ ॥

अलसं केवलमभिनिविष्टमाहारे सर्वबुद्ध्यङ्गहीनं वानस्पत्यं विद्यात् ॥ ६२ ॥

इत्येवं खलु तामसस्य सत्त्वस्य त्रिविधं भेदांशं विद्यात् मोहांशत्वात् ॥ ६३ ॥

इत्यपरिसंख्येयभेदानां खलु त्रयाणामपि सत्त्वानां भेदैकदेशो व्याख्यातः ॥ ६४ ॥

शुद्धस्य सत्त्वस्य सप्तविधो ब्रह्मर्षिशक्रवरुणयमकुवेरगन्धर्वसत्त्वानुकारेण। राजसस्य षड्विधो दैत्यराक्षसपिशाचसर्पप्रेतशकुनिसत्त्वानुकारेण। तामसस्य त्रिविधः पशुमत्स्यवनस्पतिसत्त्वानुकारेण। कथञ्च यथासत्त्वमुपचारः स्यादिति। केवलश्चायमुद्देशः यथोद्देशमभिनिर्दिष्टो भवति। गर्भावक्रान्तिसम्प्रयुक्तस्यार्थस्य विज्ञाने सामर्थ्यं गर्भकराणाञ्च भावानामनुसमाधिर्विघातश्च विघातकराणां भावानामिति ॥ ६५ ॥

तत्र श्लोकाः। निमित्तमात्मा प्रकृतिर्वृद्धिः कुक्षौ क्रमेण च।

वृद्धिहेतुश्च गर्भस्य पञ्चार्थाः शुभसञ्ज्ञिताः ॥ ६६ ॥

यज्जन्मनि च यो हेतुर्विनाशे विकृतावपि।

इमांस्त्रीनशुभान् भावानाहुर्गर्भविघातकान् ॥ ६७ ॥

शुभाशुभसमाख्यातानष्टौ भावानिमान् भिषक्।

सर्वथा वेद यः सर्वान् स राज्ञः कर्त्तुमर्हति ॥ ६८ ॥

अवाप्य पायान् गर्भस्य स एवं ज्ञातुमर्हति।

ये च गर्भविघातोक्ता भावास्तांश्चाप्युदारधीः ॥ ६९ ॥

---

# पञ्चमोऽध्यायः—पुरुषविचयः ।

पुरुषोऽयं लोकसम्मित इत्युवाच भगवान् पुनर्वसुरात्रेयः। यावन्तो हि मूर्त्तिमन्तो लोके भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे, तावन्तो लोके ॥ १ ॥

इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच। नैतावता वाक्येनोक्तं वाक्यार्थमवगाहामहे। भगवता बुद्ध्या भूयस्तरमतोऽनुव्याख्यायमानं शुश्रूषामहे ॥ २ ॥

इति तमुवाच भगवानात्रेयः। अपरिसंख्येया लोकावयवविशेषाः पुरुषावयवविशेषा अप्यपरिसंख्येयाः। यथा यथा प्रधानश्च तेषां यथास्थूलं भावान् सामान्यमभिप्रेत्योदाहरिष्यामः। तानेकमना निबोध सम्यगुपवर्ण्यमानान् अग्निवेश! षड्धातवः समुदिता लोक इति शब्दं लभन्ते। तद्यथा;—पृथिव्यापस्तेजो वायुराकाशं ब्रह्म चाव्यक्तमित्येत एव च षड्धातवः समुदिताः पुरुष इति शब्दं लभन्ते। तस्य पुरुषस्य पृथिवीमूर्त्तिरापः क्लेदस्तेजोऽभिसन्तापो वायुः प्राणो वियच्छिद्राणि ब्रह्मान्तरात्मा ॥ ३ ॥

यथा खलु ब्राह्मी विभूतिर्लोके तथा पुरुषेऽप्यान्तरात्मिकी विभूतिर्ब्रह्मणो विभूतिर्लोके प्रजापतिरन्तरात्मनो विभूतिः पुरुषे सत्त्वम्। यस्त्विन्द्रो लोके स पुरुषेऽहङ्कारः आदित्यस्त्वादानं रुद्रो रोषः सोमः प्रसादो वसवः सुखमश्विनौ कान्तिर्मरुदुत्साहो विश्वेदेवाः सर्वेन्द्रियाणि सर्वेन्द्रियार्थाश्च तमो मोहो ज्योतिर्ज्ञानम्। यथा लोकस्य सर्गादिस्तथा पुरुषस्य गर्भाधानं यथा कृतयुगमेवं बाल्यम्। यथा त्रेता तथा यौवनं यथा द्वापरस्तथा स्थाविर्यं यथा कलिरेवमातुर्यं यथा युगान्तस्तथा मरणमित्येवमनुमानेनानुक्तानामपि लोकपुरुषयोरवयवविशेषाणाम् अग्निवेश! सामान्यं विद्यात् ॥ ४ ॥

इत्येवंवादिनं भगवन्तमात्रेयम् अग्निवेश उवाच एवमेतत् सर्वमनपवादं यथोक्तं भगवता लोकपुरुषयोः सामान्यं किन्तु अस्य सामान्योपदेशस्य प्रयोजनमिति ॥ ५ ॥

भगवानुवाच कथमग्निवेश! सर्वलोकमात्मन्यात्मानञ्च सर्वलोके समनुपश्यतस्तस्याबुद्धिरुत्पद्यते इति। सर्वलोकं हि आत्मनि पश्यतो भवति आत्मैव सुखदुःखयोः कर्त्ता नान्य इति कर्म्मात्मकत्वाच्च। हेत्वादिभिर्युक्तस्सर्वलोकोऽहमिति विदित्वा ज्ञानं पूर्वमुत्थाप्यतेऽपवर्गायेति ॥ ६ ॥

तत्र संयोगापेक्षी लोकशब्दः षड्धातुसमुदायो हि सामान्यतः सर्वलोकः। तस्य हेतुरुत्पत्तिर्वृद्धिरुपप्लवो वियोगश्च। तत्र हेतुरुत्पत्तिकारणम् उत्पत्तिर्जन्म वृद्धिराप्यायनम् उपप्लवो दुःखागमः षड्धातुविभागो वियोगः। स जीवापगमः स प्राणनिरोधः स भङ्गः स लोकस्वभावः ॥ ७ ॥

तस्य मूलं सर्वोपप्लवानाञ्च प्रवृत्तिर्निवृत्तिरुपरमश्च प्रवृत्तिर्दुःखं निवृत्तिः सुखमिति यत् ज्ञानमुत्पद्यते तत् सत्यम्। तस्य हेतुः सर्वलोकसामान्यज्ञानमेतत् प्रयोजनं सामान्योपदेशस्येति ॥ ८ ॥

अथाग्निवेश उवाच। किं मूला भगवन्! प्रवृत्तिर्निवृत्तौ वा उपाय इति ॥ ९ ॥

भगवानुवाच। मोहेच्छाद्वेषकर्म्ममूला प्रवृत्तिस्तज्जा ह्यहङ्कारसङ्गसन्देहाभिसम्प्लवाभ्यवपातविप्रत्यया विशेषानुपायाः। तरुणमिव द्रुममतिविपुलशाखास्तरवोऽभिभूय पुरुषमवतत्योत्तिष्ठन्ते यैरभिभूतो न सत्तामतिवर्त्तते ॥ १० ॥

तत्रैवं जातिरूपवित्तवृत्तिशीलविद्याभिजनवयोवीर्य्यप्रभावसम्पन्नोऽहमित्यहङ्कारः ॥ ११ ॥

यन्मनोवाक्कायकर्म्म नापवर्गाय स सङ्गः ॥ १२ ॥

कर्म्मफलमोक्षपुरुषप्रेत्यभावादयः सन्ति वा नेति संशयः॥१३

सर्वास्ववस्थास्वनन्योऽहमहं स्रष्टा स्वभावसंसिद्धोऽहमहं शरीरेन्द्रियबुद्धिस्मृतिविशेषराशिरिति ग्रहणमभिसंप्लवः ॥१४॥

मम मातृपितृभ्रातृदारापत्यबन्धुमित्रभृत्यगणो गणस्य चाहमित्यभ्ययपातः ॥ १५ ॥

कार्याकार्य्ये हिताहितशुभाशुभेषु विपरीताभिनिवेशो विप्रत्ययः ॥ १६ ॥

ज्ञाज्ञयोः प्रकृतिविकारयोः प्रवृत्तिनिवृत्त्योश्चासामान्यदर्शनं विशेषः ॥ १७ ॥

प्रोक्षणानशनाग्निहोत्रत्रिषवणाभ्युक्षणावाहनयजनयाजनयाचनसलिलहुताशनप्रवेशनादयः समारम्भाः प्रोच्यन्ते ह्यनुपायाः ॥ १८ ॥

एवमयमधीधृतिस्मृतिरहङ्काराभिनिविष्टः संसक्तः ससंशयोऽभिसंप्लुतबुद्धिरभ्यवपतितोऽन्यथादृष्टिर्विशेषग्राही विमार्गगतिर्निवासवृक्षः सत्त्वशरीरदोषमूलानां मूलं सर्वदुःखानां भवति ॥ १९ ॥

इत्येवमहङ्कारादिभिर्दोषैर्भ्राम्यमाणो नातिवर्त्तते प्रवृत्तिः सा मूलमघस्य ॥ २० ॥

निवृत्तिरपवर्गस्तत्परं प्रशान्तं तदक्षरं तद्ब्रह्म स मोक्षः। तत्र मुमुक्षूणामुदयनानि व्याख्यास्यामः। तत्र लोकदोषदर्शिनो मुमूक्षोरादित एवाचार्य्याभिगमनं तस्योपदेशानुष्ठानम् ॥ २१ ॥

अग्नेरेवोपचर्य्या धर्मशास्त्रानुगमनं तदर्थावबोधस्तेनावष्टम्भः तत्र यथोक्ताः क्रियाः सतामुपासनमसतां परिवर्जनं न सङ्गतिः दुर्जनेन सत्यं सर्वभूतहितमपरुषमनतिकाले परीक्ष्यवचनं सर्वप्राणिषु आत्मनीवावेक्षा सर्वासामस्मरणमसङ्कल्पनमप्रार्थना अनभिभाषणञ्च स्त्रीणां सर्वपरिग्रहत्यागः कौपीनं प्रच्छादनार्थं धातुरागनिवसनं कन्यासीवनहेतोः सूची पिप्पलकं शौचाधानहेतोः जलकुण्डिका दण्डधारणं भैक्ष्यचर्य्यार्थं पात्रं प्राणधारणा-

र्थमेककालमयास्यो यथोपपन्न एवाभ्यवहारः। श्रमापनयनार्थं शौर्यं गुप्ता(?)चङ्क्रमणं...

र्थमेककालमग्रास्यो यथोपपन्न एवाभ्यवहारः। श्रमापनयनार्थं शीर्षंगुप्तकपर्यङ्कणास्तरणोपधानं ध्यानहेतोः कायनिबन्धनं वनेषु अनिकेतवासः तन्द्रानिद्रालस्यादिकर्मवर्जनम् इन्द्रियार्थेषु अनुरागोपतापनिग्रहः सुप्तस्थितगतप्रेक्षिताहारविहारप्रत्यङ्गचेष्टादिकेषु आरम्भेषु स्मृतिपूर्विका प्रवृत्तिः सत्कारस्तुतिगर्हावमानक्षमत्वं क्षुत्पिपासायासश्रमशीतोष्णवातवर्षासुखदुःखसंस्पर्शसहत्वं शोकदैन्यद्वेषमदमानलोभरागेर्ष्याभयक्रोधादिभिरसञ्चलनम् अहङ्कारादिषूपसर्गसंज्ञा लोकपुरुषयोः सर्गादिसामान्यावेक्षणं कार्य्यकालात्ययभयं योगारम्भे सततमनिर्वेदः सत्त्वोत्साहापवर्गाय धीधृतिस्मृतिबलाधानं नियमनमिन्द्रियाणां चेतसि चेतस आत्मन्यात्मनश्च धातुभेदेन शरीरावयवसंख्यानाम् अभीक्ष्णं सर्वं कारणवद्दुःखमस्वमनित्यमित्यभ्युपगमः। सर्वप्रवृत्तिषु दुःखसंज्ञा सर्वसंन्यासे सुखमित्यभिनिवेश एष मार्गोऽपवर्गाय अतोऽन्यथा बध्यते इत्युदयनानि व्याख्यातानि ॥ २२ ॥

भवन्ति चात्र।

एतैरविमलं सत्त्वं शुद्ध्युपायैर्विशुध्यति।
मृज्यमान इवादर्शस्तैलचेलकचादिभिः ॥ २३ ॥
ग्रहाम्बुदरजोधूमनीहारैरसमाहतम्।
यथार्कमण्डलं भाति भाति सत्त्वं तथामलम् ॥ २४ ॥
ज्वलत्यात्मनि संरुद्धं तत् सत्त्वं संवृतायने।
शुद्धः स्थिरः प्रसन्नार्चिर्दीपो दीपाशये यथा ॥ २५ ॥
शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्त्तते।
यया भिनत्त्यतिबलं महामोहमयं तमः ॥ २६ ॥
सर्वभावस्वभावज्ञो यया भवति निःस्पृहः।
योगं यया साधयते साङ्ख्यः सम्पद्यते यया ॥ २७ ॥
यया नोपैत्यहङ्कारं नोपास्ते कारणं यया।

यया नालम्बते किञ्चित् सर्वं संन्यस्यते यया ॥ २८ ॥
याति ब्रह्म यया नित्यमजरः शान्तमक्षरम् ।
विद्यः सिद्धिर्मतिर्मेधा प्रज्ञा ज्ञानञ्च सा मता ॥ २९ ॥
लोके विततमात्मानं लोकञ्चात्मनि पश्यतः ।
परावरदृशः शान्तिर्ज्ञानमूला न नश्यति ॥ ३० ॥
पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो न शुद्धस्योपपद्यते ॥ ३१ ॥
नात्मनः कारणाभावाल्लिङ्गमप्युपलभ्यते ।
स सर्वकारणत्यागान्मुक्त इत्यभिधीयते ॥ ३२ ॥
विपापं विरजः शान्तं परमक्षरमव्ययम् ।
अमृतं ब्रह्मनिर्वाणं पर्यायैः शान्तिरुच्यते ॥ ३३ ॥
एतत् तत् सौम्य विज्ञानं यत् ज्ञात्वा मुक्तसंशयाः ।
मुनयः प्रशमं जग्मुर्वीतमोहरजःस्पृहाः ॥ ३४ ॥

तत्र श्लोकौ ।

सप्रयोजनमुद्दिष्टं लोकस्य पुरुषस्य च ।
सामान्यं मूलमुत्पत्तौ निवृत्तौ मार्ग एव च ॥ ३५ ॥
शुद्धसत्त्वसमाधानं सत्या बुद्धिश्च नैष्ठिकी ।
विचये पुरुषस्योक्ता निष्ठा च परमर्षिणा ॥ ३६ ॥

---

## षष्ठोऽध्यायः ।

### शरीरविचयः ।

शरीरविचयः शरीरोपकारार्थमिष्यते भिषग्विद्यायाम् । ज्ञात्वा हि शरीरतत्त्वं शरीरोपकारकरेषु भावेषु ज्ञानमुत्पद्यते तस्मात् शरीरविचयं प्रशंसन्ति कुशलाः ॥ १ ॥

तत्र शरीरं नाम चेतनाधिष्ठानभूतं पञ्चभूतविकारसमुदायात्मकम् ॥ २ ॥

समयोगवाहिनो यदा ह्यस्मिन् शरीरे धातवो वैषम्यमापद्यन्ते तदायं क्लेशं विनाशं वा प्राप्नोति वैषम्यगमनं वा पुनर्धातूनां वृद्धिह्रासगमनमकार्त्स्न्येन ॥ ३ ॥

प्रकृत्या च यौगपद्येन तु विरोधिनां धातूनां वृद्धिह्रासौ भवतः ॥ ४ ॥

यद्धि यस्य धातोर्वृद्धिकरं तत् ततो विपरीतगुणस्य धातोः प्रत्यवायकरन्तु सम्पद्यते। तदेव तस्मात् भेषजं सम्यगवचार्यमाणं युगपत् न्यूनातिरिक्तानां धातूनां साम्यकरं भवति अधिकमपकर्षति न्यूनमाप्याययति। एतावदेव हि भैषज्यप्रयोगे फलमिष्टं स्वस्थवृत्तानुष्ठानञ्च यावद्धातूनां साम्यं स्यात् ॥ ५ ॥

स्वस्थस्यापि समधातूनां साम्यानुग्रहार्थमेव कुशला रसगुणानाहारविकारांश्च पर्य्यायेणेच्छन्ति उपयोक्तुम्। सात्म्यसमाख्यातानेकप्रकारभूयिष्ठांश्चोपयुञ्जानास्तद्विपरीतकरणलक्षणसमाख्यातचेष्टया समभिच्छन्ति कर्त्तुम् ॥ ६ ॥

देशकालात्मगुणविपरीतानां हि कर्म्मणाम् आहारविकाराणाञ्च क्रमैणोपयोगः सम्यक्। सर्व्वाभियोगोऽनुदीर्णानां सन्धारणमसन्धारणमुदीर्णानाञ्च गतिमतां साहसानाञ्च वर्जनम्। स्वस्थवृत्तमेतावद्धातूनां साम्यानुग्रहार्थमुपदिश्यते ॥ ७ ॥

धातवः पुनः शारीराः समानगुणैः समानगुणभूयिष्ठैर्वापि आहारविहारैरभ्यस्यमानैर्वृद्धिं प्राप्नुवन्ति। ह्रासन्तु विपरीतगुणैर्विपरीतगुणभूयिष्ठैर्वाप्याहारैरभ्यस्यमानैः ॥ ८ ॥

तत्रेमे शरीरधातुगुणाः संख्यासामर्थ्यकरास्तद्यथा—गुरुलघुशीतोष्ण-स्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवाः ॥ ९ ॥

तेषु ये गुरवो धातवो गुरुभिराहारविकारगुणैरभ्यस्यमानैराप्याय्यन्ते लघवश्च ह्रसन्ति। लघवस्तु लघुभिराप्याय्यन्ते

गुरवश्च ह्रसन्त्येवमेव सर्वधातुगुणानां सामान्ययोगाद् वृद्धि-
विपर्ययात् ह्रासः ॥ १० ॥

तस्मान्मांसमाप्याय्यते मांसेन भूयोऽन्येभ्यः शरीरधातुभ्यः।
तथा लोहितं लोहितेन मेदो मेदसा वसा वसया अस्थि
तरुणास्थ्ना मज्जा मज्जया शुक्रं शुक्रेण गर्भस्त्वामगर्भेण ॥११॥

यत्र तु एवं लक्षणेन सामान्येन सामान्यवतामाहारविका-
राणामसान्निध्यं स्यात्। सन्निहितानां वापि अयुक्तत्वादनुप-
योगो घृणित्वादन्यस्माद्वा कारणात् स च धातुरभिवर्धयितव्यः
स्यात्। तस्य ये समानगुणाः स्युः आहारविकारा असेव्याश्च
तत्र समानगुणभूयिष्ठानामन्यप्रकृतीनामपि आहारविकाराणा-
मुपयोगः स्यात् ॥ १२ ॥

तद्यथा—शुक्रक्षये क्षीरसर्पिषोरुपयोगो मधुरस्निग्धसमा-
ख्यातानाञ्चापरेषामेव द्रव्याणाम्। मूत्रक्षये पुनरिक्षुरसवा-
रुणीमण्डद्रवमधुराम्ललवणोपक्लेदिनाम्। पुरीषक्षये कुल्माष-
माषकुष्कुण्डाजमध्ययवशाकधान्याम्लानाम्। वातक्षये कटु-
तिक्तकषायरूक्षलघुशीतानाञ्च। पित्तक्षयेऽम्ललवणकटुकक्षा-
रोष्णतीक्ष्णानाम्। श्लेष्मक्षये स्निग्धगुरुमधुरसान्द्रपिच्छिलानां
द्रव्याणां कर्मापि च यद्‌ यस्य धातोर्वृद्धिकरं तत् तदनु-
सेव्यम् ॥ १३ ॥

एवमन्येषामपि शरीरधातूनां सामान्यविपर्ययाभ्यां वृद्धि-
ह्रासौ यथाकालं कार्याविति। सर्वधातूनामेकैकशोऽतिदेशतश्च
वृद्धिह्रासकराणि व्याख्यातानि भवन्ति ॥ १४ ॥

कृत्स्नशरीरपुष्टिकरास्त्विमे भावाः। कालयोगः स्वभावसंसि-
द्धिराहारसौष्ठवमविघातश्चेति बलवृद्धिकरास्त्विमे भावा भवन्ति।
तद्यथा—बलवत्पुरुषे देशे जन्म बलवत्पुरुषे च काले। सुखश्च
कालयोगो बीजक्षेत्रगुणसम्पच्चाहारसम्पच्च शरीरसम्पच्च सात्म्या-

मम्पच सत्त्वसम्पच्च स्वभावसंसिद्धिश्च यौवनञ्च कर्म च संहर्ष-श्चेति ॥ १५ ॥

आहारपरिणामकरास्तु इमे भावा भवन्ति। तद्यथा— उष्मा, वायुः, क्लेदः, स्नेहः, कालः, संयोगश्चेति ॥ १६ ॥

तत्र तु खल्वेषामुष्मादीनाम् आहारपरिणामकराणां भावानामिमे कर्मविशेषाः भवन्ति तद्यथा। उष्मा पचति वायुरपकर्षति क्लेदः शैथिल्यमापादयति स्नेहो मार्दवं जनयति कालः पर्याप्तिमभिनिर्वर्त्तयति संयोगस्तु एषां परिणामधातुसाम्यकरः सम्पद्यते ॥ १७ ॥

परिणामतस्त्वाहारस्य गुणाः शरीरगुणभावमापद्यन्ते यथास्वमविरुद्धा विरुद्धाश्च विहन्युर्विहताश्च विरोधिभिः शरीरम्॥१८

शरीरधातवस्त्वेवं द्विविधाः संग्रहेण मलभूताः प्रसादभूताश्च। तत्र मलभूतास्ते शरीरस्य ये बाधकराः स्युस्तद्यथा शरीरच्छिद्रेषु उपदेहाः पृथक् जन्मानो बहिर्मुखाः परिपक्काश्च धातवः। प्रकुपिताश्च वातपित्तश्लेष्माणो ये चान्येऽपि केचित् शरीरे तिष्ठन्ति भावाः शरीरस्योपघातायोपपद्यन्ते सर्वांस्तान् मलान् संप्रचक्ष्महे। इतरांस्तु प्रसादे गुर्वादींश्च द्रव्यान्तान् गुणभेदेन रसादींश्च शुक्रान्तान् द्रव्यभेदेन ॥ १९ ॥

तेषां सर्वेषामेव वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति दोषत्वात् वातादीनां पुनर्धात्वन्तरे कालान्तरे प्रदुष्टानां विविधाशितपीतीयेऽध्याये विज्ञानान्युक्तानि एतावत्येव दुष्टदोषगतिर्यावत् संस्पर्शनात् शरीरधातूनाम्। प्रकृतिभूतानान्तु खलु वातादीनां फलमारोग्यं तस्मादेषां प्रकृतिभावे प्रयतितव्यं बुद्धिमद्भिः ॥ २० ॥

तत्र श्लोकः। सर्वदा सर्वथा सर्वं शरीरं वेद यो भिषक्।
आयुर्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदम् ॥ २१ ॥

तमेवमुक्तवन्तं भगवन्तमात्रेयमग्निवेश उवाच। श्रुतमेतत् यदुक्तं भगवता शरीराधिकारे वचः। किन्नु खलु गर्भस्याङ्गं पूर्वमभिनिर्वर्त्तते कुक्षौ कुतो मुखं कथं वा चान्तर्गतस्तिष्ठति। किमाहारश्च वर्त्तयति कथं भूतश्च निष्क्रामति कैश्चायमाहारोपचारैर्जातस्त्वव्याधिरभिवर्द्धते सद्यो हन्यते कैः कथञ्चास्य देवादिप्रकोपनिमित्ता विकारा उपलभ्यन्ते चाद्यैश्चिव किञ्चास्य कालाकालमृत्योर्भावाभावयोर्भगवानध्यवस्यति। किञ्चास्य परमायुः कानि चास्य परमायुषो निमित्तानीति॥ २२॥

तमेवमुक्तवन्तमग्निवेशं भगवान् पुनर्वसुरात्रेयः उवाच। पूर्वमुक्तमेतद्गर्भावक्रान्तौ यथायमभिनिर्वर्त्तते कुक्षौ यच्चास्य यदा मन्तिष्ठतेऽङ्गजातम्। विप्रतिपत्तिवादास्त्वत्र बहुविधाः सूत्रकारिणामृषीणां सन्ति सर्वेषां तानपि निबोध उच्यमानान्। शिरः पूर्वमभिनिर्वर्त्तते कुक्षाविति कुमारशिरा भरद्वाजः पश्यति सर्वेन्द्रियाणां तदधिष्ठानमिति हृदयमिति काङ्कायनो वाह्लीकभिषक् चेतनाधिष्ठानत्वात्। नाभिरिति भद्रकाप्य आहारागम इति कृत्वा पक्वगुदमिति भद्रशौनको मारुताधिष्ठानत्वात्। हस्तपादमिति बडिशस्तत्करणत्वात् पुरुषस्य इन्द्रियाणीति जनको वैदेहस्तान्यस्य बुद्ध्यधिष्ठानानीति कृत्वा। बुद्धिपरोक्षत्वादचिन्त्यमिति मारीचिः कश्यपः सर्वाङ्गनिर्वृत्तियुगपदिति धन्वन्तरिः। तदुपपन्नं सर्वाङ्गानां तुल्यकालाभिनिर्वृत्तत्वात् हृदयप्रभृतीनाम्। सर्वाङ्गानां ह्यस्य हृदयं मूलमधिष्ठानञ्च केषाञ्चिद्भावानां न च तस्मात् पूर्वाभिनिर्वृत्तिरेषान्तस्मात् हृदय पूर्वाणां सर्वाङ्गानां तुल्यकालाभिनिर्वृत्तिः सर्वभावा ह्यन्योन्यप्रतिबद्धास्तस्माद्यथाभूतं दर्शनम्॥ २३॥

गर्भस्तु खलु मातुः पृष्ठाभिमुख ऊर्द्ध्वशिराः सङ्कुच्याङ्गान्यास्ते जरायुवृतः कुक्षौ। व्यपगतपिपासाबुभुक्षस्तु खलु गर्भः

परतन्त्रवृत्तिमतिरमाश्रित्य वर्त्तयति उपस्नेहोपस्वेदाभ्याम् । गर्भस्तु सदसद्भूताङ्गावयवस्तदन्तरं ह्यस्य लोमकूपायनैरुपस्नेहः कश्चिन्नाभिनाड्ययनैः नाभ्यां ह्यस्य नाडीप्रसक्ता सा नाभ्याश्चामरामरा चास्य मातुः प्रसक्ता हृदये मातृहृदयं ह्यस्य तामपरामभिसंप्लवते सिराभिः स्यन्दमानाभिः ॥ २४ ॥

स तस्य रसो सर्वबलवर्णकरः सम्पद्यते च । स च सर्वरसवानाहारः स्त्रिया ह्यापन्नगर्भायाः स्त्रिधा रसः प्रतिपद्यते स्वशरीरपुष्टये स्तन्याय गर्भवृद्धये च स तेनाहारेणोपस्तब्धो वर्त्तयति चान्तर्गतः ॥ २५ ॥

स चोपस्थितकाले जन्मनि प्रसूतिमारुतयोगात् परिवृत्त्यावाक्शिरा निष्क्रामत्यपत्यपथेन । एषा प्रकृतिर्विकृतिरतोऽन्यथा परत्वत एव स्वतन्त्रवृत्तिर्भवति ॥ २६ ॥

तस्याहारोपचारौ जातिसूत्रीयोपदिष्टौ अविकारकरौ चाभिवृद्धिकरौ भवतः । ताभ्यामेव च सेविताभ्यां विषमाभ्यां जातं सद्य यपहन्यते तद्वरिवाचिरव्यपरोपितो वातातपाभ्यामप्रतिष्ठितमूलः ॥ २७ ॥

आप्तोपदेशादद्भुतरूपदर्शनात् समुत्थानलिङ्गचिकित्सितविशेषाच्च दोषप्रकोपानुरूपाश्च देवादिप्रकोपनिमित्ताश्च विकाराः समुपलभ्यन्ते ॥ २८ ॥

कालाकालमृत्योस्तु खलु भावाभावयोरिदमध्यवसितं नः । -यः कश्चिन् म्रियते सर्वः काल एव स म्रियते न हि कालच्छिद्रमस्तीत्येके भाषन्ते । तत्रासम्यक् न ह्यच्छिद्रता सच्छिद्रता वा कालस्योपपद्यते कालस्वलक्षणभावात् ॥ २९ ॥

तथाहुरपरे यो यदा म्रियते स तस्य नियतो मृत्युकालः स सर्वभूतानां सत्यः समक्रियत्वादिति । तदपि चान्यथार्थग्रहणं न हि कश्चिन्न म्रियते इति समक्रियः कालः पुनरायुषः प्रमाणमधिकृत्योच्यते ॥ ३० ॥

यस्य चेष्टं यो यदा म्रियते तस्य स नियत मृत्युकाल इति तस्य सर्वे भावा यथास्वं नियतकाला भविष्यन्ति। तच्च नोपपद्यते प्रत्यक्षं ह्यकालाहारवचनकर्मणां फलमनिष्टं विपर्ययं चेष्टम्। प्रत्यक्षतश्चोपलभ्यते खलु नानाकालयुक्तिस्तासु तासु अवस्थासु तं तमर्थमभिसमीक्ष्य। तद्यथा कालोऽयमस्य व्याधेराहारस्यौषधस्य प्रतिकर्मणो विसर्गस्य चाकालो वेति लोकेऽप्येतद्भवति। काले देवो वर्षत्यकाले देवो वर्षति काले शीतमकाले शीतं काले तपत्यकाले तपति काले पुष्पफलमकाले पुष्पफलमिति। तस्मादुभयमस्ति काले मृत्युरकाले च नैकान्तिकमत्र। यदि ह्यकाले मृत्युर्न स्यान्नियतकालप्रमाणमायुः सर्वं स्यात् ॥३१

एवं गते हिताहितज्ञानमकारणं स्यात् प्रत्यक्षानुमानोपदेशाश्चाप्रमाणानि स्युः ये प्रमाणभूताः सर्वतन्त्रेषु यैरायुष्याण्यनायुष्याणि चोपलभ्यन्ते। वाग्वस्तुमेतद्वादमृषयो मन्यन्ते नाकालमृत्युरस्तीति ॥ ३२ ॥

वर्षशतं खलु आयुषः प्रमाणमस्मिन् काले तस्य निमित्तं प्रकृतिगुणात्मसम्पत्सात्म्योपसेवनञ्चेति ॥ ३३ ॥

तत्र श्लोकाः।

शरीरं यद् यथा तच्च वर्त्तते क्लिष्टमामयैः।
यथा क्लेशं विनाशञ्च याति ये चास्य धातवः ॥ ३४ ॥
वृद्धिह्रासौ यथा चैषां क्षीणानामौषधञ्च यत्।
देहवृद्धिकरा भावा बलवृद्धिकराश्च ये ॥ ३५ ॥
परिणामकरा भावा या च तेषां पृथक् क्रिया।
मलाख्याः सम्प्रसादाख्या धातवः प्रश्न एव च ॥ ३६ ॥
नवको निर्णयश्चास्य विधिवत् सम्प्रकाशितः।
तथा शरीरविचये शारीरे परमर्षिणा ॥ ३७ ॥

# सप्तमोऽध्यायः ।

## शरीरसंख्या ।

शरीरसङ्ख्यामवयवशः कृत्स्नं शरीरं प्रविभज्य सर्वशरीरसङ्ख्यानप्रमाणज्ञानहेतोर्भगवन्तमात्रेयमग्निवेशः पप्रच्छ ॥१॥

तमुवाच भगवानात्रेयः । शृणु मत्तोऽग्निवेश ! सर्वशरीरम् अभिचक्षाणाद् यथाप्रश्नमेकमनाः ॥ २ ॥

यथावत् शरीरे षट् त्वचस्तद्यथा—उदकधरा त्वग्बाह्या द्वितीया त्वगसृग्धरा तृतीया सिध्मकिलाससम्भवाधिष्ठाना चतुर्थी कुष्ठसम्भवाधिष्ठाना पञ्चमी त्वलजीविद्रधीसम्भवाधिष्ठाना षष्ठी तु यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति यां चाप्यधिष्ठायारूंषि जायन्ते पर्वसन्धिषु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानीति षट् त्वच एताः षडङ्गं शरीरमवतत्य तिष्ठन्ति ॥३॥

तत्रायं शरीरस्याङ्गविभागः तद्यथा—द्वौ बाहू द्वे सक्थिनी शिरो ग्रीवमन्तराधिरिति षडङ्गमङ्गम् ॥४॥

त्रीणि षष्ट्यधिकानि शतान्यस्थ्नां सह दन्तोलूखलनखैस्तद्यथा—द्वात्रिंशद्दन्तोलूखलानि द्वात्रिंशद्दन्ता विंशतिर्नखा विंशतिः पाणिपादशलाकाश्चत्वार्यधिष्ठानान्यासां चत्वारि पाणिपादपृष्ठानि षष्टिरङ्गुल्यस्थीनि द्वे पार्ष्ण्योर्द्वे कूर्चाश्चत्वारः पाण्योर्मणिकाश्चत्वारः पादयोर्गुल्फाः । चत्वार्यरत्न्योरस्थीनि चत्वारि जङ्घयोर्द्वे जान्वोर्द्वे कूर्परयोर्द्वे ऊर्वोर्द्वे बाह्वोः सांसयोः द्वावक्षकौ द्वे तालूनि द्वे श्रोणिफलके एकं भगास्थि पुंसां मेढ्रास्थि एकं त्रिकसंश्रितमेकं गुदास्थि पृष्ठगतानि पञ्चत्रिंशत् पञ्चदशास्थीनि ग्रीवायां द्वे जत्रुण्येकं हन्वस्थि द्वे हनुमूलबन्धने द्वे ललाटे द्वे अक्ष्णोर्द्वे गण्डयोर्नासिकायां त्रीणि घोणाख्यानि द्वयोः पार्श्वयोश्चतुर्विंशतिश्चतुर्विंशतिः पञ्जरास्थीनि च पार्श्व-

कानि। तावन्ति चैषां स्थालिकान्यर्बुदाकाराणि तानि द्विसप्ततिर्द्वौ शङ्खौ चत्वारि शिरःकपालानि वक्षसि सप्तदशेति त्रीणि षष्ठ्यधिकानि शतान्यस्थ्नामिति ॥ ५ ॥

पञ्चेन्द्रियाधिष्ठानानि तद्यथा—त्वग्जिह्वा नासिकाक्षिणी कर्णौ च ॥ ६ ॥

पञ्च बुद्धीन्द्रियाणि तद्यथा—स्पर्शनं रसनं घ्राणं दर्शनं श्रोत्रमिति ॥ ७ ॥

पञ्च कर्मेन्द्रियाणि तद्यथा हस्तौ पादौ पायुरुपस्थो जिह्वा चेति ॥ ८ ॥

हृदयं चेतनाधिष्ठानमेकम् ॥९॥

दश प्राणायतनानि तद्यथा मूर्धा कण्ठो हृदयं नाभिर्गुदं बस्तिरोजः शुक्रं शोणितं मांसमिति। तेषु षट्पूर्वाणि मर्मसंख्यातानि ॥ १० ॥

पञ्चदश कोष्ठाङ्गानि तद्यथा नाभिश्च हृदयञ्च क्लोम च यकृच्च प्लीहा च वृक्कौ च बस्तिश्च पुरीषाधारश्चामाशयश्चेति पक्वाशयश्चोत्तरगुदञ्चाधरगुदञ्च क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च वपावहनञ्चेति ॥ ११ ॥

षट्पञ्चाशत् प्रत्यङ्गानि षट्सु षडङ्गेषु उपनिबद्धानि यान्यपरिसंख्यातानि पूर्वमङ्गेषु परिसंख्यायमानेषु तान्यन्यैः पर्यायैरिह प्रकाश्य व्याख्यातानि भवन्ति। तद्यथा—द्वे जङ्घापिण्डिके द्वे ऊरुपिण्डिके द्वौ स्फिचौ द्वौ वृषणौ एकं शेफः द्वे उखे द्वौ वङ्क्षणौ द्वौ कुकुन्दरौ एकं बस्तिशीर्षम् एकमुदरं द्वौ स्तनौ द्वौ भुजौ द्वे बाहुपिण्डिके चिबुकमेकं द्वावोष्ठौ द्वे सृक्कण्यौ द्वौ दन्तवेष्टकौ एकं तालु एका गलशुण्डिका द्वे उपजिह्विके एका गोजिह्विका द्वौ गण्डौ द्वे कर्णशष्कुलिके द्वौ कर्णपुत्रकौ द्वे अधिकूटे चत्वारि अक्षिवर्त्मानि द्वे अक्षिकनीनिके द्वे भ्रुवौ एक-

भवन्ति चत्वारि पाणिपादहृदयानि नव महान्ति छिद्राणि सप्त शिरसि द्वे चाधः ॥ १२ ॥

एतावद्दृश्यं शक्यमपि निर्देष्टुमनिर्देश्यमतःपरं तर्क्यमेव तद्यथा नव स्नायुशतानि सप्त शिराशतानि द्वे धमनीशते पञ्च पेशीशतानि सप्तोत्तरं मर्मशतं द्वे पुनः सन्धिशते ॥१३॥

त्रिंशच्छतसहस्राणि नव च शतानि षट्पञ्चाशत्सहस्राणि शिराधमनीनामणुशः प्रविभज्यमानानां मुखाग्रपरिमाणम् । तावन्ति चैव केशश्मश्रुलोमानीत्येतद्यथावद्दृश्यत् सङ्ख्यातं त्वक्प्रभृति दृश्यमतःपरं तर्क्यम् ॥ १४ ॥

एके तदुभयमपि न विकल्पयन्ति प्रकृतिभावाच्छरीरस्य यत् त्वञ्जलिसङ्ख्येयं तदुपदेक्ष्यामः तत्परं प्रमाणमभिज्ञेयं तच्च वृद्धिह्रासयोगि तर्क्यमेव तद्यथा दशोदकस्याञ्जलयः शरीरे स्वेनाञ्जलिप्रमाणेन यत् तु प्रच्यवमानं पुरीषमनुबध्नाति अतियोगेन । तथा मूत्रं रुधिरमन्यांश्च शरीरधातून् यत् तु सर्वशरीरचरं बाह्यात्वग्बिभर्ति यत् तु त्वगन्तरे व्रणगतं लसीकाशब्दं लभते यच्चोष्मणानुबद्धं लोमकूपेभ्यो निष्पतत् स्वेदशब्दमवाप्नोति तदुदकं दशाञ्जलिप्रमाणम् ॥ १५ ॥

नवाञ्जलयः पूर्वस्याहारपरिणामधातोर्यं रसमित्याचक्षते । अष्टौ शोणितस्य सप्त पुरीषस्य षट् श्लेष्मणः पञ्च पित्तस्य चत्वारो मूत्रस्य त्रयो वसाया द्वौ मेदसः एको मज्ज्ञः । मस्तिष्कस्य अर्द्धाञ्जलिः शुक्रस्य तावदेव प्रमाणं तावदेव श्लेष्मणश्चौजस इत्येतच्छरीरतत्त्वमुक्तम् ॥ १६ ॥

तत्र यद्विशेषतः स्थूलं स्थिरं मूर्त्तिमद्गुरुखरकठिनमङ्गं नखास्थिदन्तमांसचर्मवर्चःकेशश्मश्रुनखलोमकण्डरादि तत् पार्थिवं गन्धो घ्राणञ्च ॥ १७ ॥

यद् द्रवसरमन्दस्निग्धमृदुपिच्छिलरसरुधिरवसाकफपित्तमूत्रस्वेदादि तदाप्यं रसो रसनञ्च ॥ १८ ॥

यत् पित्तमुष्मा च यो या च भाः शरीरे तत् सर्वमाग्नेयं रूपं दर्शनञ्च ॥ १९ ॥

यदुच्छ्वासप्रश्वासोन्मेषनिमेषाकुञ्चनप्रसारणगमनप्रेरणधारणादि तद्वायवीयं रूपं स्पर्शनञ्च ॥ २० ॥

यद्विविक्तमुच्यते महान्ति चाणूनि च स्रोतांसि तदान्तरीक्षं शब्दः श्रोत्रञ्च ॥ २१ ॥

यत् प्रयोक्तृ तत्त् प्रधानं बुद्धिर्मनश्चेति शरीरावयवसंख्या यथास्थूलभेदेनावयवानां निर्दिष्टा ॥ २२ ॥

शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवन्त्यतिबहुत्वादतिसौक्ष्म्यादतीन्द्रियत्वाच्च। तेषां संयोगविभागे वायुः परमाणूनां कारणं कर्म स्वभावश्च तदेतत् शरीरसंख्यातमनेकावयवं दृष्टम् एकत्वेन सङ्गः संख्यातम्। पृथक्त्वेनापवर्गः तत्र प्रधानमसक्तं सर्वसत्त्वातिवृत्तौ निवर्त्तते इति ॥ २३ ॥

तत्र श्लोकौ।

शरीरसङ्ख्यां यो वेद सर्वावयवशो भिषक्।
तदज्ञाननिमित्तेन स मोहेन न युज्यते ॥ २४ ॥
असूढ़ो मोहमूलैश्च न दोषैरभिभूयते।
निर्दोषो निःस्पृहः शान्तः प्रशाम्यत्यपुनर्भवः ॥२५॥

---

## षष्टमोऽध्यायः।

### जातिसूत्रीयम्।

स्त्रीपुरुषयोरव्यापन्नशुक्रशोणितयोनिगर्भाशययोः श्रेयसीं प्रजामिच्छतोस्तमिर्वृत्तिकरं कर्मोपदेक्ष्यामः ॥१॥

अथाप्येतौ स्त्रीपुरुषौ स्नेहस्वेदाभ्यामुपपाद्य वमनविरेचनाभ्यां संशोध्य क्रमात् प्रकृतिमापादयेत् संशुद्धौ चास्थापनानु-

वासनाभ्यामुपाचरेदुपाचरेच्च मधुरौषधसंस्कृताभ्यां घृतक्षीराभ्यां पुरुषं स्त्रियन्तु तैलमाषाभ्याम्॥ २॥

ततः पुष्यात् प्रभृति त्रिरात्रमासीत् ब्रह्मचारिण्यधःशायिनी पाणिभ्यामन्नमजर्जरपात्रे भुञ्जाना न च काञ्चिदेव मृजामापद्येत॥ ३॥

ततश्चतुर्थेऽह्न्येनामुत्साद्य सशिरस्कं स्नापयित्वा शुक्लानि वासांस्याच्छादयेत् पुरुषञ्च॥ ४॥

ततः शुक्लवाससौ च स्रग्विणौ सुमनसावन्योन्यमभिकामौ संवसेतामिति ब्रूयात्॥ ५॥

स्नानात् प्रभृति युग्मेष्वहःसु संवसेतां पुत्रकामौ तौ चायुग्मेषु दुहितृकामौ॥ ६॥

न च न्युब्जां पार्श्वगतां वा संसेवेत। न्युब्जाया वातो बलवान् स योनिं पीड़यति। पार्श्वगताया दक्षिणे पार्श्वे श्लेष्मा,संच्युतोऽपि दधाति गर्भाशयम्। वामे पार्श्वे पित्तं तदस्याः पीड़ितं विदहति रक्तशुक्रं तस्मादुत्ताना सती बीजं गृह्णीयात्। तस्या हि यथास्थानमवतिष्ठन्ते दोषाः पर्याप्ते चैनां शीतोदकेन परिषिञ्चेत्॥ ७॥

तत्रात्यशिता क्षुधिता पिपासिता भीता विमनाः शोकार्त्ता क्रुद्धा चान्यञ्च पुमांसमिच्छन्ती मैथुने चातिकामा वा नारी गर्भं न धत्ते विगुणां वा प्रजां जनयति॥ ८॥

अतिबालामतिवृद्धां दीर्घरोगिणीमन्येन वा विकारेणोपसृष्टां वर्जयेत्॥ ९॥

पुरुषेऽप्येत एव दोषाः। अतः सर्वदोषवर्जितौ स्त्रीपुरुषौ संसृज्येयाताम्॥ १०॥

सञ्जातहर्षौ मैथुने चानुकूला विष्टगन्धं सास्तीर्णं सुखं शयनमुपकल्प्य मनोज्ञं हितमशनमशित्वा दक्षिणपादेन पुमान्

वामपादेन स्त्री चारोहेत् तत्र मन्त्रं प्रयुञ्जीत। अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वा दधातु विधाता त्वा दधातु ब्रह्मवर्चसा भवेदिति॥ ११॥

ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाश्विनौ।
भगोऽथ मित्रावरुणौ पुत्रं वीरं दधातु मे॥ १२॥

इत्युक्त्वा संवसेताम्॥ १३॥

सा चेदेवमासीत बृहन्तमवदातं हर्यक्षमोजस्विनं शुचिं सत्त्वसम्पन्नं पुत्रमिच्छेयमिति। शुद्धस्नानात् प्रभृत्यस्यै मन्थमवदातं यवानां मधुसर्पिर्भ्यां संसृज्य श्वेताया गोः सरूपवत्सायाः पयसालोड्य राजते कांस्ये वा पात्रे काले काले सप्ताहं सततं प्रयच्छेत् पानाय प्रातश्च शालियवान्नविकारान् दधिमधुसर्पिर्भिः पयोभिर्वा संसृज्य भुञ्जीत॥ १४॥

तथा सायमवदातशरणशयनासनयानवसनभूषणवेशा च स्यात्॥ १५॥

सायंप्रातश्च शश्वत् श्वेतं महान्तम् ऋषभम् आजानेयं हरिचन्दनाङ्कितं पश्येत्। सौम्याभिश्चैनां कथाभिर्मनोऽनुकूलाभिरुपासीत। सौम्याकृतिवचनोपचारचेष्टांश्च स्त्रीपुरुषानितरानपि चेन्द्रियार्थानवदातान् पश्येत्। सहचर्यश्चैनां प्रियहिताभ्यां सततमुपचरेयुः तथा भर्ता न च मिश्रीभावमापद्येयाताम्॥ १६॥

इत्यनेन विधिना सप्तरात्रं स्थित्वाष्टमेऽहन्याप्लुत्याद्भिः सशिरस्कं सह भर्त्रा चाहतानि वस्त्राणि आच्छादयेत् अवदातानि अवदाताश्च स्रजो भूषणानि बिभृयात्॥ १७॥

तत ऋत्विक् प्रागुत्तरस्यां दिशि आगारस्य प्राक् प्रवणमुदक्प्रवणं वा प्रदेशमभिसमीक्ष्य गोमयोदकाभ्यां स्थण्डिलमुपसंलिप्य प्रोक्ष्य चोदकेन वेदिमस्मिन् स्थापयेत्। तां पश्चिमेनानाहत-

प्रस्तरसदृशे श्वेतार्षभे वाप्यजिन उपविशेत् ब्राह्मणप्रयुक्ता राजन्यप्रयुक्तस्तु वैयाघ्रे चर्मण्यानडुहे वा वैश्यप्रयुक्तास्तु रौरवे वास्ते वा । तत्रोपविष्टः पालाशीभिरैङ्गुदीभिरौडुम्बरीभिर्माधूकीभिर्वा समिद्भिरग्निमुपसमाधाय कुशैः परिस्तीर्य्य परिधिभिश्च परिधाय लाजैः शुक्लाभिश्च गन्धवतीभिः सुमनोभिरुपकिरेत् । तत्र प्रणीयोदपात्रं पवित्रं पूतमुपसंस्कृत्य सर्पिराज्यार्थं यथोक्तवर्णानाजानेयादीन् समन्ततः स्थापयेत् ॥ १८ ॥

ततः पुत्रकामा पश्चिमतोऽग्निं दक्षिणतो ब्राह्मणमुपवेश्य अन्वालभेत सह भर्त्रा यथेष्टं पुत्रमाशासाना । ततः तस्या आशासानाया ऋत्विक् प्रजापतिमभिनिर्दिश्य योनौ तस्याः कामपरिपूरणार्थं काम्यामिष्टिं निर्वपेद्विष्णुर्योनिं कल्पयत्वित्यनयाचर्चा ततश्चैवाज्येन स्थालीपाकमभिसंसार्य्य त्रिर्जुहुयात् । यथाम्नायञ्चोपमन्त्रितमुदकपात्रं तस्यै दद्यात् सर्व्वोदकार्थान् कुरुष्वेति ॥ १९ ॥

ततः समाप्ते कर्म्मणि पूर्वं दक्षिणपादमभिहरन्ती प्रदक्षिणमग्निमनुपरिक्रामेत् ततो ब्राह्मणान् स्वस्ति वाचयित्वा सह भर्त्रा आज्यशेषं प्राश्नीयात् । पूर्वं पुमान् पश्चात् स्त्री न चोच्छिष्टमवशेषयेत् ततस्तौ सह संवसेतामष्टरात्रं तथाविधपरिच्छदावेव च स्यातां तथेष्टपुत्रं जनयेताम् ॥ २० ॥

या तु स्त्री श्यामं लोहिताक्षं व्यूढोरस्कं महाबाहुं पुत्रमाशासीत । या वा कृष्णं कृष्णमृदुदीर्घकेशं शुक्लाक्षं शुक्लदन्तं तेजस्विनमात्मवन्तम् । एष एवानयोरपि होमविधिः किन्तु परिवर्हवर्णवर्ज्यं स्यात् पुत्रवर्णानुरूपस्तु यथाशीरेव तयोः परिवर्होऽन्यः कार्य्यः स्यात् ॥ २१ ॥

द्विजेभ्यः शूद्रा तु नमस्कारमेव कुर्य्यात् देवगुरुतपस्विसिद्ध-

या या च यथाविधं पुत्रमाशासीत तस्यास्तस्यास्तां तां पुत्राशिषमनुनिशम्य तांस्तान् जनपदानां मनुष्याणामनुरूपं पुत्रमाशासीत सा सा तेषां तेषां जनपदानामाहारविहारोपचारपरिच्छदाननुविधीयस्वेति वाच्या स्यात्। इत्येतत् सर्वं पुत्राशिषां समृद्धिकरं कर्म व्याख्यातं भवति ॥ २३ ॥

न तु खलु केवलमेतदेव कर्म वर्णवैशेष्यकरमपि तु तेजोधातुरप्युदकान्तरीक्षधातुप्रायोऽवदातवर्णकरो भवति। पृथिवीवायुधातुप्रायः कृष्णवर्णकरः समसर्वधातुप्रायः श्यामवर्णकरः॥२४

सत्त्ववैशेष्यकराणि पुनस्तेषां तेषां प्राणिनां मातापितृसत्त्वान्यन्तर्वत्न्याः श्रुतयश्चाभीक्ष्णं स्वोचितञ्च कर्म सत्त्वविशेषाभ्यासश्चेति ॥ २५ ॥

यथोक्तेन विधिनोपसंस्कृतशरीरयोः स्त्रीपुरुषयोस्तु मिथोभावमापन्नयोः शुक्रं शोणितेन सह संयोगं समेत्याव्यापन्नमव्यापन्नेन योनावनुपहतायामप्रदुष्टे गर्भाशये गर्भमभिनिर्वर्त्तयति एकान्तेन। यथा निर्मले वाससि सुपरिकल्पिते रञ्जनं समुदितगुणम् उपनिपातादेव रागमभिनिर्वर्त्तयति तद्वत्। यथा वा क्षीरं दध्नाभिषुतमभिषवणाद्विहाय स्वभावमापद्यते दधिभावं शुक्रं तद्वत् ॥ २६ ॥

एवमभिनिर्वर्त्तमानस्य गर्भस्य तु स्त्रीपुरुषत्वे हेतुः पूर्वमुक्तः ॥ २७ ॥

यथा हि बीजमनुपतप्तम् उप्तं स्वां स्वां प्रकृतिमनुविधीयते व्रीहिर्वा व्रीहित्वं यवो वा यवत्वं तथा स्त्रीपुरुषावपि यथोक्तं हेतुविभागमनुविधीयते ॥ २८ ॥

तयोः कर्मणा वेदोक्तेन विवर्त्तनमुपदिश्यते प्राग् व्यक्तीभावात् ॥ २९ ॥

प्रयुक्तेन सम्यक् कर्मणा हि देशकालसम्पदुपेतानां नियत-

मिष्टफलत्वं तथेतरेषामितरत्वम्। तस्मादापन्नगर्भां स्त्रियमभिसमीक्ष्य प्राक् व्यक्तीभावात् गर्भस्य पुंसवनमस्यै दद्यात् ॥३०॥

गोष्ठे जातस्य न्यग्रोधस्य प्रागुत्तराभ्यां शाखाभ्यां शुङ्गेऽनुपहते आदाय द्वाभ्यां धान्यमाषाभ्यां सम्पदुपेताभ्यां गौरसर्षपाभ्यां वा सह दध्नि प्रक्षिप्य पुष्ये स्त्रिये पिबेत् ॥ ३१ ॥

तथैव अपरान् जीवकर्षभकापामार्गसहचरकल्कांश्च युगपदेकैकशो यथेष्टं वाप्युपसंस्कृत्य पयसा ॥ ३२ ॥

कुड्यकीटकं मत्स्यकश्चोदकाञ्जलौ प्रक्षिप्य पुष्येण पिबेत् ॥३३

तथा कनकमयान् राजतानायसांश्च पुरुषकानग्निवर्णाननुप्रमाणान् दधि पयसि उदकाञ्जलौ वा प्रक्षिप्य पिबेदनवशेषतः पुष्येण ॥ ३४ ॥

पुष्येणैव च पिष्टस्य पच्यमानस्योष्माणमुपघ्राय तस्यैव च पिष्टस्योदकसंसृष्टस्य रसं देहलीमुपनिधाय दक्षिणे नासापुटे स्वयमासिञ्चेत् पिचुना ॥ ३५ ॥

इति पुंसवनानि यच्चान्यदपि ब्राह्मणा ब्रूयुराप्ता वा पुंसवनमिष्टं तच्चानुष्ठेयम् ॥ ३६ ॥

अत ऊर्द्ध्वं गर्भस्थापनानि व्याख्यास्यामः ॥ ३७ ॥

ऐन्द्री ब्राह्मी शतवीर्या सहस्रवीर्या अमोघा अव्यथा शिवाबला अरिष्टा वाट्यपुष्पी विष्वक्सेनकान्ता च आसामोषधीनां शिरसा दक्षिणेन पाणिना धारणम् एताभिश्चैव सिद्धस्य पयसः सर्पिषो वा पानम् एताभिश्चैव पुष्ये पुष्ये स्नानं सदा च एताभिः समालभेत ॥ ३८ ॥

तथा सर्वासां जीवनीयोक्तानामोषधीनां सदोपयोगस्तैस्तैरुपयोगविधिभिरिति गर्भस्थापनानि व्याख्यातानि भवन्ति ॥३९

गर्भोपघातकरास्त्विमे भावा भवन्ति तद्यथा उत्कटुकविषमस्थानकठिनासनसेविन्या वातमूत्रपुरीषवेगानुपरुन्धत्या दारु-

षानुचितव्यायामसेविन्यास्तीक्ष्णोष्णातिमात्रसेविन्या प्रमिता-शनसेविन्या गर्भो म्रियतेऽन्तः कुक्षेरकाले वा स्रंसते शोषी वा भवति ॥ ४० ॥

तथाभिघातप्रपीडनैः श्वभ्रकूपप्रपातदेशावलोकनैर्वाभीक्ष्णं मातुः प्रपतत्यकाले। तथातिमात्रसंक्षोभिभिर्यानैरप्रियाति-मात्रश्रवणैर्वा। प्रततोत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाडी कण्ठमनुवेष्टयति ॥ ४१ ॥

विवृतशायिनी नक्तञ्चारिणी चोन्मत्तं जनयत्यपस्मारिणं पुनः कलिकलहाचारशीला। व्यवायशीला दुर्वपुषमह्रीकं स्त्रैणं वा शोकनित्या भीतमपचितमल्पायुषं वा। अभिध्यात्री परोपतापिनमीर्ष्युं स्त्रैणं वा। स्तेना त्वायासबहुलमतिद्रोहिण-मकर्मशीलं वा। अमर्षिणी चण्डमौपधिकमसूयकं वा। स्वप्ननित्या तन्द्रालुमबुधमल्पाग्निं वा। मद्यनित्या पिपासालु-मनवस्थितचित्तं वा। गोधामांसप्रिया शार्करिणमश्मरिणं शनै-र्मेहिनं वा। वराहमांसप्रिया रक्ताक्षं क्रथनमतिपरुषरोमाणं वा। मत्स्यमांसनित्या चिरनिमेषं स्तब्धाक्षं वा। मधुरनित्या प्रमेहिणं मूकमतिस्थूलं वा। अम्लनित्या रक्तपित्तिनं त्वग-क्षिरोगिणं वा। लवणनित्या शीघ्रवलीपलितखालित्यरोगिणं वा कटुकनित्या दुर्बलमल्पशुक्रमनपत्यं वा। तिक्तनित्या शो-षिणमबलमपचितं वा। कषायनित्या श्यावमानाहिनमुदा-वर्त्तिनं वा ॥ ४२ ॥

यद्यच्च यस्य यस्य व्याधेर्निदानमुक्तं तत्, तदा सेवमानान्त-र्वत्नी तद्विकारबहुलमपत्यं जनयति ॥ ४३ ॥

पितृजास्तु शुक्रदोषा मातृजैरपचारैर्व्याख्याता इति गर्भो-पघातकरा भावा व्याख्याताः ॥ ४४ ॥

तस्मादहितानाहारविहारान् प्रजासम्पदमिच्छन्ती स्त्री

विशेषेण वर्जयेत् । साध्याचारा चात्मानमुपचरेद्धिताभ्यामाहारविहाराभ्याम् ॥ ४५ ॥

व्याधींश्चास्या मृदुमधुरशिशिरसुखसुकुमारप्रायैरौषधाहारोपचारैरुपचरेत् । न चास्या वमनविरेचनशिरोविरेचनानि प्रयोजयेन्न रक्तमवसेचयेत् । सर्वकालञ्च नास्थापनमनुवासनं वा कुर्यात् अन्यत्रात्ययिकाद्व्याधेः । अष्टमं मासमुपादाय वमनादिसाध्येषु पुनर्विकारेषु चात्ययिकेषु मृदुभिर्वमनादिभिर्वोपचारः स्यात् ॥ ४६ ॥

पूर्णमिव तैलपात्रमसंक्षोभ्याऽन्तर्वत्नी भवत्युपचर्या ॥ ४७ ॥

सा चेदपचाराद् द्वयोस्त्रिषु मासेषु पुष्पं पश्येन्नास्या गर्भः स्थास्यतीति विद्यात् । अजातसारा हि तस्मिन् काले भवन्ति गर्भाः ॥ ४८ ॥

सा चेच्चतुष्प्रभृतिषु मासेषु क्रोधशोकासूयेर्ष्याभयत्रासव्यवायव्यायामसंक्षोभसन्धारण-विषमाशन-शयनस्थानक्षुत्पिपासातियोगात् कदाहाराद्वा पुष्पं पश्येत् तस्या गर्भस्थापनविधिमुपदेक्ष्यामः ॥ ४९ ॥

पुष्पदर्शनादेवैनां ब्रूयाच्छयनं तावन्मृदुसुखशिशिरास्तरणसंस्तीर्णमीषदवनतशिरस्कं प्रतिपद्यस्वेति । ततो यष्टिमधुकसर्पिर्भ्यां परमशिशिरवारिणि संस्थिताभ्यां पिचुमाप्लाव्योपस्थसमीपे स्थापयेत् । तस्याः तथा शतधौतसहस्रधौताभ्यां सर्पिर्भ्याम् अधो नाभेः सर्वतः प्रदिह्यात् । गव्येन चैनां पयसा सुशीतेन मधुकाम्बुना वा न्यग्रोधादिकषायेण वा परिषेचयेदधो नाभेः । उदकं वा सुशीतमवगाहयेत् क्षीरिणां कषायद्रुमाणाञ्च स्वरसपरिपीतानि चेलानि ग्राहयेत । न्यग्रोधादिसिद्धयोर्वा क्षीरसर्पिषोः पिचुं ग्राहयेत् अतश्चैवाक्षमात्रं प्राशयेत् प्राशयेद्वा केवलञ्च क्षीरसर्पिः ॥ ५० ॥

पद्मोत्पलकुमुदकिञ्जल्कांश्चास्यै समधुशर्करान् लेहार्थं दद्यात्। शृङ्गाटकपुष्करबीजकशेरुकान् भक्षणार्थम्। गन्धप्रियङ्गुसितोत्पलशालुकोडुम्बरशलाटुन्यग्रोधशुङ्गानि वा पाययेदेनामाजेन पयसा ॥ ५१ ॥

पयसा चैनां बलातिबलाशालियष्टिकेक्षुमूलकाकोलीशृतेन समधुशर्करं रक्तशालीनामोदनं मृदुसुरभिशीतं भोजयेत्। लावकपिञ्जलकुरङ्गशम्बरशशहरिणैणकालपुच्छकरसेन वा घृतसलिलसिद्धेन सुखशिशिरोपवातदेशस्थां भोजयेत् ॥ ५२ ॥

तथा क्रोधशोकायासव्यवायव्यायामेभ्यश्चाभिरक्षेत् सौम्याभिश्चैनां कथाभिर्मनोऽनुकूलाभिरुपासीत तथाऽस्या गर्भस्तिष्ठति ॥ ५३ ॥

यस्याः पुनरामान्वयात् पुष्पदर्शनं स्यात् प्रायस्तस्या तद् गर्भबाधकं भवति विरुद्धोपक्रमत्वात् तयोः ॥ ५४ ॥

यस्याः पुनरुष्णतीक्ष्णोपयोगाद्गर्भिण्या महति संजातसारे गर्भे पुष्पदर्शनं स्यादन्यो वा योनिप्रस्रावः। तस्या गर्भो वृद्धिं न प्राप्नोति निःस्रुतत्वात् स कालान्तरमवतिष्ठतेऽतिमात्रं तमुपविष्टकमित्याचक्षते केचित् ॥ ५५ ॥

उपवासव्रतकर्मपरायाः पुनः कदाहारायाः स्नेहद्वेषिण्या वातप्रकोपनोक्तान्यासेवमानाया गर्भो न वृद्धिं प्राप्नोति परिशुष्कत्वात्। स चापि कालान्तरमवतिष्ठतेऽतिमात्रं स्पन्दनश्च भवति। तन्तु नागोदरमित्याचक्षते ॥ ५६ ॥

नार्य्यास्तयोरुभयोरपि चिकित्सितविशेषमुपदेक्ष्यामः ॥ ५७ ॥

भौतिकजीवनीयबृंहणीयमधुरवातहरसिद्धानां सर्पिषामुपयोगः। नागोदरे तु योनिव्यापद्विहितं पयसामामगर्भाणाञ्च गर्भवृद्धिकराणाञ्च सम्भोजनमेतैरेव सिद्धैर् घृतादिभिः सुखमुषितायाम् अभीक्ष्णं यानवाहनापमार्जनावजृम्भणैरुपपादनमिति ॥ ५८ ॥

यस्याः पुनर्गर्भः प्रसुप्तो न स्पन्दते तां श्येनमत्स्यगवयतित्तिरताम्रचूडशिखिनामन्यतमस्य सर्पिष्मता रसेन माषयूषेण वा प्रभूतसर्पिषा मूलकयूषेण वा रक्तशालीनामोदनं मृदुमधुरशीतं भोजयेत्। तैलाभ्यङ्गेनास्याश्चाभीक्ष्णमुदरवङ्क्षणोरुकटीपार्श्वपृष्ठप्रदेशानीषदुष्णेनोपाचरेत् ॥ ५८ ॥

यस्याः पुनरुदावर्त्तविबन्धः स्यादष्टमे मासे न चानुवासनसाध्यं मन्यते। ततस्तस्यास्तद्विकारप्रशमनमुपकल्पयेन्निरूहम् उदावर्त्तो ह्युपेक्षितः स गर्भं सगर्भां गर्भिणीं वा निपातयेत् ॥ ६० ॥

तत्र वीरणशालिषष्टिककुशकाशेक्षुवालिकावेतसपरिव्याधमूलानां भूतीकानन्ताकाश्मर्य्यपरूषकमधुकमृद्वीकानाञ्च पयसार्द्धोदकेनोन्मथ्य रसं पियालविभीतकमज्जतिलकल्कसम्प्रयुक्तमीषल्लवणमनत्युष्णं निरूहं दद्यात् ॥ ६१ ॥

व्यपगतविबन्धाञ्चैनां सुखसलिलपरिषिक्ताङ्गीं स्थैर्य्यकरमविदाहिनमाहारं भुक्तवती सायं मधुरकसिद्धेन तैलेनानुवासयेत् न्युब्जान्त्वेनामास्थापनानुवासनाभ्यामुपचरेत् ॥ ६२ ॥

यस्याः पुनरतिमात्रदोषोपचयाद्वा तीक्ष्णोष्णातिमात्रसेवनाद्वातमूत्रपुरीषवेगधारणैर्वा विषमाशनशयनस्थानसंपीड़नैर्वा क्रोधशोकेर्ष्यासूयाभयत्रासादिभिर्वापरैः कर्मभिरन्तः कुक्षौ गर्भो म्रियते। तस्याः स्तिमितं स्तब्धमुदरमाततं शीतमश्मान्तर्गतमिव भवत्यस्पन्दनो गर्भः शूलमधिकमुपजायते न चाव्यः प्रादुर्भवन्ति योनिर्न प्रस्रवत्यक्षिणी चास्याः स्रस्ते भवतः ताम्यति व्यथते भ्रमते श्वसित्यरतिबहुला च भवति न वास्या वेगप्रादुर्भावो वा यथावदुपलभ्यते इत्येवं लक्षणां स्त्रियं मृतगर्भेयमिति विद्यात् ॥ ६२ ॥

तस्य गर्भशल्यस्य जरायुप्रपातनं कर्म संशमनमित्याहुरेके।

मन्त्रादिकमथर्ववेदविहितमित्येके। परिदृष्टकर्मणा शल्यहर्त्रा-हरणमित्येके ॥ ६४ ॥

व्यपगतगर्भशल्यान्तु स्त्रियमामगर्भां सुरासीध्वरिष्टमधुमदिरा-सवानामन्यतममग्रे सामर्थ्यतः पाययेत गर्भकोष्ठविशुद्ध्यर्थमर्त्ति-विस्मरणार्थं प्रहर्षणार्थञ्च ॥ ६५ ॥

अतःपरं बृंहणैर्बलानुरक्षिभिः स्नेहसम्प्रयुक्तैर्यवाग्वादिभि-र्विलेप्यादिभिर्वा तत्कालयोगिभिराहारैरुपाचरेत् दोषधातुक्लेद-विशोषणमात्रं तत्कालम् ॥ ६६ ॥

अतःपरं स्नेहपानैर्बस्तिभिराहारविधिभिश्च दीपनीयजीव-नीयबृंहणीय मधुरवातहरसमाख्यातैरुपचारैरुपाचरेत् ॥६७॥

परिपक्वगर्भशल्यायाः पुनर्विमुक्तगर्भशल्यायास्तदहरेव स्नेहो-पचारः स्यात् ॥ ६८ ॥

परमतो निर्विकारमाप्यायमानस्य गर्भस्य मासे मासे कर्मो-पदेक्ष्यामः ॥ ६९ ॥

प्रथमे मासे शङ्किता चेद्गर्भमापन्ना क्षीरमनुपस्कृतं मात्रा-वच्छीतं काले पिबेत् सात्म्यञ्च भोजनं सायं प्रातश्च भुञ्जीत ॥७०

द्वितीये मासे क्षीरमेव च मधुरौषधसिद्धम्। तृतीये मासे क्षीरं मधुसर्पिर्भ्यामुपसंसृज्य। चतुर्थे मासे तु क्षीरनवनीत-मक्षमात्रमश्नीयात्। पञ्चमे मासे क्षीरसर्पिः। षष्ठे मासे क्षीरसर्पिर्मधुरौषधसिद्धं तदेव सप्तमे मासे ॥ ७१ ॥

तत्र गर्भस्य केशा जायमाना मातुर्विदाहं जनयन्तीति स्त्रियो भाषन्ते तन्नेति भगवानात्रेयः। किन्तु गर्भोत्पीडना-द्वातपित्तश्लेष्माण उरः प्राप्य विदहन्ति ततः कण्डूरुपजायते कण्डूमूला च किक्किशावाप्तिर्भवति। तत्र कोलोदकेन नवनी-तस्य मधुरौषधसिद्धस्य पाणितलमात्रं कालेऽस्यै दद्यात्। चन्दन-मृणालकल्कैश्चास्याः स्तनोदरं विमृद्नीयात्। शिरीषधातकी-

सर्षपमधुकचूर्णैः कुटजार्जकवीजमुस्तहरिद्राकल्कैर्वा निम्बकोलसुरसमञ्जिष्ठाकल्कैर्वा। पृषतहरिणशशरुधिरयुतया त्रिफलया वा करवीरकपत्रसिद्धेन वा तैलेनाभ्यङ्गः। परिषेकः पुनर्मालतीमधुकसिद्धेनाम्भसाजातकण्डूया च कण्डूयनं वर्जयेत् त्वग्भेदनवैरूप्यपरिहारार्थम् असह्यायान्तु कण्डूमुन्मर्दनोद्धर्षणाभ्यां परिहारः स्यात्। मधुरमाहारजातं वातहरमल्पमल्पस्नेहलवणमल्पोदकानुपानञ्च भुञ्जीत ॥ ३२ ॥

अष्टमे तु मासे क्षीरयवागूं सर्पिष्मतीं काले काले पिबेत्। तन्नेति भद्रकाप्यः, पैङ्गल्याबाधो ह्यस्या गर्भमागच्छेदिति। अस्त्वत्र पैङ्गल्याबाध इत्याह भगवान् पुनर्वसुरात्रेयो न ह्येतदकार्य्यं एवं कुर्वती ह्यारोग्यबलवर्णस्वरसंहननसम्पदुपेतं ज्ञातीनामपि श्रेष्ठमपत्यं जनयति ॥ ३३ ॥

नवमे तु खल्वेनां मासे मधुरौषधसिद्धेन तैलेनानुवासयेत्। अतश्चास्यास्तैलं पिचुमिश्रं योनौ प्रणयेद् गर्भस्थानमार्गस्नेहनार्थम् ॥ ३४ ॥

यदिदं कर्म्म प्रथममासमुपादायोपदिष्टमा नवमान्मासात्। तेन गर्भिण्या गर्भसमये गर्भधारणे कुक्षिकटीपार्श्वपृष्ठं मृदु भवति वातश्चानुलोमः सम्पद्यते मूत्रपुरीषे च प्रकृतिभूते सुखेन मार्गमनुपद्येते चर्म्मनखानि च मार्दवमुपयान्ति बलवर्णौ चोपचीयेते पुत्रं चेष्टं सम्पदुपेतं सुखिनं सुखेनैषा कालेन प्रजायत इति ॥ ३५ ॥

प्राक् चैवास्या नवमान्मासात् सूतिकागारं कारयेदपहृतास्थिशर्कराकपाले देशे प्रशस्तरूपरसगन्धायां भूमौ प्राग्द्वारमुदग्द्वारं वा ॥ ३६ ॥

तत्र वैल्वानां काष्ठानां तिन्दुकेङ्गुदानां भल्लातकानां वारुणानां खदिराणां वा यानि चान्यान्यपि ब्राह्मणाःशंसेयुरथर्ववेद-

विदस्त्वग्वसनालेपनाच्छादनापिधानसम्पदुपेतं वास्तु विद्यात्। हृदययोगेनाग्निसलिलोलूखलवर्चःस्थानस्नानभूमिमहानसमृतुसुखञ्च ॥ ७७ ॥

तत्र सर्पिस्तैलमधुसैन्धवसौवर्चलकाललवणविडङ्गगुड़कुष्ठकिलिमनागर-पिप्पली-मूल-हस्तिपिप्पलीमण्डूक पर्ण्येलालाङ्गलीवचाचव्य चित्रक-चिरविल्व-हिङ्गुसर्षपलशुनकणकणिकानीपातसीवल्वजभूर्जाः कुलत्थमैरेयसुरासवाः सन्निहिता स्युः ॥ ७८ ॥

तथाश्मानौ द्वौ द्वे चण्डमुपले द्वे उलूखले खरो वृषभश्च द्वौ च तीक्ष्णौ सूचीपिप्पलकौ सौवर्णराजतौ द्वे शस्त्राणि च तीक्ष्णायसानि द्वौ च विल्वमयौ पर्य्यङ्कौ तैन्दुकैङ्गुदानि च काष्ठानि अग्निसन्धुक्षणानि स्त्रियश्च बह्व्यो बहुशःप्रजाताः सौहार्दयुक्ताः सततमनुरक्ताः प्रदक्षिणाचाराः प्रतिपत्तिकुशलाः प्रकृतिवत्सलास्त्यक्तविषादाः क्लेशसहिष्णवोऽभिमता ब्राह्मणश्चाथर्ववेदविदो यच्चान्यदपि तत्र समर्थं मन्येत यच्च ब्राह्मणा ब्रूयुः स्त्रियश्च वृद्धास्तत्कार्य्यम् ॥ ७९ ॥

ततः प्रवृत्ते नवमे मासि पुण्येऽहनि प्रशस्तनक्षत्रयोगमुपगते भगवति शशिनि कल्याणे करणे मैत्रे मुहूर्त्ते शान्तिं हुत्वा गोब्राह्मणमग्निमुदकञ्चादौ प्रवेश्य गोभ्यस्तृणोदकं मधुलाजांश्च प्रदाय ब्राह्मणेभ्योऽक्षतान् सुमनसो नान्दीमुखानि च फलानीष्टानि दत्त्वा उदक् पूर्वमासनस्थेभ्योऽभिवाद्य पुनराचम्य स्वस्ति वाचयेत् ततः पुण्याहशब्देन गोब्राह्मणमन्वावर्त्तमाना प्रविशेत् सूतिकागारम् । तत्रस्था च प्रसवकालं प्रतीक्षेत ॥ ८० ॥

तस्यास्तु खलु इमानि लिङ्गानि प्रजननकालमभितो भवन्ति तद्यथा क्लमो गात्राणां ग्लानिराननस्य अक्ष्णोः शैथिल्यं विमुक्तबन्धनत्वमिव वक्षसः कुक्षेरवस्रंसनमधो गुरुत्वं वंक्षणवस्ति-

कटीपार्श्वपृष्ठनिस्तोदो योनेः प्रस्रवणमनन्नाभिलाषश्चेति। ततोऽनन्तरमावीनां प्रादुर्भावः प्रसेकश्च गर्भोदकस्य ॥८१॥

आवीप्रादुर्भावे तु भूमौ शयनं विदध्यान्मृद्वास्तरणोपपन्नं तदध्यासीनां तां ततः समन्ततः परिवार्य्य यथोक्तगुणाः स्त्रियः पर्य्युपासीरन्नाश्वासयन्त्यो वाग्भिर्ग्राहिणीभिरुपदिष्टवदर्थाभिधायिनीभिः ॥८२॥

सा चेदावीभिः संक्लिश्यमाना न प्रजायेतार्थैनां ब्रूयात् उत्तिष्ठ मुषलमन्यतरच्च गृहीत्वानेनैतदुदूखलं धान्यपूर्णं मुहुर्मुहुरभिजहि मुहुर्मुहुरवजृम्भस्व चंक्रमस्व चान्तरान्तरा इत्येवमुपदिशन्त्येके ॥८३॥

तत् नेत्याह भगवानात्रेयः। दारुणव्यायामवर्जनं हि गर्भिण्याः सततमुपदिश्यते। विशेषतश्च प्रजननकाले प्रचलितसर्वधातुदोषायाः सुकुमार्य्या नार्य्या मुषलव्यायामसमीरितो वायुरन्तरं लब्ध्वा प्राणान् हिंस्याद्दुष्प्रतीकारतमा हि तस्मिन् काले विशेषेण भवति गर्भिणी। तस्मान्मुषलग्रहणं परिहार्य्यमृषयो मन्यन्ते जृम्भणचंक्रमणञ्च पुनरनुष्ठेयमिति ॥८४॥

अथास्यै दद्यात् कुष्ठैलालाङ्गलिकीवचाचित्रकचिरविल्वचूर्णमुपघ्रातुं सा तत् मुहुर्मुहुरुपजिघ्रेत्। तथा भूर्जपत्रधूमं शिंशपासारधूमं वास्यायान्तरान्तरा। कटीपार्श्वपृष्ठसक्थिदेशादीषदुष्णेन तैलेनाभ्यज्यानुसुखमवमृद्नीयादित्यनेन सु कर्म्मणा गर्भोऽवाक् प्रतिपद्यते। स यदा जानीयाद्विमुच्य हृदयमुदरमस्यास्त्वाविशति वस्तिशिरोऽवगृह्णाति त्वरयन्ति एनाम् आव्यः परिवर्त्तते चास्या गर्भ इत्यस्यामवस्थायां पर्य्यङ्कमनामारोप्य प्रवाहितमुपक्रमेत कर्णे चास्या मन्त्रमिममनुकूला स्त्री जपेत् ॥८५॥

क्षितिर्जलं वियत् तेजो वायुर्विष्णुः प्रजापतिः।

सगर्भां त्वां सदा पान्तु वैशल्यञ्च दिशन्तु ते ॥८६॥

प्रसुव त्वमविक्लिष्टमविक्लिष्टा शुभानने ।

कार्त्तिकेयद्युतिं पुत्रं कार्त्तिकेयाभिरक्षितम् इति ॥८७॥

तामेनां यथोक्तगुणाः स्त्रियोऽनुशिष्युरनागतावीर्मा प्रवाहिष्ठाः या ह्यनागतावीः प्रवाहयते व्यर्थमेवास्यास्तत् कर्म भवति, प्रजा चास्या विकृतिमापन्ना च श्वासकास शोषप्लीहप्रसक्ता वा भवति यथा हि क्षवथूद्गारवातमूत्रपुरीषवेगान् प्रयतमानोऽप्यप्राप्तकालान्न लभते कृच्छ्रेण व्याप्यवाप्नोति तथानागतकालं गर्भमपि प्रवाहमाणा यथा चैषामेव क्षवथ्वादीनां सन्धारणमुपघातायोपपद्यते तथाप्राप्तकालस्य गर्भस्याप्रवाहणमिति। सा यथा निर्देशं कुरुष्वेति वक्तव्या स्यात्। तथा च कुर्वती शनैः शनैः पूर्वं प्रवाहेत ततोऽनन्तरं बलवत्तरमिति तस्याञ्च प्रवाहमाणायां स्त्रियः शब्दं कुर्युः प्रजाता प्रजाता धन्यं धन्यं पुत्रमिति तथास्या हर्षेणाप्यायन्ते प्राणाः ॥ ८८ ॥

यदा च प्रजाता स्यात् तदैनामवेक्षेत काचिदस्या अमरा प्रपन्ना वा प्रपन्ना नेति। तस्यायेदमरा न प्रपन्ना स्यादथैनामन्यतमा स्त्री दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवत् निपीड्य सव्येन पाणिना पृष्ठत उपसंगृह्य सुनिर्धूतं निर्धूनुयात्। अथास्याः पादपार्ष्णिं श्रोणीमाकोटयेदस्याः स्फिचावुपसंगृह्य सुपीडितं पीडयेत्। अथास्या बालवेण्या कण्ठतालु परिमृशेत् ॥ ८९ ॥

भूर्जपत्रकाचमणिसर्पनिर्मोकैरस्या योनिं धूपयेत्। कुष्ठतालीशकल्कं बल्वजयूषे मैरेयसुरामण्डे वा कौलत्थे वा मण्डूकपर्णिपिप्पलीक्वाथे वा संप्लाव्य पाययेदेनाम् ॥ ९० ॥

तथा सूक्ष्मैलाकिलिमकुष्ठनागरविडङ्गकालविडचव्यपिप्पलीचित्रकोपकुञ्चिकाकल्कं खरवृषभस्य जरतो वा दक्षिणं कर्णमुत्कृत्य दृषदि जर्जरीकृत्य बल्वजयूषादीनामन्यतममस्मिन् प्रक्षिप्य मुहूर्तस्थितमुद्धृत्य तदाप्लावनं पाययेदेनाम् ॥ ९१ ॥

शतपुष्पाकुष्ठमदनहिङ्गुसिद्धस्य चैनां तैलस्य पिचुं ग्राहयेत् अतश्चैवानुवासयेदेतैरेव चाप्लावनैः फलजीमूतकेक्ष्वाकुधामार्गव-कुटजकृतवेधनहस्तिपर्णपहितैरास्थापयेत् ॥ ८२ ॥

तदास्थापनमस्या हि सद्य वातमूत्रपुरीषैर्निर्हरत्यमराभि-संज्ञां वायोरनुलोमगमनात्। अमरं हि वातमूत्रपुरीषाणि अन्यानि चान्तर्वहिर्मुखानि सजन्ति ॥ ८३ ॥

तस्यान्तु खल्वमरायाः प्रपतनार्थे खल्वेवमेव कर्मणि क्रिय-माणे जातमात्रस्यैव कुमारस्य कार्य्याण्येतानि कर्माणि भवन्ति तद्यथा—अश्मनोः संघट्टनं कर्णयोर्मूले शीतोदकेनोष्णोदकेन वा मुखपरिषेकः। तथा संक्लेशविहतान् प्राणान् पुनर्लभेत कृष्णकपालिका शूर्पेण चैनमभिनिष्पुणीयाद् यद्यचेष्टः स्यात् यावत् प्राणानां प्रत्यागमनात् तत्तत् सर्वमेव कुर्युः ॥ ८४ ॥

ततः प्रत्यागतप्राणं प्रकृतिभूतमभिसमीक्ष्य स्नानोदकग्रहणा-भ्यामुपपादयेत्। अथास्य ताल्वोष्ठकण्ठजिह्वाप्रमार्जनमारभेत अङ्गुल्या सुपरिलिखितनखया सुप्रक्षालितोपधानकार्पासपिचु-मत्या प्रथमं प्रमार्जितस्यास्य च शिरस्तालु कार्पासपिचुना स्नेहगर्भेण प्रतिच्छादयेत्। ततोऽस्यानन्तरं कार्य्यं सैन्धवोप-हितेन सर्पिषा प्रच्छर्दनम् ॥ ८५ ॥

नाड्यास्त्वस्याः कल्पनविधिमुपदेक्ष्यामः। नाभिबन्धनात् प्रभृति हित्वाष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्त-रयोः शनैर्गृहीत्वा तीक्ष्णेन रौक्मराजतायसानां छेदनानामन्य-तमेनोर्द्ध्वं धारेण छेदयेत् तामग्रे सूत्रेणोपनिबध्य कण्ठे चास्य शिथिलमवसृजेत् ॥ ८६ ॥

तस्य चेन्नाभिः पच्येत् तां लोध्रमधुकप्रियङ्गुदारुहरिद्रा-कल्कसिद्धेन तैलेनाभ्यञ्ज्यादेषामेव तैलौषधानां चूर्णेनावचूर्णयेदेव नाड़ीकल्पनविधिरुक्तः सम्यक् ॥ ८७ ॥

असम्यक् कल्पेन हि नाड्या आयामव्यायामोत् तुण्डित-पिण्डालिकाविनामिकाविजृम्भिका बाधेभ्यो भयम् ॥ ६८ ॥

तत्राविदाहिभिर्वात-पित्त-प्रशमनैरभ्यङ्गोत्सादन-परिषेकैः सर्पिर्भिर्योपक्रमेत गुरुलाघवमभिसमीक्ष्य कुमारस्य ॥ ६६ ॥

प्रागतो जातकर्म कार्यं ततो मधुसर्पिषी मन्त्रोपमन्त्रिते यथान्याय प्राशितुमस्मै दद्यात्। स्तनमत ऊर्द्ध्वमनेनैव विधिना दक्षिणं पातुं पुरस्तात् प्रयच्छेत्। अथातः शीर्षतः स्थापयेदुद-कुम्भं मन्त्रोपमन्त्रितम् ॥ १०० ॥

अथास्य रक्षां विदध्यात् आदानीखदिरकर्कन्धूपीलुपरूषक-शाखाभिरस्या गृहं भिषक् समन्ततः परिवारयेत्। सर्वतश्च सूतिकागारस्य सर्षपातसी तण्डुलकणकणिकाः प्रकिरेत्। तथा तण्डुलबलिमङ्गलहोमः सततमुभयकालं क्रियते प्राङ्नामकर्म-णोर्द्वारे च मुषलमनुतिरश्चीनं न्यस्तं कुर्य्यात्। वचाकुष्ठक्षौम-कहिङ्गुसर्षपातसीलशुनकणकणिकानां रक्षोघ्नसमाख्यातानाञ्च औषधीनां पोट्टलिकां बद्धा सूतिकागारस्योत्तरदेहल्यामासज्जेत्। तथा सूतिकायाः कण्ठे सपुत्रायाः स्याल्युदककुम्भपर्य्यङ्केषु अपि तथैव च द्वयोर्द्वारपक्षयोः सकणकुण्ठकेन्धनाग्निस्तिन्दुककाष्ठे-न्धनयाग्निः सूतिकागारस्याभ्यन्तरतो नित्यं स्यात्। स्त्रियश्चैनां यथोक्तगुणाः सुहृदश्चानुजाग्र्युर्दशाहं द्वादशाहं धासुपरतप्रदान-मङ्गलाशीःस्तुति गीत-वादित्रमन्नपान-विशदमनुरक्त-प्रहृष्टजन-सम्पूर्णं तद्वेश्म कार्य्यम्। ब्राह्मणश्चाथर्ववेदवित् सततमुभयकालं शान्तिं जुहुयात् स्वस्त्ययनार्थं सुकुमारस्य तथा सूतिकाया इत्येतद्रक्षाविधानमुक्तम् ॥ १०१ ॥

सूतिकान्तु खलु बुभुक्षितां विदित्वा स्नेहं पाययेत् प्रथमं परमया शक्त्या सर्पिस्तैलं वसां मज्जानं वा सात्मीभावमभि-समीक्ष्य भिषक्। पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरचूर्ण-

महितं स्नेहं पीतवत्याश्च सर्पिस्तैलाभ्यामभ्यज्य वेष्टयेदुदरं महता वाससा तथा तस्या न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात्। जीर्णे तु स्नेहे पिप्पल्यादिभिरेव सिद्धां यवागूं सुस्निग्धां द्रवां मात्रशः पाययेतोभयकालञ्चोष्णोदकेन परिषेचयेत् प्राक् स्नेहयवागूपानाभ्याम्। एवं पञ्चरात्रं सप्तरात्रञ्चानुपाल्य ततः क्रमेणाप्याययेत् स्वस्थवृत्तमेतत् सूतिकायाः॥१०२॥

तस्यास्तु खलु यो व्याधिरुत्पद्यते स कृच्छ्रसाध्यो भवत्यसाध्यो वा। गर्भवृद्धिक्षयितशिथिलसर्वशरीरधातुत्वात् प्रवाहणवेदनाक्लेदनरक्तनिःसुतिविशेषशून्यशरीरत्वाच्च तस्मात् तां यथोक्तेन विधिनोपचरेत् भौतिकजीवनीयवृंहणीयमधुरवातहरसिद्धैरभ्यङ्गोत्सादनपरिषेकावगाहनान्नपानविधिभिर्विशेषतश्चोपचरेद्विशेषतो हि शून्यशरीराः स्त्रियः प्रजाता भवन्ति॥१०३

दशम्यां निश्चतीतायां सपुत्रा स्त्री सर्वगन्धौषधैर्गौरसर्षपलोध्रैश्च स्नाता लघ्वहतवस्त्रं परिधाय पवित्रेष्टलघुविचित्रभूषणवती संस्पृश्य मङ्गलान्युचितामर्चयित्वा च देवतां शिखिनः शुक्लवाससो व्यङ्गांश्च ब्राह्मणान् स्वस्ति वाचयित्वा कुमारमहतेन शुचिवाससाच्छादयेत्। प्राक् शिरसमुदक्शिरसं वा संवेश्य देवता पूर्वं द्विजातिभ्यः प्रणमतीत्युक्त्वा कुमारस्य पिता द्वे नामनी कारयेत् नाक्षत्रिकं नामाभिप्रायिकञ्च। तत्राभिप्रायिकं नाम घोषवदाद्यन्तस्थान्तमुष्मान्तञ्च वृद्ध त्रिपुरुषानन्तरमनवप्रतिष्ठितम्। नाक्षत्रिकन्तु नक्षत्रदेवतासंयुक्तं कृतं द्व्यक्षरं चतुरक्षरं वा॥१०४॥

कृते च नामकर्मणि कुमारं परीक्षितुमुपक्रमेदायुषः प्रमाणज्ञानहेतोः। तत्रेमानि आयुष्मतां कुमाराणां लक्षणानि भवन्ति। तद्यथा,—एकैकजा मृदवोऽल्पाः स्निग्धाः सुबद्धमूलाः कृष्णाः केशाः प्रशस्यन्ते। स्थिरा बहला त्वक् प्रकृत्याकृतिसु-

सम्पन्नमीषत्प्रमाणातिरिक्तमनुरूपमातपत्रोपमं शिरः प्रशस्यते। व्यूढं दृढं समं सुश्लिष्टशङ्खसन्ध्यूर्द्ध्वव्यञ्जनमुपचितं वलिनमर्द्धचन्द्राकृति ललाटं बहलौ विपुलसमपीठौ समौ नीचौ दृढौ पृष्ठतोऽवनतौ सुश्लिष्टकर्णपुटकौ महाच्छिद्रौ कर्णौ ईषत् प्रलम्बिन्यावसङ्गते समे संहते महत्यौ भ्रुवौ। समे समाहितदर्शने व्यक्तभागविभागे बलवति तेजसोपपन्ने स्वाङ्गोपाङ्गे चक्षुषी। ऋज्वी महोच्छ्वासा वंशसम्पन्नेषदवनताग्रा नासिका महदृजु सुनिविष्टदन्तमास्यम् आयामविस्तारोपपन्ना श्लक्ष्णा तन्वी प्रकृतियुक्ता पाटलवर्णा जिह्वा। श्लक्ष्णं युक्तोपचयमूष्मोपपन्नं रक्तं तालु महानदीनः स्निग्धोऽनुनादी गम्भीरसमुत्थो धीरः स्वरः। नातिस्थूलौ नातिकृशौ विस्तारोपपन्नावास्यप्रच्छादनौ रक्तावोष्ठौ। महत्यौ हनू वृत्ता नातिमहती ग्रीवा व्यूढमुपचितमुरो गूढं जत्रु पृष्ठवंशश्च। विप्रकृष्टान्तरौ स्तनौ असम्पातिनी स्थिरे पार्श्वे वृत्तपरिपूर्णायतौ बाहू सक्थिनी अङ्गुलयश्च महदुपचितं पाणिपादम्। स्थिरा वृत्ताः स्निग्धास्ताम्रास्तुङ्गाः कूर्माकाराः करजाः। प्रदक्षिणावर्त्ता सोत्सङ्गा च नाभी। नाभ्युरस्त्रिभागहीना समा समुपचितमांसा कटी वृत्तौ स्थिरोपचितमांसौ नात्युन्नतौ नात्यवनतौ स्फिचावनुपूर्ववृत्तौ उपचययुक्तावूरू। नात्युपचिते नात्यपचिते एणीपदे प्रगूढशिरास्थिसन्धी जङ्घे। नात्युपचितौ नात्यपचितौ गुल्फौ पूर्वोपदिष्टगुणौ पादौ कूर्माकारौ। प्रकृतियुक्तानि वातमूत्रपुरीषगुह्यानि तथा स्वप्नजागरणायासस्मितरुदितस्तनग्रहणानि। यच्च किञ्चिदन्यदपि अनुक्तमस्ति तदपि सर्वं प्रकृतिसम्पन्नमिष्टं विपरीतं पुनरनिष्टमिति दीर्घायुर्लक्षणानि ॥ १०५ ॥

### धात्रीपरीक्षा।

अतो धात्रीपरीक्षामुपदेक्ष्यामः ॥ १०६ ॥

अथ ब्रूयात् धात्रीमानयेति समानवर्णां यौवनस्थां निभृतामनातुरामव्यङ्गामव्यसनामविरूपामजुगुप्सितां देशजातीयामक्षुद्राम् अक्षुद्रकर्मिणीं कुले जातां वत्सलाम् अरोगजीववत्सां पुंवत्सां दोग्ध्रीमप्रमत्तामशायिनीमनुच्चारशायिनीमनन्त्यावशायिनीं कुशलोपचारां शुचिमशुचिद्वेषिणीं स्तन्यस्तनसम्पदुपेतामिति ॥ १०७ ॥

तत्रेयं स्तनसम्पत् नात्यूर्द्ध्वौ नातिलम्बौ अनतिकृशौ अनतिपीनौ युक्तपिप्पलकौ सुखप्रपानौ चेति स्तनसम्पत् ॥ १०८ ॥

स्तन्यसम्पत् तु प्रकृतिवर्णगन्धरसस्पर्शमुदपात्रे च दुह्यमानं दुग्धमुदकं व्येति प्रकृतिभूतत्वात् तत् पुष्टिकरमारोग्यकरञ्चेति स्तन्यसम्पत् अतोऽन्यथा व्यापन्नं ज्ञेयम् ॥ १०९ ॥

तस्य विशेषाः श्यावारुणवर्णं कषायानुरसं विशदमनतिलक्ष्यगन्धं रूक्षं द्रवं फेनिलं लघु अतृप्तिकरं कर्षणं वातविकाराणां कर्त्तृ वातोपसृष्टं क्षीरमभिज्ञेयम् ॥ ११० ॥

कृष्णनीलपीतताम्रावभासं तिक्ताम्लकटुकानुरसं कुणपरुधिरगन्धि भृशोष्णं पित्तविकाराणां कर्त्तृ पित्तोपसृष्टं क्षीरमभिज्ञेयम् ॥ १११ ॥

अत्यर्थशुक्लमतिमाधुर्य्योपपन्नं लवणानुरसं घृततैलवसामज्जगन्धि पिच्छिलं तन्तुमदुदकपात्रेऽवसीदति श्लेष्मविकाराणां कर्त्तृ श्लेष्मोपसृष्टं क्षीरमभिज्ञेयम् ॥ ११२ ॥

तेषान्तु त्रयाणामपि क्षीरदोषाणां प्रकृतिविशेषमभिसमीक्ष्य यथास्वं यथादोषञ्च वमनविरेचनास्थापनानुवासनानि विभज्य कृतानि प्रशमनाय भवन्ति ॥ ११३ ॥

पानाशनविधिस्तु दुष्टक्षीराया यवगोधूमशालिषष्टिकमुद्गहरेणुककुलत्थसुरासौवीरकतुषोदकमैरेयमेदकलशुनकरञ्जप्रायः स्यात् ॥ ११४ ॥

क्षीरदोषविशेषांश्चावेक्ष्यावेक्ष्य तत्तद्विधानं कार्यं स्यात् ॥११५॥

पाठामहौषध-सुरदारु-मुस्तमुर्वागुडूची-वत्सकफल-किरात-तिक्तकटुकरोहिणीशारिवाकषायाणाञ्च पानं प्रशस्यते। तथाऽन्येषां तिक्तकषायकटुकमधुराणां द्रव्याणां प्रयोगः। इति क्षीरशोधनान्युक्तानि भवन्ति। क्षीरविकारविशेषानभिसमीक्ष्य मात्राकालञ्चेति क्षीरविशोधनानि ॥ ११६ ॥

क्षीरजननानि तु मद्यानि सीधुवर्ज्यानि ग्राम्यानूपौदकानि च शाकधान्यमांसानि द्रवमधुराम्लभूयिष्ठाश्चाहाराः क्षीरिण्यश्चौषधयः क्षीरपानञ्चानायासश्चेति वीरणषष्टिकशालिकेक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटमूलकषायाणाञ्च पानमिति क्षीरजननान्युक्तानि ॥ ११७ ॥

धात्री तु यदा स्वादुबहुलशुद्धदुग्धा स्यात् तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधायैन्द्रीं ब्राह्मीं शतवीर्य्यां सहस्रवीर्य्यां मोघाममव्यथां शिवामरिष्टां वाट्यपुष्पीं विष्वक्सेनकान्तामिति विभ्रत्यौषधीः कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेदिति धात्रीकर्म ॥ ११८ ॥

कुमारागारविधिः।

अतोऽनन्तरं कुमारागारविधिमनुव्याख्यास्यामः। वास्तुविद्याकुशलः प्रशस्तं रम्यमतमस्कं निवातं प्रवातैकदेशं दृढमपगतश्वापदपशुदंष्ट्रिमूषिकपतङ्गं सुविभक्तसलिलोदूखलमूत्रवर्चःस्थानस्नानभूमिमहानसमृतुसुखं यथर्त्तुशयनासनास्तरणसम्पन्नं कुर्य्यात्। तथा सुविहितरक्षाविधानबलिमङ्गलहोमप्रायश्चित्तं शुचिवृद्धवैद्यानुरक्तजनसम्पूर्णमिति। कुमारागारविधिः ॥ ११९ ॥

शयनास्तरणप्रावरणानि कुमारस्य मृदुलघुशुचिसुगन्धीनि स्युः। स्वेदमलजन्तुमन्ति मूत्रपुरीषोपसृष्टानि च वर्ज्यानि स्युः ॥१२०॥

असति सम्भवेऽन्येषां तान्येव च सुप्रक्षालितोपधानानि सुधूपितानि शुद्धशुष्काण्युपयोगं गच्छेयुः ॥ १२१ ॥

धूपनानि पुनर्वाससां शयनास्तरणप्रावरणानाञ्च यवसर्षपातसी-हिङ्गु-गुग्गुलु-वचाचोरकवयःस्थागोलोमीजटिला-पलङ्कषाशोकरोहिणीसर्पनिर्मोकाणि घृतसम्प्रयुक्तानि स्युः ॥ १२२ ॥

मणयश्च धारणीयाः कुमारस्य खड्गरुरुगवयवृषभाणां जीवतामेव दक्षिणेभ्यो विषाणेभ्योऽग्राणि गृहीतानि स्युः। मन्त्राद्याश्चौषधयो जीवकर्षभकौ च यान्यपि चान्यानि ब्राह्मणाः प्रशंसेयुः ॥ १२३ ॥

क्रीड़नकानि खलु तु विचित्राणि घोषवन्त्यभिरामाणि अगुरूण्यतीक्ष्णाग्राणि अनास्यप्रवेशीनि अप्राणहराणि अवित्रासनानि स्युः ॥ १२४ ॥

न हि अस्य वित्रासनं साधु तस्मात् तस्मिन् रुदत्यभुञ्जाने वा अन्यत्र विधेयतामगच्छति राक्षसपिशाचपूतनाद्यानां नामान्याह्वयता कुमारस्य वित्रासनार्थं नाम ग्रहणं न कार्यं स्यात् ॥ १२५ ॥

यदि तु आतुर्यं किञ्चित् कुमारमागच्छेत् तत् प्रकृतिनिमित्तपूर्वरूपलिङ्गोपशयविशेषैस्तत्त्वतोऽनुबुध्य सर्वविशेषानातुरौषधदेशकालाश्रयानवेक्षमाणश्चिकित्सितुमारभेतैनं मधुरमृदुलघुसुरभिशीतशङ्करं कर्म प्रवर्त्तयेदेवं सात्म्या हि कुमारा भवन्ति तथा ते शर्म लभन्ते अचिराय रोगे तु अरोगवृत्तमातिष्ठेत् देशकालात्मगुणविपर्य्ययेण वर्त्तमानः ॥ १२६ ॥

क्रमेणासात्म्यानि परिवर्ज्योपयुञ्जानः सर्वाणि अहितानि वर्जयेत् तथा बलवर्णशरीरायुषां सम्पदमवाप्नोतीति ॥ १२७ ॥

एवमिमं कुमारम् आयौवनप्राप्तेर्धर्मार्थकुशलागमनात् चानुपालयेदिति पुत्राशिषां समृद्धिकरं कर्म व्याख्यातम्। तदाचरन् यथोक्तैर्विधिभिः पूजां यथेष्टं लभतेऽनसूयक इति ॥ १२८ ॥

तत्र श्लोकौ ।

पुत्राशिषां कर्म समस्तविकारकं यदुक्तमेतन्महदर्थसंहितम् ।
तदाचरन् यो विधिभिर्यथातथं पूजां यथेष्टं लभतेऽनसूयकः ॥
शरीरं चिन्त्यते सर्वं दैवमानुषसम्पदा ।
सर्वभावैर्यतस्तस्माच्छारीरं स्थानमुच्यते ॥ १२८ ॥

---

शारीरस्थानं समाप्तम् ।

# इन्द्रियस्थानम् ।

## प्रथमोऽध्यायः ।

### वर्णस्वरीयम् ।

इह खलु वर्णश्च स्वरश्च गन्धश्च रसश्च स्पर्शश्च चक्षुश्च श्रोत्रञ्च घ्राणञ्च रसनञ्च स्पर्शनञ्च सत्त्वञ्च भक्तिश्च शौचञ्च शीलञ्चाचारश्च स्मृतिश्चाकृतिश्च बलञ्च ग्लानिश्च तन्द्रा चारम्भश्च गौरवञ्च लाघवञ्च आहारश्च विहारश्चाहारपरिणामश्चोपायश्चापायश्च व्याधिश्च व्याधिपूर्वरूपञ्च वेदनाश्चोपद्रवाश्च छाया च प्रतिच्छाया च स्वप्नदर्शनञ्च दूताधिकारश्च पथि चौत्पातिकञ्चातुरकुले भावावस्थान्तराणि च भेषजसंवृत्तिश्च भेषजविकारयुक्तिश्चेति परीक्ष्याणि प्रत्यक्षानुमानोपदेशैरायुषः प्रमाणविशेषं जिज्ञासमानेन भिषजा ॥ १ ॥

तत्र तु खलु एषां परीक्ष्याणां कानिचित् पुरुषमनाश्रितानि कानिचिच्च पुरुषसंश्रयाणि। तत्र यानि पुरुषमनाश्रितानि तानि उपदेशतो युक्तितश्च परीक्षेत। पुरुषसंश्रयाणि पुनः प्रकृतितश्च विकृतितश्च ॥ २ ॥

तत्र प्रकृतिर्जातिप्रसक्ता कुलप्रसक्ता च देशानुपातिनी च

कालानुपातिनी च वयोऽनुपातिनी च प्रत्यात्मनियता चेति। एतावज्जातिकुलदेशकालवयःप्रत्यात्मनियता हि तेषां तेषां पुरुषाणां ते ते भावविशेषा भवन्ति ॥ ३ ॥

विकृतिः पुनर्लक्षणनिमित्ता च लक्ष्यनिमित्ता च निमित्तानुरूपा च। तत्र लक्षणनिमित्ता नाम सा यस्याः शरीरे लक्षणान्येव हेतुभूतानि भवन्ति। लक्षणानि हि, कानिचित् शरीरोपनिबद्धानि भवन्ति। यानि हि तस्मिंस्तस्मिंस्तत्राधिष्ठानमासाद्य तां तां विकृतिमुत्पादयन्ति ॥ ४ ॥

लक्ष्यनिमित्ता तु सा यस्या उपलभ्यते निमित्तं यथोक्तं निदानेषु ॥ ५ ॥

निमित्तानुरूपा तु निमित्तार्थानुकारिणी या तामनिमित्तां निमित्तमायुषः प्रमाणज्ञानस्येच्छन्ति भिषजो भूयश्चायुषः क्षयनिमित्तां प्रेतलिङ्गानुरूपां यामायुषोऽन्तर्गतस्य ज्ञानार्थमुपदिशन्ति धीराः ॥ ६ ॥

यामधिकृत्य पुरुषसंश्रयाणि मुमूर्षतां लक्षणानि उपदेक्ष्यामः। इत्युद्देशः। तद्विस्तरेणानुव्याख्यास्यामः ॥ ७ ॥

तत्रादित एव वर्णाधिकारस्तद्यथा—कृष्णः कृष्णश्यामः श्यामावदातोऽवदातश्च इति प्रकृतिवर्णाः शरीरस्य ॥ ८ ॥

यांश्चापरानुपेक्षमाणो विद्यादनूकतोऽन्यथा चापि निर्दिश्यमानांस्तज्ज्ञैः ॥ ९ ॥

नीलश्यामताम्रहरितशुक्लाश्च वर्णाः शरीरस्य वैकारिका भवन्ति। यांश्चापरानुपेक्षमाणो विद्यात् प्राग्विकृतानभूत्वोत्पन्नानिति प्रकृतिविकृतिवर्णा भवन्त्युक्ताः शरीरस्य ॥ १० ॥

तत्र प्रकृतिवर्णोऽर्द्धशरीरे विकृतिवर्णोऽर्द्धशरीरे द्वावपि वर्णौ मर्य्यादाविभक्तौ दृष्ट्वा यद्येवं सव्यदक्षिणविभागेन यद्येवं पूर्वपश्चिमविभागेन यद्युत्तराधरविभागेन यद्यन्तर्वहिर्विभागेण श्रातरस्यारिष्टमिति विद्यात् ॥ ११ ॥

एवमेव वर्णभेदो मुखेऽप्यन्यतो वर्त्तमानो मरणाय भवति ॥१२

वर्णभेदेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः ॥ १३ ॥

तथा पिप्लुव्यङ्गतिलकालकपिड़कानामन्यतमस्याननेऽजन्मातुरस्यैवमेव अप्रशस्तं विद्यात् ॥ १४ ॥

नखनयनवदनमूत्रपुरीषहस्तपादौष्ठादिष्वपि च वैकारिकोक्तानां वर्णानामन्यतमस्य प्रादुर्भावो हीनबलवर्णेन्द्रियेषु लक्षणमायुषः क्षयस्य भवति। यच्चान्यदपि किञ्चिद्वर्णवैकृतमभूतपूर्वं सहसोत्पद्येतानिमित्तमेव हीयमानस्यातुरस्य तच्चारिष्टमिति वर्णाधिकारः ॥ १५ ॥

स्वराधिकारः।

स्वराधिकारस्तु हंसक्रौञ्चनेमिदुन्दुभिकलविङ्ककाककपोतझर्झरानुकाराः प्रकृतिस्वराः। यांश्चापरानुपेक्षमाणोऽपि विद्यादनूकतोऽन्यथा वापि निर्दिश्यमानांस्तज्ज्ञैः ॥ १६ ॥

एड़कग्रस्ताव्यक्तगद्गदक्षामदीनानुकीर्णास्तु आतुराणां स्वरा वैकारिकाः। यांश्चापरानुपेक्षमाणोऽपि विद्यात् प्राग्विकृतानभूत्वोत्पन्नानिति प्रकृतिविकृतिस्वरा व्याख्याताः॥ १७ ॥

तत्र प्रकृतिवैकारिकाणां स्वराणामाश्वभिनिर्वृत्तिः स्वरानैकत्वमेकस्य चानेकत्वमप्रशस्तमिति स्वराधिकारः। इति वर्ण स्वराधिकारौ यथावदुक्तौ मुमूर्षतां ज्ञानार्थमिति ॥ १८ ॥

तत्र श्लोकाः। यस्य वैकारिको वर्णः शरीर उपजायते।

अर्द्धे वा यदि वा कृत्स्नेऽनिमित्तं न च नास्ति सः ॥१९॥

नीलं वा यदि वा श्यावं ताम्रं वा यदि वारुणम्।

मुखार्द्धमन्यथा वर्णो मुखार्द्धेऽरिष्टमुच्यते ॥ २० ॥

स्नेहो मुखार्द्धे सुव्यक्तो रौक्ष्यमर्द्धमुखे भृशम्।

ग्लानिरर्द्धे तथा हर्षो मुखार्द्धे प्रेतलक्षणम् ॥ २१ ॥

तिलकाः पिप्लवो व्यङ्गा राजयश्च पृथग्विधाः।

आतुरस्याशु जायन्ते मुखे प्राणान् मुमुक्षतः॥ २२॥
पुष्पाणि नखदन्तेषु पङ्को वा दन्तसंश्रितः।
चूर्णको वापि दन्तेषु लक्षणं मरणस्य तत्॥ २३॥
ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः।
नखेष्वपि च वैवर्ण्यमेतत् क्षीणबलेऽन्तकृत्॥ २४॥
यस्य नीलावुभावोष्ठौ पक्वजाम्बवसन्निभौ।
मुमूर्षुरिति तं विद्यान्नरा धीरं गतायुषम्॥ २५॥
एको वा यदि वानेको यस्य वैकारिकः स्वरः।
सहसोत्पद्यते जन्तोर्हीयमानस्य नास्ति सः॥ २६॥
यच्चान्यदपि किञ्चित् स्यात् वैकृतं स्वरवर्णयोः।
बलमांसविहीनस्य तत् सर्वं मरणोदयम्॥ २७॥
इति वर्णस्वरायुक्तौ लक्षणार्थं मुमूर्षताम्।
यस्तु सम्यग्विजानाति नायुर्ज्ञाने स मुह्यति॥ २८॥

---

## द्वितीयोऽध्यायः।

### पुष्पितम्।

पुष्पं यथा पूर्वरूपं फलस्येह भविष्यतः।
तथा लिङ्गमरिष्टाख्यं पूर्वरूपं मरिष्यतः॥ १॥
अप्येवन्तु भवेत् पुष्पं फलेनाननुबन्धि यत्।
फलञ्चापि भवेत् किञ्चिद् यस्य पुष्पं न पूर्वजम्॥ २॥
न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते।
मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम्॥ ३॥
मिथ्यादृष्टमरिष्टाभमनरिष्टमजानता।
अरिष्टञ्चाप्यसम्बुद्धमेतत् प्रज्ञापराधजम्॥ ४॥
ज्ञानार्थमवबोधनार्थन्तु लिङ्गैर्मरणजैः।

मनुष्यो हि मनुष्यस्य कथं रसमवाप्नुयात् ॥ १८ ॥
मक्षिकायैव यूकाश्च दंशाश्च मशकैः सह।
विरसाद्पसर्पन्ति जन्तोः कायान्मुमूर्षतः ॥ १९ ॥
अत्यर्थरसिकं कायं कालपक्कस्य मक्षिकाः।
अपि स्नातानुलिप्तस्य भृशमायान्ति सर्वशः ॥ २० ॥
तत्र श्लोकः। यान्येतानि मयोक्तानि लिङ्गानि रसगन्धयोः।
पुष्पितस्य नरस्यैतैः फलं मरणमादिशेत् ॥ २१ ॥

---

## तृतीयोऽध्यायः।

### परिमर्षणीयम्।

वर्णे स्वरे च गन्धे च रसे चोक्तं पृथक् पृथक्।
लिङ्गं मुमूर्षतां सम्यक् स्पर्शेष्वपि निबोधत ॥ १ ॥

स्पर्शप्राधान्येन आतुरस्यायुषः प्रमाणविशेषं जिज्ञासुः प्रकृतिस्थेन पाणिना केवलमस्य शरीरं स्पृशेत्। परिमर्षयेद्वान्येन ॥ २ ॥

परिमृशता तु खलु आतुरशरीरमिमे भावास्तत्र तत्रावबोद्धव्याः। तद्यथा,—सततं स्पन्दनानां शरीरोद्देशानां स्तम्भः। नित्योष्मणां शीतीभावः। मृदूनां दारुणत्वम्। श्लक्ष्णानां खरत्वम्। सतामसद्भावः। सन्धीनां विश्लेषभ्रंशच्यवनानि। मांसशोणितयोर्वीतीभावः। दारुणत्वम् स्वेदानुबन्धः स्तम्भो वा यच्चान्यदपि किञ्चिद् भृशविकृतमनिमित्तं स्यादिति लक्षणं स्पृश्यानां भावानाम् ॥ ३ ॥

तद्यथास्तोऽनुव्याख्यास्यामः। तस्य चेत् परिमृश्यमानं पृथक्त्वेन पादजङ्घोरुस्फिगुदरपार्श्वपृष्ठपिण्डिकाग्रीवाताल्वोष्ठललाटं स्विन्नं शीतं प्रस्तब्धं दारुणं वीतमांसशोणितं वा स्यात् परासुरयं पुरुषो न चिरात् कालं करिष्यतीति विद्यात् ॥ ४ ॥

तस्य चेत् परिमृश्यमानानि पृथक्त्वेन गुल्फजानुवंक्षणगुदवृषणमेढ्रनाभ्यंसस्तनमणिकहनुघ्राणकर्णाक्षिभ्रूशङ्खादीनि स्रस्तानि व्यस्तानि च्युतानि स्थानेभ्यः स्युः परासुरयं पुरुषो न चिरात् कालं करिष्यतीति विद्यात् ॥ ५ ॥

तथास्योच्छ्वासमन्यादन्तपक्ष्मचक्षुःकेशलोमोदरनखाङ्गुलीरालक्षयेत्। तस्य चेदुच्छ्वासोऽतिदीर्घः अतिह्रस्वो वा स्यात् परासुरिति विद्यात्। तस्य चेत् मन्ये परिमृश्यमाने न स्पन्देयातां परासुरिति विद्यात्। तस्य चेद्दन्ताः प्रतिकीर्णाः श्वेता जातशर्कराः स्युः परासुरिति विद्यात्। तस्य चेत् पक्ष्माणि जटाबद्धानि स्युः परासुरिति विद्यात्। तस्य चेच्चक्षुषी प्रकृतिहीने विकृतियुक्ते अत्युत्पिण्डिते अतिप्रविष्टे अतिजिह्मे अतिविषमे अतिप्रस्रुते अतिविमुक्तबन्धने सततोन्मेषिते सततनिमेषिते निमेषोन्मेषातिप्रवृत्ते विभ्रान्तदृष्टिके विपरीतदृष्टिके हीनदृष्टिके व्यस्तदृष्टिके नकुलान्धे कपोतान्धे अलातवर्णे कृष्णनीलपीतश्यावताम्रहरितहारिद्रशुक्लवैकारिकाणां वर्णानामन्यतमेनाभिसंप्लुते वा स्यातां परासुरिति विद्यात् ॥ ६ ॥

अथास्य केशलोमान्यायच्छेत्। तस्य चेत् केशलोमान्यायम्यमानानि प्रलुच्येरन् न चेद्वेदयेत् परासुरिति विद्यात् ॥ ७ ॥

तस्य चेदुदरे सिराः प्रदृश्येरन्। श्यावताम्रनीलहारिद्रशुक्ला वा स्युः परासुरिति विद्यात् ॥ ८ ॥

तस्य चेन्नखा वीतमांसशोणिताः पक्वजाम्बववर्णाः स्युः परासुरिति विद्यात् ॥ ९ ॥

अथास्याङ्गुलीरायच्छेत् तस्य चेदङ्गुलय आयम्यमाना न चेत् स्फुटेयुः परासुरिति विद्यात् ॥ १० ॥

भवति चात्र। एतान् स्पृश्यान् बहून् भावान् यः स्पृशन्नवबुध्यते।
आतुरे न स सम्मोहमायुर्ज्ञानस्य गच्छति ॥ ११ ॥

# चतुर्थोऽध्यायः ।

## इन्द्रियानीकम् ।

इन्द्रियाणि यथा जन्तोः परीक्षेत विशेषवित् ।
ज्ञातुमिच्छन् भिषग्ज्ञानमायुषस्तन्निबोध मे ॥ १ ॥
अनुमानात् परीक्षेत दर्शनादीनि तत्त्वतः ।
अद्धा हि विदितं ज्ञानमिन्द्रियाणामतीन्द्रियम् ॥ २ ॥
स्वस्थेभ्यो विकृतं यस्य ज्ञानमिन्द्रियसम्भवम् ।
आलक्ष्येतानिमित्तेन लक्षणं मरणस्य तत् ॥ ३ ॥
इत्युक्तं लक्षणं सर्वमिन्द्रियेष्वशुभोदयम् ।
तदेव तु पुनर्भूयो विस्तरेण निबोधत ॥ ४ ॥
घनीभूतमिवाकाशमाकाशमिव मेदिनीम् ।
विगीतं ह्युभयं ह्येतत् पश्यन् मरणमृच्छति ॥ ५ ॥
यस्य दर्शनमायाति मारुतोऽम्बरगोचरः ।
अग्निर्नायाति वा दीप्तस्तस्यायुः क्षयमादिशेत् ॥ ६ ॥
जले सुविमले जालमजालावतते तथा ।
स्थिते गच्छति वा दृष्ट्वा जीविताद् परिमुच्यते ॥ ७ ॥
जाग्रन् पश्यति यः प्रेतान् रक्षांसि विविधानि च ।
अन्यद्वाप्यद्भुतं किञ्चिन्न स जीवितुमर्हति ॥ ८ ॥
योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम् ।
कृष्णं वा यदि वा शुक्लं निशां वसति सप्तमीम् ॥ ९ ॥
मरीचीनसतो मेघान् मेघान् वाप्यसतोऽम्बरे ।
विद्युतो वा विना मेघैः पश्यन् मरणमृच्छति ॥ १० ॥
मृन्मयीमिव यः पात्रीं कृष्णाम्बरसमावृताम् ।
आदित्यमीक्षते शुद्धं चन्द्रं वा न स जीवति ॥ ११ ॥
अपर्वणि यदा पश्येत् सूर्याचन्द्रमसोर्ग्रहम् ।
अव्याधितो व्याधितो वा तदन्तं तस्य जीवितम् ॥ १२ ॥

नक्तं सूर्यमहश्चन्द्रमनग्नौ धूमसुत्थितम् ।
अग्निं वा निष्प्रभं रात्रौ दृष्ट्वा मरणमृच्छति ॥ १३ ॥
प्रभावतः प्रभाहीनान्निष्प्रभावान् प्रभावतः ।
नरा विलिङ्गान् पश्यन्ति भावान् प्राणान् जिहासवः ॥१४
व्यापन्नानि विवर्णानि विसंख्योपगतानि च ।
विनिमित्तानि पश्यन्ति रूपाण्यायुःक्षये नराः ॥ १५ ॥
यश्च पश्यत्यदृश्यान् वै दृश्यान् यश्च न पश्यति ।
तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम् ॥ १६ ॥
अशब्दस्य च यः श्रोता शब्दान् यश्च न बुध्यते ।
द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयो विजानता ॥ १७ ॥
संहृत्याङ्गुलिभिः कर्णौ ज्वालाशब्दं च आतुरः ।
न शृणोति गतासुं तं बुद्धिमान् परिवर्जयेत् ॥ १८ ॥
विपर्ययेण यो विद्याद्गन्धानां साध्वसाधुताम् ।
न वा तान् सर्वशो विद्यात्तं विद्याद्विगतायुषम् ॥ १९ ॥
यो रसान्न विजानाति न वा जानाति तत्त्वतः ।
मुखपाकादृते पक्वं तमाहुः कुशला नरम् ॥ २० ॥
उष्णान् शीतान् खरान् श्लक्ष्णान् मृदूनपि च दारुणान् ।
स्पर्शान् स्पृष्ट्वा ततोऽन्यत्वं मुमूर्षुस्तेषु मन्यते ॥ २१ ॥
अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ।
इन्द्रियैरधिकं पश्यन् पञ्चत्वमधिगच्छति ॥ २२ ॥
इन्द्रियाणामृते दृष्टेरिन्द्रियार्थान् न पश्यति ।
विपर्ययेण यो विद्यात् तं विद्यात् विगतायुषम् ॥ २३
स्वस्थाः प्रज्ञाविपर्यासैरिन्द्रियार्थेषु वैकृतम् ।
पश्यन्ति ये सबहुशः तेषां मरणमादिशेत् ॥ २४ ॥
तत्र श्लोकः । एतदिन्द्रियविज्ञानं यः पश्यति यथा तथा ।
मरणं जीवितं चैतत् स भिषक् ज्ञातुमर्हति ॥ २५ ॥

## पञ्चमोऽध्यायः ।

### पूर्वरूपीयम् ।

पूर्वरूपाण्यसाध्यानां विकाराणां पृथक् पृथक् ।
भिन्नाभिन्नानि वक्ष्यामो भिषजां ज्ञानवृद्धये ॥ १ ॥
पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया ।
यं विशन्ति, विशत्येनं मृत्युर्ज्वरपुरःसरः ॥ २ ॥
अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् ।
विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम् ॥ ३ ॥
पूर्वरूपैकदेशांस्तु वक्ष्यामोऽन्यान् सुदारुणान् ।
ये रोगाननुबध्नन्ति मृत्युर्यैरनुबध्यते ॥ ४ ॥
बलञ्च क्षीयते यस्य प्रतिश्यायश्च वर्द्धते ।
तस्य नारीप्रसक्तस्य शोषोऽन्तायोपजायते ॥ ५ ॥
श्वभिरुष्ट्रैः खरैर्वापि याति यो दक्षिणां दिशम् ।
स्वप्ने यक्ष्माणमासाद्य जीवितं स विमुञ्चति ॥ ६ ॥
प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना ।
स घोरं ज्वरमासाद्य न जीवेन्न च मुच्यते ॥ ७ ॥
लाक्षारक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।
स रक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥ ८ ॥
रक्तस्रग्रक्तसर्वाङ्गो रक्तवासा मुहुर्हसन् ।
यः स्वप्ने ह्रियते नार्या स रक्तं प्राप्य सीदति ॥ ९ ॥
शूलाटोपान्त्रकूजाश्च दौर्बल्यं चातिमात्रया ।
नखादिषु च वैवर्ण्यं गुल्मेनान्तकरो ग्रहः ॥ १० ॥
लता कण्टकिनी यस्य दारुणा हृदि जायते ।
स्वप्ने गुल्मस्तमन्ताय क्रूरो विशति मानवम् ॥ ११ ॥
कायेऽल्पमपि संसृष्टं सुभृशं यस्य दीर्यते ।
क्षतानि च न रोहन्ति कुष्ठैर्मृत्युर्हिनस्ति तम् ॥ १२ ॥

नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्चिषम् ।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यतः ॥ १३ ॥
स्नातानुलिप्तगात्रेऽपि यस्मिन् घ्नन्ति मक्षिकाः ।
स प्रमेहेण संस्पर्शं प्राप्य तेनैव हन्यते ॥ १४ ॥
स्नेहं बहुविधं स्वप्ने चण्डालैः सह यः पिबेत् ।
बुध्यते स प्रमेहेण स्पृश्यतेऽन्ताय मानवः ॥ १५ ॥
ध्यानायासौ तथोद्वेगो मोहश्चास्थानसम्भवः ।
अरतिर्बलहानिश्च मृत्युरुन्मादपूर्वकः ॥ १६ ॥
आहारद्वेषिणं पश्यन् लुप्तचित्तमुदर्दितम् ।
विद्याद्धीरो मुमूर्षुं तमुन्मादेनातिपातिना ॥ १७ ॥
क्रोधनं त्रासबहुलं सकृत्प्रहसिताननम् ।
मूर्च्छापिपासाबहुलं हन्त्युन्मादः शरीरिणम् ॥ १८ ॥
नृत्यन् रक्षोगणैः सार्द्धं यः स्वप्नेऽम्भसि सीदति ।
स प्राप्य भृशमुन्मादं याति लोकमतःपरम् ॥ १९ ॥
असत् तमः पश्यति यः शृणोत्यप्यसतः स्वरान् ।
बहून् बहुविधान् जाग्रत् सोऽपस्मारेण बध्यते ॥ २० ॥
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥ २१ ॥
स्तभ्येते प्रतिबुद्धस्य हनू मन्ये तथाक्षिणी ।
यस्य तं बहिरायामो गृहीत्वा हन्त्यसंशयम् ॥ २२ ॥
शष्कुलीरप्यपूपान् वै स्वप्ने खादति यो नरः ।
स चेत् तादृक् छर्दयति प्रतिबुद्धो न जीवति ॥ २३ ॥
एतानि पूर्वरूपाणि यः सम्यगवबुध्यते ।
स एषामनुबन्धश्च फलञ्च ज्ञातुमर्हति ॥ २४ ॥
य इमांश्चापरान् स्वप्नान् दारुणानुपलक्षयेत् ।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥ २५ ॥

यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः।
वयांसि च विलीयन्ते स्वप्ने मौण्ड्यमियाच्च यः॥ २६॥
गृध्रोलूकश्वकाकाद्यैः स्वप्ने यः परिवार्य्यते।
रक्षःप्रेतपिशाचस्त्रीचण्डालद्रविडान्ध्रकैः॥ २७॥
वंशवेत्रलतापाशतृणकण्टकसङ्कटे।
प्रमुह्यति हि यः स्वप्ने लगति प्रपतत्यपि॥ २८॥
भूमौ पांशूपधानायां वल्मीके वाथ भस्मनि।
श्मशानायतने श्वभ्रे स्वप्ने यः प्रपतत्यपि॥ २९॥
कलुषेऽम्भसि पङ्के च कूपे वा तमसावृते।
स्वप्ने मज्जति शीघ्रेण स्रोतसा ह्रियते च यः॥ ३०॥
स्नेहपानं तथाभ्यङ्गः स्वप्ने बन्धपराजयौ।
हिरण्यलाभः कलहः प्रच्छर्दनविरेचने॥ ३१॥
उपानद्युगनाशश्च प्रपातः पांशुचर्मणोः।
हर्षः स्वप्ने प्रकुपितैः पितृभिश्चापि भर्त्सनम्॥ ३२॥
दन्तचन्द्रार्कनक्षत्रदेवतादीपचक्षुषाम्।
पतनं वा विनाशो वा स्वप्ने भेदो नगस्य वा॥ ३३॥
रक्तपुष्पं वनं भूमिं पापकर्मालयं चिताम्।
गुहान्धकारसम्बाधं स्वप्ने यः प्रविशत्यपि॥ ३४॥
रक्तमाली हसन्नुच्चैर्दिग्वासा दक्षिणां दिशम्।
दारुणामटवीं स्वप्ने कपियुक्तः प्रयाति वा॥ ३५॥
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम्।
कृष्णानां रक्तनेत्राणां स्वप्ने नेच्छन्ति दर्शनम्॥ ३६॥
कृष्णा पापा निराचारा दीर्घकेशनखस्तनी।
विरागमाल्यवसना स्वप्ने कालनिशा मता॥ ३७॥
इत्यन्ये दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम्।
अरोगः संशयं गत्वा कश्चिदेव विमुच्यते॥ ३८॥

मनोवहानां पूर्णत्वाद्दोषैरतिबलैस्त्रिभिः ।
स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे ॥ ३८ ॥
नातिप्रसुप्तः पुरुषः सफलानफलानपि ।
इन्द्रियेशेन मनसा स्वप्नान् पश्यत्यनेकधा ॥ ४० ॥
दृष्टं श्रुतानुभूतञ्च प्रार्थितं कल्पितं तथा ।
भाविकं दोषजञ्चैव स्वप्नं सप्तविधं विदुः ॥ ४१ ॥
तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत् ।
दिवास्वप्नमतिह्रस्वमतिदीर्घञ्च बुद्धिमान् ॥ ४२ ॥
दृष्टः प्रथमरात्रे यः स्वप्नः सोऽल्पफलो भवेत् ।
न स्वपेद् यः पुनर्दृष्ट्वा स सद्यः स्यान्महाफलः ॥ ४३ ॥
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ।
पश्येत् सौम्यं शुभाकारं तस्य विद्याच्छुभं फलम् ॥ ४४ ॥

तत्र श्लोकः ।

पूर्वरूपाण्यथ स्वप्नान् य इमान् वेत्ति दारुणान् ।
न स मोहादसाध्येषु कर्माण्यारभते भिषक् ॥ ४५ ॥

---

## षष्ठोऽध्यायः ।

### कतमानिशरीरीयम् ।

कतमानि शरीराणि व्याधिमन्ति महामुने ! ।
यानि वैद्यः परिहरेद् येषु कर्म न सिध्यति ॥ १ ॥
इत्यात्रेयोऽग्निवेशेन प्रश्नं पृष्टः सुदुर्वचम् ।
आचचक्षे यथा तस्मै भगवंस्तन्निबोध मे ॥ २ ॥
यस्य वै भाषमाणस्य रुजत्यूर्द्धमुरो भृशम् ।
अन्नञ्च च्यवते भुक्तं स्थितञ्चापि न जीर्य्यति ॥ ३ ॥
बलञ्च हीयते यस्य तृष्णा चाभिप्रवर्द्धते ।
जायते हृदि शूलञ्च तं भिषक् परिवर्जयेत् ॥ ४ ॥

हिक्का गम्भीरजा यस्य शोणितञ्चातिसार्य्यते।
न तस्मै भेषजं दद्यात् स्मरन्नात्रेयशासनम् ॥ ५ ॥
आनाहश्चातिसारश्च यमेतौ दुर्बलं नरम्।
व्याधितं विशतो रोगौ दुर्लभं तस्य जीवितम् ॥ ६ ॥
आनाहश्चैव तृष्णा च यमेतौ दुर्बलं नरम्।
विशतो विजहत्येनं प्राणानतिचिरान्नरम् ॥ ७ ॥
ज्वरः पौर्व्वाह्णिको यस्य शुष्कः कासश्च दारुणः।
ज्वरो यश्चापराह्णे तु श्लेष्मकाशश्च दारुणः।
बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥ ८ ॥
यस्य मूत्रं पुरीषञ्च ग्रथितं सम्प्रवर्त्तते।
निरूष्मिणो जठरिणः श्वसनो न स जीवति ॥ ८ ॥
श्वयथुर्यस्य कुक्षिस्थो हस्तपादं विसर्पति।
ज्ञातिसंघं स संक्लिश्य तेन रोगेण हन्यते ॥ १० ॥
श्वयथुर्यस्य पादस्थस्तथा स्रस्ते च पिण्डिके।
सीदतश्चाप्युभे जङ्घे तं भिषक् परिवर्जयेत् ॥ ११ ॥
शूनहस्तं शूनपादं शूनगुह्योदरं नरम्।
हीनवर्णबलाहारमौषधैर्नोपपादयेत् ॥ १२ ॥
उरोयुक्तो बहुश्लेष्मा नीलः पीतः सलोहितः।
सततं च्यवते यस्य दूरात् तं परिवर्जयेत् ॥ १३ ॥
हृष्टरोमा सान्द्रमूत्रः शूनः कासज्वरार्दितः।
क्षीणमांसो नरो दूराद् वर्ज्यो वैद्येन जानता ॥ १४ ॥
त्रयः प्रकुपिता यस्य दोषाः कोष्ठेऽभिलक्षिताः।
कृशस्य बलहीनस्य नास्ति तस्य चिकित्सितम् ॥ १५ ॥
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये।
दुर्बलस्य विशेषेण नरस्यान्ताय जायते ॥ १६ ॥
पाण्डूदरः कृशोऽत्यर्थं तृष्णयाभिपरिप्लुतः।

डम्बरी कुपितोच्छ्रासः प्रत्याख्येयो विजानता ॥ १७ ॥
हनुमन्याग्रहस्तृष्णा बलह्रासोऽतिमात्रया ।
प्राणाश्चोरसि वर्त्तन्ते यस्य तं परिवर्जयेत् ॥ १८ ॥
ताम्यत्यायच्छते शर्म न किञ्चिदपि विन्दति ।
क्षीणमांसबलाहारो मुमूर्षुरचिराज्ज्वरः ॥ १९ ॥
विरुद्धयोनयो यस्य विरुद्धोपक्रमा भृशम् ।
वर्द्धन्ते दारुणा रोगाः शीघ्रं शीघ्रं स हन्यते ॥ २० ॥
बलं विज्ञानमारोग्यं ग्रहणीमांसशोणितम् ।
एतानि यस्य क्षीयन्ते क्षिप्रं क्षिप्रं स हन्यते ॥ २१ ॥
विकारो यस्य वर्द्धन्ते प्रकृतिः परिहीयते ।
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥ २२ ॥

तत्र श्लोकः ।

इत्येतानि शरीराणि व्याधिमन्ति विवर्जयेत् ।
न ह्येषु धीराः पश्यन्ति सिद्धिं काञ्चिदुपक्रमात् ॥ २३ ॥

---

## सप्तमोऽध्यायः ।

### पन्नरूपीयम् ।

द्रष्टा यस्य विजानीयात् पन्नरूपां कुमारिकाम् ।
प्रतिच्छायामयीमक्ष्णोर्नैनमिच्छेच्चिकित्सितुम् ॥ १ ॥
ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि ।
अङ्गेषु विकृता यस्य छाया प्रेतस्तथैव सः ॥ २ ॥
छिन्ना भिन्नाकुला छाया हीना वाप्यधिकापि या ।
नष्टा तन्वी द्विधा छाया विशिरा विकृता च या ॥ ३ ॥
एताश्चान्याश्च याः काश्चित् प्रतिच्छाया विगर्हिताः ।
सर्वा मुमूर्षतां ज्ञेया न चेल्लक्ष्यनिमित्तजाः ॥ ४ ॥

संस्थानेन प्रमाणेन वर्णेन प्रभया तथा।
छाया विवर्त्तते यस्य स्वप्नेऽपि प्रेत एव सः॥ ५॥
संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च या।
मध्यमस्य महच्चोक्तं प्रमाणं त्रिविधं नृणाम्॥ ६॥
प्रतिप्रमाणसंस्थाना जलादर्शातपादिषु।
छाया या सा प्रतिच्छाया या च वर्णप्रभाश्रया॥ ७॥
खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः।
नाभसी निर्मला नीला सस्नेहा सप्रभेव च॥ ८॥
रूक्षा श्यावारुणा या तु वायवी सा हतप्रभा।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया॥ ९॥
शुद्धवैदूर्य्यविमला सुस्निग्धा चाम्भसी मता।
स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता च पार्थिवी॥१०॥
वायवी गर्हिता त्वासां चतस्रः स्युः शुभोदया.।
वायवी तु विनाशाय क्लेशाय महतेऽपि वा॥ ११॥
स्यात् तैजसी प्रभा सर्वा सा तु सप्तविधा स्मृता।
रक्ता पीता सिता श्यावा हरिता पाण्डुराऽसिता॥१२॥
तासां याःस्युर्विकासिन्यः स्निग्धाश्च विपुलाश्च याः।
ताः शुभा रूक्षमलिनाः संक्षिप्ताश्चाशुभोदयाः॥ १३॥
वर्णमाक्रामति छाया भास्तु वर्णप्रकाशिनी।
आसन्ना लक्ष्यते छाया भाः प्रकृष्टा प्रकाशते॥ १४॥
नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु।
नृणां शुभाशुभोत्पत्तिं काले छायाः प्रभाश्रिताः॥ १५॥
कामलाक्ष्णोर्मुखं पूर्णं गण्डयोर्युक्तमांसता।
सन्त्रासश्चोष्णगात्रत्वं यस्य तं परिवर्जयेत्॥ १६॥
उत्थाप्यमानः शयनात् प्रमोहं याति यो नरः।
मुहुर्मुहुर्न सप्ताहं स जीवति विकत्थनः॥ १७॥

संसृष्टा व्याधयो यस्य प्रतिलोमानुलोमगाः ।
व्यापन्ना ग्रहणी प्रायः सोऽर्द्धमासं न जीवति ॥ १८ ॥
उपद्रुतस्य रोगेण कर्षितस्याल्पमश्नतः ।
बहुमूत्रपुरीषं स्याद् यस्य तं परिवर्जयेत् ॥ १९ ॥
दुर्बलो बहु भुङ्क्ते यः प्राग्भुक्तादन्नमातुरः ।
अल्पमूत्रपुरीषश्च यथा प्रेतस्तथैव सः ॥ २० ॥
वर्द्धिष्णुगुणसम्पन्नमन्नमश्नाति यो नरः ।
शश्वच्च बलवर्णाभ्यां क्षीयते न स जीवति ॥ २१ ॥
प्रकूजति प्रश्वसिति शिथिलश्चातिसार्य्यते ।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति ॥ २२ ॥
क्रमश्च यः प्रश्वसिति व्याविद्धं स्पन्दते च यः ।
मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुः ॥ २३ ॥
ऊर्द्ध्वञ्च यः प्रश्वसिति श्लेष्मणा चाभिभूयते ।
हीनवर्णबलाहारो यो नरो न स जीवति ॥ २४ ॥
ऊर्द्ध्वाग्रे नयने यस्य मन्ये चानतकम्पने ।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति ॥ २५ ॥
यस्य गण्डावुपचितौ ज्वरकासौ च दारुणौ ।
शूली प्रद्वेष्टि चाप्यन्नं तस्मिन् कर्म न सिध्यति ॥ २६ ॥
व्यावृत्तमूर्द्धजिह्वाक्षो भ्रुवौ यस्य च विच्युते ।
कण्टकैराचिता जिह्वा यथा प्रेतस्तथैव सः ॥ २७ ॥
शेफश्चात्यर्थमुत्क्षिप्तं निःसृतौ वृषणौ भृशम् ।
अतश्चैव विपर्यासो विद्यात् प्रेतलक्षणम् ॥ २८ ॥
निचितं यस्य मांसं स्यात् त्वगस्थि चैव दृश्यते ।
क्षीणस्यानश्नतस्तस्य मासमायुः परं भवेत् ॥ २९ ॥
तत्र श्लोकः । इदं लिङ्गमरिष्टाख्यमनेकमभिजज्ञिवान् ।
आयुर्वेदविदित्याख्यां लभते कुशलो नरः ॥ ३० ॥

## अष्टमोऽध्यायः ।

अवाक्शिरसीयम् ।

अवाक्शिरा वा जिह्मा वा यस्य वा विशिरा भवेत् ।
जन्तो रूपप्रतिच्छाया नैनमिच्छेच्चिकित्सितुम् ॥ १ ॥
जटीभूतानि पक्ष्माणि दृष्टिश्चापि निरुद्ध्यते ।
यस्य जन्तोर्न तं धीरो भेषजेनोपपादयेत् ॥ २ ॥
यस्य शूनानि वर्त्मानि न समायान्ति शुष्यतः ।
चक्षुषी चोपदह्येते यथा प्रेतस्तथैव सः ॥ ३ ॥
भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्तावर्त्तकान् बहून् ।
अपूर्वानक्षतान् व्यक्तान् दृष्ट्वा मरणमादिशेत् ॥ ४ ॥
त्र्यहमेतेन जीवन्ति लक्षणेनातुरा नराः ।
अरोगाणां पुनस्त्वेतत् षड्रात्रं परमुच्यते ॥ ५ ॥
आयम्योत्पाटितान् केशान् यो नरो नावबुध्यते ।
अनातुरो वा रोगी वा षड्रात्रं नाति वर्त्तते ॥ ६ ॥
यस्य केशा निरभ्यङ्गा दृश्यन्तेऽभ्यक्तसन्निभाः ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ ७ ॥
ग्लायतो नासिकावंशः पृथुत्वं यस्य गच्छति ।
अशूनः शूनसङ्काशः प्रत्याख्येयः स जानता ॥ ८ ॥
अत्यर्थविवृता यस्य यस्य चात्यर्थसंवृता ।
जिह्मा वा परिशुष्का वा नासिका न स जीवति ॥ ९ ॥
मुखं शुष्कसवर्णौष्ठौ शुक्लश्यावातिलोहितौ ।
विकृतौ यस्य वा नीलौ न स रोगाद्विमुच्यते ॥ १० ॥
अस्थिश्वेता द्विजा यस्य पुष्पिताः पङ्कसंवृताः ।
विकृत्या न स रोगं तं विहायारोग्यमश्नुते ॥ ११ ॥
स्तब्धा निश्चेतना गुर्वी कण्टकोपचिता भृशम् ।
श्यावा शुष्काथवा शूना प्रेतजिह्वा विसर्पिणी ॥ १२ ॥

दीर्घमुच्छ्वस्य यो ह्रस्वं नरो निश्वस्य ताम्यति।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ १३ ॥
हस्तौ पादौ च मन्ये च तालु चैवातिशीतलम्।
भवत्यायुःक्षये क्रूरमथवापि भवेत् मृदु ॥ १४ ॥
घट्टयन् जानुना जानु पादावुद्यम्य पातयन्।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ १५ ॥
दन्तैश्छिन्दन् नखाग्राणि नखैश्छिन्दन् शिरोरुहान्।
काष्ठेन भूमिं विलिखन् न रोगात् परिमुच्यते ॥ १६ ॥
दन्तान् खादति यो जाग्रदसाध्वा विरुदन् हसन्।
विजानाति न चेद् दुःखं न स रोगात् विमुच्यते ॥ १७ ॥
मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः।
उच्चैश्छिद्राणि विमृशन्नातुरो न स जीवति ॥ १८ ॥
यैर्विन्दति पुरा भावैः समेतैः परमां रतिम्।
तैरेवारममाणस्य ग्लास्नोर्मरणमादिशेत् ॥ १९ ॥
न बिभर्त्ति शिरोग्रीवां न पृष्ठं भारमात्मनः।
न हनू पिण्डमास्यस्थमातुरस्य मुमूर्षतः ॥ २० ॥
सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः।
विश्लेषणञ्च सन्धीनां मुमूर्षोरुपजायते ॥ २१ ॥
गोसर्गे वदनाद् यस्य स्वेदः प्रच्यवते भृशम्।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ २२ ॥
नोपैति कण्ठमाहारो जिह्वा कण्ठमुपैति च।
आयुष्यन्तं गते जन्तोर्बलञ्च परिहीयते ॥ २३ ॥
शिरो विक्षिपते कृच्छ्रान् मुञ्चयित्वा प्रपाणिकौ।
ललाटप्रस्रुतस्वेदो मुमूर्षुः श्लथबन्धनः ॥ २४ ॥
अत्र श्लोकः। इमानि लिङ्गानि नरेषु बुद्धिमान्
विभावयेतावहितो मुहुर्मुहुः।

क्षणेन भूत्वा ह्युपयान्ति कानिचित् ।
न चाफलं लिङ्गमिहास्ति किञ्चन ॥ २५ ॥

---

## नवमोऽध्यायः ।

### यस्य श्यावनिमित्तीयम् ।

यस्य श्यावे परिध्वस्ते हरिते चापि दर्शने ।
आयतो व्याधिरन्ताय श्रेयस्तस्य विजानता ॥ १ ॥
निःसंज्ञः परिशुष्कास्यः संविग्नो व्याधिभिश्च यः ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ २ ॥
हरिताश्च सिरा यस्य लोमकूपाश्च संहता ।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥ ३ ॥
शरीरान्ताश्च शोभन्ते शरीरञ्चोपशुष्यति ।
बलञ्च हीयते यस्य राजयक्ष्मा हिनस्ति तम् ॥ ४ ॥
अंसाभितापो हिक्का च छर्दनं शोणितस्य च ।
आनाहः पार्श्वशूलञ्च भवत्यन्ताय शोषिणः ॥ ५ ॥
वातव्याधिरपस्मारी कुष्ठी शोफी तथोदरी ।
गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः ॥ ६ ॥
अचिकित्स्या भवन्त्येते बलमांसक्षये सति ।
अन्येष्वपि विकारेषु तान् भिषक् परिवर्जयेत् ॥ ७ ॥
विरेचनहृतानाहो यस्तृष्णानुगतो नरः ।
विरिक्तः पुनराध्माति यथा प्रेतस्तथैव सः ॥ ८ ॥
पेयं पातुं न शक्नोति कण्ठस्य च मुखस्य च ।
उरसश्च विबद्धत्वाद् यो नरो न स जीवति ॥ ९ ॥
स्वरस्य दुर्बलीभावं हानिञ्च बलवर्णयोः ।
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ॥ १० ॥

ऊर्द्ध्वश्वासं गतोष्माणं शूलोपहतवंक्षणम्।
शर्म्म चानधिगच्छन्तं बुद्धिमान् परिवर्जयेत्॥ ११ ॥
अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः।
श्रोतारञ्चाप्यशब्दस्य दूरतः परिवर्जयेत्॥ १२ ॥
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते॥ १३ ॥
अथ चेत् ज्ञातयस्तस्य याचेरन् प्रणिपाततः।
रसेनाद्यादिति ब्रूयान्नास्मै दद्याद्विशोधनम्॥ १४ ॥
मासेन चेन्न दृश्येत विशेषस्तस्य शोभनः।
रसैश्चान्यैर्बहुविधैर्दुर्लभं तस्य जीवितम्॥ १५ ॥
निष्ठ्यूतञ्च पुरीषञ्च रेतश्चाम्भसि मज्जति।
यस्य तस्यायुषः प्राप्तमन्तमाहुर्मनीषिणः॥ १६ ॥
निष्ठ्यूते यस्य दृश्यन्ते वर्णा बहुविधाः पृथक्।
तच्च सीदत्यपः प्राप्य न स जीवितुमर्हति॥ १७ ॥
पित्तमूष्मानुगं यस्य शङ्खौ प्राप्य विमूर्च्छति।
स रोगः शङ्खको नाम्ना त्रिरात्राद्धन्ति जीवितम्॥ १८ ॥
सफेनं रुधिरं यस्य मुहुरास्यात् प्रमुच्यते।
शूलैश्च तुद्यते कुक्षिः प्रत्याख्येयः स तादृशः॥ १९ ॥
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः।
यस्यातुरस्य लक्ष्यन्ते त्रीनहां न स जीवति॥ २० ॥

तत्र श्लोकौ।

विज्ञानानि मनुष्याणां मरणे प्रत्युपस्थिते।
भवन्त्येतानि सम्पश्येदन्यान्येवंविधानि च॥ २१ ॥
तानि सर्वाणि लक्ष्यन्ते न तु सर्वाणि मानवम्।
विशन्ति विनशिष्यन्तं तस्माद्बोध्यानि सर्वशः॥ २२ ॥

---

## दशमोऽध्यायः ।

### सद्योमरणीयम् ।

मर्मस्वितिचतः प्राणान् लक्षणानि पृथक् पृथक् ।
अग्निवेश ! प्रवक्ष्यामि संसृष्टो येन जीवति ॥ १ ॥
वाताष्ठीलाः सुसंवृत्तास्तिष्ठन्ति दारुणा हृदि ।
तृष्णयाभिपरीतस्य सद्यो मुष्णाति जीवितम् ॥ २ ॥
पिण्डिके शिथिलीकृत्य जिह्मीकृत्य च नासिकाम् ।
वायुः शरीरे विचरन् सद्यो मुष्णाति जीवितम् ॥ ३ ॥
भ्रुवौ यस्य च्युते स्थानादन्तर्दाहश्च दारुणः ।
तस्य हिक्काकरो रोगः सद्यो मुष्णाति जीवितम् ॥ ४ ॥
क्षीणशोणितमांसस्य वायुरूर्द्ध्वं गतिश्चरन् ।
उभे मन्ये समे यस्य सद्यो मुष्णाति जीवितम् ॥ ५ ॥
अन्तरेण गुदं गच्छन् नाभिञ्च सहसानिलः ।
कृशस्य वंक्षणौ गृह्णन् सद्यो मुष्णाति जीवितम् ॥ ६ ॥
वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ।
स्तिमितस्यायताक्षस्य सद्यो मुष्णाति जीवितम् ॥७॥
हृदयञ्च गुदक्षोभे गृहीत्वा मारुतो बली ।
दुर्बलस्य विशेषेण सद्यो मुष्णाति जीवितम् ॥ ८ ॥
वंक्षणौ च गुदक्षोभे गृहीत्वा मारुतो बली ।
श्वासं सञ्जनयन् जन्तोः सद्यो मुष्णाति जीवितम् ॥ ९ ॥
नाभिं वस्तिं शिरो मूत्रं पुरीषाञ्चापि मारुतः ।
विबध्य जनयन् शूलं सद्यो मुष्णाति जीवितम् ॥ १० ॥
भिद्येत वंक्षणौ यस्य वातशूलैः समन्ततः ।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणान् जहाति सः ॥ ११ ॥
आध्मातं मारुतेनेह शरीरं यस्य केवलम् ।
भिन्नं पुरीषं तृष्णा च सद्यो जह्यात् स जीवितम् ॥ १२ ॥

शरीरं शोफितं यस्य वातशोफेन देहिनः ।
भिन्नं पुरीषं तृष्णा च सद्यो जह्यात् स जीवितम् ॥१३॥
आमाशयसमुत्थाना यस्य स्यात् परिकर्त्तिका ।
तृष्णा गुदग्रहश्चोग्रः सद्यो जह्यात् स जीवितम् ॥ १४ ॥
पक्वाशयमधिष्ठाय हत्वा संज्ञाञ्च मारुतः ।
कण्ठे घुर्घुरकं कृत्वा सद्यो हरति जीवितम् ॥ १५ ॥
दन्ताः कर्दमचूर्णाभा मुखं चूर्णकसन्निभम् ।
शिप्रायन्ते च गात्राणि लिङ्गं सद्यो मरिष्यतः ॥ १६ ॥
तृष्णाश्वासशिरोरोगमोहदौर्बल्यकूजनैः ।
स्पृष्टः प्राणान् जह्यात्याशु शकृद्भेदेन चातुरः ॥ १७ ॥

तत्र श्लोकाः ।

एतानि खलु लिङ्गानि यः सम्यगवबुध्यते ।
स जीवितञ्च मर्त्यानां मरणञ्चावबुध्यते ॥ १८ ॥

---

## एकादशोऽध्यायः ।

### अणुज्योतीयम् ।

अणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा ।
रतिं न लभते याति परलोकं समान्तरे ॥ १ ॥
बलिं बलिभुजो यस्य प्रणीतं नोपभुञ्जते ।
लोकान्तरगतः पिण्डं भुङ्क्ते संवत्सरेण सः ॥ २ ॥
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।
संवत्सरान्ते जन्तुः स सम्पश्यति महत् तमः ॥ ३ ॥
विकृत्या विनिमित्तं यः शोभामुपचयं धनम् ।
प्राप्नोत्यतो वा विभ्रंशं समान्तं न स जीवति ॥ ४ ॥
भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ।
षडेतानि निवर्त्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ ५ ॥

धमनीनामपूर्वाणां जालमत्यर्थशोभनम्।
ललाटे दृश्यते यस्य षण्मासान् न स जीवति ॥ ६ ॥
लेखाभिश्चन्द्रवक्राभिर्ललाटमुपचीयते।
यस्य तस्यायुषः षड्भिर्मासैरन्तं समादिशेत् ॥ ७ ॥
शरीरकम्पः संमोहो गतिर्वचनमेव च।
मत्तस्येवोपलक्ष्यन्ते यस्य मासं न जीवति ॥ ८ ॥
रेतोमूत्रपुरीषाणि यस्य मज्जन्ति चाम्भसि।
स मासात् स्वजनद्वेष्टा मृत्युवारिधि मज्जति ॥ ९ ॥
हस्तपादं मुखश्चोभौ विशेषाद् यस्य शुष्यतः।
शूयेते वा विना देहात् स च मासं न जीवति ॥ १० ॥
ललाटे मूर्ध्नि बस्तौ वा नीला यस्य प्रकाशते।
राजीवालेन्दुकुटिला न स जीवितुमर्हति ॥ ११ ॥
प्रवालगुटिकाभासा यस्य गात्रे मसूरिकाः।
उत्पद्याशु विनश्यन्ति नचिरात् स विनश्यति ॥ १२ ॥
ग्रीवावमर्दी बलवान् जिह्वाश्वयथुरेव च।
ब्रध्नास्यगलपाकाश्च यस्य पक्षं तमादिशेत् ॥ १३ ॥
सम्भ्रमोऽतिप्रलापोऽतिभेदोऽस्थ्नामतिदारुणः।
कालपाशपरीतस्य त्रयमेतत् प्रवर्त्तते ॥ १४ ॥
प्रसुप्तान् लुञ्चयेत् केशान् परान् गृह्णात्यतीव च।
नरः स्वस्थवदाहारवचनः कालचोदितः ॥ १५ ॥
समीपे चक्षुषोः कृत्वा मृगयेताङ्गुलियकम्।
अपश्यन्नपि च आकाशे कुर्वन्नोऽनिमिषेक्षणः ॥ १६ ॥
शयनादसनादङ्गात् काष्ठात् कुड्यादथापि वा।
असन् मृगयते किञ्चित् स मुह्यन् कालचोदितः ॥ १७ ॥
अहास्यहसनो मुह्यन् प्रलेढि दशनच्छदौ।
शीतपादकरोच्छ्वासो यो नरो न स जीवति ॥ १८ ॥

आह्वयन्तं समीपस्थं स्वजनं जनमेव वा।
महामोहावृतमनाः पश्यन्नपि न पश्यति ॥ १८ ॥
अयोगमतियोगं वा शरीरे मतिमान् भिषक्।
खादीनां युगपद् दृष्ट्वा भेषजं नावचारयेत् ॥ २० ॥
अतिप्रवृद्धा रोगाणां मनसश्च बलक्षयात्।
वासमुत्सृजति क्षिप्रं शरीरी देहसंज्ञकम् ॥ २१ ॥
वर्णस्वरावग्निबलं वागिन्द्रियमनोबलम्।
हीयतेऽसुक्षये निद्रा नित्या भवति वा नवा ॥ २२ ॥
भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये।
वशगाः सर्व एवैते बोद्धव्याः समवर्त्तिनः ॥ २३ ॥
एतेषु रोगः क्रमते भेषजं प्रतिहन्यते।
नैषामन्नानि भुञ्जीत न चोदकमपि स्पृशेत् ॥ २४ ॥
पादाः समेताश्चत्वारः सम्पन्नाः साधकैर्गुणैः।
व्यर्थां गतायुषो द्रव्याद् विना नास्ति गुणोदयः ॥ २५ ॥
परीक्ष्यमायुर्भिषजा नीरुजस्यातुरस्य च।
आयुर्वेदफलं कृत्स्नमायुर्ज्ञेह्यनुवर्त्तते ॥ २६ ॥
तत्र श्लोकः।
क्रियापथमतिक्रान्ताः केवलं देहमाप्नुताः।
चिह्नं कुर्वन्ति यद्दोषास्तदरिष्टं निरुच्यते ॥ २७ ॥

---

## द्वादशोऽध्यायः।

### गोमयचूर्णीयम्।

यस्य गोमयचूर्णाभं चूर्णं मूर्द्धनि जायते।
सस्नेहं भ्रश्यते चैव मासान्तं तस्य जीवितम् ॥ १ ॥
निर्विशन्निव यः पादौ च्युतांसः परिधावति।
विकल्पा न स लोकेऽस्मिंश्चिरं वसति मानवः ॥ २ ॥

यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम्।
आर्द्रेषु सर्वगात्रेषु सोऽर्द्धमासं न जीवति ॥ ३ ॥
यमुद्दिश्यातुरं वैद्यः सवर्त्तयितुमौषधम्।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ॥ ४ ॥
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम्।
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ॥ ५ ॥
आहारमुपयुञ्जानो भिषजा सूपकल्पितम्।
यः फलं तस्य नाप्नोति दुर्लभं तस्य जीवितम् ॥ ६ ॥
दूताधिकारे वक्ष्यामो लक्षणानि मुमूर्षताम्।
यानि दृष्ट्वा भिषक् प्राज्ञः प्रत्याख्येयादसंशयम् ॥ ७ ॥
मुक्तकेशेऽथवा नग्ने रुदत्यप्रयतेऽथवा।
भिषगभ्यागतं दृष्ट्वा दूतं मरणमादिशेत् ॥ ८ ॥
सुप्ते भिषजि ये दूताश्छिन्दन्त्यपि च भिन्दति।
आगच्छन्ति भिषक् तेषां न भर्त्तारमनुव्रजेत् ॥ ९ ॥
जुह्वत्यग्निं तथा पिण्डं पितृभ्यो निर्वपत्यपि।
वैद्ये दूता य आयान्ति ते घ्नन्ति प्रजिघांसव. ॥ १० ॥
कथयत्यप्रशस्तानि चिन्तयत्यथवा पुनः।
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥ ११ ॥
मृतदग्धविनष्टानि भजति व्याहरत्यपि।
अप्रशस्तानि चान्यानि वैद्ये दूता मुमूर्षताम् ॥ १२ ॥
विकारसामान्यगुणे देशकालेऽथवा भिषक्।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १३ ॥
दीनभीतद्रुतत्रस्तां मलिनामसतीं स्त्रियम्।
त्रीन् व्याकृतांश्च षण्डांश्च दूतान् विद्यात् मुमूर्षताम् ॥१४॥
अङ्गव्यसनिनं दूतं लिङ्गिनं व्याधितं तथा।
समीक्ष्य चोग्रकर्माणं न वैद्यो गन्तुमर्हति ॥ १५ ॥

आतुरार्थमनुप्राप्तं खरोष्ट्रमथ वाहनम्।
दूतं दृष्ट्वा भिषग्विद्यादातुरस्य पराभवम्॥ १६॥
पलालबुसमांसास्थिकेशलोमनखद्विजान्।
मार्जनीं मुसलं सूर्पमुपानद्भग्नविच्युते॥ १७॥
तृणकाष्ठतुषाङ्गारं स्पृशन्तो लोष्टभस्म च।
तत्पूर्वदर्शने दूता व्याहरन्ति मुमूर्षताम्॥ १८॥
यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम्।
पश्येन्निमित्तमशुभं तञ्च नानुव्रजेद्भिषक्॥ १९॥
यथा व्यसनिनं प्रेतं प्रेतालङ्कारमेव वा।
भिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा॥ २०॥
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान्।
स्पर्शो वा विपुलः क्रूरो यद्वान्यदशुभं भवेत्॥ २१॥
तत्पूर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः।
दूतानां व्याहृतं श्रुत्वा धीरो मरणमादिशेत्॥ २२॥
इति दूताधिकारोऽयमुक्तः कृत्स्नो मुमूर्षताम्।
पथ्यातुरकुलानाञ्च वक्ष्यामौत्पातिकं पुनः॥ २३॥
अवक्षुतमथोत्क्रुष्टं स्खलनं पतनं तथा।
आक्रोशः संप्रहारो वा प्रतिषेधो विगर्हणम्॥ २४॥
वस्त्रोष्णीषोत्तरासङ्गच्छत्रोपानद्युगाश्रयम्।
व्यसनं दर्शनञ्चापि मृतव्यसनिनं तथा॥ २५॥
चैत्यध्वजपताकानां पूर्णानां पतनानि च।
हतानिष्टप्रवादाश्च दर्शनं भस्मपांशुभिः॥ २६॥
पथश्छेदो बिडालेन शुना सर्पेण वा पुनः।
मृगद्विजानां क्रूराणां गिरो दीप्तां दिशं प्रति॥ २७॥
शयनासनयानानामुत्तानानां प्रदर्शनम्।
इत्येतान्यप्रशस्तानि सर्वाण्याहुर्मनीषिणः॥ २८॥

एतानि पथि वैद्येन पश्यतातुरवर्त्मनि।
शृण्वता च न गन्तव्यं तद्‌गारं विपश्चिता ॥ २९ ॥
इत्यौत्पातिकमाख्यातं पथि वैद्यविगर्हितम्।
इमामपि च बुध्येत गृहावस्थां मुमूर्षताम् ॥ ३० ॥
प्रवेशे पूर्णकुम्भाग्निमृद्बीजफलसर्पिषाम्।
वृषब्राह्मणरत्नानां देवतानां विनिर्गतिम् ॥ ३१ ॥
अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च।
भिषङ्मुमूर्षतां वेश्म प्रविशन्नेव पश्यति ॥ ३२ ॥
छिन्नभिन्नविदग्धानि भग्नानि मृदितानि च।
दुर्बलानि च सेवन्ते मुमूर्षोर्वेश्मिका जनाः ॥ ३३ ॥
शयनं वसनं यानं गमनं भोजनं रुतम्।
श्रूयतेऽमङ्गलं यस्य नास्ति तस्य चिकित्सितम् ॥ ३४ ॥
शयनं वसनं यानमन्यद्वापि परिच्छदम्।
प्रेतवद्यस्य कुर्वन्ति सुहृदः प्रेत एव सः ॥ ३५ ॥
यत्र व्याधयतेऽत्यर्थं ज्योतिर्यैवोपशाम्यति।
निवाते सेन्धनं यस्य तस्य नास्ति चिकित्सितम् ॥ ३६ ॥
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ ३७ ॥

भवन्ति चात्र।

यद्‌द्वादशभिरध्यायैर्व्यासतः परिकीर्त्तितम्।
मुमूर्षतां मनुष्याणां लक्षणं जीवितान्तकृत् ॥ ३८ ॥
तत् समासेन वक्ष्यामि पर्य्यायान्तरमाश्रितम्।
पर्य्यायवचनं ह्यर्थविज्ञानायोपपद्यते ॥ ३९ ॥
इत्यर्थं पुनरेवेयं विवक्षा नो विधीयते।
तस्मिन्नेवाधिकरणे यत् पूर्वमभिदर्शितम् ॥ ४० ॥
वसतां चरमे काले शरीरेषु शरीरिणाम्।

यत्सुधाणां विनाशाय देहेभ्य प्रविवत्सताम् ॥ ४१ ॥
इष्टांस्तितिचतां प्राणान् कान्तं वासं जिहासताम् ।
मन्वयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविचताम् ॥ ४२ ॥
विनाशायेह रूपाणि यान्यवस्थान्तराणि च ।
भवन्ति तानि वक्ष्यामि यथोद्देशं यथागमम् ॥ ४३ ॥
प्राणाः समुपतप्यन्ते विज्ञानमुपरुध्यते ।
वमन्ति बलमङ्गानि चेष्टा व्युपरमन्ति च ॥ ४४ ॥
इन्द्रियाणि विनश्यन्ति खिलीभूतेव चेतना ।
औत्सुक्यं भजते सत्त्वं चेतो भीराविशत्यपि ॥ ४५ ॥
स्मृतिस्त्यजति मेधा च ह्रीश्रियौ चापसर्पतः ।
उपप्लवन्ते पाप्मान ओजस्तेजश्च नश्यति ॥ ४६ ॥
शीलं व्यावर्त्ततेऽत्यर्थं भक्तिश्च परिसर्पते ।
विक्रियन्ते प्रतिच्छायाश्छायाश्च विकृतिं गताः ॥ ४७ ॥
शुक्रं प्रच्यवते स्थानादुन्मार्गं भजतेऽनिलः ।
क्षयं मांसानि गच्छन्ति गच्छत्यसृगुपचयम् ॥ ४८ ॥
उष्माणः प्रलयं यान्ति विश्लेषं यान्ति सन्धयः ।
गन्धा विकृततां यान्ति भेदं वर्णस्वरौ तथा ॥ ४९ ॥
वैरस्यं भजते कायः कायश्छिद्रं विशुध्यति ।
धूमः सञ्जायते मूर्ध्नि दारुणाख्यश्च चूर्णकः ॥ ५० ॥
सततस्पन्दनादेशाः शरीरे येऽभिलक्षिताः ।
ते स्तम्भानुगताः सर्वे न चलन्ति कथञ्चन ॥ ५१ ॥
गुणाः शरीरदेशानां शीतोष्णस्तुदारुणाः ।
विपर्यासेन वर्त्तन्ते स्थानेष्वन्येषु तद्विधाः ॥ ५२ ॥
नखेषु जायते पुष्पं पङ्को दन्तेषु जायते ।
जटाः पक्ष्मसु जायन्ते सीमन्ताश्चापि मूर्द्धनि ॥ ५३ ॥
भेषजानि न संवृत्तिं माप्नुवन्ति तथा रुचिम् ।

यानि चाप्युपपद्यन्ते तेषां वीर्य्यं न सिध्यति ॥ ५४ ॥
नानाप्रकृतयः क्रूरा विकारा विविधौषधाः ॥ ५५ ॥
क्षिप्रं समभिवर्त्तन्ते प्रतिहत्य बलौजसी ।
शब्दः स्पर्शो रसो रूपं गन्धश्चेष्टा विचिन्तितम् ॥ ५६ ॥
उत्पद्यन्तेऽशुभान्येव प्रतिकर्मप्रवर्त्तिषु ।
दृश्यन्ते दारुणाः स्वप्ना दौरात्म्यमुपजायते ॥ ५७ ॥
प्रेष्याः प्रतीपतां यान्ति प्रेतामतिरुदीर्यते ।
प्रकृतिर्हीयतेऽत्यर्थं विकृतिश्चाभिवर्द्धते ॥ ५८ ॥
कृत्स्नमौत्पातिकं घोरमरिष्टमुपलभ्यते ।
इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम् ॥ ५८ ॥
लक्षणानि यथोद्देशं यान्युक्तानि यथागमम् ।
मरणायेह रूपाणि पश्यतापि भिषग्विदा ॥ ६० ॥
अपृष्टेन न वक्तव्यं मरणं प्रत्युपस्थितम् ।
पृष्टेनापि न वक्तव्यं तत्र यत्रोपघातकम् ॥ ६१ ॥
आतुरस्य भवेद्दुःखमथवान्यस्य कस्यचित् ।
अब्रुवं मरणं यस्य नैनमिच्छेच्चिकित्सितम् ।
यस्य पश्येद्विनाशाय लिङ्गानि कुशलो भिषक् ॥ ६२ ॥
लिङ्गेभ्यो मरणाख्येभ्यो विपरीतानि पश्यता ।
लिङ्गान्यारोग्यमागन्तु वक्तव्यं भिषजा ध्रुवम् ॥ ६३ ॥
दूतैरौत्पातिकैर्भावैः पथ्यातुरकुलाश्रयैः ।
आतुराचारशीलेष्टद्रव्यसम्पत्तिलक्षणैः ॥ ६४ ॥
स्वाचारं दृष्टमव्यङ्गं यशस्यं शुक्लवाससम् ।
अमुण्डमजटं दूतं जातिवेशक्रियासमम् ॥ ६५ ॥
अनुष्ट्रखरयानस्थमसन्ध्यास्वग्रहेषु च ।
अदारुणेषु नक्षत्रेष्वनुग्रेषु ध्रुवेषु च ॥ ६७ ॥
विना चतुर्थीं नवमीं विना रिक्तां चतुर्दशीम् ।

मध्याह्ने चार्द्धरात्रे च भूकम्पं राहुदर्शनम् ॥ ६८ ॥
विना देशमशस्तञ्च शस्तौत्पातिकलक्षणम् ।
दूतं प्रशस्तमव्यग्रं निर्दिशेदागतं भिषक् ॥ ६९ ॥
दध्यक्षतद्विजातीनां वृषभाणां नृपस्य च ।
रत्नानां पूर्णकुम्भानां सितस्य तुरगस्य च ॥ ७० ॥
सुरध्वजपताकानां फलानां याचकस्य च ।
कन्यानां वर्द्धमानानां बद्धस्यैकपशोस्तथा ॥ ७१ ॥
पृथिव्या उद्धृतायाश्च वह्नेः प्रज्वलितस्य च ।
मोदकानां सुमनसां शुक्लानां चन्दनस्य च ॥ ७२ ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्सायाः वड़वायाः स्त्रियास्तथा ॥ ७३ ॥
जीवञ्जीवकसिद्धार्थसारसप्रियवादिनाम् ।
हंसानां शतपत्राणां चाषाणां शिखिनां तथा ॥ ७४ ॥
मत्स्याजद्विजशङ्खानां प्रियङ्गूनां घृतस्य च ।
रोचिष्णादर्शसिद्धानां रोचनायाश्च दर्शनम् ॥ ७५ ॥
गन्धः सुरभिवर्णश्च सुशुक्लो मधुरो रसः ।
मृगपक्षिमनुष्याणां प्रशस्ताश्च गिरः शुभाः ॥ ७६ ॥
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ।
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिस्वनाः ॥ ७७ ॥
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ।
पथि वेश्मप्रवेशे तु विद्यादारोग्यलक्षणम् ॥ ७८ ॥
मङ्गलाचारसम्पन्नः सातुरो वैद्यको जनः ।
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥ ७९ ॥
धनैश्वर्य्यसुखावाप्तिरिष्टलाभः सुखेन च ।
द्रव्याणां तत्र योग्यानां योजना सिद्धिरेव च ॥ ८० ॥
शुद्धप्रासादशैलानां नागानां वृषभस्य च ।

ह्यानां पुरुषाणाञ्च स्वप्ने समधिरोहणम् ॥ ८१ ॥
सोमार्काग्निद्विजातीनां गवां नृणां यशस्विनाम्।
अर्णवानां प्रतरणं हृदिः सम्बाधनिःसृतिः ॥ ८२ ॥
स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम्।
दर्शनं शुक्लवस्त्राणां ह्रदस्य विमलस्य च ॥ ८३ ॥
मांसमत्स्यविषामेध्यच्छत्रादर्शपरिग्रहः।
स्वप्ने सुमनसाञ्चैव शुक्लानां दर्शनं शुभम् ॥ ८४ ॥
अश्वगोरथयानञ्च यानं पूर्वोत्तरेण च।
रोदनं पतितोत्थानं द्विषताञ्चावमर्दनम् ॥ ८५ ॥
सत्त्वलक्षणसंयोगा भक्तिर्वैद्यद्विजातिषु।
साध्यत्वं न च निर्वेदस्तदारोग्यस्य लक्षणम् ॥ ८६ ॥
आरोग्याद्बलमायुश्च सुखञ्च लभते महत्।
इष्टांश्चाप्यपरान् भावान् पुरुषः शुभलक्षणः ॥ ८७ ॥
तत्र श्लोकः।
उक्तं गोमयचूर्णीये मरणारोग्यलक्षणम्।
दूतस्वप्नातुरोत्पातयुक्तिसिद्धिव्यपाश्रयम् ॥ ८८ ॥
भवति चात्र।
इतीदमुक्तं प्रकृतं यथा तथा
तदन्ववेक्ष्यं सततं भिषग्विदा।
तथा हि सिद्धञ्च यशश्च शाश्वतं
स सिद्धकर्मा लभते धनानि च ॥ ८९ ॥
इन्द्रियस्थानं सम्पूर्णम्।

———

# चिकित्सितस्थानम् ।

## प्रथमोऽध्यायः ।

### रसायनपादः ।—अभयामलकीयः ।

चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् ।
प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥ १ ॥
विद्याद्भेषजनामानि भेषजं द्विविधञ्च तत् ।
स्वस्थस्योर्जस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत् ॥ २ ॥
अभेषजञ्च द्विविधं बाधनं सानुबाधनम् ॥ ३ ॥
स्वस्थस्योर्जस्करं यत् तु तद्वृष्यं तद्रसायनम् ॥ ४ ॥
प्रायः प्रायेण रोगाणां द्वितीयं प्रशमे मतम् ।
प्रायःशब्दो विशेषार्थो ह्युभयं ह्युभयार्थकृत् ॥ ५ ॥
दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्य्यं देहेन्द्रियबलं परम् ॥ ६ ॥
वाक्सिद्धिं प्रणतिं कान्तिं लभते ना रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ ६ ॥
अपत्यसन्तानकरं यत् सद्यः संप्रहर्षणम् ।
वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः ॥ ७ ॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ।
जीर्य्यतोऽप्यक्षयं शुक्रं फलवद् येन दृश्यते ॥ ८ ॥
प्रभूतशाखः शाखीव येन चैत्यो यथा महान् ।
भवत्यर्च्यो बहुमतः प्रजानां सुबहुप्रजः ॥ ८ ॥
सन्तानमूलं येनेह प्रेत्य चानन्त्यमश्नुते ।
यशः श्रियं बलं पुष्टिं वाजीकरणमेव तत् ॥ १० ॥
स्वस्थस्योर्जस्करस्त्वेतद् द्विविधं प्रोक्तमौषधम् ।
यद्व्याधिनिर्घातकरं वक्ष्यते तच्चिकित्सिते ॥ ११ ॥

चिकित्सितार्थ एतावान् विकाराणां यदौषधम्।
रसायनविधिश्चाग्रे वाजीकरणमेव च ॥ १२ ॥
अभेषजमिति ज्ञेयं विपरीतं यदौषधात्।
तदसेव्यं निषेव्यन्तु प्रवक्ष्यामि यदौषधम् ॥ १३ ॥
रसायनानां द्विविधं प्रयोगमृषयो विदुः।
कुटीप्रावेशिकञ्चैव वातातपिकमेव च ॥ १४ ॥
कुटीप्रावेशिकस्यादौ विधिः समुपदेक्ष्यते।
नृपवैद्यद्विजातीनां साधूनां पुण्यकर्मणाम् ॥ १५ ॥
निवासे निर्भये शस्ते प्राप्योपकरणे पुरे।
दिशि पूर्वोत्तरस्यान्तु सुभूमौ कारयेत् कुटीम् ॥ १६ ॥
विस्तारोत्सेधसम्पन्नां त्रिगर्भां सूक्ष्मलोचनाम्।
घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम् ॥ १७ ॥
शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम्।
इष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम् ॥ १८ ॥
अथोदगयने शुक्ले तिथिनक्षत्रपूजिते।
मुहूर्त्तकरणोपेते प्रशस्ते कृतवापनः ॥ १९ ॥
धृतिस्मृतिबलं कृत्वा श्रद्दधानः समाहितः।
विधूय मानसान् दोषान् मैत्रीं भूतेषु चिन्तयन् ॥ २० ॥
देवताः पूजयित्वाग्रे द्विजातींश्च प्रदक्षिणम्।
देवगोब्राह्मणान् कृत्वा ततस्तां प्रविशेत् कुटीम् ॥ २१ ॥
तस्यां संशोधनैः शुद्धः सुखी जातबलः पुनः।
रसायनं प्रयुञ्जीत तत् प्रवक्ष्यामि शोधनम् ॥ २२ ॥
हरीतकीनां चूर्णानि सैन्धवामलके गुडम्।
वचां विडङ्गं रजनीं पिप्पलीं विश्वभेषजम्।
पिबेदुष्णाम्बुना जन्तुः स्नेहस्वेदोपपादितः ॥ २३ ॥
तेन शुद्धशरीराय [illegible]

त्रिरात्रं यावकं दद्यात् पञ्चाहं वापि सर्पिषा ।
सप्ताहं वा पुराणस्य यावच्छुद्धेस्तु वर्चसः ॥ २४ ॥
शुद्धकोष्ठन्तु तं ज्ञात्वा रसायनमुपाचरेत् ।
वयःप्रकृतिसात्म्यज्ञो यौगिकं यस्य यद्भवेत् ॥ २५ ॥
हरीतकीं पञ्चरसामुष्णामलवणां शिवाम् ।
दोषानुलोमनीं लघ्वीं विद्याद्दीपनपाचनीम् ॥ २६ ॥
आयुष्यां पौष्टिकीं धन्यां वयसः स्थापनीं पराम् ।
सर्वरोगप्रशमनीं बुद्धीन्द्रियबलप्रदाम् ॥ २७ ॥
कुष्ठं गुल्ममुदावर्तं शोषं पाण्ड्वामयं मदम् ।
अर्शांसि ग्रहणीदोषं पुराणं विषमज्वरम् ॥ २८ ॥
हृद्रोगं सशिरोरोगमतीसारमरोचकम् ।
कासं प्रमेहमानाहं प्लीहानमुदरं नवम् ॥ २९ ॥
कफप्रसेकं वैस्वर्यं वैवर्ण्यं कामलां क्रिमीन् ।
श्वयथुं तमकं छर्दिं क्लैब्यमङ्गावसादनम् ॥ ३० ॥
स्रोतोविबन्धान् विविधान् प्रलेपं हृदयोरसोः ।
स्मृतिबुद्धिप्रमोहञ्च जयेच्छीघ्रं हरीतकी ॥ ३१ ॥
अजीर्णिनो रूक्षभुजः स्त्रीमद्यविषकर्शिताः ।
सेवेरन्नाभयामेते क्षुत्तृष्णोष्णार्दिताश्च ये ॥ ३२ ॥
तान् गुणांस्तानि कर्माणि विद्यादामलकेष्वपि ।
यान्युक्तानि हरीतक्या वीर्यस्य तु विपर्ययः ॥ ३३ ॥
अतश्चामृतकल्पानि विद्यात् कर्मभिरीदृशैः ।
हरीतकीनां शस्यानि भिषगामलकस्य च ॥ ३४ ॥
ओषधीनां परा भूमिर्हिमवान् शैलसत्तमः ।
तस्मात् फलानि तज्जानि ग्राहयेत् कालजानि च ॥३५॥
आपूर्णरसवीर्याणि काले काले यथाविधि ।
आदित्यसलिलच्छायापवनप्रीणितानि च ॥ ३६ ॥

धान्यदग्धान्यपूतीनि निर्व्रणान्यगदानि च।
तेषां प्रयोगं वक्ष्यामि फलानां कर्म चोत्तमम्॥ ३७॥
पञ्चानां पञ्चमूलानां भागान् दशपलोन्मितान्।
हरीतकीसहस्रञ्च त्रिगुणामलकं नवम्॥ ३८॥
विदारिगन्धां बृहतीं पृश्निपर्णीं निदिग्धिकाम्।
विद्याद्विदारिगन्धाद्यं श्वदंष्ट्रा पञ्चमं गणम्॥ ३९॥
बिल्वाग्निमन्थश्योणाकं काश्मर्य्यमथ पाटलीम्।
पुनर्नवासूर्पपर्ण्यौ बलामैरण्डमेव च॥ ४०॥
जीवकर्षभकौ मेदां जीवन्तीं सशतावरीम्।
शरेक्षुदर्भकाशानां शालीनां मूलमेव च॥ ४१॥
इत्येषां पञ्चमूलानां पञ्चानामुपकल्पयेत्।
भागान् यथोक्तांस्तत् सर्वं साध्यं दशगुणेऽम्भसि॥ ४२॥
दशभागावशेषन्तु पूतं तद्ग्राहयेद्रसम्।
हरीतकीश्च ताः सर्वाः सर्वाण्यामलकानि च॥ ४३॥
तानि सर्वाण्यनस्थीनि फलान्यापोथ्य कुर्च्चनैः।
विनीय तस्मिन्निर्य्यूहे चूर्णानीमानि दापयेत्॥ ४४॥
मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य च।
मुस्तानां सविडङ्गानां चन्दनागुरुणोस्तथा॥ ४५॥
मधुकस्य हरिद्राया वचायाः कनकस्य च।
भागांश्चतुष्पलान् कृत्वा सूक्ष्मैलायास्त्वचस्तथा॥ ४६॥
सितोपलासहस्रञ्च चूर्णितं तुलयाधिकम्।
तैलस्य द्व्याढ़कं तत्र दद्यात् त्रीणि च सर्पिषः॥ ४७॥
साध्यमौडुम्बरे पात्रे तत् सर्वं मृदुनाग्निना।
ज्ञात्वा लेह्यमदग्धञ्च शीतं क्षौद्रेण संसृजेत्॥ ४८॥
क्षौद्रप्रमाणं स्नेहार्द्धं तत् सर्वं घृतभाजने।
तिष्ठेत् संमूर्च्छितं तस्य मात्रां काले प्रयोजयेत्॥ ४९॥

या नोपरुन्ध्यादाहारमेवं मात्रां जरां प्रति।
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते ॥ ५० ॥
वैखानसा वालखिल्यास्तथा चान्ये तपोधनाः।
रसायनमिदं प्राप्य बभूवुरमितायुषः ॥ ५१ ॥
मुक्त्वा जीर्णं वपुश्चाग्र्यमवापुस्तरुणं वयः।
वीततन्द्राक्लमश्वासा निरातङ्काः समाहिताः ॥ ५२ ॥
मेधास्मृतिबलोपेताश्चिररात्रं तपोधनाः।
ब्राह्मं तपो ब्रह्मचर्य्यं चेरुश्चात्यन्तनिष्ठया ॥ ५३ ॥
रसायनमिदं ब्राह्ममायुष्कामः प्रयोजयेत्।
दीर्घमायुर्वयश्चाग्र्यं कामांश्चेष्टान् समश्नुते ॥ ५४ ॥

इति ब्राह्मरसायनम्।

यथोक्तगुणानामामलकानां सहस्रं पिष्ट्वा स्वेदनविधिना पयस ऊष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत्। तदामलकसहस्रस्वरसपरिपीतं स्थिरापुनर्नवाजीवन्तीनागबलाब्रह्मसुवर्चलामण्डूकपर्णी-शतावरी-शङ्खपुष्पीपिप्पलीवचाविडङ्गस्वयंगुप्तामृताचन्दनागुरुमधुकमधूकपुष्पोत्पलपद्ममालतीयुवतीयूथिकाचूर्णाष्टभागसंयुक्तम्। पुनर्नागबलासहस्रपलस्वरसपरिपीतमनातपशुष्कं द्विगुणितसर्पिषा क्षौद्रसर्पिषा वा क्षुद्रगुडाकृतिं कृत्वा शुचौ दृढे घृतभाविते कुम्भे भस्मराशेरधः स्थापयेत् पक्षं भूमेः पक्षं कृतरक्षाविधानम् अथर्ववेदवित् पक्षात्यये चोद्धृत्य कनकरजत-ताम्र-प्रवालकालायसचूर्णाष्टभागसंयुक्तमर्द्धकर्षवृद्धया यथोक्तेन विधिना प्रातः प्रातः प्रयुञ्जानोऽग्निबलमभिसमीक्ष्य जीर्णे च षष्टिकं पयसा ससर्पिष्कमुपसेवमानो यथोक्तान् गुणान् समश्नुते इति ॥ ५५ ॥

भवन्ति चात्र।
इदं रसायनं ब्राह्मं महर्षिगणसेवितम्।

भवत्यरोगो दीर्घायुः प्रयुञ्जानो महाबलः ॥ ५६ ॥
कान्तः प्रजानां सिद्धार्थश्चन्द्रादित्यसमद्युतिः।
श्रुतं धारयते सत्त्वमार्षञ्चास्य प्रवर्त्तते ॥ ५७ ॥
धरणीधरसारश्च वायुना समविक्रमः।
स भवत्यविषश्चास्य गात्रे सम्पद्यते विषम् ॥ ५८ ॥
इति द्वितीयब्राह्मरसायनयोगः।
विल्वाग्निमन्थौ श्योणाकः काश्मर्यं पाटलिर्बला।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥ ५९ ॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु।
अभया चामृता ऋद्धिर्जीवकर्षभकौ शठी ॥ ६० ॥
मुस्तं पुनर्नवा मेदा एला चन्दनमुत्पलम्।
विदारीवृषमूलानि काकोली काकनासिका ॥ ६१ ॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च।
पञ्च दद्यात् तदैकत्र जलद्रोणे विपाचयेत् ॥ ६२ ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥ ६३ ॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक्।
मत्स्यण्डिकायाः पूताया लेहवत् साधु साधयेत् ॥ ६४ ॥
षट्पलं मधुनश्चात्र सिद्धशीते समावपेत्।
चतुष्पलं तुगाक्षीर्याः पिप्पलीद्विपलं तथा ॥ ६५ ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ॥ ६६ ॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धन. ॥ ६७ ॥
स्वरक्षयमुरोरोगं हृद्रोग वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चाप्यपकर्षति ॥ ६८ ॥

अस्य मात्रां प्रयुञ्जीत योऽपरुन्ध्यान्न भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ॥ ६९ ॥
मेधां स्मृतिं कान्तिमनामयत्वमायुःप्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम् ॥ ७० ॥
रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात्
जराकृतं रूपमपास्य सर्वं बिभर्त्ति रूपं नवयौवनस्य ॥ ७१ ॥

इति च्यवनप्राशः।

अथामलकहरीतकीनामामलकबिभीतकानामामलकहरीतकीबिभीतकानां वा पलाशत्वगवनद्धानां मृदावलिप्तानां कुकूलस्विन्नानामकुलकानां पलसहस्रमुदूखले संपोथ्य दधिघृतमधुपललतैलशर्करासंमयुक्तं भक्षयेदनन्नभुग्यथोक्तेन विधिना। तस्यान्ते यवाग्वादिभिः प्रत्यवस्थापनमभ्यङ्गोत्सादनं सर्पिषा यवचूर्णैश्चायश्च रसायनप्रयोगप्रकर्षो द्विस्त्रावदग्निबलमभिसमीक्ष्य प्रतिभोजनं यूषेण पयसा वा षष्टिकः ससर्पिष्कोऽत ऊर्ध्वं यथासुखविहारः कामभक्ष्यः स्यात्। अनेन प्रयोगेण ऋषयः पुनर्युवत्वमवापुर्बभूवुश्चानेकवर्षशतजीविनो निर्विकाराः परशरीरबुद्धीन्द्रियबलसमुदितायेरुश्चात्यन्तनिष्ठं तप इति ॥७२॥

इति चतुर्थामलकरसायनम्।

हरीतक्यामलकबिभीतकपञ्चपञ्चमूलनिर्य्यूहेण पिप्पली मधु मधूककाकोली-क्षीरकाकोली-आत्मगुप्ता-जीवकर्षभकक्षीरशुक्लाकल्कसंप्रयुक्तेन विदारीस्वरसेन क्षीराष्टगुणसंप्रयुक्तेन च सर्पिषः कुम्भं साधयित्वा प्रयुञ्जानोऽग्निबलमसमवेक्ष्य। जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमुपयोटकानुपानमश्नन् जराव्याधिपापाभिचारभयव्यपगतशरीरः बुद्धीन्द्रियबलमतुलमुपलभ्याप्रतिहतसर्वारम्भः परमायुरवाप्नुयादिति ॥ ७३ ॥

इति पञ्चमहरीतकी।

हरीतक्यामलकविभीतकहरिद्रास्थिरावचाविडङ्गामृतवल्ली-विश्वभेषजमधूकपिप्पलीसोमवल्कसिद्धेन क्षीरसर्पिषा मधुशर्कराभ्यामपि च सन्नीयामलकस्वरसशतपलपीतमामलकचूर्णमयश्चूर्णचतुर्भागसम्प्रयुक्तं पाणितलमात्रं प्रातः प्रातः प्राश्य यथोक्तेन विधिना मात्रं मुद्गयूषेण पयसा वा ससर्पिष्कं शालिषष्टिकमश्नीयात्। त्रिवर्षप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति श्रुतमवतिष्ठते सर्वामयाः प्रशाम्यन्ति विषमविषं भवति गात्रे गात्रमश्मवत् स्थिरीभवति अधृष्यो भूतानां भवतीति ॥ ७४ ॥

भवन्ति चात्र।

*यथामराणाममृतं यथा भोगवतां सुधा।*
तथाभवन्महर्षीणां रसायनविधिः पुरा ॥ ७५ ॥
न जरां न च दौर्बल्यं नातुर्यं निधनं न च।
जग्मुर्वर्षसहस्राणि रसायनपराः पुरा ॥ ७६ ॥
न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विधिवन्निषेवते।
गतिं सदेवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथेति चाक्षरम् ॥ ७७ ॥

तत्र श्लोकः।

अभयामलकीयेऽस्मिन् षड्योगाः परिकीर्त्तिताः।
रसायनानां सिद्धानामायुर्यैरनुवर्त्तते ॥ ७८ ॥

अभयामलकीये रसायनपादः प्रथमः।

*अथातः प्राणकामीयं रसायनपादं व्याख्यास्याम इति* ह स्माह भगवानात्रेयः ॥ ७९ ॥

प्राणकामाः शुश्रूषध्वमिदमुच्यमानममृतमिवापरमदिति-सुतहितकरमचिन्त्याद्भुतप्रभावमायुष्यमारोग्यकरं वयसः स्थापनं निद्रातन्द्राश्रमक्लमालस्यदौर्बल्यापहरमनिलकफ-पित्तसाम्यकरं

स्थैर्यकरमवहमांसहरमन्तराग्निसन्धुक्षणं प्रभावर्णस्वरोत्तमकरं रसायनविधानम्। अनेन च्यवनादयो महर्षयः पुनर्युवत्वमापुः। नारीणां चेष्टतमा बभूवुः। स्थिरसमसुविभक्तमांसाः सुसंहतस्थिरशरीराः सुप्रसन्नबलवर्णेन्द्रियाः सर्वत्राप्रतिहतपराक्रमाः सर्वक्लेशसहाश्च ॥ ८० ॥

सर्वे शरीरदोषा भवन्ति ग्राम्याद्याहारादम्ल-लवण-कटुक-क्षारशुष्कशाकमांसतिलपललपिष्टान्नभोजिनां विरूढनवशूकशमीधान्यविरुद्धासात्म्यरूक्षक्षाराभिष्यन्दिभोजिनां क्लिन्नगुरुपूतिपर्युषितभोजिनां विषमाशनाध्यशनप्रियाणां दिवास्वप्नस्त्रीमद्यनित्यानां विषमातिमात्रव्यायामसंक्षोभितशरीराणां भयक्रोधशोकलोभमोहायासबहुलानाम् अतोनिमित्ताद्धि शिथिलीभवन्ति मांसानि विमुच्यन्ते सन्धयो विदह्यते रक्तं विष्यन्दते चानल्पं मेदो न सन्धीयतेऽस्थिषु मज्जा शुक्रं न प्रवर्तते क्षयमुपैत्योजः स एवंभूतो ग्लायति सीदति निद्रातन्द्रालस्यसमन्वितो निरुत्साहः श्वसिति। असमर्थश्चेष्टानां शारीरमानसानां नष्टस्मृतिबुद्धिच्छायो रोगाणामधिष्ठानभूतो न सर्वमायुरवाप्नोति। तस्मादेतान् दोषानवेक्षमाणः सर्वान् यथोक्तानहितानपास्याहारविहारान् रसायनानि प्रयोक्तुमर्हति ॥ ८१ ॥

इत्युक्त्वा भगवान् पुनर्वसुरात्रेय उवाच। आमलकानां सुभूमिजानां कालजानामनुपहतगन्धवर्णरसानामापूर्णरसप्रमाणवीर्याणां स्वरसेन पुनर्नवाकल्कपादसंप्रयुक्तेन सर्पिषा साधयेदाढकमतःपरं विदारीस्वरसेन जीवन्तीकल्कसंप्रयुक्तेन। अतःपरं चतुर्गुणेन पयसा वा बलातिबलाक्वाथेन शतावरीकल्कसंप्रयुक्तेन। अनेन क्रमेणैकैकं शतपाकं सहस्रपाकं वा शर्कराक्षौद्रचतुर्भागसंयुक्तं सौवर्णे राजते मार्त्तिके वा शुचौ दृढे घृतभाविते कुम्भे स्थापयेत्। तद्यथोक्तेन विधिना यथाग्नि प्रातः प्रातः प्रयोजयेत्।

जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात्। अस्य प्रयोगाद्वर्षशत वयोऽजरं तिष्ठति श्रुतमवतिष्ठते सर्वामयाः प्रशाम्यन्ति अप्रतिहतगतिः स्त्रीष्वपत्यवान भवति ॥ ८२ ॥

भवति चात्र।

बृहच्छरीरं गिरिसारसारं स्थिरेन्द्रियञ्चातिबलेन्द्रियञ्च।
अधृष्यमन्यैरतिकान्तरूपं प्रशस्तपूजासुखचित्तभाक् च ॥८३॥
बलं महद्वर्णविशुद्धिरग्र्या स्वरो घनौघस्तनितानुकारी।
भवत्यपत्यं विपुलं स्थिरञ्च समश्नतो योगमिमं नरस्य ॥८४॥

इत्यामलकघृतम्।

आमलकसहस्रं पिप्पलीसहस्रसंप्रयुक्तं पलाशतरुभस्मनः क्षारोदकोत्तरं तिष्ठेत्। तदनुगतक्षारोदकमगातपशुष्कमनास्थिचूर्णीकृतं चतुर्गुणाभ्यां मधुसर्पिर्भ्यां संनीय शर्कराचूर्णचतुर्भागसम्प्रयुक्तं घृतभाजनस्थं षण्मासान् स्थापयेदन्तर्भूमिस्तस्योत्तरकालमग्निबलसमां मात्रां खादेत् पौर्वाह्णिकः प्रयोगः। सात्म्यपथ्याहारविधिर्नापराह्णिकः। अस्य प्रयोगाद्वर्षशतमजरं वयस्तिष्ठति समानं पूर्वेण ॥ ८५ ॥

इति आमलकावलेहः।

आमलक चूर्णाढ़कमेकविंशति-रात्रमामलक-सहस्र स्वरसपरिपीतं मधुघृताढ़काभ्यां द्वाभ्यामेकीकृतमष्टभागपिप्पलीकं शर्कराचूर्णचतुर्भागसम्प्रयुक्तं घृतभाजनस्थं प्रावृषि भस्मराशौ निदध्यात् तद्वर्षान्ते सात्म्यपथ्याशी प्रयोजयेत्। अस्य प्रयोगाद्वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण ॥ ८६ ॥

इति आमलकचूर्णम्।

विड़ङ्गतण्डुलचूर्णानामाढ़कं पिप्पलीतण्डुलानामध्यर्द्धाढ़कं सितोपलासर्पिस्तैलमध्वाढ़कैः षड्भिरेकीकृत-घृत-भाजनस्थं प्रावृषि भस्मराशाविति सर्वं समानं पूर्वेण यावदाशी ॥ ८७ ॥

इति विड़ङ्गावलेहः।

पयोऽनुगुणानामामलकानां सहस्रमार्द्रपलाशद्रोण्यां सपिधानायां बाष्पमनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत्। तानि सुस्विन्नशीतानि उद्धृतकुलकान्यापोथ्याढकेन पिप्पलीचूर्णानामाढकेन च विडङ्गतण्डुलचूर्णानामध्यर्धेन चाढकेन शर्कराचूर्णानां द्वाभ्यां द्वाभ्यामाढकाभ्यां तैलस्य मधुनः सर्पिषश्च संयोज्य शुचौ दृढे घृतभाविते कुम्भे स्थापयेदेकविंशतिरात्रमत ऊर्ध्वं प्रयोगः। अस्य प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समं पूर्वेण ॥ ८८ ॥

इति चामलकावलेहोऽपरः।

धन्वनि कुशास्तीर्णे स्निग्धकृष्णमधुरमृत्तिके सुवर्णवर्णमृत्तिके वा व्यपगतविषश्वापदपवनसलिलाग्निदोषे कर्षणवल्मीकश्मशानचैत्योषरावसथवर्जिते देशे यथर्तुसुखपवनसलिलादित्यसेविते जातान्यनुपहतान्यनध्यारूढान्यबालान्यजीर्णान्यविगतवीर्याणि शीर्णपुराणपर्णान्यसञ्जातफलानि तपसि तपस्ये वा मासे शुचिः प्रयतः कृतदेवार्चनः स्वस्ति वाचयित्वा द्विजातीन् सुमुहूर्ते नागबलामूलान्युद्धरेत्। तेषां सुप्रक्षालितानां त्वक्पिण्डमाम्रमात्रमक्षमात्रं वा श्लक्ष्णपिष्टमालोड्य पयसा प्रातः प्रयोजयेत् चूर्णीकृतानि वा पिबेत्। पयसा मधुसर्पिर्भ्यां वा संयोज्य भक्षयेत्। जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात्। संवत्सरप्रयोगादस्य वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण ॥ ८९ ॥

इति नागबलारसायनम्।

बलातिबलाचन्दनागुरुधवतिनिशखदिरशिंशपासनस्वरसाः पुनर्नवान्ताश्चौषधयो दश ये वयःस्थापना व्याख्यातास्तेषां स्वरसा नागबलावत् स्वरसानामलाभे त्वयं स्वरसविधिश्चूर्णानामाढकमुदकस्याहोरात्रावस्थितं मृदितपूतं स्वरसवत् प्रयोज्यम् ॥ ९० ॥

भल्लातकानि अनुपहतानि अनामयानि आपूर्णरसप्रमाणवीर्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे संगृह्य

यवपल्ले माषपल्ले वा निधापयेत्। तानि चतुर्मासस्थितानि सहसि सहस्ये वा मासे प्रयोक्तुमारभेत। शीतस्निग्धमधुरोपस्कृतशरीरः पूर्वं दश भल्लातकान्यापोथ्याष्टगुणेनाम्भसा साधु साधयेत्। तेषां रसमष्टभागावशिष्टं पूतं सपयस्कं पिबेत् सर्पिषान्तर्मुखमभ्यज्य तानि एकैकभल्लातकोत्कर्षापकर्षेण दश भल्लातकानि आत्रिंशतः प्रयोज्यानि। नातःपरमुत्कर्षः प्रयोगविधाने नासहस्रपर एव भल्लातकप्रयोगः। जीर्णे च सर्पिषा पयसा शालिषष्टिकाशनमुपचारः प्रयोगान्ते च द्विस्तावत् पयसैवोपचारः तत्प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ ८१ ॥ इति भल्लातकक्षीरम्।

भल्लातकानां जर्जरीकृतानां पिष्टस्वेदनं पूरयित्वा भूमावाकण्ठं निखातस्य स्नेहभावितस्य दृढ़स्योपरि कुम्भस्यारोप्योडुपेनापिधाय कृष्णमृत्तिकावलिप्तं गोमयाग्निभिरुपस्वेदयेत् तेषां यः स्वरसः कुम्भं प्रपद्येत ततोऽष्टभागमधुसम्प्रयुक्तं द्विगुणघृतमद्यात्। तत्प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ ८२ ॥ इति भल्लातकक्षौद्रम्।

भल्लातकतैलपात्रं सपयस्कं मधुकेन कल्केनाक्षमात्रेण शतपाकं कुर्य्यात् समानं पूर्वेण ॥ ८३ ॥

इति भल्लातकतैलम्।

भल्लातकक्षीरं भल्लातकक्षौद्रं भल्लातकतैलमेवं गुडभल्लातकयूषौ भल्लातकसर्पिर्भल्लातकपललं भल्लातकशक्तवो भल्लातकलवणं भल्लातकतर्पणमिति भल्लातकविधानमुक्तम् ॥ ८४ ॥

इति भल्लातकविधिः।

भवन्ति चात्र।

भल्लातकानि तीक्ष्णानि पाकीन्यग्नि समानि च।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥ ८५ ॥

एते दशविधास्त्वेषां प्रयोगाः परिकीर्त्तिताः ।
रोगप्रकृतिसात्म्यज्ञस्तान् प्रयोगान् प्रकल्पयेत् ॥ ९६ ॥
कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन ।
यं न भल्लातकं हन्याच्छीघ्रं मेधाग्निवर्द्धनम् ॥ ९७ ॥
प्राणकामाः पुरा जीर्णाश्च्यवनाद्या महर्षयः ।
रसायनैः शिवैरेतैर्बभूवुरमितायुषः ॥ ९८ ॥
ब्राह्मं तपो ब्रह्मचर्य्यमध्यात्मं ध्यानमेव च ।
दीर्घायुषो यथाकामं संभृत्य त्रिदिवं गताः ॥ ९९ ॥
तस्मादायुःप्रकर्षार्थं प्राणकामैः सुखार्थिभिः ।
रसायनविधिः सेव्यो विधिवत् सुसमाहितैः ॥ १०० ॥

तत्र श्लोकः ।

रसायनानां संयोगाः सिद्धा भूतहितैषिणा ।
निर्दिष्टाः प्राणकामीये सप्त चैवं दशर्षिणा ॥ १०१ ॥

प्राणकामीये रसायनपादो द्वितीयः ।

अथातः करप्रचितीयं रसायनपादं व्याख्यास्याम इति ह स्माह भगवान् आत्रेयः ॥ १०२ ॥

करप्रचितानां यथोक्तगुणानामामलकानामुद्धृतास्थ्नां शुष्कचूर्णितानां पुनर्माघे फाल्गुने वा मासे त्रिःसप्तकृत्वः स्वरसपरिपीतानां पुनः शुष्कचूर्णीकृतानामाढ़कमेकं ग्राहयेत्। अथ जीवनीयानां बृंहणीयानां स्तन्यजननानां शुक्रवर्द्धनानां वयःस्थापनानां षड्विरेचनशताश्रितीयोक्तानामौषधगणानां चन्दनागुरुधवतिनिशखदिरशिंशपासनसाराणाञ्चाणुशश्छिन्नानां चित्रानामभयाविभीतकपिप्पलीवचाचव्यचित्रकविडङ्गानाञ्च समस्तानामाढ़कमेकं दशगुणेनाम्भसा साधयेत्। तस्मिन् आढ़कावशेषे रसे सुपूते तानि आमलकचूर्णानि दद्यात् गोमयाग्निभिर्वंशविदलशरतेजनाग्निभिर्वा साधयेत्। यावदपनयादरस

तमनुपदग्धमुपच्छत्यायसीषु पात्रीष्वास्तीर्य्य शोषयेत्। सुशुष्कं तं कृष्णाजिनस्योपरि दृषदि श्लक्ष्णपिष्टमयः स्थाल्यां निधापयेत् सम्यक्। तच्चूर्णमयश्चूर्णाष्टभागसम्प्रयुक्तं मधुसर्पिर्भ्याम् अग्निबलमभिसमीक्ष्य प्रयोजयेदिति ॥ १०२ ॥

तत्र श्लोकाः।

एतद्रसायनं पूर्वं वशिष्ठः कश्यपोऽङ्गिराः।
जमदग्निर्भरद्वाजो भृगुरन्ये च तद्विधाः ॥ १०४ ॥
प्रयुज्य प्रयता मुक्ताः श्रमव्याधिजराभयात्।
यावदैच्छंस्तपस्तेपुस्तत्प्रभावान्महाबलाः ॥ १०५ ॥
तपसा ब्रह्मचर्य्येण ध्यानेन प्रशमेन च।
रसायनविधानेन कालयुक्तेनायुषा ॥ १०६ ॥
स्थिता महर्षयः पूर्वं न हि किञ्चिद्रसायनम्।
ग्राम्याणामन्यकार्य्याणां सिद्धत्यप्रयतात्मनाम् ॥ १०७ ॥
इदं रसायनं चक्रे ब्रह्मा वार्षसहस्रिकम्।
जराव्याधिप्रशमनं बुद्धीन्द्रियबलप्रदम् ॥ १०८ ॥

इति आमलकायसं रसायनम्।

संवत्सरं पयोवृत्तिर्गवां मध्ये वसेत् सदा।
सावित्रीं मनसा ध्यायन् ब्रह्मचारी जितेन्द्रियः ॥ १०९ ॥
संवत्सरान्ते पौषीं वा माघीं वा फाल्गुनीं तिथिम्।
त्र्यहोपवासी शुक्लस्य प्रविश्यामलकीवनम् ॥ ११० ॥
बृहत्फलाढ्यमारुह्य द्रुमं शाखागतं फलम्।
गृहीत्वा पाणिना तिष्ठेज्जपन् ब्रह्मामृतागमात् ॥ १११ ॥
तदा ह्यवश्यममृतं वसत्यामलके क्षणम्।
शर्करा मधुकल्पानि स्नेहवन्ति मृदूनि च ॥ ११२ ॥
भवन्त्यमृतसंयोगात् तानि यावन्ति भक्षयेत्।
जीवेद्वर्षसहस्राणि तावन्त्यनतयौवनः ॥ ११३ ॥

सौहित्यमेषां गत्वा तु भवत्यमरसन्निभः।
स्वयञ्चास्योपतिष्ठन्ते श्रीर्वेदा वाक् च रूपिणी ॥ ११४ ॥

इति केवलामलकं रसायनम्।

त्रिफलाया रसे मूत्रे गवां चारे च लावणे।
क्रमेण चेङ्गुदीचारे किंशुकचार एव च ॥ ११५ ॥
तीक्ष्णायसस्य पत्राणि वह्निवर्णानि वापयेत्।
चतुरङ्गुलदीर्घाणि तिलोत्सेधसमानि च ॥ ११६ ॥
ज्ञात्वा तान्यञ्जनाभानि सूक्ष्मचूर्णानि कारयेत्।
तानि चूर्णानि मधुना रसेनामलकस्य च ॥ ११७ ॥
युक्तानि लेहवत् कुम्भे स्थितानि घृतभाविते।
संवत्सरं निधेयानि यवपल्ले तदेव च ॥ ११८ ॥
दद्यादालोडनं मासे सर्वत्रालोडयन् बुधः।
संवत्सरात्यये तस्य प्रयोगो मधुसर्पिषा ॥ ११९ ॥
प्रातः प्रातर्बलापेक्षी सात्म्यं जीर्णे च भोजनम्।
एष एव च लोहानां प्रयोगः संप्रकीर्त्तितः ॥ १२० ॥
अनेनैव विधानेन हेम्नश्च रजतस्य च।
आयुःप्रकर्षकृत् सिद्धः प्रयोगः सर्वरोगनुत् ॥ १२१ ॥
नाभिघातैर्न चातङ्कैर्जरया न च मृत्युना।
अधृष्यः स्याद्गजप्राणः सदा चातिबलेन्द्रियः ॥ १२२ ॥
धीमान् यशस्वी वाक्सिद्धः श्रुतधारी महाधनः।
भवेत् समां प्रयुञ्जानो नरो लौहरसायनम् ॥ १२३ ॥

इति लौहादिरसायनम्।

ऐन्द्री मत्स्याचिको ब्राह्मी वचा ब्रह्मसुवर्चला।
पिप्पल्यो लवणं हैम शङ्खपुष्पी विषं घृतम् ॥ १२४ ॥
एषां त्रियवकान् भागान् हेमसर्पिर्विषैर्विना।
द्वौ यवौ तत्र हेम्नस्तु तिलं दद्याद्विषस्य च ॥ १२५ ॥

सर्पिषश्च पलं दद्यात् तदैकध्यं प्रयोजयेत् ।
घृतप्रभूतं सक्षौद्रं जीर्णे चान्नं प्रशस्यते ॥ १२६ ॥
जराव्याधिप्रशमनं स्मृतिमेधाकरं परम् ।
आयुष्यं पौष्टिकं वर्ण्यं स्वरवर्णप्रसादनम् ॥ ॥ १२७ ॥
परमोजस्करञ्चैतत् सिद्धमेतत् रसायनम् ।
नैनं प्रसहते कृत्या नालक्ष्मीर्न विषं न रुक् ॥ १२८ ॥
श्वित्रं सकुष्ठं जठराणि गुल्माः प्लीहा पुराणो विषमज्वरश्च ।
मेधास्मृतिज्ञानहराश्च रोगाः शाम्यन्त्यनेनातिबलाश्च वाताः ॥१२९
इति ऐन्द्रीरसायनम् ।
मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥१३०
आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शङ्खपुष्पी ॥१३१
इति मेध्यरसायनानि ।
पञ्च षट् सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ १३२ ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥१३३॥
प्रयोज्या मधुसर्पिर्भ्यां रसायनगुणैषिणा ।
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयान् ॥ १३४ ॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ।
वैस्वर्यं पीनसं शोफं गुल्मं वातबलासकम् ॥ १३५ ॥
इति पिप्पलीरसायनम् ।
क्रमवृद्ध्या दशाहानि दशपैप्पलिकं दिनम् ।
वर्द्धयेत् पयसा सार्द्धं तथा चापनयेत् पुनः ॥ १३६ ॥
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ॥ १३७ ॥

पिष्टास्ता बलिभिः सेव्याः शृता मध्यबलैर्नरैः ।
शीतीकृता ह्रस्वबलैर्योज्या दोषामयान् प्रति ॥ १३८ ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्त्तिताः ।
प्रयोगो यस्त्रिपर्य्यन्तः स कनीयान् स चाबलैः ॥ १३९ ॥
बृंहणं स्वर्य्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥ १४० ॥

इति पिप्पलीवर्द्धमानं रसायनम् ।

जरणान्तेऽभयामेकां प्राग्भुक्ते द्वे बिभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्य्यामलकानि च ॥ १४१ ॥
प्रयोजयेत् समामेकां त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ १४२ ॥

इति त्रिफलानां रसायनम् ।

त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥ १४३ ॥
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चैव समाः शतम् ॥ १४४ ॥

इति त्रिफलारसायनमपरम् ।

मधुकेन तुगाक्षीर्य्या पिप्पल्या क्षौद्रसर्पिषा ।
त्रिफला सितया चापि युक्ता सिद्धं रसायनम् ॥ १४५ ॥

इति त्रिफलारसायनमपरम् ।

सर्वलौहैः सुवर्णेन वचया मधुसर्पिषा ।
विडङ्गपिप्पलीभ्याञ्च त्रिफला लवणेन च ॥ १४६ ॥
संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा ।
भवत्यायुष्प्रदा धन्या जरारोगनिवर्हणी ॥ १४७ ॥

इति त्रिफलारसायनमपरम् ।

अनम्लञ्च कषायञ्च कटुपाकि शिलाजतु ।

नाल्पश्यशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः ॥ १४८ ॥
हेम्नश्च रजतात् ताम्राद्वरं कृष्णायसादपि।
रसायनं तद्विधिभिस्तद्वृष्यं तच्च रोगनुत् ॥ १४९ ॥
वातपित्तकफघ्नैस्तु निर्यूहैस्तत् सुभावितम्।
वीर्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा ॥ १५० ॥
प्रक्षिप्योद्धृतमप्येनं पुनस्तत् प्रक्षिपेद्रसे।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥ १५१ ॥
पूर्वोक्तेन विधानेन लोहैश्चूर्णीकृतैः सह।
तत् पीतं पयसा दद्याद्दीर्घमायुः सुखान्वितम् ॥ १५२ ॥
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम्।
मेधास्मृतिकरं वल्यं क्षीराशी तत् प्रयोजयेत् ॥ १५३ ॥
प्रयोगः सप्तसप्ताहास्त्रयश्चैकश्च सप्तकः।
निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा।
पलमर्द्धपलं कर्षो मात्रा तस्य त्रिधा मता ॥ १५४ ॥

इति शिलाजतुप्रयोगः।

जातेर्विशेषं सविधं तस्य वक्ष्याम्यतःपरम्।
हेमाद्याः सूर्यसन्तप्ताः स्रवन्ति गिरिधातवः ॥ १५५ ॥
जत्वाभं मृदु मृत्स्नाभं यन्मलं तच्छिलाजतु।
मधुरश्च सतिक्तश्च जवापुष्पनिभश्च यः ॥ १५६ ॥
कटुर्विपाके शीतश्च स सुवर्णस्य निस्रवः।
रूप्यस्य कटुकः श्वेतः शीतः स्वादु विपच्यते ॥ १५७ ॥
ताम्रस्य बर्हिकण्ठाभस्तिक्तोष्णः कटु पच्यते।
यस्तु गुग्गुलुकाभासस्तिक्तको लवणान्वितः ॥ १५८ ॥
कटुर्विपाके शीतश्च सर्वश्रेष्ठः स चायसः।
गोमूत्रगन्धयः सर्वे सर्वकर्मसु योगिकाः ॥ १५९ ॥
रसायनप्रयोगेषु पश्चिमस्तु विशिष्यते।

यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ॥ १६० ॥
विशेषतः प्रशस्यन्ते मला हेमादिधातुजाः ।
शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च ।
वर्जयेत् सर्वकालन्तु कुलत्थान् परिवर्जयेत् ॥ १६१ ॥
ते ह्यत्यन्तविरुद्धत्वादश्मनो भेदनाः परम् ।
लोके दृष्टास्ततस्तेषां प्रयोगः प्रतिषिध्यते ॥ १६२ ॥

पयांसि तक्राणि रसाः सयूषास्तोयं समूत्रं विविधाः कषायाः आलोड़नार्थञ्गिरिजस्यशस्तास्ते ते प्रयोज्याः प्रसमीक्ष्य कार्य्यं न सोऽस्ति रोगो भुवि साध्यरूपः शिलाह्वयं यं न जयेत् प्रसह्य तत्कालयोगैर्विविधैः प्रयुक्तं स्वस्थस्य चोर्जां विपुलां ददाति ॥ १६३ ॥ १६४ ॥ इति शिलाजतुरसायनम् ।

तत्र श्लोकः ।

करप्रचितिके पादे दश षट् च महर्षिणा ।
रसायनानां सिद्धानां संयोगाः समुदाहृताः ॥ १६५ ॥

करप्रचितीये रसायनपादस्तृतीयः ।

अथात आयुर्वेदसमुत्थानीयं चतुर्थं रसायनपादं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १६६ ॥

ऋषयः खलु कदाचिच्छालीना यायावराश्च ग्राम्यौषध्याहाराःसन्तः साम्पन्निका मन्दचेष्टा नातिकल्याणाश्च प्रायेण बभूवुः । ते सर्वासामितिकर्त्तव्यतानामसमर्थाः सन्तो ग्राम्यवासकृतं दोषं मत्वा पूर्व्वनिवासमपगतग्राम्यदोषं मत्वा शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिर्गङ्गाप्रभवममर-गन्धर्व यक्षकिन्नरानुचरितमनेकरत्ननिचयमचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्धचारणानुचरितं दिव्यतीर्थौषधिप्रभावमतिशरण्यं हिमवन्तममराधिपतिगुप्तं जग्मुः भृग्वङ्गिरोऽत्रिवशिष्ठकश्यपागस्त्यपुलस्त्यवामदेवासितगौतमप्रभृतयो महर्षयः ॥ १६७ ॥

तान् इन्द्रः सहस्रदृक् अमरगुरुवरोऽब्रवीत् स्वागतं ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणामस्ति ननु वो ग्लानिरप्रभावत्वं वैस्वर्य्यं वैवर्ण्यञ्च ग्राम्यवासकृतमसुखानुबन्धञ्च। ग्राम्यो हि वासो मूलमशस्तानां तत्कृतं पुण्यकृद्भिरनुग्रहः प्रजानां स्वशरीरमवेक्षिभिः कालश्चायमायुर्वेदोपदेशस्य ब्रह्मर्षीणामात्मनः प्रजानाञ्चानुग्रहार्थमायुर्वेदमश्विनौ मह्यं प्रयच्छताम्। प्रजापतिरश्विभ्याम्। प्रजापतये ब्रह्मा प्रजानामल्पमायुर्जराव्याधिबहुलमसुखमसुखानुबन्धम् अल्पत्वादल्पतपोदमनियमदानाध्ययनसञ्चयं मत्वा पुण्यतममायुःप्रकर्षकरं जराव्याधिप्रशमनम् ऊर्जस्करममृतं शिवं शरण्यमुदात्तं भवन्तो मत्तः श्रोतुमर्हन्ति उपधारयितुं प्रकाशयितुञ्च प्रजानुग्रहार्थमार्षं ब्रह्म च मैत्रीं कारुण्यमात्मनश्चानुत्तमं पुण्यमुदारं ब्राह्ममक्षयं कर्मेति ॥१६८॥

तत् श्रुत्वा विबुधपतिवचनमृषयः सर्व एवामरवरमृग्भिस्तुष्टुवुः प्रहृष्टास्तद्वचनमभिननन्दुश्चेति। अथेन्द्रस्तदायुर्वेदामृतमृषिभ्यः संक्रम्योवाचैतत् सर्वमनुष्ठेयञ्च। अयञ्च शिवःकालो रसायनानां दिव्याश्चौषधयो हिमवतः प्रभवा प्राप्तवीर्य्याः॥१६९॥

इति समुत्थानीयरसायन पादः।

तद्यथा—ऐन्द्री ब्राह्मी पयस्या क्षीरपुष्पी श्रावणी महाश्रावणी शतावरी विदारी जीवन्ती पुनर्नवा नागबला स्थिरा वचा छत्रातिच्छत्रा मेदा महामेदा जीवनीयाश्चान्याः पयसा प्रयुक्ताः। षण्मासात् परममायुर्वयश्च तरुणमनामयत्वं स्वरवर्णसम्पदमुपचयं मेधां स्मृतिमुत्तमबलमिष्टांश्चापरान् भावानाबहन्ति सिद्धाः॥ १७० ॥

इति इन्द्रोक्तं रसायनम्।

ब्रह्मसुवर्चलानामौषधिर्या हिरण्यक्षीरा पुष्करसदृशपत्रा आदित्यपर्णी नामौषधिर्या सूर्य्यकान्तेति विज्ञायते सुवर्णवर्ण-

क्षीरा सूर्यमण्डलाकारपुष्पा च। नारी नामौषधिरश्ववलेति विज्ञायते या पुनरजसदृशपत्रा। काष्ठगोधानामौषधिर्गोधाकारा। सर्पा नामौषधिः सर्पाकारा। सोमो नामौषधिराजः पञ्चदशपर्णः स सोम इव हीयते वर्द्धते च। पद्मा नामौषधिः पद्माकारा पद्मरक्ता पद्मगन्धा। अजा नामौषधिरजशृङ्गीति विज्ञायते। नीला नामौषधिस्तु नीलक्षीरा नीलपुष्पा लताप्रतानबहुला। इत्यासामष्टानामौषधिनां यां यामेवौषधिं लभेत तस्यास्तस्याः स्वरसस्य सौहित्यं गत्वा स्नेहभावितायामार्द्रपलाशद्रोण्यां सपिधानायां शयीत। तत्र प्रलीयते षण्मासेन पुनःपुनः सम्भवति। तस्याजं पयः प्रत्यवस्थापनम्। षण्मासेन देवतानुकारी भवति वयोवर्णस्वराकृतिबलप्रभाभिः। स्वयञ्चास्य सर्ववाचो गतानि प्रादुर्भवन्ति। दिव्यञ्चास्य चक्षुः श्रोत्रं भवति योजनसहस्रगतिर्दशवर्षसहस्राण्यायुरनुपद्रवञ्चेति॥ १७१॥

इति द्रोणीप्रावेशिकरसायनम्।

भवन्ति चात्र।

दिव्यानामौषधिनां यः प्रभावः स भवद्विधैः।
शक्यः सोढुमशक्यस्तु न सोढुमकृतात्मभिः॥ १७२॥
ओषधीनां प्रभावेण तिष्ठतां स्वे च कर्मणि।
भवतां निखिलं श्रेयः सर्वमेवोपपत्स्यते॥ १७३॥
वानप्रस्थैर्गृहस्थैश्च प्रयतैर्नियतात्मभिः।
शक्या ओषधयो ह्येताः सेवितुं विषयाभिजाः॥ १७४॥
तास्तु चैव गुणैस्तेषां मध्यमेन च कर्मणा।
मृदुवीर्यतया तासां विधिर्ज्ञेयः स एव तु॥ १७५॥
पर्य्यष्टुं ताः प्रयोक्तुं वा येऽसमर्थाः सुखार्थिनः।
रसायनविधिस्तेषामयमन्यः प्रशस्यते॥ १७६॥
बल्यानां जीवनीयानां बृंहणीयाश्च या दश।

श्रयमः स्थापनानाञ्च खदिरस्यासनस्य च ॥ १७७ ॥
खर्जूराणां मधूकानां मुस्तानामुत्पलस्य च।
मृद्वीकानां विडङ्गानां वचायाश्चित्रकस्य च ॥ १७८ ॥
शतावर्य्याः पयस्यायाः पिप्पल्या जोङ्गकस्य च।
ऋद्धा नागबलायाश्च हरिद्रायाः यवस्य च ॥ १७९ ॥
त्रिफलाकण्टकार्य्योश्च विदार्य्याश्चन्दनस्य तु।
इक्षूणां शरमूलानां श्रीपर्ण्यास्तिनिशस्य च ॥ १८० ॥
रसाः पृथक् पृथक् ग्राह्याः पलांशाश्चार एव च।
एभ्यः पलोन्मितान् भागान् पयो गव्यं चतुर्गुणम् ॥ १८१ ॥
द्वे पात्रे तिलतैलस्य द्वे च गव्यस्य सर्पिषः।
तत् साध्यं सर्वमेकत्र सुसिद्धं स्नेहमुद्धरेत् ॥ १८२ ॥
तत्रामलकचूर्णानामाढ़कं शतभावितम्।
स्वरसेनैव दातव्यं क्षौद्रस्याभिनवस्य च ॥ १८३ ॥
शर्कराचूर्णपात्रञ्च प्रस्थमेकं प्रदापयेत्।
तुगाक्षीर्य्याः सपिप्पल्याः साध्यं संमूर्च्छितञ्च तत् ॥ १८४ ॥
शुचौ दैमासिके कुम्भे मासार्द्धं घृतभाविते।
मात्रामग्निसमां तस्य तत ऊर्द्ध्वं प्रयोजयेत् ॥ १८५ ॥
हेमताम्रप्रवालानामयसः स्फटिकस्य च।
मुक्तावैदूर्य्यशङ्खानां चूर्णानां रजतस्य च ॥ १८६ ॥
प्रक्षिप्य षोड़शीं मात्रां विहायायासमैथुनम्।
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥ १८७ ॥
सर्वरोगप्रशमनं वृष्यमायुष्यमुत्तमम्।
सत्त्वस्मृतिशरीराग्निबुद्धीन्द्रियबलप्रदम् ॥ १८८ ॥
परमूर्ज्जस्करञ्चैव वर्णस्वरकरं तथा।
विषालक्ष्मीप्रशमनं सर्ववाचो गतप्रदम् ॥ १८९ ॥
सिद्धार्थताञ्चाभिनवं वयश्च प्रजाप्रियत्वञ्च यशश्च लोके

प्रयोज्यमिच्छद्भिरिदं यथावद्रसायनं ब्राह्ममुदारवीर्य्यम् ॥१८०॥

इतीन्द्रोक्तरसायनमपरम्।

समर्थानामरोगाणां धीमतां नियतात्मनाम्।
कुटीप्रवेशः क्षमिणां परिच्छदवतां हितः ॥ १८१ ॥
अतोऽन्यथा तु ये तेषां सौर्य्यमारुतिको विधिः।
ताभ्यां श्रेष्ठतरः पूर्वो विधिः स तु सुदुष्करः ॥ १८२ ॥
रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि।
यथास्वमौषधं तेषां कार्य्यं मुक्ता रसायनम् ॥ १८३ ॥
सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात्।
अहिंसकमनायासं प्रशान्तं प्रियवादिनम् ॥ १८४ ॥
जपशौचपरं धीरं दाननित्यं तपस्विनम्।
देवगोब्राह्मणाचार्य्यगुरुवृद्धार्चने रतम् ॥ १८५ ॥
आनृशंस्यपरं नित्यं नित्यं कारुण्यवेदिनम्।
समजागरणस्वप्ननित्यं क्षीरघृताशिनम् ॥ १८६ ॥
देशकालप्रमाणज्ञं युक्तिज्ञमनहङ्कृतम्।
शस्ताचारमसंकीर्णमध्यात्मप्रवणेन्द्रियम् ॥ १८७ ॥
उपासितारं वृद्धानामास्तिकानां जितात्मनाम्।
धर्मशास्त्रपरं विद्यात्तं नित्यरसायनम् ॥ १८८ ॥
गुणैरेतैः समुदितैः प्रयुङ्क्ते यो रसायनम्।
रसायनगुणान् सर्वान् यथोक्तान् स समश्नुते ॥ १८९ ॥
यथा स्थूलमनिर्वाह्य दोषान् शारीरमानसान्।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन ॥ २०० ॥
योगा ह्यायुःप्रकर्षार्था जरारोगनिवर्हणाः।
मनःशरीरशुद्धानां सिध्यन्ति प्रयतात्मनाम् ॥ २०१ ॥
तदेतन्न भवेद्वाच्यं सर्वमेव हतात्मसु।
अरुजेभ्यो द्विजातिभ्यः शुश्रूषा येषु नास्ति च ॥ २०२ ॥

ये रसायनसंयोगा वृष्या योगाश्च ये मताः।
यच्चौषधं विकाराणां सर्वं तद्वैद्यसंश्रयम् ॥ २०३ ॥
प्राणाचार्य्यं बुधस्तस्मात् धीमन्तं वेदपारगम्।
अश्विनाविव देवेन्द्रः पूजयेदतिशक्तितः ॥ २०४ ॥
अश्विनौ देवभिषजौ यज्ञवाहाविति स्मृतौ।
यज्ञस्य हि शिरश्छिन्नं पुनस्ताभ्यां समाहितम् ॥ २०५ ॥
प्रशीर्णा दशनाः पूष्णो नेत्रे नष्टे भगस्य च।
वज्रिणश्च भुजस्तम्भस्ताभ्यामेव चिकित्सितः ॥ २०६ ॥
चिकित्सितस्तु शीतांशुर्गृहीतो राजयक्ष्मणा।
सोमाभिपतितश्चन्द्रः कृतस्ताभ्यां पुनः सुखी ॥ २०७ ॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः।
वीतवर्णस्वरोपेतः कृतस्ताभ्यां पुनर्युवा ॥ २०८ ॥
एतैश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥ २०९ ॥
ग्रहाः स्तोत्राणि मन्त्राणि तथान्यानि हवींषि च।
धूम्राश्च पशवस्ताभ्यां प्रकल्प्यन्ते द्विजातिभिः ॥ २१० ॥
प्रातश्च सवने सौम्ये शक्रोऽश्विभ्यां सहाज्यते।
सौत्रामण्याञ्च भगवानश्विभ्यां सह मोदते ॥ २११ ॥
इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः।
स्तूयन्ते वेदवाक्येषु न तथान्या हि देवताः ॥ २१२ ॥
अमरैरजरैस्तावद्विबुधैः साधिपैर्ध्रुवैः।
पूज्येते प्रयतैरेवमश्विनौ भिषजाविति ॥ २१३ ॥
मृत्युव्याधिजरावश्यैर्दुःखप्रायैः सुखार्थिभिः।
किं पुनर्भिषजो मर्त्त्यैः पूज्याः स्युर्नातिशक्तितः ॥ २१४ ॥
शीलवान् मतिमान् युक्तो द्विजातिः शास्त्रपारगः।
प्राणिभिर्गुरुवत् पूज्यः प्राणाचार्य्यः स हि स्मृतः ॥ २१५ ॥

विद्यासमाप्तौ भिषजो तृतीया जातिरुच्यते ।
अश्नुते वैद्यशब्दं हि न वैद्यः पूर्वजन्मना ॥ २१६ ॥
विद्यासमाप्तौ ब्राह्मं वा सत्त्वमार्षमथापि वा ।
ध्रुवमाविशति ज्ञानात् तस्माद्वैद्यस्त्रिजः स्मृतः ॥ २१७ ॥
नाभिध्यायेच चाक्रोशेदहितं न समाचरेत् ।
प्राणाचार्य्यं बुधः कश्चिदिच्छन्नायुरनित्वरम् ॥ २१८ ॥
चिकित्सितस्तु संश्रुत्य यो वा संश्रुत्य मानवः ।
नोपाकरोति वैद्याय नास्ति तस्येह निष्कृतिः ॥ २१९ ॥
भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान् ।
आबाधेभ्यो हि संरक्षेदिच्छन् धर्ममनुत्तमम् ॥ २२० ॥
धर्मार्थश्चार्थकामार्थमायुर्वेदो महर्षिभिः ।
प्रकाशितो धर्मपरैरिच्छद्भिः स्थानमक्षरम् ॥ २२१ ॥
नात्मार्थं नापि कामार्थमथ भूतदयां प्रति ।
वर्त्तते यश्चिकित्सायां स सर्वमतिवर्त्तते ॥ २२२ ॥
कुर्वते ये तु वृत्त्यर्थं चिकित्सापण्यविक्रयम् ।
ते हित्वा काञ्चनं राशिं पांशुराशिमुपासते ॥ २२३ ॥
दारुणैः कृष्यमाणानां गदैर्वैवस्वतः क्षयम् ।
छित्त्वा वैवस्वतान् पाशान् जीवितश्च प्रयच्छति ॥२२४॥
धर्मार्थमदयस्तस्य दाता नेहोपलभ्यते ।
न हि जीवितदानाद्धि दानमन्यद्विशिष्यते ॥ २२५ ॥
परो भूतदयाधर्म इति मत्वा चिकित्सया ।
वर्त्तते यः स सिद्धार्थः सुखमत्यन्तमश्नुते ॥ २२६ ॥
तत श्लोकौ । आयुर्वेदसमुत्थानां दिव्यौषधिविधिः शुभः ।
अमृताल्पान्तरगुणं सिद्धं रसायनम् ॥ २२७ ॥
सिद्धेभ्यो ब्रह्मचारिभ्यो यदुवाचामरेश्वरः ।
आयुर्वेदसमुत्थाने तत्सर्वं सम्प्रकाशितम् ॥ २२८ ॥

# द्वितीयोऽध्यायः।

वाजीकरणम्।—सम्यग्योगशरमूलीयं वाजीकरणपादम्।

वाजीकरणमन्विच्छेत् पुरुषो नित्यमात्मवान्।
तदायत्तौ हि धर्मार्थौ प्रीतिश्च यश एव च॥ १॥
पुत्रस्यायतनं ह्येतद्गुणाश्चैते सुताश्रयाः।
वाजीकरणमग्र्यञ्च चेत्रं स्त्री या प्रहर्षिणी॥ २॥
इष्टा ह्येकैकशोऽप्यर्थाः परं प्रीतिकराः स्मृताः।
किं पुनः स्त्रीशरीरे ये सङ्घातेन व्यवस्थिताः॥ ३॥
सङ्घातो हीन्द्रियार्थानां स्त्रीषु नान्यत्र विद्यते।
स्त्राश्रयो हीन्द्रियार्थों यः स प्रीतिजननोऽधिकः॥ ४॥
स्त्रीषु प्रीतिर्विशेषेण स्त्रीष्वपत्यं प्रतिष्ठितम्।
धर्मार्थौ स्त्रीषु लक्ष्मीश्च स्त्रीषु लोकाः प्रतिष्ठिताः॥५॥
सुरूपा यौवनस्था या लक्षणैर्या विभूषिता।
या वश्या शिक्षिता या च सा स्त्री वृष्यतमा मता॥ ६॥
नानाभक्त्या तु लोकस्य दैवयोगाच्च योषिताम्।
त तं प्राप्य विवर्द्धन्ते नर रूपादयो गुणाः॥ ७॥
वयोरूपवचोहावैर्या यस्य परमाङ्गना।
प्रविशत्याशु हृदयं दैवाद्वा कर्मणोऽपि वा॥ ८॥
हृदयोत्सवरूपा या या समानमनोरमा।
समानसत्त्वा या वश्या या यस्य प्रीतये प्रियैः॥ ९॥
या पाशभूता सर्वेषामिन्द्रियाणां परैर्गुणैः।
यया वियुक्तो निस्त्रीकमरतिर्मन्यते जगत्॥ १०॥
यस्या ऋते शरीरं ना धत्ते शून्यमिवेन्द्रियैः।
शोकोद्वेगारतिभयैर्यां दृष्ट्वा नाभिभूयते॥ ११॥
याति यां प्राप्य विस्रम्भं दृष्ट्वा हृष्यत्यतीव याम्।
अपूर्वामिव यां याति नित्यं हर्षातिवेगतः॥ १२॥

गत्वा गत्वापि बहुशो यां तृप्तिं नैव गच्छति ।
सा स्त्री वृष्यतमा तस्य नानाभावा हि मानवाः ॥ १३ ॥
अतुल्यगोत्रां वृष्याञ्च प्रहृष्टां निरुपद्रवाम् ।
शुद्धस्नातां व्रजेन्नारीमपत्यार्थी निरामयः ॥ १४ ॥
अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः ।
अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः ॥ १५ ॥
चित्रदीपः सरः शुष्कमधातुर्धातुसन्निभः ।
निष्प्रजस्तृणपुलीति ज्ञातव्यः पुरुषाकृतिः ॥ १६ ॥
अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना ।
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते ॥ १७ ॥
बहुमूर्त्तिर्बहुमुखो बहुव्यूहो बहुक्रियः ।
बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः ॥ १८ ॥
मङ्गल्योऽयं प्रशस्तोऽयं धन्योऽयं वीर्य्यवानयम् ।
बहुशाखोऽयमिति च स्तूयते ना बहुप्रजः ॥ १९ ॥
प्रीतिर्बलं सुखं वृत्तिर्विस्तारो विभवः कुलम् ।
यशो लोकाः सुखोदर्कास्तुष्टिश्चापत्यसंश्रिता ॥ २० ॥
तस्मादपत्यमन्विच्छन् गुणांश्चापत्यसंश्रितान् ।
वाजीकरणनित्यः स्यादिच्छेत् कामसुखानि च ॥ २१ ॥
उपभोगसुखान् सिद्धान् वीर्य्यापत्यविवर्द्धनान् ।
वाजीकरणसंयोगान् प्रवक्ष्याम्यत उत्तरम् ॥ २२ ॥
शरमूलेक्षुमूलानि काण्डेक्षुं सेक्षुवालिकम् ।
शतावरीं पयस्यां च विदारीं कण्टकारिकाम् ॥ २३ ॥
जीवन्तीं जीवकं मेदां वीराञ्चर्षभकं बलाम् ।
ऋद्धिं गोक्षुरकं रास्नामात्मगुप्तां पुनर्नवाम् ॥ २४ ॥
पृथक् त्रिपलिकान् कृत्वा माषाणामाढकं नवम् ।
विपाचयेज्जलद्रोणे चतुर्भागञ्च शोषयेत् ॥ २५ ॥

तत्र पेयाणि मधुकं द्राक्षां फल्गूनि पिप्पलीम्।
आत्मगुप्तां मधूकानि खर्जूराणि शतावरीम्॥ २६॥
विदार्य्यामलकेक्षूणां रसस्य च पृथक् पृथक्।
सर्पिषश्चाढकं दद्यात् क्षीरद्रोणञ्च तद्भिषक्॥ २७॥
साधयेद् घृतशेषञ्च सपूतं योजयेत् पुनः।
शर्कराया स्तुगाक्षीर्याश्चूर्णैः प्रस्थोन्मितैर्भिषक्॥ २८॥
पलैश्चतुर्भिर्मागध्याः पलेन मरिचस्य च।
त्वगेलाकेशराणाञ्च चूर्णैरर्द्धपलोन्मितैः॥ २८॥
मधुनः कुडवाभ्याञ्च द्वाभ्यां तत् कारयेद् भिषक्।
पलिका गुडिकाः कृत्वा ता यथाग्नि प्रयोजयेत्॥ ३०॥
एष वृष्यः परो योगो बृंहणो बलवर्द्धनः।
अनेनाश्व इवोदीर्णो लिङ्गमर्पयते स्त्रियाम्॥ ३१॥
इति बृंहणीगुडिका।

माषाणामात्मगुप्ताया बीजानामाढकं नवम्।
जीवकर्षभकौ वीरां मेदाम्रद्धिं शतावरीम्॥३२॥
मधूकञ्चाश्वगन्धाञ्च साधयेत् कुडवोन्मिताम्।
रसे तस्मिन् घृतप्रस्थं गव्यं दशगुणं पयः॥ ३३॥
विदारीणां रसप्रस्थं प्रस्थमिक्षुरसस्य च।
दत्त्वा मृद्वग्निना साध्यं सिद्धं सर्पिर्निधापयेत्॥३४॥
शर्करायास्तुगाक्षीर्याः क्षौद्रस्य च पृथक् पृथक्।
भागांश्चतुष्पलांस्तत्र पिप्पल्याश्चावपेत् पलम्॥३५॥
पलं पूर्वमतो लीढ्वा ततोऽन्नमुपयोजयेत्।
य इच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम्॥ ३६॥
इति वाजीकरणं घृतम्।

शर्करामाषविदलास्तुगाक्षीरीपयो घृतम्।
गोधूमचूर्णषष्ठानि सर्पिषुत्कारिकां पचेत्॥ ३७॥

तां नातिपक्वां मृदितां कौक्कुटे मधुरे रसे।
सुगन्धे प्रक्षिपेदुष्णे यथा सान्द्रीभवेद्रसः॥ ३८॥
एष पिण्डरसो हृष्यः पौष्टिको बलवर्द्धनः।
अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत्॥ ३९॥
शिखितित्तिरिहंसानामेवं पिण्डरसो मतः॥

इति वाजीकरणपिण्डरसाः।

घृतं माषान् सवस्ताण्डान् साधयेन्माहिषे रसे।
भर्जयेत् तं रसं पूतं फलाम्लं नवसर्पिषि॥ ४०॥
ईषत् सलवणं युक्तं धान्यजीरकनागरैः।
एष हृष्यश्च बल्यश्च बृंहणश्च रसोत्तमः॥ ४१॥

इति हृष्यरसाः।

चटकांस्तित्तिरिरसे तित्तिरीन् कौक्कुटे रसे।
कुक्कुटान् बार्हिणरसे हांसे बर्हिणमेव च॥ ४२॥
नवसर्पिषि सन्तप्तान् फलाम्लान् कारयेद्रसान्।
मधुरान् वा यथासात्म्यं गन्धाढ्यान् बलवर्द्धनान्॥ ४३॥

इति अन्ये हृष्यरसाः।

तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत् पयः।
न तस्य लिङ्गशैथिल्यं स्यान्न शुक्रक्षयो निशि॥ ४४॥

इति हृष्यमांसाः।

माषयूषेण यो भुक्त्वा घृताढ्यं षष्टिकौदनम्।
पयः पिबति रात्रिं स कृत्स्नां जागर्त्ति वेगवान्॥ ४५॥

इति हृष्यमाषः।

न ना स्वपिति रात्रीषु नित्यस्तब्धेन च शेफसा।
तृप्तः कुक्कुटमांसानां भृष्टानां नक्ररेतसि॥ ४६॥

इति हृष्य शुक्ररसः।

निःक्वाथ्य मत्स्याण्डरसं भृष्टं सर्पिषि भक्षयेत्।

हंसबर्हिणदक्षाणि चैवमण्डानि भक्षयेत् ॥ ४७ ॥

इत्यन्यो ह्यपरम.।

स्रोत.सु शुद्धेष्वमले शरीरे हृष्यं यदा ना मितमत्ति काले।
हृषायते तेन परं मनुष्यस्तद्बृंहणञ्चैव बलप्रदञ्च ॥ ४८ ॥
तस्मात् पुरा शोधनमेव कार्यं बलानुरूपं न हि सिद्धियोगाः।
सिध्यन्ति देहे मलिने प्रयुक्ताः क्लिष्टे यथा वाससि रागयोगाः ४९

तत्र श्लोकौ।

वाजीकरणसामर्थ्यं चेदं स्त्रो यस्य चैव या।
ये दोषा निरपत्यानां गुणाः पुत्रवताञ्च ये ॥ ५० ॥
उक्तास्ते शरमूलीये पादे पुष्टिबलप्रदाः।
दश पञ्च च संयोगा वीर्य्यापत्यविवर्द्धनाः ॥ ५१ ॥

शरमूलीये वाजीकरणपादः प्रथमः।

अथात आसिक्तक्षीरीयं द्वितीयं वाजीकरणपादं व्याख्यास्याम इति हस्माह भगवानात्रेयः ॥ ५२ ॥

आसिक्तक्षीरमापूर्णमगुष्कं शुद्धषष्टिकम्।
उदूखले समापोथ्य पीडयेत् क्षीरमर्दितम् ॥५३॥
सुष्ठु विमर्दितं क्षीरे पीडयेत् सुसमाहित।
गृहीत्वा त रसं पूत गव्येन पयसा सह ॥ ५४ ॥
बीजानामात्मगुप्ताया धान्यमाषरसेन च।
बलायाः सूर्पपर्ण्योश्च जीवन्त्या जीवकस्य च।
ऋष्कर्षभककाकोली श्वदंष्ट्रा मधुकस्य च ॥ ५५ ॥
शतावर्य्या विदार्य्याश्च द्राक्षाखर्ज्जूरयोरपि।
सयुक्तं मात्रया वैद्यः साधयेत् तत्र चावपेत् ॥ ५६ ॥
तुगाक्षीर्य्या. ममापाणां शालीना षष्टिकस्य च।
गोधूमानाञ्च चूर्णानि यैः स सान्द्रीभवेद्रसः ॥ ५७ ॥
सान्द्रीभूतञ्च त कुर्य्यात् प्रभूतमधुशर्करम्।

गुड़िका बदरैस्तुल्या ताय सर्पिषि भर्जयेत् ॥ ५८ ॥
ता यथाग्नि प्रयुञ्जानः चीरमांसरसाशनः ।
पश्यत्यपत्यं विपुलं वृद्धोऽप्यात्मजमच्चयम् ॥ ५९ ॥
इति अपत्यकरा षष्टिकादिगुड़िका ।

चटकानां सहंसानां दचाणां शिखिनां तथा ।
शिशुमारस्य नक्रस्य भिषक् शुक्राणि संहरेत् ॥ ६० ॥
गव्यं सर्पिर्वराहस्य कुलिङ्गस्य वसामपि ।
षष्टिकानाञ्च चूर्णानि चूर्णं गोधूममेव च ॥ ६१ ॥
एभिः पूपलिकाः कार्य्याः शष्कुल्यो वर्त्तिकास्तथा ।
पूपाधानाय विविधा भच्याश्चान्ये पृथग्विधाः ॥ ६२ ॥
एषां प्रयोगाद्भच्याणां स्तब्धेनापूर्णरेतसा ।
शेफसा वाजिवद् याति यावदिच्छं स्त्रियो नरः ॥ ६३ ॥
इति वृष्यपूपलिकयोगः ।

आत्मगुप्ताफलं माषः खर्जूराणि शतावरीम् ।
शृङ्गाटकानि मृद्वीकां साधयेत् प्रस्थसम्मिताम् ॥ ६४ ॥
चीरप्रस्थं जलप्रस्थं एतत् प्रस्थावशेषितम् ।
शुद्धेन वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः ॥ ६५ ॥
शर्करायास्तुगाचीर्य्याः सर्पिषोऽभिनवस्य च ।
तत् पाययीत सचौद्रं षष्टिकान्नञ्च भोजयेत् ॥ ६६ ॥
जरापरीतोऽप्यबलो योगेनानेन विन्दति ।
नरोऽपत्यं सुविपुलं युवेव च स हृष्यति ॥ ६७ ॥
इति अपत्यकरः स्वरसः ।

खर्जूरीमस्तकं माषान् पयस्यां मशतावरीम् ।
खर्जूराणि मधुकानि मृद्वीकामजड़ाफलम् ॥ ६८ ॥
पलोन्मितानि मतिमान् साधयेत् सलिलाढ़के ।
तेन पादावशेषेण चीरप्रस्थं विपाचयेत् ॥ ६९ ॥

चौरग्र्येण तेनाढ्यात् घृताढ्यं षष्टिकौदनम्।
सशर्करेण संयोग एष वृष्यः परं स्मृतः॥ ७०॥

इति वृष्यक्षीरम्।

जीवकर्षभकौ मेदां जीवन्तीं श्रावणीद्वयम्।
खर्जूरं मधुकं द्राक्षां पिप्पलीं विश्वभेषजम्॥ ७१॥
शृङ्गाटकीं विदारीञ्च नवं सर्पिः पयो जलम्।
सिद्धं घृतावशेषं तच्छर्करा क्षौद्रपादिकम्॥ ७२॥
षष्टिकान्नेन संयुक्तमुपयोज्यं यथा बलम्।
वृष्यं बल्यञ्च वर्ण्यञ्च कण्ठ्यं वृंहणमुत्तमम्॥ ७३॥

इति वृष्यघृतम्।

दध्नः सरं शरच्चन्द्रसन्निभं दोषवर्जितम्।
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्य्याश्च बुद्धिमान्॥ ७४॥
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे शुचौ पटे।
मार्जितं प्रक्षिपेच्छीते घृताढ्ये षष्टिकौदने॥ ७५॥
पिबेन्मात्रां रसालायास्तु भुक्त्वा षष्टिकौदनम्।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते॥ ७६॥

इति वृष्यं दध्यादि।

चन्द्रांशुकल्पं पयसा घृताढ्यं षष्टिकौदनम्।
शर्करामधुसंयुक्तं प्रयुञ्जानो वृषायते॥ ७७॥

इति वृष्यदुग्धादि।

तप्ते सर्पिषि नक्राण्डं ताम्रचूडाण्डमिश्रितम्।
युक्तं षष्टिकचूर्णेन सर्पिषाभिनवेन च॥ ७८॥
पक्त्वा पूपलिकाः खादेद्वारुणीमण्डपो नरः।
य इच्छेदश्ववद्गन्तुं प्रसेक्तुं गजवच्च यः॥ ७९॥

इति नक्राण्डपाकवृष्ययोगः।

भवन्ति चात्र ।

आसिक्तक्षीरिके पादे ये योगाः परिकीर्त्तिताः ।
अष्टावपत्यकामैस्ते प्रयोज्याः पौरुषार्थिभिः ॥ ८० ॥

एतैः प्रयोगैर्विविधैर्वपुष्मान् स्नेहोपपन्नो बलवर्णयुक्तः ।
हर्षान्वितो वाजिवदष्टवर्षो भवेत् समर्थश्च वराङ्गनासु ॥ ८१ ॥

यद्यच्च किञ्चिन्मनसः प्रियं स्याद् रम्या वनान्ताः पुलिनानि शैला
इष्टाः स्त्रियो भूषणगन्धमाल्यं प्रिया वयस्याश्च तदत्र योगम् ॥८

आसिक्तक्षीरिके वाजीकरणपादो द्वितीयः ।

अथातो माषपर्णभृतीयं वाजीकरणपादं व्याख्यास्यामः इति ह स्माह भगवानात्रेयः ॥ ८३ ॥

माषपर्णभृतां धेनुं गृष्टिं पुष्टां चतुःस्तनीम् ।
समानवर्णवत्साञ्च जीववत्साञ्च बुद्धिमान् ॥ ८४ ॥

रोहिणीमथवा कृष्णामूर्द्ध्वशृङ्गीमदारुणाम् ।
इक्ष्वादामर्जुनादां वा सान्द्रक्षीराञ्च धारयेत् ॥ ८५ ॥

केवलन्तु पयस्तस्याः शृतं वाऽशृतमेव वा ।
शर्करामधुसर्पिर्भिर्युक्तं तद्वृष्यमुत्तमम् ॥ ८६ ॥

शुक्रलैर्जीवनीयैश्च बृंहणैर्बलवर्द्धनैः ।
क्षीरसञ्जननैश्चैव पयः सिद्धं पृथक् पृथक् ॥ ८७ ॥

युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम् ।
पर्य्यायेण प्रयोक्तव्यमिच्छता शुक्रमक्षयम् ॥ ८८ ॥

मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम् ।
श्वदंष्ट्रां क्षीरिकां माषान् गोधूमान् शालिषष्टिकान् ॥८९॥

पयस्यर्द्धोदके पक्त्वा कार्षिकानाढकोन्मिते ।
विवर्जयेत् पयःशेषं तत् पूतं क्षौद्रसर्पिषा ॥ ९० ॥

युक्तं सशर्करं पीत्वा वृद्धः सप्ततिकोऽपि वा ।
विपुलं लभतेऽपत्यं युवेव च स हृष्यति ॥ ९१ ॥

मण्डलैर्जातरूपस्य तस्या एव पयः शृतम्।
अपत्यजननं सिद्धं मघृतक्षौद्रशर्करम्॥ ८२॥
त्रिंशत् सुपिष्टाः पिप्पल्यः प्रकुञ्चे तैलसर्पिषोः।
भृष्टाः सशर्कराः क्षौद्राः क्षीरधारावदोहिताः॥८३॥
पीत्वा यथावलञ्चोर्द्ध्वं षष्टिकं क्षीरसर्पिषा।
भुक्त्वा न रात्रिमस्तब्धं लिङ्गं पश्यति माचरम्॥ ८४॥
श्वदंष्ट्राया विदार्याश्च रसे क्षीरचतुर्गुणे।
घृताढ्यः साधितो वृष्यो माषषष्टिकपायसः॥ ८५॥
फलानां जीवनीयानां स्निग्धानां रुचिकारिणाम्।
कुडवश्चूर्णितानां स्यात् स्वयंगुप्ताफलस्य च॥८६॥
कुडवश्चैव माषाणां द्वौ द्वौ च तिलमुद्गयोः।
गोधूमशालिचूर्णानां कुडवः कुडवो भवेत्॥ ८७॥
सर्पिषः कुडवश्चैकस्तत्सर्वं क्षीरसंयुतम्।
पक्त्वा पूपलिकाः खादेद्बह्वीः स्युर्यदि योषितः॥८८॥
घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत्।
शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुत्तमम्॥ ८९॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमांशिकम्।
प्रयुङ्क्ते यः पयश्चानु नित्यवेगः स ना भवेत्॥ १००॥
घृतक्षीराशनो निर्भीर्निर्व्याधिर्नित्यगो युवा।
सङ्कल्पप्रवणो नित्यं नरः स्त्रीषु वृषायते॥ १०१॥
क्षतैकशत्याः सिद्धार्था ये चान्योन्यानुवर्त्तिनः।
कलासु वश्या ये तुल्याः सत्त्वेन वयसा च ये॥१०२॥
कुलमाहात्म्यदाक्षिण्यशीलशौचसमन्विताः।
ये कामनित्या ये हृष्टा ये विशोका गतव्यथाः॥ १०३॥
ये तुल्यशीला ये भक्ता ये प्रिया ये प्रियंवदाः।
तैर्नरः सह विश्रब्धः सुवयस्यैर्वृषायते॥ १०४॥

अभ्यङ्गोत्सादनस्नानगन्धमाल्यविभूषणैः।
गृहशय्यासनसुखैर्वासोभिरहतैः प्रियैः ॥ १०५ ॥
विहङ्गानां रुतैरिष्टैः स्त्रीणाञ्चाभरणस्वनैः।
संवाहनैर्वरस्त्रीणामिष्टानाञ्च हृष्यति ॥ १०६ ॥
मत्तद्विरेफाचरिताः सपद्माः सलिलाशयाः।
जात्युत्पलसुगन्धीनि शीतगर्भगृहाणि च ॥ १०७ ॥
नद्यः फेनोत्तरीयाश्च गिरयो नीलसानवः।
उन्नतिर्नीलमेघानां रम्यचन्द्रोदया निशाः ॥ १०८ ॥
वायवः सुखसंस्पर्शाः कुमुदाकारगन्धिनः।
रतिभोगक्षमा रात्र्यः सङ्कोचा गुरुवत्सभाः ॥ १०९ ॥
सुखाः सहायाः परपुष्टयुष्टाः फुल्ला वनान्ता विशदान्नपाना'।
गान्धर्वशब्दाश्च सुगन्धमाल्याः सत्त्वं विशालं निरुपद्रवञ्च॥ ११०।
सिद्धार्थता चाभिनवश्च कामः स्त्री चायुधं सर्वमिहात्मजस्य।
वयो नवं जातमदश्च कालो हर्षस्य योनिः परमा नराणाम् ॥ १११

भवति चात्र।

प्रहर्षयोनयो योगा व्याख्याता दश पञ्च च।
मापपर्णभृतीयेऽस्मिन् पादे शुक्रबलप्रदाः ॥११२॥

मापपर्णभृतीयो वाजीकरणपादः।

अथातः पुमान्जातबलादिकं चतुर्थं वाजीकरणपादं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ ११३ ॥

पुमान् यथा जातबलो यावदिच्छं स्त्रियो व्रजेत्।
यथा चापत्यवान् सद्यो भवेत् तदुपदेक्ष्यते ॥ ११४ ॥
न हि जातबलाः सर्वे नरायापत्यभागिनः।
बृहच्छरीरा बलिनः सन्ति नारीषु दुर्बलाः ॥ ११५ ॥
सन्ति चाल्पाश्रयाः स्त्रीषु बलवन्तो बहुप्रजाः।
प्रकृत्या च वशाः सन्ति सन्ति चामयदुर्बलाः ॥ ११६ ॥

नराश्वटकवत् केचित् व्रजन्ति बहुशः स्त्रियम्।
गजवच्च प्रसिञ्चन्ति केचिन्न बहुगामिनः॥ ११७॥
कामयोगबलाः केचित् केचिदभ्यसनध्रुवाः।
केचित् प्रयत्नैर्वाह्यन्ते वृषाः केचित् स्वभावतः॥ ११८॥
तस्मात् प्रयोगान् वक्ष्यामो दुर्बलानां बलप्रदान्।
सुखोपभोगान् बलिनां भूयश्च बलवर्द्धनान्॥ ११९॥
पूर्वं शुद्धशरीराणां निरूहान् सानुवासनान्।
बलापेक्षी प्रयुञ्जीत शुक्रापत्यादिवर्द्धनान्॥ १२०॥
घृततैलरसक्षीरशर्करामधुसंयुताः।
बस्तयः संविधातव्याः क्षीरमांसरसाशिनाम्॥ १२१॥
पिष्ट्वा वराहमांसानि दत्त्वा मरिचसैन्धवे।
कोलवद्गुड़िकाः कृत्वा तप्ते सर्पिषि भर्जयेत्॥ १२२॥
भर्जनस्त्भितास्ताश्च प्रक्षेप्याः कौक्कुटे रसे।
घृताढ्ये गन्धपिशुने दधिदाडिमसाधिते॥ १२३॥
यथा न भिन्द्याद्गुडिकास्तथा तं साधयेद्रसम्।
तं पिबन् भक्षयंस्ताश्च लभते शुक्रमक्षयम्॥ १२४॥

इति वृष्या मांसगुड़िका।

मांसानामेवमन्येषां मेध्यानां कारयेद्भिषक्।
गुडिकाः सुरसास्तासां प्रयोगः शुक्रवर्द्धनः॥ १२५॥
माषानङ्कुरितान् शुद्धान् निस्तुषान् साजड़ाफलान्।
घृताढ्ये माहिषरसे दधिदाडिमसाधिते॥ १२६॥
प्रक्षिपेन्मात्रया युक्तो धान्यजीरकनागरैः।
पीतो भुक्तश्च सरसः कुरुते शुक्रमक्षयम्॥ १२७॥

इति वृष्यो माहिषरसः।

आर्द्राणि मत्स्यमांसानि भृष्टाश्च शफरीश्च ना।
तप्ते सर्पिषि तृखादयः गच्छेत् स्त्रीषु न क्षयम्॥१२८॥

घृतभृष्टान् रसे छागे रोहितान् फलसाधिते ।
अनुपीतरसान् सिद्धानपत्यार्थी प्रयोजयेत् ॥ १२९ ॥

इति गर्भाधानकरो योगः ।

कुट्टकं मत्स्यमांसानां हिङ्गुसैन्धवधान्यकैः ।
युक्तं गोधूमचूर्णेन घृते पूपलिकाः पचेत् ॥ १३० ॥
माहिषे च रसे मत्स्यान् स्निग्धाम्ललवणान् पचेत् ।
रसे चानुगते मांसं पोथयेत् तत्र चावपेत् ॥ १३१ ॥
मरिचं जीरकं धान्यमल्पं हिङ्गु नवं घृतम् ।
माषपूपलिकानां तद्गर्भार्थमुपकल्पयेत् ॥ १३२ ॥
एतौ पूपलिकायोगौ बृंहणौ बलवर्द्धनौ ।
हर्षसौभाग्यजननौ परं शुक्राभिवर्द्धनौ ॥ १३३ ॥

इति वृष्यौ पूपलिकायोगौ ।

माषात्मगुप्ता गोधूमशालिपिष्टैर्यवैष्टिकम् ।
शर्कराया विदार्याश्च चूर्णमिक्षुरसस्य च ॥ १३४ ॥
संयोज्य मस्तुणि क्षीरे घृते पूपलिकाः पचेत् ।
पयोऽनुपानास्ताः शीघ्रं कुर्वन्ति वृषतां परम् ॥ १३५ ॥

इति वृष्या माषादिपूपलिकाः ।

शर्करायास्तुलैका स्यादेका गव्यस्य सर्पिषः ।
प्रस्थो विदार्याश्चूर्णस्य पिप्पल्याः प्रस्थ एव च ॥ १३६ ॥
अर्द्धाढकं तुगाक्षीर्याः क्षौद्रस्याभिनवस्य च ।
तत्सर्वं मूर्च्छितं तिष्ठेन्मार्त्तिके घृतभाजने ॥ १३७ ॥
मात्रामग्निसमां तस्य प्रातः प्रातः प्रयोजयेत् ।
एष वृष्यः परं योगो बल्यो बृंहण एव च ॥ १३८ ॥

इति वृष्ययोगः ।

शतावर्या विदार्याश्च तथा माषात्मगुप्तयोः ।
श्वदंष्ट्रायाश्च निष्क्वाथानष्टपलेषु पृथक् पृथक् ॥ १३९ ॥

साधयित्वा घृतप्रस्थं पयस्यष्टगुणे पुनः।
शर्करामधुसंयुक्तमपत्यार्थी प्रयोजयेत्॥ १४०॥

इति अपत्यकरं घृतम्।

घृतपात्रं शतगुणे विदारीस्वरसे पचेत्।
सिद्धं पुनः शतगुणे गव्ये पयसि साधयेत्॥ १४१॥
शर्करायास्तुगाक्षीर्याः क्षौद्रस्येक्षुरसस्य च।
पिप्पल्याः सजडायाश्च भागैः पादांशिकैर्युतम्॥ १४२॥
गुडिकाः कारयेद्वैद्यो यथा स्थूलमुडुम्बरम्।
तासां प्रयोगात् पुरुषः कुलिङ्ग इव हृष्यति॥ १४३॥

इति हृष्यगुडिका।

सितोपलापलशतं तदर्द्धं नवसर्पिषः।
क्षौद्रपादेन संयुक्तं साधयेज्जलपादिकम्॥ १४४॥
सान्द्रं गोधूमचूर्णानां पादं स्तीर्णे शिलातले।
शुचौ श्लक्ष्णे समुत्कीर्य मर्दनेनोपपादयेत्॥ १४५॥
शुभ्रा उत्कारिकाः कार्याश्चन्द्रमण्डलसन्निभाः।
तासां प्रयोगाद्भजन्नारीः सन्तर्पयेन्नरः॥ १४६॥

इति हृष्या लसिका।

यत् किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते॥ १४७॥
द्रव्यैरेवंविधैस्तस्माद्भावितः प्रमदां व्रजेत्।
आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः॥ १४८॥
गत्वा स्नात्वा पयः पीत्वा रसं वानुशयीत ना।
तथास्याप्यायते भूयः शुक्रञ्च बलमेव च॥ १४९॥
यथा मुकुलपुष्पस्य सुगन्धो नोपलभ्यते।
लभ्यते तद्विकाशात् तु तथा शुक्रं हि देहिनाम्॥ १५०॥
नर्त्ते वै षोडशाद्वर्षात् सप्तत्याः परतो न च।

आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥ १५१ ॥
अतिबालो ह्यसम्पूर्णसर्वधातुः स्त्रियो व्रजन् ।
उपतप्येत सहसा तडागमिव काजलम् ॥ १५२ ॥
शुष्करूक्षं यथा काष्ठं जन्तुजग्धं विजर्जरम् ।
स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियो व्रजन् ॥ १५३ ॥
जरया चिन्तया शुक्रं व्याधिभिः कर्मकर्षणात् ।
क्षयं गच्छत्यनशनात् स्त्रीणां चातिनिषेवणात् ॥ १५४ ॥
क्षयाद्भयादविस्रम्भाच्छोकात् स्त्रीदोषदर्शनात् ।
नारीणामरसज्ञत्वादविचारादसेवनात् ॥ १५५ ॥
वृषस्यापि स्त्रियो गन्तुं न शक्तिरुपजायते ।
देहसत्त्वबलापेक्षी हर्षः शक्तिश्च हर्षजा ॥ १५६ ॥
रस इक्षौ यथा दध्नि सर्पिस्तैलं तिले यथा ।
सर्वत्रानुगतं देहे शुक्रं संस्पर्शने तथा ॥ १५७ ॥
तत् स्त्रीपुरुषसंयोगे चेष्टासङ्कल्पपीडनात् ।
शुक्रं प्रच्यवते स्थानाज्जलमार्द्रात् पटादिव ॥ १५८ ॥
हर्षात् तर्षात् सरत्वाच्च पैच्छिल्याद्गौरवादपि ।
अणुप्रवणभावात् द्रुतत्वान्मारुतस्य च ॥ १५९ ॥
अष्टाभ्य एभ्यो हेतुभ्यः शुक्रं देहात् प्रसिच्यते ।
चरतो विश्वरूपस्य रूपं द्रव्यं यदुच्यते ॥ १६० ॥
बहलं मधुरं स्निग्धमविस्रं गुरु पिच्छिलम् ।
शुक्लं बहु च यच्छुक्रं फलवत् तदसंशयम् ॥ १६१ ॥
येन नारीषु सामर्थ्यं वाजीवल्लभते नरः ।
व्रजेच्चाभ्यधिकं येन वाजीकरणमेव तत् ॥ १६२ ॥

तत्र श्लोकौ ।

हेतुर्योगोपदेशस्य योग्या याश्च योषितः ।
यत् पूर्वं मैथुनात् सेव्यं सेव्यं यन्मैथुनादनु ॥ १६३ ॥

यदा न सेव्याः प्रमदाः कृत्स्नः शुक्रविधिश्च यः।
निरुक्तश्चेह निर्दिष्टं पुमान् जातबलादिकैः॥ १६४॥

इति वाजीकरणाध्यायः समाप्तः।

---

## तृतीयोऽध्यायः।—ज्वरचिकित्सिताध्यायः।

विज्वरं ज्वरसन्देहं पर्य्यपृच्छत् पुनर्वसुम्।
विविक्ते शान्तमासीनमग्निवेशः कृताञ्जलिः॥ १॥
देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली।
ज्वरः प्रधानं रोगाणामुक्तो भगवता पुरा॥२॥
तस्य प्राणिसपत्नस्य ध्रुवस्य प्रलयोदये।
प्रकृतिञ्च प्रवृत्तिञ्च प्रभावं कारणानि च॥ ३॥
पूर्वरूपमधिष्ठानं बलकालावलक्षणम्।
व्यासतो विधिभेदञ्च पृथग्भिन्नस्य चाकृतिम्॥४॥
लिङ्गमामस्य जीर्णस्य चौषधं सक्रियाक्रमम्।
विमुञ्चतः प्रशान्तस्य चिह्नं यच्च पृथक् पृथक्॥५॥
ज्वरावशिष्टो रक्ष्यश्च यावत्कालं यतो यतः।
प्रशान्तः कारणैर्येश्च पुनरावर्त्तते ज्वरः॥ ६॥
याश्चापि पुनरावृत्तिं क्रियाः प्रशमयन्ति तम्।
जगद्धितार्थं तत्सर्वं भगवन्! वक्तुमर्हसि॥ ७॥
तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत्।
ज्वराधिकारे यद्वाच्यं तत् सौम्य! निखिलं शृणु॥ ८॥
ज्वरो विकारो रोगश्च व्याधिरातङ्क एव च।
एकार्थनामपर्य्यायैर्विविधैरभिधीयते॥ ९॥
तस्य प्रकृतिरुद्दिष्टा दोषाः शारीरमानसाः।
देहिनं न हि निर्दोषं ज्वरः समुपसेवते॥ १०॥
क्षयस्तमो ज्वरः पाप्मा मृत्युश्चोक्तोऽयमात्मजः।

कर्मभिः क्लिश्यमानानां पञ्चत्वप्रत्ययात् नृणाम् ॥११॥
द्रव्यस्य प्रकृतिः प्रोक्ता प्रवृत्तिस्तु परिग्रहः ।
निदाने पूर्वमुद्दिष्टा रुद्रकोपाच्च दारुणात् ॥१२॥
द्वितीये हि युगे शर्वमक्रोधव्रतमास्थितम् ।
दिव्यं सहस्रं वर्षाणामसुरा अभिदुद्रुवुः ॥ १३ ॥
तपोविघ्नं शमीकर्त्तुं तपोविघ्नं महात्मनाम् ।
पश्यन् समर्थश्चोपेक्षाञ्चक्रे रुद्रः प्रजापतिः ॥ १४ ॥
पुनर्माहेश्वरं भागं ध्रुवं दक्षः प्रजापतिः ।
प्रायो न कल्पयामास प्रोच्यमानः सुरैरपि ॥ १५ ॥
पाशुपत्य ऋचो याश्च शैव्याश्चाहुतयश्च याः ।
यज्ञसिद्धिकृतास्ताभिर्हीनञ्चैव स दृष्टवान् ॥ १६ ॥
अथोत्तीर्णव्रतो देवो बुद्धा दक्षव्यतिक्रमम् ।
रुद्रो रौद्रं पुरस्कृत्य भावमात्मविदात्मनः ॥ १७ ॥
सृष्ट्वा ललाटे चक्षुर्वै दग्ध्वा तानसुरान् प्रभुः ।
बालं क्रोधाग्निसन्तप्तमसृजच्छतुनाशनम् ॥ १८ ॥
ततो यज्ञः स विध्वस्तो व्यथिताश्च दिवौकसः ।
दाहव्यथापरीताश्च भ्रान्ता भूतगणा दिशः ॥ १८ ॥
अथेश्वरं देवगणः सह सप्तर्षिभिर्विभुम् ।
तत्गिरस्तुवन् यावच्छिवे भावे शिवः स्थितः ॥२०॥
शिवं शिवाय भूतानां स्थितं ज्ञात्वा कृताञ्जलिः ।
क्रोधाग्निरुक्तवान् देवमहं किं करवाणि ते ॥ २१ ॥
तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि ।
जन्मादौ निधने च त्वमपि चावान्तरेषु च ॥ २२ ॥
सन्तापः सारुचिस्तृष्णा चाङ्गमर्द्दो हृदिव्यथा ।
ज्वरप्रभावो जन्मादौ निधने च महत्तमः ॥२३॥
प्रकृतिश्च प्रवृत्तिश्च प्रभावश्च प्रदर्शितः ।

निदाने कारणान्यष्टौ पूर्वोक्तानि विभागशः॥ २४ ॥
आलस्यं नयने सास्रे जृम्भणं गौरवं क्लमः।
ज्वलनातपवायम्बु भक्तिद्वेषावनिश्चितौ॥ २५ ॥
अविपाकास्यवैरस्यं हानिश्च बलवर्णयोः।
शीलवैकृतमल्पञ्च ज्वरलक्षणमग्रजम्॥ २६ ॥
केवलं समनस्कञ्च ज्वराधिष्ठानमुच्यते।
शरीरबलकालस्तु निदाने सम्प्रदर्शितः॥ २७ ॥
ज्वरप्रत्यात्मिकं लिङ्गं सन्तापो देहमानसः।
ज्वरेणाविशता भूतं न हि किञ्चिन्न तप्यते॥ २८ ॥
द्विविधो विधिभेदेन ज्वरः शारीरमानसः।
पुनश्च द्विविधो दृष्टः सौम्यश्चाग्नेय एव च॥ २९ ॥
अन्तर्वेगो बहिर्वेगो द्विविधः पुनरुच्यते।
प्राकृतो वैकृतश्चैव साध्यश्चासाध्य एव च॥ ३० ॥
पुनः पञ्चविधो दृष्टो दोषकालबलाबलात्।
सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ॥ ३१ ॥
पुनराश्रयभेदेन धातूनां सप्तधा मतः।
भिन्नः कारणभेदेन पुनरष्टविधो ज्वरः॥ ३२ ॥
शारीरो जायते पूर्वं देहे मनसि मानसः।
वैचित्यमरतिर्ग्लानिर्मनसस्तापलक्षणम्॥ ३३ ॥
इन्द्रियाणाञ्च वैकल्यं देहसन्तापलक्षणम्।
वातपित्तात्मकः शीतमुष्णं वातकफात्मकः॥ ३४ ॥
इच्छत्युभयमेतत् तु ज्वरो व्यामिश्रलक्षणः।
योगवाहः परं वायुः संयोगादुभयार्थकृत्।
दाहकृत् तेजसा युक्तः शीतकृत् सोमसंश्रयात्॥ ३५ ॥
अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः।
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः।

अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ॥ ३६ ॥
सन्तापोऽभ्यधिको बाह्यस्तृष्णादीनाञ्च मार्दवम्।
बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ॥ ३७ ॥
प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः।
कालप्रकृतिमुद्दिश्य प्रोच्यते प्राकृतो ज्वरः ॥ ३८ ॥
उष्णमुष्णेन संवृद्धं पित्तं शरदि कुप्यति।
चितः शीते कफश्चैवं वसन्ते समुदीर्यते ॥ ३९ ॥
वर्षास्वम्लविपाकाभिरोषधीभिः सवारिभिः।
सञ्चितं पित्तमुद्रिक्तं शरद्यादित्यतेजसा ॥ ४० ॥
ज्वरं सञ्जनयत्याशु तस्य चानुबलः कफः।
प्रकृत्यैव विसर्गाच्च तत्र नानशनाद्भयम् ॥ ४१ ॥
अद्भिरोषधिभिश्चैव मधुराभिश्चितः कफः।
हेमन्ते सूर्यसन्तप्तः स वसन्ते प्रकुप्यति ॥ ४२ ॥
वसन्ते श्लेष्मणा तस्माज्ज्वरः समुपजायते।
आदानमध्ये तस्यापि वातपित्तं भवेदनु ॥ ४३ ॥
आदावन्ते च मध्ये च ज्ञात्वा दोषबलाबलम्।
शरद्वसन्तयोर्विद्वान् ज्वरस्य प्रतिकारयेत् ॥ ४४ ॥
कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वरः।
प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृतः ॥ ४५ ॥
हेतवो विविधास्तस्य निदाने सम्प्रदर्शिताः।
*बलवत् स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥ ४६ ॥*
हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः।
ज्वरः प्राणान्तकृद् यश्च शीघ्रमिन्द्रियनाशनः ॥ ४७ ॥
सप्ताहाद्वा दशाहाद्वा द्वादशाहात् तथैव च।
सप्रलापभ्रमश्वासः तीक्ष्णो हन्याज्ज्वरो नरम् ॥ ४८ ॥
ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः।

असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः ॥ ४९ ॥
स्रोतोभिर्विसृता दोषा गुरवो रसवाहिभिः।
सर्वगात्रानुगास्तब्धा ज्वरं कुर्वन्ति सन्ततम् ॥ ५० ॥
द्वादशाहं दशाहं वा सप्ताहं वा सुदुःसहः।
स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा ॥ ५१ ॥
कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम्।
निष्प्रत्यनीकं कुरुते तस्मात् ज्ञेयः सुदुःसहः ॥ ५२ ॥
यथा धातुं तथा मूत्रं पुरीषञ्चानिलादयः।
युगपच्चानुपद्यन्ते नियमात् सन्तते ज्वरे ॥ ५३ ॥
स शुद्धा वाप्यशुद्धा वा रसादीनामशेषतः।
सप्ताहादिषु कालेषु प्रशमं याति हन्ति वा ॥ ५४ ॥
यदा तु नाति शुध्यन्ति न वा शुध्यन्ति सर्वशः।
द्वादशैते समुद्दिष्टाः सन्ततस्याश्रयास्तदा ॥ ५५ ॥
विसर्गं द्वादशे कृत्वा दिवसे व्यक्तलक्षणः।
दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते ॥ ५६ ॥
इति बुद्ध्वा ज्वरं वैद्य उपक्रामेत् तु सन्ततम्।
क्रियाक्रमविधौ युक्तः प्रायः प्रागपतर्पणैः ॥ ५७ ॥
रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम्।
स प्रत्यनीकं कुरुते कालवृद्धिक्षयात्मकः ॥ ५८ ॥
अहोरात्रे सततको द्वौ कालावनुवर्त्तते।
कालप्रकृतिदूष्याणां प्राप्यैवान्यतमाद्बलम् ॥ ५९ ॥
दोषो मेदोवहा रुद्ध्वा नाडीरन्येद्युकं ज्वरम्।
स प्रत्यनीकः कुरुते एककालमहर्निशम् ॥ ६० ॥
दोषोऽस्थिमज्जगः कुर्यात् तृतीयकचतुर्थकौ।
गतिर्द्व्यहान्तरान्येद्युर्दोषस्योक्तान्यथा परैः ॥ ६१ ॥
रक्तसिराभिसंसृज्य कुर्यादन्येद्युकं ज्वरम्।

मांसस्रोतांस्यनुसृतो जनयेत् तु तृतीयकम् ॥ ६२ ॥
ज्वरं दोषः संसृतो हि मेदोमार्गं चतुर्थकम् ।
अन्येद्युष्कः प्रतिदिनं दिनं हित्वा तृतीयकः ॥
दिनद्वयं यो विश्राम्य प्रत्येति स चतुर्थकः ॥ ६३ ॥
अधिशेते यथा भूमिं बीजं काले च रोहति ।
अधिशेते तथा धातुं दोषः काले च कुप्यति ॥ ६४ ॥
ते वृद्धिं बलकालञ्च प्राप्य दोषास्तृतीयकम् ।
चतुर्थकञ्च कुर्वन्ति प्रत्यनीकं बलक्षयात् ॥ ६५ ॥
कृत्वा वेगं गतबलाः स्वेस्थाने व्यवस्थिताः ।
पुनर्विवृद्धाः स्वे काले ज्वरयन्ति नरं मलाः ॥ ६६ ॥
कफपित्तात् त्रिकग्राही पृष्ठाद्वातकफात्मकः ।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात् तृतीयकः ॥ ६७ ॥
चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः ।
जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसम्भवः ॥ ६८ ॥
विषमज्वर एवान्यश्चातुर्थकविपर्ययः ।
त्रिविधो धातुरेकैको द्विधातुस्थः करोत्ययम् ॥ ६९ ॥
प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः ।
सन्निपाते तु यो भूयान् स दोषः परिकीर्त्तितः ॥ ७० ॥
ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात् ।
कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते ॥ ७१ ॥
गुरुत्वं शीतमुद्वेगः सदनं छर्द्यरोचकौ ।
रसस्थिते वहिस्तापः साङ्गमर्दो विजृम्भणम् ॥ ७२ ॥
रक्तोष्णा पिडकास्तृष्णा सरक्तं ष्ठीवनं मुहुः ।
दाहरागभ्रममदाः प्रलापो रक्तसंस्थिते ॥ ७३ ॥
अन्तर्दाहोऽधिकस्तृष्णा ग्लानिः संसृष्टविट्कता ।
दौर्गन्ध्यं गात्रविक्षेपो ज्वरे मांसस्थिते भवेत् ॥ ७४ ॥

स्वेदस्तीव्रा पिपासा च प्रलापारत्यभीक्ष्णशः ।
स्वगन्धास्यासहत्वञ्च मेदःस्थे ग्लान्यरोचकौ ॥ ७५ ॥
विरेकवमने चोभे सास्थिभेदं प्रकूजनम् ।
विक्षेपणञ्च गात्राणां श्वासश्चास्थिगते ज्वरे ॥ ७६ ॥
हिक्का श्वासस्तथा कासस्तमसश्चातिदर्शनम् ।
मर्मच्छेदो बहिः शैत्यं दाहोऽन्तश्चैव मज्जगे ॥ ७७ ॥
शुक्रस्थानगते शुक्रमोक्षं कृत्वा विनाश्य च ।
प्राणवायुग्निसोमैश्च सार्द्धं गच्छत्यसौ विभुः ॥ ७८ ॥
रसरक्ताश्रितः साध्यो मेदोमांसगतश्च यः ।
अस्थिमज्जगतः कृच्छ्रः शुक्रस्थो नैव सिध्यति ॥ ७९ ॥
हेतुभिर्लक्षणैश्चोक्तः पूर्वमष्टविधो ज्वरः ।
समासेनोपदिष्टस्य व्यासतः शृणु लक्षणम् ॥ ८० ॥
शिरोरुक् पर्वणां भेदो दाहो रोम्णां प्रहर्षणम् ।
कण्ठास्यशोषो वमथुस्तृष्णा मूर्च्छा भ्रमोऽरुचिः ॥ ८१ ॥
स्वप्ननाशोऽतिवाग्जृम्भा वातपित्तज्वराकृतिः ।
शीतको गौरवं तन्द्रा स्तैमित्यं पर्वणाञ्च रुक् ॥ ८२ ॥
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनम् ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ ८३ ॥
मुहुर्दाहो मुहुः शीतं स्वेदस्तम्भौ मुहुर्मुहुः ।
मोहः कासोऽरुचिस्तृष्णा श्लेष्मपित्तप्रवर्त्तनम् ॥ ८४ ॥
इत्येते द्वन्द्वजाः प्रोक्ताः सन्निपातज उच्यते ।
(लिप्ततिक्तास्यता तन्द्रा श्लेष्मपित्तज्वराकृतिः ।)
सन्निपातज्वरस्योर्द्ध्वं त्रयोदशविधस्य हि ॥ ८५ ॥
प्राक् सूचितस्य वक्ष्यामि लक्षणं वै पृथक् पृथक् ।
वातपित्तोल्बणे विद्यालिङ्गं मन्दकफे ज्वरे ॥ ८६ ॥
भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् ।

शैत्यं कासोऽरुचिस्तन्द्रा पिपासा दाहरुग् व्यथा ॥ ८७ ॥
वातश्लेष्मोल्बणे व्याधौ लिङ्गं पित्तावरे विदुः।
छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना ॥ ८८ ॥
मन्दवाते व्यवस्यन्ति लिङ्गं पित्तकफोल्बणे।
सन्ध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः ॥ ८९ ॥
वातोल्बणे स्यादनुगे तृष्णा कण्ठास्यशोषता।
रक्तविण्मूत्रता दाहः स्वेदस्तृड्बलसंक्षयः ॥ ९० ॥
मूर्च्छा चाति त्रिदोषे स्याल्लिङ्गं पित्ते गरीयसि।
आलस्यारुचिहृल्लासदाहस्तृष्णावमिभ्रमैः ॥ ९१ ॥
कफोल्बणं सन्निपातं तन्द्रा कासेन चादिशेत्।
प्रतिश्या छर्दिरालस्यं तन्द्रारुच्यग्निमार्दवम् ॥ ९२ ॥
हीनवाते पित्तमध्ये चिह्नं श्लेष्माधिके मतम्।
हारिद्रमूत्रनेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः ॥ ९३ ॥
हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम्।
शिरोरुग् वेपथुः श्वासः प्रलापश्छर्द्यरोचकाः ॥ ९४ ॥
हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम्।
शीतकं गौरवं तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् ॥ ९५ ॥
हीनपित्ते वातमध्ये लिङ्गं श्लेष्माधिके विदुः।
पर्वभेदोऽग्निमान्द्यं च तृष्णा दाहोऽरुचिर्भ्रमः ॥ ९६ ॥
कफहीने वातमध्ये लिङ्गं पित्ताधिके विदुः।
श्वासकासप्रतिश्याया मुखशोषोऽतिपार्श्वरुक् ॥ ९७ ॥
गुरुत्व शीतमुद्वेग.
समस्थिते वह्निस्तापः लिङ्गं वाताधिके मतम्।
ज्वरोत्था पिडकास्तस्मात्तो वक्ष्यामि लक्षणम् ॥ ९८ ॥

तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ॥ १०० ॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम्।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥ १०१ ॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा।
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥ १०२ ॥
कृशत्वं नातिगात्राणां प्रसतं कण्ठकूजनम्।
कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम् ॥ १०३ ॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च।
चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥ १०४ ॥
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥१०५॥
निदाने त्रिविधा प्रोक्ता या पृथक्‌ज्वराकृतिः।
संसर्गसन्निपातानां तया चोक्तं सलक्षणम् ॥ १०६ ॥
आगन्तुरष्टमो यस्तु स निर्दिष्टश्चतुर्विधः।
अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः ॥ १०७ ॥
शस्त्रलोष्टकशाकाष्ठमुष्ट्यरत्नितलद्विजैः।
तद्विधैश्च हते गात्रे ज्वरः स्यादभिघातजः ॥ १०८ ॥
तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयन्।
सव्यथाशोफवैवर्ण्यं करोति सरुजं ज्वरम् ॥ १०९ ॥
कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः।
सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः ॥ ११० ॥
कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो मलाः।
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणः ॥ १११ ॥
भूताधिकारे व्याख्यातं तदष्टविधलक्षणम्।
विषवृक्षानिलस्पर्शात् तथान्यैर्विषसम्भवैः ॥ ११२ ॥
अभिषक्तस्य चाप्याहुर्ज्वरमेकेऽभिषङ्गजम्।

चिकित्सया विपक्षीव प्रशमं लभते नरः ॥ ११३ ॥
अभिचाराभिशापाभ्यां सिद्धानां यः प्रवर्त्तते ।
सन्निपातज्वरो घोरः स विज्ञेयः सुदुःसहः ॥ ११४ ॥
सन्निपातज्वरस्योक्तं लिङ्गं यत् तस्य तत् स्मृतम् ।
चित्तेन्द्रियशरीराणामर्त्तयोऽन्याय नैकशः ॥११५॥
प्रयोगस्त्वभिचारस्य दृष्ट्वा शापस्य चैव हि ।
स्वयं श्रुत्वानुमानेन लक्ष्यते प्रशमेन वा ॥ ११६ ॥
वैविध्यादभिचारस्य शापस्य च तदात्मके ।
यथाकर्मप्रयोगेण लक्षणं स्यात् पृथग्विधम् ॥ ११७ ॥
ध्याननिःश्वासबहुलं लिङ्गं कामज्वरे स्मृतम् ।
शोकजे वाष्पबहुलं त्रासप्रायं भयज्वरे ॥ ११८ ॥
क्रोधजे बहुसंरम्भं भूतावेशे त्वमानुषम् ।
मूर्च्छामोहमदग्लानिभूयिष्ठं विषसम्भवे ॥ ११९ ॥
केषाञ्चिदेषां लिङ्गानां सन्तापो जायते पुरः ।
पश्चात् तुल्यन्तु केषाञ्चिदेषु कामज्वरादिषु ॥ १२० ॥
कामादिजानामुद्दिष्टं ज्वराणां यद्विशेषणम् ।
कामादिजानां रोगाणामन्येषामपि तत् स्मृतम् ॥ १२१ ॥
ते पूर्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः ।
हित्वौषधिविशिष्टाश्च भवन्त्यागन्तवो ज्वराः ॥ १२२ ॥
मनस्यभिद्रुते पूर्वं कामाद्यैर्न तथा बलम् ।
ज्वरः प्राप्नोति कामाद्यैर्मनो यावन्न दूष्यति ॥ १२३ ॥
संसृष्टाः सन्निपतिताः पृथग्वा कुपिता मलाः ।
रसाख्यं धातुमन्वेत्य पक्तिं स्थानान्निरस्य च ॥ १२४ ॥
स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम् ।
स्रोतांसि रुद्ध्वा सम्प्राप्ताः केवलं देहमुल्वणाः ॥ १२५ ॥
सन्तापमधिकं देहे जनयन्ति नरास्तदा ।

भवत्यत्युष्णसर्वाङ्गो ज्वरितस्तेन चोच्यते ॥ १२६ ॥
स्रोतसां संनिरुद्धत्वात् स्वेदं ना नाधिगच्छति।
स्वस्थानात् प्रच्युते चाग्नौ प्रायशस्तरुणे ज्वरे ॥१२७॥
अरुचिश्चाविपाकश्च गुरुत्वमुदरस्य च।
हृदयस्याविशुद्धिश्च तन्द्रा चालस्यमेव च ॥ १२८ ॥
ज्वरोऽविसर्गी बलवान् दोषाणामप्रवर्त्तनम्।
लालाप्रसेको हृल्लासो क्षुन्नाशोऽविशदं सुखम् ॥ १२९ ॥
स्तब्धसुप्तगुरुत्वञ्च गात्राणां बहुमूत्रता।
न विड्जीर्णा न च ग्लानिर्ज्वरस्यामस्य लक्षणम् ॥ १३० ॥
क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्दवम्।
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम् ॥ १३१ ॥
नवज्वरे दिवास्वप्नस्नानाभ्यङ्गान्नमैथुनम्।
क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत् ॥ १३२ ॥
ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात्।
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ॥ १३३ ॥
लङ्घनेन क्षयं नीते दोषे सन्धुक्षितेऽनले।
विज्वरत्वं लघुत्वञ्च क्षुच्चैवास्योपजायते ॥ १३४ ॥
प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत्।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥ १३५ ॥
लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः।
पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे ॥ १३६ ॥
तृष्यते सलिलञ्चोष्णं दद्याद्वातकफज्वरे।
मद्योत्थे पैत्तिके वाथ शीतलं तिक्तकैः शृतम् ॥ १३७ ॥
दीपनं पाचनञ्चैव ज्वरघ्नमुभयं हि तत्।
स्रोतसां शोधनं बल्यं रुचिस्वेदकरं शिवम् ॥ १३८ ॥
मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः।

शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥ १३९ ॥
कफप्रधानानुत्क्लिष्टान् दोषानामाशयस्थितान् ।
बुद्ध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत् ॥ १४० ॥
अनुपस्थितदोषाणां वमनं तरुणे ज्वरे ।
हृद्रोगं श्वासमानाहं मोहञ्च जनयेत् भृशम् ॥ १४१ ॥
सर्वदेहानुगाः सामा धातुस्था दुःखनिर्हराः ।
दोषाः फलेभ्य आमेभ्यः स्वरसा इव सात्ययाः ॥ १४२ ॥
वमितं लङ्घितं काले यवागूभिरुपाचरेत् ।
यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥ १४३ ॥
यावज्ज्वरमृदूभावात् षडहं वा विचक्षणः ।
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥ १४४ ॥
ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः ।
वातमूत्रपुरीषाणां दोषाणाञ्चानुलोमनाः ॥ १४५ ॥
स्वेदनाय द्रवोष्णत्वाद्द्रवत्वात् तृट्प्रशान्तये ।
आहारभावात् प्राणाय सरत्वाल्लाघवाय च ॥ १४६ ॥
ज्वरघ्नो ज्वरसात्म्यत्वात् तस्मात् पेयाभिरादितः ।
ज्वरानुपचरेद्धीमानृते मद्यसमुत्थितात् ॥ १४७ ॥
मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके ।
ऊर्ध्वगे रक्तपित्ते च यवागू रहिता ज्वरे ॥ १४८ ॥
तत्र तर्पणमेवाग्रे प्रयोज्यं लाजसक्तुभिः ।
ज्वरापहैः फलरसैर्युक्तं समधुशर्करम् ॥ १४९ ॥
द्राक्षादाडिमखर्ज्जूरपियालैः सपरूषकैः ।
तर्पणार्थेषु कर्त्तव्यं तर्पणं ज्वरशान्तये ॥ १५० ॥
ततः सात्म्यबलापेक्षी भोजयेज्जीर्णतर्पणम् ।
तनुना मुद्गयूषेण जाङ्गलानां रसेन वा ॥ १५१ ॥
अन्नकालेषु चाप्यस्मै विधेयं दन्तधावनम् ।

योऽस्य वक्त्ररसस्तस्मात्विपरीत प्रियश्च यत् ॥ १५२ ॥
तदस्य मुखवैशद्यं प्रकाङ्क्षाञ्चावपानयोः।
धत्ते रसविशेषाणामभिज्ञत्वं करोति यत् ॥ १५३ ॥
विशोध्य द्रुमशाखाग्रैरास्यं प्रक्षाल्य चासकृत्।
मस्त्विक्षुरसमद्याद्यैर्यथाहारमवाप्नुयात् ॥ १५४ ॥
पाचनीयं शमनीयं कषायं पाययेत तम्।
ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजयेत् ॥ १५५ ॥
स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम्।
दोषाबद्धाः कषायेण स्तम्भित्वा तरुणे ज्वरे ॥ १५६ ॥
न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते।
यः कषायः कषायः स्यात् स वर्ज्यस्तरुणज्वरे ॥ १५७ ॥
यूषैरम्लैरनम्लैर्वा जाङ्गलैर्वा रसैर्हितैः।
दशाहं तावदश्नीयाल्लघ्वन्नं ज्वरशान्तये ॥ १५८ ॥
अत ऊर्द्धं कफे मन्दे वातपित्तोत्तरे ज्वरे।
परिपक्वेषु दोषेषु सर्पिष्पानं यथामृतम् ॥ १५९ ॥
निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम्।
न सर्पिः पाययेत् वैद्यः कषायैस्तमुपाचरेत् ॥ १६० ॥
यावल्लघुत्वादशनं दद्यान्मांसरसेन च।
परं ह्यलं दोषहरं परं तच्च बलप्रदम् ॥ १६१ ॥
दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम्।
बद्धप्रच्युतदोषं वा निरामं पयसा जयेत् ॥ १६२ ॥
क्रियाभिराभिः प्रशमं न प्रयाति यदा ज्वरः।
अक्षीणबलमांसस्य शमयेत् तं विरेचनैः ॥ १६३ ॥
ज्वरक्षीणस्य न हितं वमनं न विरेचनम्।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥ १६४ ॥
निरूहो बलमग्निञ्च विज्वरत्वं मुदं रुचिम्।

परिपक्वेषु दोषेषु प्रयुक्तः शीघ्रमावहेत् ॥ १६५ ॥
पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत्।
स्रंसनं त्रीन् मलान् वस्तिर्हरेत् पक्वाशयस्थितान् ॥१६६॥
ज्वरे पुराणे संक्षीणे कफपित्ते दृढाग्नये।
रूक्षबद्धपुरीषाणां प्रदद्यादनुवासनम् ॥ १६७ ॥
गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च।
जीर्णे ज्वरे रुचिकरं कुर्य्यात् मूर्द्धविरेचनम् ॥ १६८ ॥
अभ्यङ्गांश्च प्रदेहांश्च ससेकान् सावगाहनान्।
विभज्य शीतोष्णकृतान् कुर्य्याज्जीर्णज्वरे भिषक् ॥१६९॥
तैराशु हि शमं याति वहिर्मार्गगतो ज्वरः।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥ १७० ॥
धूपनाञ्जनयोगैश्च यान्ति जीर्णज्वराः शमम्।
त्वङ्मात्रशेषो येषाञ्च भवत्यागन्तुरन्वयः ॥ १७१ ॥
इति क्रियाक्रमः सिद्धो ज्वरघ्नः सम्प्रकाशितः ॥ १७२ ॥
येषान्त्वेव क्रमस्तानि द्रव्याण्यूर्द्धमतः शृणु ॥ १७३ ॥
रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः ॥ १७४ ॥
अम्लाभिलाषी तामेव दाडिमाम्लां मनागरोम्।
सृष्टविट्पैत्तिको वाथ शीतां मधुयुतां पिवेत् ॥ १७५ ॥
लाजपेयां सुखजरां पिप्पलीनागरैः शृताम्।
पिवेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरार्दितः ॥ १७६ ॥
पेयां वा रक्तशालीनां पार्श्ववस्तिशिरोरुजि।
श्वदंष्ट्राकण्टकारिभ्यां सिद्धां ज्वरहरां पिवेत् ॥ १७७ ॥
ज्वरातिसारी पेयां वा पिवेत् साम्लां शृतां नरः।
पृश्निपर्णीवलाविल्वनागरोत्पलधान्यकैः ॥ १७८ ॥
शृतां विदारी गन्धाद्यैर्दीपनीं स्वेदनीं नरः।

कासी श्वासी च हिक्की च यवागूं ज्वरितः पिबेत् ॥१७९॥
विबद्धवर्चाः सयवाः पिप्पल्यामलकैः शृताम्।
सर्पिष्मतीं पिबेत् पेयां ज्वरी दोषानुलोमनीम् ॥१८०॥
कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी।
मृद्वीकापिप्पलीमूलचव्यामलकनागरैः ॥ १८१ ॥
पिबेत् सबिल्वां पेयां वा ज्वरे सपरिकर्त्तिके।
बलावृक्षाम्लकोलाम्लकलशीधावनीशृताम् ॥ १८२ ॥
अस्वेदनिद्रस्तृष्णार्त्तः पिबेत् पेयां सशर्कराम्।
नागरामलकैः सिद्धां घृतभृष्टां ज्वरापहाम् ॥ १८३ ॥
मुद्गान् मसूरांश्चणकान् कुलत्थान् समकुष्ठकान्।
यूषार्थे यूपसात्म्यानां ज्वरितानां प्रकल्पयेत् ॥ १८४ ॥
पटोलपत्रं सफलं कुलकं पापचैलिकाम्।
कर्कोटकं कठिल्लञ्च विद्याच्छाकं ज्वरे हितम् ॥ १८५ ॥
लावान् कपिञ्जलानेणांश्चकोरानुपचक्रकान्।
कुरङ्गान् कालपुच्छांश्च हरिणान् पृषतान् शशान् ॥१८६॥
प्रदद्यान्मांससात्म्याय ज्वरिताय ज्वरापहान्।
ईषदम्लाननम्लान् वा रसान् काले विचक्षणः ॥ १८७ ॥
कुक्कुटांश्च मयूरांश्च तित्तिरिक्रौञ्चवर्त्तकान्।
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ॥ १८८ ॥
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्।
भिषङ्मात्राविकल्पज्ञो दद्यात्तानपि कालवित् ॥ १८९ ॥
घर्माम्बु चानुपानार्थं तृषिताय प्रदापयेत्।
मद्यं वा मद्यसात्म्याय यथादोषं यथाबलम् ॥ १९० ॥
गुरूष्णस्निग्धमधुरकषायांश्च नवज्वरे।
आहारान् दोषपक्त्यर्थं प्रायशः परिवर्जयेत् ॥ १९१ ॥
अनुपानक्रमः सिद्धो ज्वरे यः सम्यगाश्रितः।

अत ऊर्ध्वं प्रवक्ष्यन्ते कषाया ज्वरनाशनाः ॥ १८२ ॥
पाक्यं शीतकषायं वा मुस्तपर्पटकं पिबेत् ।
सनागरं पर्पटकं पिबेद्वा सदुरालभम् ॥ १८३ ॥
किराततिक्तकं मुस्तं गुडूचीविश्वभेषजम् ।
पाठामुशीरं सोदीच्यं पिबेद्वा ज्वरशान्तये ॥ १८४ ॥
ज्वरघ्ना दीपनाश्चैते कषाया दोषपाचनाः ।
तृष्णारुचिप्रशमना मुखवैरस्यनाशनाः ॥ १८५ ॥
कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ।
निम्बः पटोलस्त्रिफला मृद्वीका मुस्तवत्सकाः ॥ १८६ ॥
किराततिक्तममृता चन्दनं विश्वभेषजम् ।
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः ॥ १८७ ॥
कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ।
सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् ॥ १८८ ॥
वत्सकारग्वधं पाठां षड्ग्रन्थां कटुरोहिणीम् ।
मूर्वां सातिविषां निम्बं पटोलं धन्वयासकम् ॥ १८९ ॥
वचामुस्तमुशीराणि मधुकं त्रिफलां बलाम् ।
पाक्यं शीतकषायं वा पिबेज्ज्वरहरं नरः ॥ २०० ॥
मधूकमुस्तमृद्वीकाकाश्मर्याणि परूषकम् ।
त्रायमाणामुशीराणि त्रिफलां कटुरोहिणीम् ॥ २०१ ॥
पीत्वा निशिस्थितं जन्तुर्ज्वराच्छीघ्रं विमुच्यते ।
बृहत्यौ वत्सकं मुस्तं देवदारु महौषधम् ॥ २०२ ॥
कोलवल्ली च योगोऽयं सन्निपातज्वरापहः ।
द्राक्षामलकमुस्तानि तद्वद्धन्वयवासकम् ॥ २०३ ॥
विबद्धदोषो ज्वरितः कषायं सगुडं पिबेत् ।
त्रिफलां त्रायमाणां च मृद्वीकां कटुरोहिणीम् ॥ २०४ ॥
पित्तश्लेष्महरस्त्वेष कषायो ह्यानुलोमिकः ।

विड्ताशर्करायुताः पित्तश्लेष्मज्वरापहाः ॥ २०५ ॥
शटीपुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा ।
गुडूचीनागरं पाठा किरातं कटुरोहिणी ॥ २०६ ॥
एष शट्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्तिश्वासतन्द्रासु शस्यते ॥ २०७ ॥
बृहत्यौ पुष्करं भार्गी शटी शृङ्गी दुरालभा ।
वत्सकस्य च वीजानि पटोलं कटुरोहिणी ॥ २०८ ॥
बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः ।
कासादिषु च सर्वेषु दद्यात् सोपद्रवेषु च ॥ २०९ ॥
कषायाश्च यथाश्च विषमाज्वरनाशनाः ।
निर्दिष्टा भेषजाध्याये भिषक् तानपि योजयेत् ॥२१०॥
ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः ।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम् ॥२११॥
रूक्षं तेजो ज्वरकरं तेजसा रूक्षितस्य च ।
यः स्यादनुबलो धातुः स्नेहसाध्यः स चानलः ॥ २१२ ॥
कषायाः सर्व एवैते सर्पिषा सह योजिताः ।
प्रयोज्या ज्वरशान्त्यर्थमग्निसन्धुक्षणाः शिवाः ॥ २१३ ॥
पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।
कलिङ्गकस्तथामलकी शारिवातिविषा स्थिरा ॥ २१४ ॥
द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका ।
सिद्धमेतैर्घृतं सद्यो जीर्णज्वरमपोहति ॥ २१५ ॥
*ज्वर कार्श्यं शिरःशूलं अर्द्धशूलं हलीमकम् ।*
श्रमाभितापमग्निञ्च विषमं सन्नियच्छति ॥ २१६ ॥
वासां गुडुची त्रिफलां त्रायमाणां यवासकम् ।
पक्त्वा तेन कषायेण पयसा द्विगुणेन च ॥ २१७ ॥
पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः ।

कल्कीकृतैश्च विपचेत् घृतं जीर्णज्वरापहम् ॥ २१८ ॥

इति वासाद्यं घृतम्।

बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम्।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥ २१९ ॥
कृत्वा कषायं पेष्यार्थे दद्यात् तामलकीं शटीम्।
द्राक्षां पुष्करमूलञ्च मेदामामलकानि च ॥ २२० ॥
घृतं पचेच्च तत् सिद्धं सर्पिर्ज्वरहरं परम्।
क्षयकासशिरःशूलपार्श्वशूलांसतापनुत् ॥ २२१ ॥

इति बलाद्यं घृतम्।

ज्वरिभ्यो बहुदोषेभ्य ऊर्द्ध्वञ्चाधश्च बुद्धिमान्।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥ २२२ ॥
मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा।
युक्तमुष्णाम्बुना पेयं वमनं ज्वरशान्तये ॥ २२३ ॥

इति ज्वरहरं वमनम्।

क्षौद्राम्बुना रसैर्वेक्षोरथवा लवणाम्बुना।
ज्वरे प्रच्छर्दनं शस्तं मद्यैर्वा तर्पणेन वा ॥ २२४ ॥
मृद्वीकामलकानां वा रसं प्रच्छर्दनं पिबेत्।
रसमामलकानां वा घृतभृष्टं ज्वरापहम् ॥ २२५ ॥
लिह्याद्वा त्रैवृतं चूर्णं मधुना मधुसर्पिषा।
पिबेद्वा क्षौद्रमासाद्य सघृतं त्रिफलारसम् ॥ २२६ ॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा।
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥ २२७ ॥
ज्वराद्विमुच्यते पीत्वा मृद्वीकाभिः सहाभयाम्।
पयोऽनुपानमुष्णं वा पीत्वा द्राक्षारसं नरः ॥ २२८ ॥
कासाच्छ्वासाच्छिरःशूलात् पार्श्वशूलाच्चिरज्वरात्।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ २२९ ॥

एरण्डमूलोत्क्वथितं ज्वरात् सपरिकर्तिकात् ।
पयो विमुच्यते पीत्वा तद्वद्बिल्वशलाटुभिः ॥ २३० ॥
त्रिकण्टकबलाव्याघ्रीगुडनागरसाधितम् ।
वर्चोमूत्रविबन्धघ्नं शोफज्वरहरं पयः ॥ २३१ ॥
सनागरं समृद्वीकं सघृतक्षौद्रशर्करम् ।
शृतं पयः सखर्जूरं पिपासाज्वरनाशनम् ॥ २३२ ॥
चतुर्गुणेनाम्भसा वा शृतं ज्वरहरं पयः ।
धारोष्णं वा पयः सद्यो वातपित्तज्वरं जयेत् ॥ २३३ ॥
जीर्णज्वराणां सर्वेषां पयः प्रशमनं परम् ।
पेयं तदुष्णं शीतं वा यथास्वं भेषजैः शृतम् ॥ २३४ ॥
प्रयोजयेत् ज्वरहरान् निरूहान् सानुवासनान् ।
पक्वाशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥ २३५ ॥
पटोलारिष्टपत्राणि सोशीरश्चतुरङ्गुलः ।
ह्रीवेरं रोहिणं तिक्ताश्वदंष्ट्रामदनानि च ॥ २३६ ॥
स्थिरा बला च तत् सर्वं पयस्यर्धोदके शृतम् ।
क्षीरावशेषं निर्यूहं संयुक्तं मधुसर्पिषा ॥ २३७ ॥
कल्कैर्मदनमुस्तानां पिप्पल्या मधुकस्य च ।
वत्सकस्य च संयुक्तं वस्तिं दद्यात् ज्वरापहम् ॥ २३८ ॥
शुद्धे मार्गे हृते दोषे विप्रसन्नेषु धातुषु ।
गताङ्गशूलो लघ्वङ्गः सद्यो भवति विज्वरः ॥ २३९ ॥
आरग्वधमुशीराणि मदनस्य फलानि च ।
चतस्रः पर्णिनीश्चैव निर्यूहमुपकल्पयेत् ॥ २४० ॥
प्रियङ्गुर्मदनं मुस्तं शताह्वा मधुयष्टिका ।
कल्कः सर्पिर्गुडः क्षौद्रं ज्वरघ्नो वस्तिरुत्तमः ॥ २४१ ॥
गुडूचीं त्रायमाणाञ्च चन्दनं मधुकं द्वयम् ।
स्थिरां बलां पृश्निपर्णीं मदनञ्चेति साधयेत् ॥ २४२ ॥

रसं जाङ्गलमांसस्य रसेन सहितं भिषक्।
पिप्पलीफलमुस्तानां कल्केन मधुकस्य च॥ २४३॥
ईषत् सलवणं युक्त्या निरूहं मधुसर्पिषा।
ज्वरप्रशमनं दद्याद्बलस्वेदरुचिप्रदम्॥ २४४॥
जीवन्तीं मधुकं मेदां पिप्पलीं मरिचं वचाम्।
ऋद्धिं रास्नां बलां बिल्वं शतपुष्पां शतावरीम्॥ २४५॥
पिष्ट्वा क्षीरं जलं सर्पिस्तैलञ्च विपचेद्भिषक्।
आनुवासनिकं स्नेहमेतद् विद्याज्ज्वरापहम्॥ २४६॥
पटोलपिचुमर्दाभ्यां गुडुच्या मधुकेन च।
मदनेन श्रृतः स्नेहो ज्वरघ्नमनुवासनम्॥ २४७॥
चन्दनागुरुकाश्मर्य्यपटोलमधुकोत्पलैः।
सिद्धः स्नेहो ज्वरहरः स्नेहवस्तिः प्रयुज्यते॥ २४८॥
यदुक्तं भेषजाध्याये विमाने रोगभेषजे।
शिरोविरेचनं कुर्य्याद् युक्तिज्ञस्तज्ज्वरापहम्॥ २४९॥
यश्च नावनिकं तैलं याय प्राग् धूमवर्त्तयः।
मात्राशितीये निर्दिष्टाः प्रयोज्यास्ता ज्वरेष्वपि॥ २५०॥
अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत्।
यथाभिलाषं शीतोष्णं विभज्य द्विविधं ज्वरम्॥ २५१॥
सहस्रधौतं सर्पिर्वा तैलं वा चन्दनादिकम्।
दाहज्वरप्रशमनं दद्यादभ्यञ्जनं भिषक्॥ २५२॥

अथ चन्दनाद्यं तैलमुपदेक्ष्यामः। चन्दनशैलेयभद्राश्रयका-लानुसार्य्यकालीयक पद्मापद्मकोशीरशारिवामधुक-प्रपौण्डरीक-नागपुष्पोदीच्य-वन्य-पद्मोत्पलनलिन-कुमुदसौगन्धिकपुण्डरीक-शतपत्र-बिसमृणालशालूकशैवालकशेरुकानन्ता-कुशकाशेक्षुदर्भ-शरनलशालिमूलजम्बुवेतसवानीरगुन्द्राककुभाशनाश्वकर्ण-स्यन्दनवातपोथशालतालधवतिनिशखदिरकदरकदम्बकाश्मर्य्य-

फलसर्जप्लक्षवटकपीतनोदुम्बराश्वत्थन्यग्रोधधातकीदूर्वेत्कटक-शृङ्गाटक-मञ्जिष्ठा-ज्योतिष्मतीपुष्करबीजक्रौञ्चादनबदरी-कोविदार-कदलीसंवर्त्तकारिष्टशतपर्वाशीतकुम्भिकाशतावरीश्रीपर्णी-श्रावणी-महाश्रावणी-रोहिणी-शीतपाक्योदनपाकी-कालावला-पयस्या-विदारी-जीवकर्षभ मेदा-महामेदा-मधुरसर्ष्यप्रोक्ताह्वण-शून्यमोचरसारुटरूपकवकुलकुटजपटोलनिम्ब-शाल्मली-नारिकेलखर्जूरमृद्वीकापियालप्रियङ्गुधन्वनालशुमामधुकानामन्येषाञ्च शीतवीर्य्याणां यथालाभमौषधानां कषायं कारयेत्। तेन कषायेण द्विगुणितपयसा तेषामेव च कल्केन कषायाद्दमात्रं मृद्वग्निना साधयेत् तैलम्। एतत् तैलं सद्योदाहं ज्वरमपनयत्येतैरेव चौषधैः सुश्लक्ष्णपिष्टैः सुशीतैः प्रदेहं कारयेत् एतैरेव च शृतशीतं सलिलमवगाहपरिषेकार्थं प्रयुञ्जीत ॥ २५३ ॥

इति चन्दनाद्यं तैलम्।

मध्वारनालक्षीरदधिघृतसलिलसेकावगाहाश्च सद्योदाहज्वरमपनयन्ति शीतस्पर्शत्वादिति ॥ २५४ ॥

भवन्ति चात्र। पौष्करेषु सुशीतेषु पद्मोत्पलदलेषु च।
कह्लाराणाञ्च पत्रेषु क्षौमेषु विमलेषु च ॥ २५५ ॥
चन्दनोदकशीतेषु सुप्याद्दाहार्दितः सुखम्।
हिमाम्बुसिक्ते सदने शीते धारागृहेऽपि वा ॥ २५६ ॥
हेमशङ्खप्रवालानां मणीनां मौक्तिकस्य च।
चन्दनोदकशीतानां संस्पर्शानुरसान् स्पृशेत् ॥ २५७ ॥
स्रक्भिर्नीलोत्पलैः पद्मैर्व्यजनैर्विविधैरपि।
शीतवातावहैर्व्यज्येच्चन्दनोदकवर्षिभिः ॥ २५८ ॥
नद्यस्तडागाः पद्मिन्यो ह्रदाश्च विमलोदकाः।
अवगाहे हिता दाहतृष्णाग्लानिज्वरापहाः ॥ २५९ ॥
प्रियाः प्रदक्षिणाचाराः प्रमदाश्चन्दनोक्षिताः।

सान्त्वयेयुः परैः कामैर्मणिमौक्तिकभूषणाः ॥ २६० ॥
शीतानि चान्नपानानि शीतान्युपवनानि च ।
वायवश्चन्द्रपादाश्च शीतदाहज्वरापहाः ॥२६१ ॥

अथोष्णाभिप्रायिणां ज्वरितानामभ्यङ्गादीनुपक्रमानुपदेक्ष्यामः । अगुरुकुष्ठतगरपत्रनलदशैलेयकध्यामकहरेणुकास्थौणेयक-क्षेमिकैलावराङ्गदपूरतमालपत्रभूतीक-रोहिष-सरलशल्लकी-देवदार्वग्निमन्थ-बिल्व-श्योणाककाश्मर्यपाटलापुनर्नवावृश्चीर-कण्टकारिबृहतीशालिपर्णीपृश्निपर्णीमाषपर्णी-मुद्गपर्णीगोक्षुरकैरण्डशोभाञ्जनकवरुणार्कचिरिविल्वतिल्वकशटी-पुष्करमूलभाण्डीरोरुबुकपत्तुराक्षीवाश्मान्तकशिग्रुमातुलुङ्गमूलकमूषकपर्णीपीलुपर्णीतिलपर्णीमेषशृङ्गीहिंस्रादन्तशठैरावतकभल्लातकास्फोतकाण्डीरात्मजकेपीकाकरञ्जधान्यकाजमोद-पृथ्वीकासुमुखसुरसकुठेरककाण्डीरकालमालकपर्णासक्षवकफणिज्झकभूस्तृणशृङ्गवेरपिप्पलीसर्षपाश्वगन्धारास्नारुहारोहा-वचा-बलातिबलागुडूचीशतपुष्पाशीतवल्लीनाकुलीगन्धनाकुली-श्वेता-ज्योतिष्मतीचित्रकाध्यण्डाम्लचाङ्गेरीबदरकुलत्थ-माषाणामेवंविधानामन्येषां चोष्णवीर्याणां यथालाभमौषधानां कषायं कारयेत् तेन कषायेण तेषामेव च कल्केन सुरासौवीरकतुषोदकमैरेयमेदकदधिमण्डारनालकट्वरप्रतिविनीतेन तैलपात्रं विपाचयेत् । तेन सुखोष्णेन तैलेनोष्णाभिप्रायिणं ज्वरितमभ्यञ्जयात् । तथा शीतज्वरः प्रशाम्यति तैरेव चौषधैः श्लक्ष्णपिष्टैः सुखोष्णैः प्रदेहं कारयेत् । एतेषामेव च सुखोष्णमुत्क्वाथमवगाहनपरिषेकार्थं प्रयुञ्जीत ज्वरप्रशमार्थमिति ॥ २६२ ॥

इति शीतज्वरे अगुर्वादितैलम् ।

भवन्ति चात्र । वयोदशविधः स्वेदः स्वेदाध्याये निदर्शितः ।
मात्राकालविदा युक्तः स च शीतज्वरापहः ॥ २६३ ॥

सा कुटी तच्च शयनं तच्चाच्छादनं शुभम्।
शीतं प्रशमयन्त्याशु धूपाश्चागुरुजा घनाः॥ २६४॥
पवित्रचारुगात्राश्च तरुण्यो यौवनोष्मणा।
आश्लेषाच्छमयन्त्याशु प्रमदाः शिशिरज्वरम्॥ २६५॥
स्वेदनाभ्यञ्जपानानि वातश्लेष्महराणि च।
शीतज्वरं जयन्त्याशु संसर्गवलयोजनात्॥ २६६॥
वातजे श्रमजे चैव पुराणे क्षतजे ज्वरे।
लङ्घनं न हितं विद्याच्छमनैस्तानुपाचरेत्॥ २६७॥
विविध्यामाशयोष्माणं यस्माद्गत्वा रसं नृणाम्।
ज्वरं कुर्वन्ति दोषास्तु हीयतेऽग्निबलं ततः॥ २६८॥
यथा प्रज्वलितो वह्निः स्थाल्यामिन्धनवानपि।
न पचत्योदनं सम्यगनिलप्रेरितो वह्निः॥ २६९॥
पक्तिस्थानात् तदा दोषैरुष्मा क्षिप्तो वह्निर्नृणाम्।
न पचत्यभ्यवहृतं कृच्छ्रात् पचति वा लघु॥ २७०॥
अतोऽग्निबलरक्षार्थं लङ्घनादिक्रमो हितः।
सप्ताहेन हि पच्यन्ते सर्वधातुगता मलाः॥ २७१॥
निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि।
उदीर्णदोषस्तस्मान्निरश्नन् गुरु विशेषतः॥ २७२॥
मुच्यते सहसा प्राणैश्चिरं क्लिश्यति वा नरः।
एतस्मात् कारणाद्विद्वान् वातिकेऽप्यादितो ज्वरे॥२७३॥
नाति गुर्वति वा स्निग्धं भोजयेत् सहसा नरम्।
ज्वरे मारुतजे त्वादावनपेक्ष्यापि हि क्रमम्॥ २७४॥
कुर्यान्निरनुबन्धानामभ्यङ्गादीनुपक्रमान्।
पाययित्वा कषायश्च भोजयेद्रसभोजनम्॥ २७५॥
जीर्णज्वरहरं कुर्यात् सर्वशश्चाप्युपक्रमम्।
श्लेष्मलानामवातानां ज्वरोऽनुष्णो वाताधिकः॥ २७६॥

परिपाकं न सप्ताहे नापि याति मृदूष्मणाम्।
तं क्रमेण यथोक्तेन लङ्घनाल्पाशनादिना ॥ २७७ ॥
आदशाहमुपक्रम्य कषायाद्यैरुपाचरेत्।
सामा ये ये च कफजाः कफपित्तज्वराश्च ये ॥२७८॥
लङ्घनं लङ्घनीयोक्तं तेषु कार्य्यं प्रति प्रति।
वमनैश्च विरेकैश्च वस्तिभिश्च यथाक्रमम् ॥ २७९ ॥
ज्वरानुपचरेद्दोषान् कफपित्तानिलोद्भवान्।
संसृष्टान् सन्निपतितान् बुद्ध्वा तरतमैः समैः ॥ २८० ॥
ज्वरान् दोषक्रमापेक्षी यथोक्तैरौषधैर्जयेत्।
वर्द्धनेनैकदोषस्य क्षपणेणोच्छ्रितस्य वा ॥ २८१ ॥
कफस्थानानुपूर्व्या वा सन्निपातज्वरं जयेत्।
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ॥ २८२ ॥
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते।
रक्तावसेचनैः शीघ्रं सर्पिष्पानैश्च तं जयेत् ॥ २८३ ॥
प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः।
शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति ॥ २८४ ॥
शाखानुसारी रक्तस्य सोऽवसेकात् प्रशाम्यति।
वीसर्पणाभिघातेन यश्च विस्फोटकैर्ज्वरः ॥ २८५ ॥
तत्रादौ सर्पिषः पानं कफपित्तोत्तरो न चेत्।
दौर्बल्यात् देहधातूनां ज्वरो जीर्णोऽनुवर्त्तते ॥ २८६ ॥
बल्यैः संहरणैस्तस्मादाहारैस्तमुपाचरेत्।
कर्म साधारणं कुर्य्यात् तृतीयकचतुर्थके ॥ २८७ ॥
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे।
वातप्रधानं सर्पिर्भिर्वस्तिभिः सानुवासनैः ॥ २८८ ॥
स्निग्धोष्णैरनुपानैश्च शमयेत् विषमज्वरम्।
विरेचनेन पयसा सर्पिषा संस्कृतेन च ॥ २८९ ॥

विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत्।
वमनं पाचनं रूक्षमनुपानं विलङ्घनम् ॥ २८० ॥
कषायोष्णञ्च विषमे ज्वरे शस्तं कफोत्तरे।
योगाः पराः प्रवक्ष्यन्ते विषमज्वरनाशनाः ॥ २८१ ॥
प्रयोक्तव्या मतिमता दोषादीन् प्रविभज्य ये।
सुरासमण्डपानार्थे भक्ष्यार्थे चरणायुधाः ॥ २८२ ॥
तित्तिरिश्च मयूरश्च प्रयोज्योविषमज्वरे।
पिबेद्वा षट्पलं सर्पिरभयां वा प्रयोजयेत् ॥ २८३ ॥
त्रिफलायाः कषायं वा गुडुच्या रसमेव वा।
नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम् ॥ २८४ ॥
पिबेज्ज्वरागमे युक्त्या स्नेहस्वेदोपपादितः।
सर्पिषो महतीं मात्रां पीत्वा वा च्छर्दयेत् पुनः ॥ २८५ ॥
उपयुज्यान्नपानं वा प्रभूतं पुनरुल्लिखेत्।
सान्नं मद्यं प्रभूतं वा पीत्वा स्वप्याज्ज्वरागमे ॥ २८६ ॥
आस्थापनं यापनं वा कारयेद्विषमज्वरे।
पयसा वृषदंशस्य शकृद्वा तदहः पिबेत् ॥ २८७ ॥
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम्।
पिप्पल्यास्त्रिफलायाश्च दध्नस्तक्रस्य सर्पिषः ॥ २८८ ॥
पञ्चगव्यस्य पयसः प्रयोगो विषमज्वरे।
लशुनस्य सतैलस्य प्राग्भक्तमुपसेवनम् ॥ २८९ ॥
मेध्यानामुष्णवीर्य्याणामामिषाणाञ्च भक्षणम्।
हिङ्गुतुल्यानुवैयाघ्रीवसा नस्यं ससैन्धवा ॥ ३०० ॥
पुराणसर्पिः सिंहस्य वसा तद्वत् ससैन्धवा।
सैन्धवं पिप्पलीनाञ्च तण्डुलाः समनःशिलाः ॥ ३०१ ॥
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे।
पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ॥ ३०२ ॥

सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ।
ये धूमा धूपनं यच्च नावनञ्चाञ्जनञ्च यत् ॥ ३०३ ॥
मनोविकारे व्याख्यातं कार्यं तद्विषमज्वरे ।
मणीनामौषधीनाञ्च मङ्गल्यानां विषस्य च ॥ ३०४ ॥
धारणादगदानाञ्च सेवनाच्च भवेज्ज्वरः ।
सोमं सानुचरं देवं समातृगणमीश्वरम् ॥ ३०५ ॥
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ।
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम् ॥ ३०६ ॥
स्तुवन् नामसहस्रेण ज्वरान् सर्वानपोहति ।
ब्रह्माणमश्विनाविन्द्रं हुतभक्षं हिमाचलम् ॥ ३०७ ॥
गङ्गां मरुद्गणांश्चेष्ट्वा पूजयन् जयति ज्वरान् ।
भक्त्या मातापितॄणाञ्च गुरूणां पूजनेन च ॥ ३०८ ॥
ब्रह्मचर्य्येण तपसा सत्येन नियमेन च ।
जपहोमप्रदानेन वेदानां श्रवणेन च ॥ ३०९ ॥
ज्वराद्विमुच्यते शीघ्रं साधूनां दर्शनेन च ।
ज्वरे रसस्थे वमनमुपवासञ्च कारयेत् ॥ ३१० ॥
सेकप्रदेहौ रक्तस्थे तथा संशमनानि च ।
विरेचनं सोपवासं मांसमेदःस्थिते हितम् ॥ ३११ ॥
अस्थिमज्जगते देया निरूहाः सानुवासनाः ।
शापाभिचाराद् भूतानामभिषङ्गाच्च यो ज्वरः ॥ ३१२ ॥
दैवव्यपाश्रयं तत्र सर्वमौषधमिष्यते ।
अभिघातज्वरो नश्येत् पानाभ्यङ्गेन सर्पिषः ॥३१३॥
रक्तावसेकैर्मद्यैश्च सात्म्यैर्मांसरसोदनैः ।
स्नानाद्यो मद्यसात्म्यानां मदिरारसभोजनैः ॥ ३१४ ॥
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया ।
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ॥ ३१५ ॥

हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ।
काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः ।
सद्वाक्यैः शाम्यति ह्याशु ज्वरः क्रोधसमुत्थितः ॥२१६॥
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ।
याति ताभ्यामुभाभ्याञ्च भयशोकसमुत्थितः ॥२१७॥
ज्वरकालञ्च वेगञ्च चिन्तयन् व्यथते तु यः ।
तस्येष्टैस्तु विचित्रैश्च विषयैर्नाशयेत् स्मृतिम् ॥ २१८ ॥
ज्वरप्रमोक्षे पुरुषः कूजन् वमति चेष्टते ।
श्वसन् विवर्णः स्विन्नाङ्गो वेपते लीयते मुहुः ॥ २१९ ॥
प्रलपत्युष्णसर्वाङ्गः शीताङ्गश्च भवत्यपि ।
विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्ष्यते ॥ २२० ॥
सदोषशब्दञ्च शकृद्द्रवं स्रवति वेगवत् ।
लिङ्गान्येतानि जानीयाज्ज्वरमोक्षे विचक्षणः ॥ २२१ ॥
बहुदोषस्य बलवान् प्रायेणाभिनवो ज्वरः ।
सत्क्रिया दोषपक्त्या चेद्विमुञ्चति सुदारुणम् ॥ २२२ ॥
ज्ञात्वा दोषवशाद्वेगं क्रमादुपरमन्ति ये ।
तेषामदारुणो मोक्षो ज्वराणां चिरकारिणाम् ॥२२३॥
विगतक्लममन्तापमव्यथं विमलेन्द्रियम् ।
युक्तं प्रकृतिसत्त्वेन विद्यात् पुरुषमज्वरम् ॥ २२४ ॥
मज्वरो ज्वरमुक्तश्च विदाहीनि गुरूणि च ।
असात्म्यान्यन्नपानानि विरुद्धानि विवर्जयेत् ॥ २२५ ॥
व्यवायमतिचेष्टाश्च स्नानमत्यशनानि च ।
तथा ज्वरः शमं याति प्रशान्तो जायते न च ॥ २२६ ॥
व्यायामञ्च व्यवायञ्च स्नानं चङ्क्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥ २२७ ॥
असञ्जातबलो यस्तु ज्वरमुक्तो निषेवते ।

वर्ज्यमेतदवस्थस्य पुनरावर्त्तते ज्वरः ॥ ३२८ ॥
दुर्हृतेषु च दोषेषु यस्य वा विनिवर्त्तते ।
स्वल्पेनाप्यपचारेण तस्य व्यावर्त्तते पुनः ॥ ३२९ ॥
चिरकालपरिक्लिष्टं दुर्बलं दीनचेतसम् ।
अचिरेणैव कालेन स हन्ति पुनरागतः ॥ ३३० ॥
अथवापि परीपाकं धातुष्वेव क्रमान्मलाः ।
यान्ति ज्वरमकुर्वन्तस्ते तथाप्यपकुर्वते ॥ ३३१ ॥
दीनतां श्वयथुं ग्लानिं पाण्डुतां नान्नकामताम् ।
कण्डूरुत्कोठपिड़काः कुर्वन्त्यग्निञ्च ते मृदुम् ॥ ३३२ ॥
एवमन्येऽपि च गदा व्यावर्त्तन्ते पुनर्गताः ।
अनिर्घातेन दोषाणामल्पैरप्यहितैर्नृणाम् ॥ ३३३ ॥
निवृत्तेऽपि ज्वरे तस्माद्यथावस्थं यथाबलम् ।
यथामार्गं हरेद्दोषं प्रयोगैर्वा शमं नयेत् ॥ ३३४ ॥
मृदुभिः शोधनैः शुद्धिर्यापना वस्तयो हिताः ।
हिताश्च लघवो यूषा जाङ्गलामिषजा रसाः ॥ ३३५ ॥
अभ्यङ्गोद्वर्त्तनस्नानधूपनाभ्यञ्जनानि च ।
हितानि पुनरावृत्ते ज्वरे तिक्तघृतानि च ॥ ३३६ ॥
गुर्व्वभिष्यन्दसात्म्यानां भोजनात् पुनरागते ।
लङ्घनोष्णोपचारादिः क्रमः कार्य्यश्च पूर्ववत् ॥ ३३७ ॥
किराततिक्तकं सिता मुस्तं पर्पटकोऽमृता ।
घ्नन्ति पीतानि चाभ्यासात् पुनरावर्त्तकं ज्वरम् ॥ ३३८ ॥
तस्यां तस्यामवस्थायां ज्वरितानां विचक्षणः ।
ज्वरक्रियाक्रमापेक्षी कुर्य्यात् तत्र चिकित्सितम् ॥३३९॥
रोगराट् सर्वभूतानामन्तकृद्दारुणो ज्वरः ।
तस्माद्विशेषतस्तस्य यतेत प्रशमं भिषगिति ॥ ३४० ॥
भवति चात्र । यथाक्रमं यथाप्रश्नमुक्तं ज्वरचिकित्सितम् ।
अविशेनाग्निवेशाय भूतानां हितमिच्छता ॥ ३४१ ॥

## चतुर्थोऽध्यायः ।

### रक्तपित्तचिकित्सितं ।

विहरन्तं जितात्मानं पञ्चगङ्गे पुनर्वसुम् ।
प्रश्नस्योवाच निर्मोहमग्निवेशोऽग्निवर्चसम् ॥ १ ॥
भगवन् ! रक्तपित्तस्य हेतुरुक्तः सलक्षणः ।
वक्ष्यं यत् परं तस्य वक्तुमर्हसि तद्गुरो ! ॥ २ ॥

गुरुरुवाच ।

महागदं महावीर्यमग्निवच्छीघ्रकारि च ।
हेतुलक्षणविच्छीघ्रं रक्तपित्तमुपाचरेत् ॥ ३ ॥
तस्योष्णं तीक्ष्णमम्लञ्च कटूनि लवणानि च ।
घर्मश्चान्नविदाहश्च हेतुः पूर्वं निदर्शितः ॥ ४ ॥
तैर्हेतुभिः समुद्दिष्टं पित्तं रक्तं प्रपद्यते ।
तद्योनित्वात् प्रपन्नञ्च वर्द्धते तत् प्रदूषयत् ॥ ५ ॥
तस्योष्मणा द्रवो धातुर्धातोर्धातोः प्रसिच्यते ।
स्विद्यतस्तेन संवृद्धिं भूयस्तदधिगच्छति ॥ ६ ॥
संयोगाद् दूषणात् तत् तु सामान्याद्गन्धवर्णयोः ।
रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः ॥ ७ ॥
प्लीहानञ्च यकृच्चैव तदधिष्ठाय वर्त्तते ।
स्रोतांसि रक्तवाहीनि तन्मूलानि हि देहिनाम् ॥ ८ ॥
सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च कफान्वितम् ।
श्यावारुणं सफेनञ्च तनु रूक्षञ्च वातिकम् ॥ ९ ॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम् ।
मेचकागारधूमाभमञ्जनाभञ्च पैत्तिकम् ॥ १० ॥
संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम् ।
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ॥ ११ ॥

यत् त्रिदोषमसाध्यं तन्मन्दाग्नेरतिवेगवत्।
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत्॥ १२॥
गतिरूर्द्धमधश्चैव रक्तपित्तस्य दर्शिता।
ऊर्द्धा साप्तविधा द्वारा द्विद्वारा त्वधरा गतिः॥ १३॥
सप्तच्छिद्राणि शिरसि द्वे चाधः साध्यमूर्द्धगम्।
याप्यन्त्वधोगमं मार्गौ द्वावसाध्यं प्रपद्यते॥ १४॥
यदा तु सर्वच्छिद्रेभ्यो रोमकूपेभ्य एव च।
वर्त्तते तामसङ्ख्येयां गतिं तस्याहुरन्तिकीम्॥ १५॥
यच्चोभयाभ्यां मार्गाभ्यामतिमात्रं प्रवर्त्तते।
तुल्यं कुणपगन्धेन रक्तं कृष्णमतीव च॥ १६॥
संसृष्टं कफवाताभ्यां कण्ठे सज्जति चापि यत्।
यच्चाप्युपद्रवैः सर्वैर्यथोक्तैः समभिद्रुतम्॥ १७॥
हारिद्रनीलहरितताम्रैर्वर्णैरुपद्रुतम्।
क्षीणस्य कासमानस्य यच्च तच्च न सिध्यति॥ १८॥
यद्द्विदोषानुगं यद्वा शान्तं शान्तं प्रकुप्यति।
मार्गान्मार्गं चरेद्यद्वा याप्यं पित्तमसृक् च तत्॥ १९॥
एकमार्गं बलवतो नातिवेगं नवोत्थितम्।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम्॥ २०॥
स्निग्धोष्णमुष्णरूक्षञ्च रक्तपित्तस्य कारणम्।
अधोगस्योत्तरं प्रायः पूर्वं स्यादूर्द्धगस्य तु॥ २१॥
ऊर्द्धगं कफसंसृष्टमधोगं मारुतानुगम्।
द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्त्तते॥ २२॥
अधोगवन्नमांसस्य रक्तपित्तं यदश्नतः।
तद्दोषदुष्टमुत्क्लिष्टं नाडी स्रोतःसमर्पति॥ २३॥
गलग्रहं पूतिनस्यं मूर्च्छायमरुचिं ज्वरम्।
गुल्मं प्लीहानमानाहं किलासं कृच्छ्रमूत्रताम्॥ २४॥

कुष्ठान्यर्शांसि वीसर्पं वर्णनाशं भगन्दरम्।
बुद्धीन्द्रियोपरोधञ्च कुर्य्यात् स्तम्भितमादितः ॥ २५ ॥
तस्मादुपेक्ष्यं बलिनो बलदोषविचारिणा।
रक्तपित्तं प्रथमतः प्रवृद्धं सिद्धिमिच्छता ॥ २६ ॥
प्रायेण हि समुत्क्लिष्टमामदोषाच्छरीरिणाम्।
वृद्धिं प्रयाति पित्तासृक् तस्माल्लङ्घनमादितः ॥ २७ ॥
मार्गदोषानुबन्धञ्च निदानं प्रसमीक्ष्य च।
लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत् ॥ २८ ॥
ह्रीवेरं चन्दनोशीरमुस्तपर्पटकैः शृतम्।
केवलं शृतशीतं वा दद्यात् तोयं पिपासवे ॥ २९ ॥
ऊर्द्ध्वगे तर्पणं पूर्वं पेयां पूर्वमधोगते।
कालसात्म्यानुबन्धज्ञो दद्यात् प्रकृतिकल्पवित् ॥ ३० ॥
जलं खर्ज्जूरमृद्वीकामधूकैः सपरूषकैः।
शृतशीतं प्रयोक्तव्यं तर्पणार्थे सशर्करम् ॥ ३१ ॥
तर्पणं सघृतक्षौद्रं लाजाचूर्णैः प्रयोजयेत्।
ऊर्द्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥ ३२ ॥
मन्दाग्नेरम्लसात्म्याय तत् साम्लमपि कल्पयेत्।
दाड़िमामलकैर्विद्वादम्लार्थञ्चानुदापयेत् ॥ ३३ ॥
शालिषष्टिकनीवारकोरदूषप्रशातिकाः।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥ ३४ ॥
मुद्गा मसूराश्चणकाः समकुष्ठाढ़कीफलाः।
प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम् ॥ ३५ ॥
पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः।
किरातत्तिक्तकं शाकं गण्डीरः सकटिल्लकः ॥ ३६ ॥
कोविदारस्य पुष्पाणि काश्मर्य्यस्याथ शाल्मलेः।
अन्नपानविधौ शाकं यच्चान्यद्रक्तपित्तनुत् ॥ ३७ ॥

शाकार्थं शाकसात्म्यानां तच्छस्तं रक्तपित्तिनाम् ।
स्विन्नं वा सर्पिषा भृष्टं यूषवद्वा विपाचितम् ॥ ३८ ॥
पारावतान् कपोतांश्च लावान् रक्ताक्षवर्त्तकान् ।
शशान् कपिञ्जलानैणान् हरिणान् कालपुच्छकान् ॥३९॥
रक्तपित्तहितान् विद्याद्रसांस्तेषां प्रयोजयेत् ।
ईषदम्लाननम्लान् वा घृतभृष्टान् सशर्करान् ॥ ४० ॥
कफानुगे यूषशाकं दद्याद्वातानुगे रसम् ।
रक्तपित्ते यवागूनामतः कल्पः प्रवक्ष्यते ॥ ४१ ॥
पद्मोत्पलानां किञ्जल्कः पृश्निपर्णी प्रियङ्गुकाः ।
जले साध्यरसे तस्मिन् पेया स्याद्रक्तपित्तिनाम् ॥ ४२ ॥
चन्दनोशीरलोध्राणां रसे तद्वत् सनागरे ।
किराततिक्तकोशीरमुस्तानां तद्वदेव च ॥ ४३ ॥
धातकीधन्वयासाम्बु विल्वानां वा रसे शृताः ।
मसूरपृश्निपर्ण्योर्वा स्थिरा मुद्गरसेन वा ॥ ४४ ॥
रसे हरेणुकाना वा सघृते सबलारसे ।
सिद्धाः पारावतादीनां रसे वा स्युः पृथक् पृथक् ॥४५॥
उल्लुप्ता रक्तपित्तघ्नाः शीताः समधुशर्कराः ।
यवाग्वः कल्पना चैषां कार्या मांसरसेष्वपि ॥ ४६ ॥
शशः सवास्तुकः शस्तो विबन्धे रक्तपित्तिनाम् ।
वातोल्बणे तित्तिरिः स्यादुदुम्बररसे शृतः ॥ ४७ ॥
मयूरः प्लक्षनिर्यूहे न्यग्रोधस्य च कुक्कुटः ।
रसे विल्वोत्पलादीनां वर्त्तकक्रकरौ हितौ ॥ ४८ ॥
तृष्यते तिक्तकैः सिद्धं तृण्याद्यं वा फलोदकम् ।
सिद्धं विदारिगन्धाद्यैरथवा शृतशीतलम् ॥ ४९ ॥
ज्ञात्वा दोषावनुबन्धौ बलमात्म्यमेव च ।
सर्व पिपासवे दद्यात् विसर्गाटम्पगोऽपि वा ॥ ५० ॥

निदानं रक्तपित्तस्य यत् किञ्चित् संप्रकाशितम्।
जीवितारोग्यकामैस्तन्न सेव्यं रक्तपित्तिभिः॥ ५१॥
दृष्टान्नपाने निर्दिष्टं क्रमशो रक्तपित्तिषु।
वक्ष्यते बहुदोषाणां कार्य्यं बलवताञ्च यत्॥ ५२॥
अक्षीणबलमांसस्य यस्य सन्तर्पणोत्थितम्।
बहुदोषं बलवतो रक्तपित्तं शरीरिणः॥ ५३॥
काले संशोधनार्हस्य तद्धरेन्निरुपद्रवम्।
विरेचनेनोर्द्ध्वभागमधोगं वमनेन च॥ ५४॥
त्रिवृतामभयां प्राज्ञः फलान्यारग्वधस्य वा।
त्रायमाणागवाक्षीर्वा मूलमामलकानि वा॥ ५५॥
विरेचनं प्रयुञ्जीत प्रभूतमधुशर्करम्।
रसः प्रशस्यते तेषां रक्तपित्ते विशेषतः॥ ५६॥
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः।
सशर्करं वा सलिलमिक्षूणां रस एव वा॥ ५७॥
वत्सकस्य फलं मुस्तं मदनं मधुकं मधु।
अधोवहे रक्तपित्ते वमनं परमुच्यते॥ ५८॥
ऊर्द्ध्वगे गुरुकोष्ठस्य तर्पणादिक्रमो हितः।
अधोवहे यवाग्वादिर्न चेत् स्यान्मारुतो बली॥५९॥
बलमांसपरिक्षीणं शोकभाराध्वकर्षितम्।
ज्वलनादित्यसन्तप्तमन्यैर्वा क्षीणमामयैः॥ ६०॥
गर्भिणीं स्थविरं बालं रूक्षाल्पप्रमिताशनम्।
अवम्यमविरेच्यं वा यं पश्येद्रक्तपित्तिनम्॥ ६१॥
शोषेण सानुबन्धं वा यस्य संशमनी क्रिया।
शस्यते रक्तपित्तस्य परो या तु प्रवक्ष्यते॥ ६२॥
अटरूषकमृद्वीकापथ्याक्वाथः सशर्करः।
मधुमिश्रः श्वासकासरक्तपित्तनिबर्हणः॥ ६३॥

अटरूपकनिर्यूहे प्रियङ्गुं मृत्तिकाञ्जने ।
विनीय लोध्रं क्षौद्रञ्च रक्तपित्ततुदं पिबेत् ॥ ६४ ॥
पद्मकं पद्मकिञ्जल्कं दूर्वां वास्तूकमुत्पलम् ।
नागपुष्पञ्च लोध्रञ्च तेनैव विधिना पिबेत् ॥ ६५ ॥
प्रपौण्डरीकं मधुकं मधु चाश्वशकृद्रसे ।
यवासभृङ्गरजसोर्मूलं वा गोशकृद्रसे ॥ ६६ ॥
विनीय रक्तपित्तघ्नं पेयं स्यात् तण्डुलाम्बुना ।
युक्तं वा मधुसर्पिर्भ्यां लिह्याद् गोऽश्वशकृद्रसम् ॥ ६७ ॥
खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः ।
पुष्पचूर्णानि मधुना लिह्याद्रा रक्तपित्तिकः ॥ ६८ ॥
शृङ्गाटकानां लाजानां मुस्तखर्जूरयोरपि ।
लिह्याच्चूर्णानि मधुना पद्मानां केशरस्य च ॥ ६९ ॥
धन्वजानामसृग्लिह्यान्मधुना मृगपक्षिणाम् ।
सक्षौद्रं ग्रथितं रक्तं लिह्यात् पारावतं शकृत् ॥ ७० ॥

उशीरकालीयकलोध्रपद्मक-
प्रियङ्गुकाकट्फलशङ्खगैरिकाः ।
पृथक् पृथक् चन्दनतुल्यभागिकाः
सशर्करास्तण्डुलधावनाप्लुताः ॥ ७१ ॥

रक्तं सपित्तं तमकं पिपासां दाहञ्च पीताः शमयन्ति सद्यः ।
किराततिक्तं क्रमुकं समुस्तं प्रपुण्डरीकं कमलोत्पले च ॥७२॥
ह्रीवेरमूलानि पटोलपत्रं दुरालभा पर्पटको मृणालम् ।
धनञ्जयोदुम्बरवेतसत्वङ्न्यग्रोधशालेययवासकत्वक् ॥७३॥
तुगालतावेतसतण्डुलीयं सशारिवं मोचरसः समङ्गा ।
पृथक् पृथक् चन्दनयोजितानि तेनैव कल्पेन हितानि तत्र ॥७४॥

निशि स्थिता वा सरसीकृता वा
कल्कीकृता वा मृदिता शृता वा ।

एते समस्ता गणशः पृथग्वा
रक्तं सपित्तं शमयन्ति योगाः ॥ ७५ ॥

मुद्गाः सलाजाः सयवाः सकृष्णाः सोशीरमुस्ताः सह चन्दनेन ।
बलाजले पर्य्युषितः कषायो रक्तं सपित्तं शमयत्युदीर्णम् ॥७६॥

वैदूर्य्यमुक्तामणिगैरिकाणां मृच्छङ्खहेमामलकोदकानाम् ।
मधूदकस्येक्षुरसस्य चैव पानाच्छमं गच्छति रक्तपित्तम् ॥७७॥

उशीरपद्मोत्पलचन्दनानां पक्वस्य लोष्टस्य च यः प्रसादः ।
सशर्करः क्षौद्रयुतः सुशीतो रक्तातियोगप्रशमाय देयः ॥७८॥

प्रियङ्गुकाचन्दनलोध्रसारिवामधूकमुस्ताभयधातकीजलम् ।
समृत्प्रसादं सह यष्टिकाम्बुना सशर्करं रक्तनिबर्हणं परम् ॥७९॥

कषाययोगैर्विविधैर्यथोक्तैर्दीप्तेऽनले श्लेष्मणि निर्जिते च ।
यद्रक्तपित्तं प्रशमं न याति तत्रानिलःस्यादनु तत्र कार्य्यम् ॥८०॥

छागं पयः स्यात् प्रथमं प्रयोगे गव्यं शृतं पञ्चगुणे जले वा ।
सशर्करं माक्षिकसंप्रयुक्तं विदारिगन्धादिगणैः शृतं वा ॥ ८१ ॥

द्राक्षाशृतं नागरकैः शृतं वा बला शृतं गोक्षुरकैः शृतं वा ।
सजीवकं सर्षभकं ससर्पिः पयः प्रयोज्यं सितया शृतं वा ॥८२॥

शतवरीगोक्षुरकैः शृतं वा शृतं पयो वाप्यथ पर्णिनीभिः ।
रक्तं छिनत्त्याशु विशेषतस्तु यन्मूत्रमार्गात् सरुजं प्रयाति ॥८३॥

विशेषतो विट् प्रभवे प्रवृत्ते पयोमृतं मोचरसेन सिद्धम् ।
वटावरोहैर्वटशुङ्गकैर्वा ह्रीवेरनीलोत्पलनागरैर्वा ॥ ८४ ॥

कषाययोगान् पयसा पुरा वा पीत्वाऽनुदद्यात् पयसाऽनुशालीन् ।
कषाययोगैरथवा विपक्वैः पिबेत् सर्पिस्तिलस्यैव ॥ ८५ ॥

शाखां सशाखां सपलाशमूलां कृत्वा कषायं कुसुमानि चास्य ।
प्रदाय कल्कं विपचेद्घृतं तत् सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥८६॥

इति वासाघृतम् ।

पलाशवृन्तस्य रसेन सिद्धं तस्यैव कल्केन मधुद्रवेण ।

लिह्याद्घृतं वत्सककल्कसिद्धं तद्वत् समङ्गोत्पललोध्रसिद्धम् ॥८७॥
स्यात् त्रायमाणा विधिरेष एव सोडुम्बरे चैव पटोलपत्रे।
सर्पींषि पित्तज्वरनाशनानि सर्वाणि शस्तानि च रक्तपित्ते ॥८८॥
इति रक्तपित्तनाशकघृतवर्गः।
अभ्यङ्गयोगाः परिषेचनानि सेकावगाहाः शयनानि वेश्म।
शीतो विधिर्वस्तिविधानमग्र्यं पित्तज्वरे यत् प्रशमाय दृष्टम् ॥८९
तद्रक्तपित्ते निखिलेन कार्य्यं कालञ्च मात्राञ्च पुरा समीक्ष्य।
सर्पिर्गुड़ा ये च हिताः क्षतेभ्यस्तेरक्तपित्तं शमयन्ति सद्यः ॥९०॥
कफानुबन्धे रुधिरे सपित्ते कण्ठागमे स्याद्ग्रथिते प्रयोगः।
युक्तस्य युक्त्या मधुसर्पिषोश्च क्षारस्य चैवोत्पलनालजस्य ॥ ९१ ॥
मृणालपद्मोत्पलकेशराणां तथा पलाशस्य तथा प्रियङ्गोः।
तथा मधूकस्य तथासनस्य क्षाराः प्रयोज्या विधिनैव तेन ॥९२॥
शतावरीं दाड़िमतिन्तिड़ीकं काकोलीमेदे मधुकं विदारीम्।
पिष्ट्वा च मूलं फलपूरकस्य घृतं पचेत् क्षीरचतुर्गुणेन ॥ ९३ ॥
कासज्वरानाहविबन्धशूलं तद्रक्तपित्तञ्च घृतं निहन्यात्।
यत् पञ्चमूलैरथ पञ्चभिर्वा सिद्धं घृतं तच्च तदर्थकारि ॥९४॥
इति शतमूलादिघृतम्।
कषाययोगा य इहोपदिष्टास्ते चावपीड़े भिषजा प्रयोज्याः।
घ्राणात् प्रवृत्तं रुधिरं सपित्तं यदा भवेन्निःसृतदुष्टदोषम् ॥९५॥
रक्ते प्रदुष्टे ह्यवपीडबन्धे दुष्टप्रतिश्याय शिरोविकाराः।
रक्तं सपूयं कुणपश्च गन्धः स्याद्घ्राणनाशः क्रिमयश्च दुष्टाः ॥९६॥
नीलोत्पलं गैरिकशङ्खयुक्तं सचन्दनं स्यात् तु सिताजलेन।
नस्य तथाम्रास्थिरसः समङ्गाः सधातकीमोचरसः सलोध्रः ॥९७॥
द्राक्षारसस्येक्षुरसस्य नस्यं क्षीरस्य दूर्वास्वरसस्य चैव।
यवासमूलानि पलाण्डुमूलं नस्यं तथा दाडिमपुष्पतोयम् ॥९८॥
पियालतैलं मधुकं पयश्च सिद्धं घृतं माहिषमाजकं वा।

श्राम्राखिपूर्वः पयसा च नस्य सशारिवैः स्यात् कमलोत्पलैश्च॥९९
भद्रश्रियं लोहितचन्दनञ्च प्रपौण्डरीकं कमलोत्पले च।
उशीरवाणीरजलं मृणालं सहस्रवीर्यं मधुकं पयस्या ॥१००॥
शालीक्षुमूलानि यवासगुन्द्रामूलं नलानां कुशकाशयोश्च।
कुचन्दनं शैवलमप्यनन्ताकालानुसार्यौ तृणमूलमृद्धिः ॥१०१॥
मूलानि पुष्पाणि च वारिजानां प्रलेपनं पुष्करिणीमृदश्च।
उदुम्बराश्वत्थमधूकलोध्राः कषायवृक्षाः शिशिराश्च सर्वे ॥१०२॥
प्रदेहकल्पे परिषेचने च तथावगाहे घृततैलसिद्धौ।
रक्तस्य पित्तस्य च शान्तिमिच्छन् भद्रश्रियादीनि भिषक्प्रयुञ्ज्यात्१०३
धारागृहं भूमिगृहञ्च शीतं वनञ्च रम्यं जलवातशीतम्।
वैदूर्य्यमुक्तामणिभाजनानां स्पर्शांश्च दाहे शिशिराम्बुशीताः ॥१०४
पत्राणि पुष्पाणि च वारिजानां क्षौमञ्च शीतं कदलीदलाश्च।
प्रच्छादनार्थं शयनासनानां पद्मोत्पलानाञ्च दलाः प्रशस्ताः ॥१०५
प्रियङ्गुकाचन्दनरूषितानां स्पर्शाः प्रियाणाञ्च वराङ्गनानाम्।
दाहे प्रशस्ताः सजलाः सुशीताः पद्मोत्पलानाञ्च कलापवाताः१०६
सरिद्ध्रदानां हिमवद्दरीणां चन्द्रोदयानां कमलाकराणाम्।
मनोऽनुकूलाः शिशिराश्च सर्वाः कथाः सरक्तं शमयन्ति पित्तम्१०७
भवति चात्र। हेतुं वृद्धिं संज्ञां स्थानं लिङ्गं पृथक् प्रदुष्टस्य।
मार्गौ साध्यमसाध्यं याप्यं कार्य्यक्रमश्चैव ॥ १०८ ॥
पानान्नमिष्टमेव च वर्ज्यं संशोधनञ्च शमनञ्च।
गुरुरुक्तवान् यथावच्चिकित्सिते रक्तपित्तस्य॥ १०९ ॥

---

## पञ्चमोऽध्यायः।

### गुल्मचिकित्सितम्।

सर्वप्रजानां पितृवच्छरण्यः पुनर्वसुर्भूतभविष्यदीशः।
चिकित्सितं गुल्मनिबर्हणार्थं प्रोवाच सिद्धं वदतां वरिष्ठः ॥१॥
विरुद्धश्लेष्मपित्तातिपरिक्षयाद्वा तैरेव वृद्धैः परिपीडितो वा।

वेगैरुदीर्णैर्विहितैरधो वा बाह्याभिघातैरतिपूरणैर्वा ॥ २ ॥
रूक्षान्नपानैरतिसेवनैर्वा शोकेन मिथ्याप्रतिकर्मणा वा ।
विचेष्टितैर्वा विषमातिमात्रैः कोष्ठे प्रकोपं समुपैति वायुः ॥३॥
कफञ्च पित्तञ्च स दूषयित्वा मोद्धूय मार्गान् विनिबध्य ताभ्याम् ।
हृत्प्लीहपार्श्वोदरबस्तिशूलं करोत्यधो याति न बद्धमार्गः ॥४॥
पक्वाशये पित्तकफाशये वा स्थितः स्वतन्त्रः परसंश्रयो वा ।
स्पर्शोपलभ्यः परिपिण्डितत्वाद् गुल्मो यथादोषमुपैति नाम ॥५॥
बस्तौ हि नाभ्यां हृदि पार्श्वयोर्वा स्थानानि गुल्मस्य भवन्ति पञ्च
पञ्चात्मकस्य प्रभवन्तु तस्य वक्ष्यामि लिङ्गानि चिकित्सितञ्च ॥६॥
रूक्षान्नपानं विषमातिमात्रं विचेष्टितं वेगविनिग्रहश्च ।
शोकोऽभिघातोऽतिबलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥७॥
यः स्थानसंस्थानरुजां विकल्पं विड्वातसङ्गं गलवक्त्रशोषम् ।
श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वांसशिरोरुजञ्च ॥८॥
करोति जीर्णेऽभ्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च ।
वातात् स गुल्मो न च तत्र रूक्षं कषायतिक्तं कटु चोपशेते ॥९॥
कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा ।
आमाभिघातो रुधिरञ्च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥१०॥
ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्यति भोजने च ।
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम् ॥११॥
शीतं गुरु स्निग्धमचेष्टनञ्च सम्पूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसम्भवस्य सर्वस्तु दृष्टो निचयात्मकस्य ॥१२॥
स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि ।
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ॥१३॥
निमित्तलिङ्गान्युपलभ्य गुल्मे द्विदोषजे दोषबलाबलञ्च ।
व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् ॥१४॥
महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम् ।

मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् १५
ऋतावनाहारतया भयेन विरूक्षणैर्वेगविनिग्रहैश्च।
संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रियं रक्तभवोऽभ्युपैति ॥१६॥
यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात् सशूलः समगर्भलिङ्गः।
स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः १७

क्रियाक्रममतः सिद्धं गुल्मिनां गुल्मनाशनम्।
प्रवक्ष्याम्यत ऊर्द्ध्वञ्च योगान् गुल्मनिवर्हणान् ॥ १८ ॥
रूक्षव्यायामजं गुल्मं वातिकं तीव्रवेदनम्।
बद्धविण्मारुतं स्नेहैरादितः समुपाचरेत् ॥ १९ ॥
भोजनाभ्यञ्जनैः पानैर्निरूहैः सानुवासनैः।
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ॥ २० ॥
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम्।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ २१ ॥
स्नेहपानं हितं गुल्मे विशेषेणोर्द्धनाभिजे।
पक्वाशयगते वस्तिरुभयं जठराश्रये ॥ २२ ॥
दीप्तेऽग्नौ वातिके गुल्मे विबन्धेऽनिलवर्च्चसोः।
वृंहणान्यन्नपानानि स्निग्धोष्णानि प्रयोजयेत् ॥ २३ ॥
पुनःपुनः स्नेहपानं निरूहाः सानुवासनाः।
प्रयोज्या वातगुल्मेषु कफपित्तानुरक्षिणा ॥ २४ ॥
कफे वाते जितप्राये पित्तं शोणितमेव वा।
यदि कुप्यति वा तस्य क्रियमाणे चिकित्सिते ॥ २५ ॥
यथोल्बणस्य दोषस्य तत्र कार्य्यं भिषग्जितम्।
आदावन्ते च मध्ये च मारुतं परिरक्षता ॥ २६ ॥
वातगुल्मे कफो वृद्धो हत्वाग्निमरुचिं यदि।
हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत् तु तम् ॥ २७ ॥
शूलानाहविबन्धेषु गुल्मे वातकफोल्बणे।

वर्त्तयो गुलिकाश्चूर्णं कफवातहरं मतम् ॥ २८ ॥
पित्तं वा यदि संवृद्धं सन्तापं वातगुल्मिनः ।
कुर्य्याद्विरेच्यः स भवेत् स्नेहनैरानुलोमिकैः ॥ २८ ॥
गुल्मो यद्यनिलादीनां क्षते सम्यग्भिषग्जिते ।
न प्रशाम्यति रक्तेन संसृतेनोपशाम्यति ॥ ३० ॥
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ।
रूक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम् ॥ ३१ ॥
पित्तं वा पित्तगुल्मं वा ज्ञात्वा पक्वाशयस्थितम् ।
कालवित् निर्हरेत् सद्यः सतिक्तैः क्षीरबस्तिभिः ॥ ३२ ॥
पयसा वा सुखोष्णेन सतिक्तेन विरेचयेत् ।
भिषगग्निबलापेक्षी सर्पिषा तैल्वकेन वा ॥ ३३ ॥
तृष्णाज्वरपरीदाहशूलस्वेदाग्निमार्दवे ।
गुल्मिनामरुचौ चापि रक्तमेवावसेचयेत् ॥ ३४ ॥
छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ।
रक्तं हि व्यम्लतां याति तस्य नास्ति न चास्ति रुक् ॥३५॥
हृतदोषं परिम्लानं जाङ्गलैस्तर्पितं रसैः ।
समाश्वस्तञ्च शेषार्त्तिं सर्पिषा पुनराचरेत् ॥ ३६ ॥
रक्तपित्तातिवृद्धत्वात् क्रियामनुपलभ्य च ।
यदि गुल्मो विदह्येत शस्त्रं तत्र भिषग्जितम् ॥ ३७ ॥
गुरुः कठिनसंस्थानो गूढमांसोत्तराश्रयः ।
अविवर्णः स्थिरश्चैव ह्यपक्वो गुल्म उच्यते ॥ ३८ ॥
दाहशूलाग्निसंक्षोभस्वप्ननाशारतिज्वरैः ।
विदह्यमानं जानीयाद्गुल्मं तमुपनाहयेत् ॥ ३८ ॥
विदाहलक्षणे गुल्मे बहिस्तुङ्गे समुन्नते ।
श्यावे सरक्तपर्य्यन्ते संस्पर्शे बस्तिसन्निभे ॥ ४० ॥
निपीड़ितोन्नते स्तब्धे सुप्ते तत्पार्श्वपीड़नात् ।

तत्रैव विच्छिते शूले संपक्वं गुल्ममादिशेत्॥ ४१ ॥
तत्र धान्वन्तरीयाणामधिकारः क्रियाविधौ ।
वैद्यानां कृतयोगानां व्यधशोधनरोपणे ॥ ४२ ॥
अन्तर्भागस्य चाप्येतत् पच्यमानस्य लक्षणम् ।
हृत्क्रोड़शूनतान्तःस्थे बहिःस्थपार्श्वनिर्गतिः ॥ ४३ ॥
पक्वः स्रोतांसि संक्लिद्य व्रजत्यूर्द्ध्वमधोऽपि वा ।
स्वयमप्रवृत्तं तं दोषमुपेक्षेत हिताशनैः ॥ ४४ ॥
दशाहं द्वादशाहं वा रक्षन् भिषगुपद्रवान् ।
अत ऊर्द्ध्वं मतं पानं सर्पिषः सविशोधनम् ॥ ४५ ॥
शुद्धं सतिक्तं सक्षौद्रं प्रयोगे सर्पिरिष्यते ।
शीतलैर्गुरुभिः स्निग्धैर्गुल्मे जाते कफात्मके ॥ ४६ ॥
अवम्यस्याल्पकायाग्नेः कुर्याल्लङ्घनमादितः ।
मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ।
सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः ॥ ४७ ॥
उष्णैरेवोपचार्यस्य कृते वमनलङ्घने ।
योज्यास्त्वाहारसंसर्गा भेषजैः कटुतिक्तकैः ॥ ४८ ॥
सानाहं सविबन्धञ्च गुल्मं कठिनमुन्नतम् ।
दृष्ट्वादौ स्वेदयेद्युक्त्या स्विन्नञ्च विनयेद्भिषक् ॥ ४९ ॥
लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ संप्रधुक्षिते ।
कफगुल्मे पिबेत् काले सक्षारकटुकं घृतम् ॥ ५० ॥
स्थानादपसृतं ज्ञात्वा कफगुल्मं विरेचनैः ।
सस्नेहैर्बस्तिभिर्वापि शोधयेद्दशमूलकैः ॥ ५१ ॥
मन्दाग्नावनिले मूढे ज्ञात्वा सस्नेहमाशयम् ।
गुलिकाचूर्णनिर्यूहाः प्रयोज्याः कफगुल्मिनाम् ॥ ५२ ॥
दृढमूलं महावास्तुं कठिनं स्तिमितं गुरुम् ।
जयेत् कफकृतं गुल्मं क्षारारिष्टाग्निकर्मभिः ॥ ५३ ॥

दोषैः प्रकृतिगुल्मान्तु योगं बुद्धा कफोल्वणे ।
बलदोषप्रमाणज्ञः चारं गुल्मे प्रयोजयेत् ॥ ५४ ॥
एकान्तरं द्व्यन्तरं वा त्र्यहं विश्रम्य वा पुनः ।
शरीरबलदोषाणां वृद्धिक्षयणकोविदः ॥ ५५ ॥
श्लेष्माणं मधुरं स्निग्धं मांसचीरघृताशिनः ।
भित्त्वा भित्त्वाशयात् चारः चरत्वात् चारयत्यधः ॥५६॥
मन्देऽग्नावरुचौ सात्म्यैः मद्यैः सस्नेहमश्नताम् ।
प्रयोज्या मार्गशुद्ध्यर्थमरिष्टाः कफगुल्मिनाम् ॥ ५७ ॥
लङ्घनोल्लेखनैः स्वेदैः सर्पिष्पानैर्विरेचनैः ।
वस्तिभिर्गुलिकाचूर्णक्षारारिष्टगणैरपि ॥ ५८ ॥
श्लैष्मिकः कृतमूलत्वाद् यस्य गुल्मो न शाम्यति ।
तस्य दाहो हृते रक्ते शरलोहादिभिर्मतः ॥ ५९ ॥
श्रौष्ण्यात् तैक्ष्ण्याच्च शमयेदग्निर्गुल्मे कफानिलौ ।
तयोः शमाच्च सङ्घातो गुल्मस्य विनिवर्त्तते ॥ ६० ॥
दाहे धान्वन्तरीयाणामत्रापि भिषजां बलम् ।
चारप्रयोगे भिषजां चारतन्त्रविदां बलम् ।
व्यामिश्रदोषैर्व्यामिश्र एष एव क्रियाक्रमः ॥ ६१ ॥
सिद्धानतः प्रवक्ष्यामि योगान् गुल्मनिबर्हणान् ।
त्र्यूषण त्रिफला धान्यं विडङ्गचव्यचित्रकैः ।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ ६२ ॥

इति त्र्यूषणादिघृतम् ।

एत एव च कल्का स्युः कषायः पञ्चमूलिकः ।
द्विपञ्चमूलिको वाथ तद्घृतं गुल्मनुत् परम् ॥ ६३ ॥

इति त्र्यूषणादिघृतमपरम् ।

षट्पलं वा पिबेत् सर्पिर्यदुक्तं राजयक्ष्मणि ।
प्रसन्नया वा चीरार्थं सुरया दाड़िमेन वा ।

दध्नः सरेण वा कार्य्यं घृतं मारुतगुल्मिनाम् ॥ ६४ ॥

इति गुल्मषट्पलघृतम् ।

हिङ्गुसौवर्चलाजाजीविड़दाड़िमदीप्यकैः ।
पुष्करव्योषधान्याम्लवेतसक्षारचित्रकैः ॥ ६५ ॥
शटीवचाजगन्धैलासुरसैश्च विपाचितम् ।
शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥ ६६ ॥

इति हिङ्गुसौवर्चलाद्यं घृतम् ।

हवुषाव्योषपृथ्वीकाचव्यचित्रकसैन्धवैः ।
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद् घृतम् ॥ ६७ ॥
मातुलुङ्गदधिक्षीरकोलमूलकदाडिमैः ।
रसैस्तद्वातगुल्मघ्नं शूलानाहविमोक्षणम् ॥ ६८ ॥
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान् ।
वस्तिहृत् पार्श्वशूलञ्च घृतमेतद् व्यपोहति ॥ ६९ ॥

इति हवुषाद्यं घृतम् ।

पिप्पल्याः पिचुरध्यर्द्धो दाडिमाद्द्विपलं पलम् ।
धान्यात् पञ्च घृतात् शुण्ठ्याः कर्षं क्षीरं चतुर्गुणम् ॥७०॥
सिद्धमेतैर्घृतं सद्यो वातगुल्मं चिकित्सति ।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरम् ॥ ७१ ॥

इति पिप्पल्याद्यं घृतम् ।

घृतानामौषधगणा य एते परिकीर्त्तिताः ।
ते चूर्णयोगा वर्त्यस्ताः कषायास्ते च गुल्मिनाम् ॥७२॥
कोलदाडिमघर्माम्बुसुरामण्डाम्लकाञ्जिकैः ।
शूलानाहनुदः पेया वीजपूररसेन वा ॥ ७३ ॥
चूर्णानि मातुलुङ्गस्य भावितस्य रसेन वा ।
कुर्य्याद्वर्त्तीः सगुडिका गुल्मानाहार्त्तिशान्तये ॥ ७४ ॥
हिङ्गुत्रिकटुकां पाठां हवुषामभयां शटीम् ।

अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसौ ॥ ७५ ॥
दाडिमं पुष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र योजयेत् ॥ ७६ ॥
चूर्णमेतत् प्रयोक्तव्यमनुपानेष्वनत्ययम् ।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥ ७७ ॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे वा शूले च गुदयोनिजे ॥ ७८ ॥
ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्ड्वामयेऽरुचौ ।
उरोविबन्धे कासे च हिक्काश्वासे गलग्रहे ॥ ७९ ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुलिकाः कार्य्याः कार्मुकाः स्युस्ततोऽधिकम् ॥ ८० ॥

इति हिङ्ग्वादिचूर्णं गुडिका च

मातुलुङ्गरसो हिङ्गु दाडिमं विडसैन्धवे ।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ८१ ॥
शटीपुष्करहिङ्ग्वम्लवेतसक्षारचित्रकान् ।
धन्याकञ्च यमानीञ्च विडङ्गं सैन्धवं वचाम् ॥ ८२ ॥
सचव्यपिप्पलीमूलमजगन्धां सदाडिमाम् ।
अजाजीञ्चाजमोदाञ्च चूर्णं कृत्वा प्रयोजयेत् ॥ ८३ ॥
रसेन मातुलुङ्गस्य मधुशुक्तेन वा पुनः ।
भावितं गुडिकां कृत्वा सुपिष्टां कोलसम्मिताम् ॥ ८४ ॥
गुल्मं प्लीहानमानाहं श्वासं काममरोचकम् ।
हिक्कां हृद्रोगमर्शांसि विविधान् शिरसो रुजान् ॥ ८५ ॥
पाण्ड्वामयं कफोत्क्लेशं सर्वजाश्च प्रवाहिकाम् ।
पार्श्वहृद्वस्तिशूलञ्च गुटिकैषा व्यपोहति ॥ ८६ ॥
नागराद्धपलं पिष्ट्वा द्वे पले लुञ्चितस्य च ।
तिलस्यैकं गुडपलं क्षीरेणोष्णेन वा पिबेत् ॥ ८७ ॥

वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत्।
पिवेदैरण्डकं तैलं वारुणीमण्डमिश्रितम्॥ ८८॥
तदेव तैलं पयसा वातगुल्मी पिवेन्नरः।
श्लेष्मण्यनुवले पूर्वं हितं पित्तानुगे परम्॥ ८९॥
साधयेत् सिद्धशुष्कस्य लशुनस्य चतुष्पलम्।
क्षीरे जलाष्टगुणिते क्षीरशेषञ्च ना पिवेत्॥ ९०॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमज्वरम्।
हृद्रोगं विद्रधीं शोथं साधयत्याशु तत् पयः॥ ९१॥
इति लशुनक्षीरम्।
तैलं प्रसन्ना गोमूत्रमारनालं यवाग्रजम्।
गुल्मं जठरमानाहं पीतमेकत्र साधयेत्॥ ९२॥
इति तैलपञ्चकम्।
पञ्चमूलीकषायेण सक्षीरेण शिलाजतु।
पिवेत् तस्य प्रयोगेण वातगुल्मात् प्रमुच्यते॥ ९३॥
इति शिलाजतुप्रयोगः।
वाम्यं यूषेण पिप्पल्या मूलकानां रसेन वा
भुक्त्वा स्निग्धमुदावर्त्ताद्वातगुल्माद्विमुच्यते॥ ९४॥
शूलानाहविबन्धार्त्तं स्वेदयेद्वातगुल्मिनम्।
स्वेदैः स्वेदविधानुक्तैर्नाड़ीप्रस्तरसङ्करैः॥ ९५॥
वस्तिकर्म परं विद्यात् गुल्मघ्नं तद्धि मारुतम्।
स्वे स्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति॥ ९६॥
तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः।
प्रयुज्यमानैः शाम्यन्ति वातपित्तकफात्मकाः॥९७॥
गुल्मघ्ना विविधा दृष्टाः सिद्धाः सिद्धिषु वस्तयः।
इति वस्तिक्रिया
गुल्मघ्नानि च तैलानि वक्ष्यन्ते वातरोगिके॥ ९८॥

तानि मारुतगुल्मेषु पानाभ्यङ्गानुवासनैः ।
प्रयुक्तान्याशु सिध्यन्ति तैलं ह्यनिलजित्परम् ॥ ९९ ॥
नीलिनीचूर्णसंयुक्तं पूर्वोक्तं घृतमेव वा ।
समलाय प्रदेयं स्याच्छोधनं वातगुल्मिने ॥ १०० ॥
नीलिनीं त्रिवृतां दन्तीं पथ्यां कम्पिल्लकैः सह ।
शोधनार्थं घृतं देयं सविड्क्षारनागरम् ॥ १०१ ॥
नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ।
पचेद्विडङ्गं व्याघ्रीं च पलिकानि जलाढके ॥ १०२ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च ॥ १०३ ॥
ततो घृतपलं दद्याद् यवागूमण्डमिश्रितम् ।
जीर्णे सम्यग्विरिक्तं च भोजयेद्रसभोजनम् ॥ १०४ ॥
गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ।
श्वित्रं प्लीहानमुन्मादं घृतमेतदपोहति ॥ १०५ ॥

इति नीलिन्याद्यं घृतम् ।

कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्त्तकाः ।
शालयो मदिरा सर्पिर्वातगुल्मभिषग्जितम् ॥ १०६ ॥
हितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम् ।
समण्डवारुणीपानं पक्वं वा धान्यकैर्जलम् ॥ १०७ ॥
मन्देऽग्नौ वर्द्धते गुल्मो दीप्ते चाग्नौ प्रशाम्यति ।
तस्मान्नातिमौहित्यं कुर्य्यान्नातिविलङ्घितम् ॥ १०८ ॥
सर्वत्र गुल्मे प्रथमे स्नेहस्वेदोपपादिते ।
या क्रिया क्रियते सिद्धिं सा याति न विरूक्षिते ॥१०९॥
भिषगात्ययिकं बुद्ध्वा पित्तगुल्ममुपाचरेत् ।
वैरेचनिकसिद्धेन पयसा सर्पिषापि वा ॥११० ॥
रोहिणीकटुकानिम्बमधुकं त्रिफलात्वचः ।

कार्षिका त्रायमाणा च पटोलविहतोः पले ॥ १११ ॥
द्विपलञ्च मसूराणां साध्यमष्टगुणेऽम्भसि।
शृताच्छेषं घृतसमं सर्पिषश्च चतुष्पलम् ॥ ११२ ॥
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः।
ज्वरस्तृष्णा च शूलञ्च भ्रमो मूर्च्छारुचिस्तथा ॥११३॥
इति रोहिण्याद्यं घृतम्।

जले दशगुणे साध्यं त्रायमाणाचतुष्पलम्।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥ ११४ ॥
रोहिणी कटुका मुस्ता त्रायमाणा दुरालभा।
कल्कैस्तामलकीवीराजीवन्तीचन्दनोत्पलैः ॥ ११५ ॥
रसस्यामलकानाञ्च चीरस्य च घृतस्य च।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत् ॥ ११६ ॥
पित्तरक्तभवं गुल्मं वीसर्पं पैत्तिकं ज्वरम्।
हृद्रोगं कामलां कुष्ठं हन्यादेतद् घृतोत्तमम् ॥ ११७ ॥
इति त्रायमाणाद्यं घृतम्।
रसेनामलकेचूणां घृतपादं विपाचयेत्।
पथ्यापादं पिबेत् सर्पिस्तत् सिद्धं पित्तगुल्मनुत् ॥ ११८ ॥
इति आमलकाद्यं घृतम्।
द्राक्षां मधूक खर्जूरं विदारीं सशतावरीम्।
परूषकाणि त्रिफलां साधयेत् पलसंमिताम् ॥ ११९ ॥
जलाढके पादशेषे रसमामलकस्य च।
घृतमिक्षुरसं चौद्रमभयाकल्कपादिकम् ॥ १२० ॥
साधयेत् तद्घृतं सिद्धं शर्कराक्षौद्रपादिकम्।
प्रयोगात् पित्तगुल्मघ्नं सर्वपित्तविकारनुत् ॥ १२१ ॥
इति द्राक्षाद्यं घृतम्।
हृषं समूलमापोथ्य पचेदष्टगुणे जले।
शेषेऽष्टभागे तस्यैव पुष्पकल्कं प्रदापयेत् ॥ १२२ ॥

तेन सिद्धं घृतं शीतं सक्षौद्रं पित्तगुल्मनुत्।
रक्तपित्तज्वरश्वासकासहृद्रोगनाशनम् ॥ १२३ ॥
इति वासाघृतम्।

द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम्।
अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत् ॥ १२४ ॥
पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम्।
तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः ॥ १२५ ॥
त्रायमाणाद्यं घृतम्।

द्राक्षाभयारसं गुल्मे पैत्तिके सगुडं पिबेत्।
लिह्यात् काम्पिल्यकं वापि विरेकार्थं मधुद्रवम् ॥ १२६ ॥
दाहप्रशमनोऽभ्यङ्गः सर्पिषा पित्तगुल्मिनाम्।
चन्दनाद्येन तैलेन तैलेन मधुकस्य वा ॥ १२७ ॥
ये च पित्तज्वरार्त्तानां सतिक्ताः क्षीरबस्तयः।
हितास्ते पित्तगुल्मिभ्यो वक्ष्यन्ते ये च सिद्धिषु ॥ १२८ ॥
शालयो जाङ्गलं मांसं गव्याज्ये पयसी घृतम्।
खर्जूरामलकं द्राक्षा दाडिमं सपरूषकम् ॥ १२९ ॥
आहारार्थं पयोऽम्भ्यं पानार्थं सलिलं शृतम्।
बलाविदारीगन्धाद्यैः पित्तगुल्मचिकित्सितम् ॥ १३० ॥
आमान्वये पित्तगुल्मे सामे वा कफवातिके।
यवागूभिः खडैर्यूषैः सन्धुक्ष्योऽग्निर्विलङ्घिते ॥ १३१ ॥
शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ।
तस्मादग्निं सदा रक्षेन्निदानानि च वर्जयेत् ॥ १३२ ॥
वमनार्हाय वमनं प्रदद्यात् कफगुल्मिने।
स्निग्धस्विन्नशरीराय गुल्मे शैथिल्यमागते ॥ १३३ ॥
परिवेष्ट्य प्रदीप्तांस्तु बल्वजानथवा कुशान्।
भिषक् कुम्भे समावाप्य गुल्मं घटमुखे क्षिपेत् ॥ १३४ ॥

मंगृहीतो यदा गुल्मस्तदा घटमथोद्धरेत्।
वस्त्रान्तरं ततः कृत्वा भिन्द्याद् गुल्मं प्रमाणवित् ॥१३५॥
विमार्गजं यदा पश्येत् यथालाभं प्रपीडयेत्।
मृद्गीयाद् गुल्ममेवैकं न त्वन्त्र हृदयं स्पृशेत् ॥ १३६ ॥
तिलैरण्डातसीवीजसर्षपैः परिलिप्य च।
श्लेष्मगुल्ममयः पात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥ १३७ ॥
सव्योषक्षारलवणं दशमूलीशृतं घृतम्।
कफगुल्मं जयत्याशु सहिङ्गुविड्दाडिमम् ॥ १३८ ॥
इति दशमूलीघृतम्।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्।
साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढके ॥ १३९ ॥
पादशेषे रसे तस्मिन् पिप्पलीं नागरं वचाम्।
विडङ्गं सैन्धवं हिङ्गु यावशूकं विडं शटीम् ॥ १४० ॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमं भिषक्।
प्रस्थञ्च पयसः कृत्वा घृतप्रस्थं विपाचयेत् ॥ १४१ ॥
एतत् भल्लातकघृतं कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासनुत् ॥ १४२ ॥
इति भल्लातकाद्यं घृतम्।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
पलिकैः सयवक्षारैः घृतप्रस्थं विपाचयेत् ॥ १४३ ॥
क्षीरप्रस्थञ्च तत् सर्पिर्हन्ति गुल्मं कफात्मकम्।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ १४४ ॥
इति पञ्चकोलघृतम्।

त्रिवृतां त्रिफलां दन्तीं दशमूलं पलोन्मितम्।
जले चतुर्गुणे पक्त्वा चतुर्भागस्थितं रसम् ॥ १४५ ॥
सर्पिरेरण्डजं तैलं क्षीरञ्चैकत्र साधयेत्।

स सिद्धो मिश्रकस्नेहः सक्षौद्रः कफगुल्मनुत् ॥ १४६ ॥
कफवातविबन्धेषु कुष्ठप्लीहोदरेषु च ।
प्रयोज्यो मिश्रकः स्नेहो योनिशूलेषु चाधिकम् ॥ १४७ ॥
इति मिश्रकः स्नेहः ।

यदुक्तं वातगुल्मघ्नं स्रंसनं नीलिनीघृतम् ।
द्विगुणं तद्विरेकार्थं प्रयोज्यं कफगुल्मिनाम् ॥ १४८ ॥
सुधाक्षीरद्रवे चूर्णं त्रिवृतायाः सुभावितम् ।
कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥ १४९ ॥
जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥ १५० ॥
अष्टभागस्थितं तच्च रसं पूतमधिक्षिपेत् ।
दन्तीसमं गुडं पूतं क्षिपेत् तत्राभयाश्च ताः ॥ १५१ ॥
तैलार्धकुडवश्चैव त्रिवृतायाश्चतुष्पलम् ।
चूर्णितं पलमेकञ्च पिप्पली विश्वभेषजम् ॥ १५२ ॥
तत् साध्यं लेहवच्छीते तस्मिंस्तैलसमं मधु ।
क्षिपेच्चूर्णपलञ्चैकं त्वगेलापत्रकेशरात् ॥ १५३ ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥ १५४ ॥
गुल्मं श्वयथुमर्शांसि पाण्डुरोगमरोचकम् ।
हृद्रोगं ग्रहणीदोषं कामलां विषमज्वरम् ॥ १५५ ॥
कुष्ठं प्लीहानमानाहमेतान् हन्त्युपसेवितः ।
निरत्ययः क्रमश्चाप्या द्रवो मांसरसौदनः ॥ १५६ ॥
इति दन्तीहरीतकी ।

सिद्धाः सिद्धिषु वक्ष्यन्ते निरूहाः कफगुल्मिनाम् ।
अरिष्टयोगाः सिद्धाश्च ग्रहण्यर्शश्चिकित्सिते ॥ १५७ ॥
यच्चूर्णं गुटिका याश्च विहिता वातगुल्मिनाम् ।

द्विगुणक्षारहिङ्गुस्त्वैतसाम्ला कफे मता ॥ १५८ ॥
य एव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम् ।
सिद्धा निरत्यया शस्ता दाहस्त्वन्ते प्रशस्यते ॥ १५९ ॥
अपुराणानि धान्यानि जाङ्गला मृगपक्षिणः ।
कौलत्थो मुद्गयूषश्च पिप्पल्या नागरस्य च ॥ १६० ॥
शुष्कमूलकयूषश्च बिल्वस्य वरुणस्य च ।
चिरबिल्वाङ्कुराणाञ्च यमान्याश्चित्रकस्य च ॥ १६१ ॥
बीजपूरकहिङ्ग्वम्लवेतसक्षारदाडिमैः ।
तक्रेण तैलसर्पिर्भ्यां व्यञ्जनान्युपकल्पयेत् ॥ ॥ १६२ ॥
पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिवेत् काले जीर्णं माध्वीकमेव वा ॥ १६३ ॥
यमानीचूर्णितं तक्रं विडेन लवणीकृतम् ।
पिबेत् सन्दीपनं वातकफमूत्रानुलोमनम् ॥ १६४ ॥
सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।
कृतमूलः शिरानद्धो यदा कूर्म इवोन्नतः ॥ १६५ ॥
दौर्बल्यारुचिहृल्लासकासवम्यरतिज्वरैः ।
तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति ॥ १६६ ॥
गृहीत्वा स ज्वरश्वासवम्यतीसारपीडितम् ।
हृन्नाभिहस्तपादेषु शोफः कर्षति गुल्मिनम् ॥ १६७ ॥
रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे ।
स्निग्धस्विन्नशरीराय दद्यात् स्नेहविरेचनम् ॥ १६८ ॥
पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः ।
गुल्मशैथिल्यजननी पक्त्वा मात्रां प्रयोजयेत् ॥ १६९ ॥
प्रभिद्येत न यद्येवं दद्याद् योनिविशोधनम् ।
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः ॥ १७० ॥
आभ्यां वा भावितान् दद्यात् योनौ कटुकमत्स्यकान् ।

वराहमत्स्यपित्ताभ्यां नक्तकान् वा सुभावितान् ॥ १७१ ॥
यवाहरैर्वोर्द्धहरैर्भावितान् वा समाक्षिकान् ।
किण्वं वा सगुड़क्षारं दद्यात् योनिविशोधनम् ॥ १७२ ॥
रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा ।
लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रदापयेत् ॥ १७३ ॥
वस्तिं सक्षीरगोमूत्रं सक्षारं दारमूलिकाम् ।
अप्रवर्त्तमाने रुधिरे दद्याद् गुल्मप्रभेदनम् ॥ १७४ ॥
प्रवृत्तमाने रुधिरे दद्यान्मांसरसौदनम् ।
घृततैलेन चाभ्यङ्गं पानार्थं तरुणां सुराम् ॥ १७५ ॥
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहराः क्रियाः ।
कार्य्या वातरुगार्त्तायाः सर्वा वातहराः पुनः ॥ १७६ ॥
घृततैलावसेकांश्च तित्तिरींश्चरणायुधान् ।
सुरां समण्डां पूर्व्वञ्च पानमम्लस्य सर्पिषः ।
प्रयोजयेदुत्तरं वा जीवनीयेन सर्पिषा ॥ १७७ ॥
अतिप्रवृत्ते रुधिरे सतिक्तं नानुवासनम् ।

तत्र श्लोकाः । स्नेहः स्वेदः सर्पिश्चूर्णानि बृंहणं गुड़िका ।
वमनविरेकौ मोक्षः कफजस्य च वातगुल्मवताम् ॥ १७८ ॥
सर्पिः सतिक्तसिद्धं क्षीरं प्रसंसनं निरूहाय ।
रक्तस्य चावसेचनमाश्वासनसंशमनयोगाः ॥ १७९ ॥
उपनाहनं सशस्त्रं पक्कस्याभ्यन्तरप्रभिन्नस्य ।
संशोधनसंशमने पित्तप्रभवस्य गुल्मस्य ॥ १८० ॥
स्नेहः स्वेदौ भेदो लङ्घनमुल्लेखनं विरेकश्च ।
सर्पिर्वस्तिगुड़िकाचूर्णमरिष्टाश्च सक्षाराः ॥ १८१ ॥
गुल्मस्यान्ते दाहः कफजस्याग्रेऽपनीतरक्तस्य ।
गुल्मस्य रौधिरस्य क्रियाक्रमः स्त्रीभवश्चोक्तः ॥ १८२ ॥
पथ्यान्नपानसेवाहेतूनां वर्जनं यथास्वञ्च ।

नित्यश्चाग्निसमाधिः स्निग्धस्य च सर्वकर्माणि ॥ १८३ ॥
हेतुर्लिङ्गं सिद्धिः क्रियाक्रमः साध्यतानुयोगाश्च।
गुल्मचिकित्सितसंग्रह एतावानग्निवेशस्य ॥ १८४ ॥

---

## षष्ठोऽध्यायः।

### प्रमेहचिकित्सितम्।

निर्मोहमानानुशयो निरायः पुनर्वसुर्ज्ञानतपोविशालः।
कालेऽग्निवेशाय सहेतुलिङ्गानुवाच मेहान् शमनञ्च तेषाम् ॥१॥
आस्यासुखं स्वप्नसुखं दधीनि ग्राम्योदकानूपरसाः पयांसि।
नवान्नपानं गुड़वैकृतञ्च प्रमेहहेतुः कफकृच्च सर्वम् ॥२॥
मेदश्च मांसञ्च शरीरजञ्च क्लेदं कफो वस्तिगतं प्रदूष्य।
करोति मेहान् समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य भूयः ॥३॥
क्षीणेषु दोषेष्ववकृष्य वस्तौ धातून् प्रमेहाननिलः करोति।
दोषो हि वस्तौ समुपेत्य मूत्रं सन्दूष्य मेहान् जनयेद्यथास्वम् ॥४
साध्याःकफोत्था दशपित्तजाः षट् याप्या नसाध्याः पवनाच्चतुष्काः।
समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते ॥ ५ ॥
कफः सपित्तः पवनश्च दोषा मेदोऽस्रशुक्राम्बुवसालसीकाः।
मज्जारसौजः पिशितञ्च दूष्यं प्रमेहिणां विंशतिरेव मेहाः ॥६॥
जलोपमं वेक्षुरसोपमं वा घनं घनञ्चोपरि विप्रसन्नम्।
शुक्लं सशुक्रं शिशिरं शनैर्वा लालेव वा वालुकया युतं वा ॥७॥
विद्यात्प्रमेहान् कफजान् दशैतान् क्षारोपमङ्कालमथापि नीलम्
हारिद्रमाञ्जिष्ठमथापि रक्तमेतान् प्रमेहान् षडुपन्ति पित्तात्॥८॥
मज्जौजसा वा वसयान्वितं वा लसीकया वा सततं विवद्धम्।
चतुर्विधं मूत्रयतीव वातात् शेषेषु धातुष्वपकर्षितेषु ॥ ९ ॥
वर्णं रसं स्पर्शमथापि गन्धं यथास्वदोषं भजते प्रमेहः।
श्यावारुणो वातकृतः सशूलो मज्जादिपाड़गुण्यमुपेत्यसाध्यः ॥१०

स्वेदोऽङ्गगन्धः शिथिलाङ्गता तु शय्यासनस्वप्नसुखे रतिश्च।
हृन्नेत्रजिह्वाश्रवणोपदेहो घनाङ्गता केशनखातिवृद्धिः॥ ११॥
शीतप्रियत्वं गलतालुशोषो माधुर्यमास्ये करपाददाहः।
भविष्यतो मेहगदस्य रूपं मूत्रेऽभिधावन्ति पिपीलिकाश्च॥१२
स्थूलः प्रमेही बलवानिहैकः कृशस्तथैकः परिदुर्बलश्च।
संबृंहणं तत्र कृशस्य कार्यं संशोधनं दोषबलाधिकस्य॥१३॥
स्निग्धस्य योगा विविधाः प्रयोज्याः कल्पोपदिष्टा मलशोधनाय
ऊर्ध्वं तथाधश्च मलेऽपनीते मेहेषु सन्तर्पणमेव कार्यम्॥ १४॥
गुल्मः क्षयो मेहनबस्तिशूलं मूत्रग्रहश्चाप्यपतर्पणेन।
प्रमेहिणः स्युः परितर्पणानि कार्याणि तस्मात्प्रसमीक्ष्य वह्निम्।
संशोधनं नार्हति यः प्रमेही तस्य क्रिया संशमनी प्रयोज्या।
मन्थाः कषाया यवचूर्णलेहाः प्रमेहशान्त्यै लघवश्च भक्ष्याः॥१६
ये विष्किरा ये प्रतुदा विहङ्गास्तेषां रसैर्जाङ्गलजैर्मनोज्ञैः।
यवौदनं रूक्षमथापि वाट्यं सक्तून् सशक्तूनपि चाप्यपूपान्॥१७
मुद्गादियूषैरथ तिक्तशाकैः पुराणशाल्योदनमाददीत।
दन्तीङ्गुदीतैलयुतं प्रमेही तथातसीसर्षपतैलयुक्तम्॥ १८॥
सन्तर्पितः स्यात् तृणधान्यमन्नं यवप्रधानस्तु भवेत् प्रमेही।
यवस्य भक्ष्यान् विविधांस्तथाद्यात् कफप्रमेही मधुसम्प्रयुक्तान्।
निशिस्थितानां त्रिफलाकषाये स्युस्तर्पणाः क्षौद्रयुता यवानाम्
तान् सीधुयुक्तान् प्रपिबेत् प्रमेही प्रायोगिकान् मेहवधार्थमेव॥
ये श्लेष्महृद्भिर्विहिताः कषायास्तैर्भावितानाञ्च पृथग् यवानाम्।
सक्तूनपूपान् सगुडान् सधानान् भक्ष्यांस्तथान्यान् विविधांश्च खादेत्
खराश्वगोभिन्नकमश्रुतानां तथा यवानां विविधाश्च भक्ष्याः।
देयास्तथा वेणुयवा यवानां कल्केन गोधूममयाश्च भक्ष्याः॥ २२
सशोधनीयेऽनन्तरानि कानि प्रयुक्तानि कफप्रमेहान्।
जयन्ति पित्तप्रभवान् विरेकाः सन्तर्पणः संशमनो विधिश्च॥२३

दार्वीं सुराह्वं त्रिफलां समुस्तां कषायमुत्क्वाथ्य पिबेत् प्रमेही ।
क्षौद्रेण युक्तामथवा हरिद्रां पिबेद्रसेनामलकीफलानाम् ॥२४॥
हरीतकीकट्फलमुस्तलोध्रं पाठाविडङ्गार्जुनधन्वनाश्च ।
उभे हरिद्रे तगरं विडङ्गं कदम्बशालार्जुनदीप्यकाश्च ॥ २५॥
दार्वी विडङ्गं खदिरो धवश्च सुराह्वकुष्ठागुरुचन्दनानि ।
दार्व्यग्निमन्थौ त्रिफला सपाठा पाठा च मूर्वा च तथा श्वदंष्ट्रा२६
यमान्युशीराण्यभया गुडूची चव्याभया चित्रकसप्तपर्णौ ।
पादैःकषायाः कफमेहिनां ते दशोपदिष्टा मधुसम्प्रयुक्ताः ॥२७॥
उशीरलोध्राञ्जनचन्दनानामुशीरमुस्तामलकाभयानाम् ।
पटोलनिम्बामलकामृतानां मुस्ताभयापद्मकवृक्षकाणाम् ॥२८॥
लोध्राम्बुकालीयधातकीनां निम्बार्जुनाम्रातनिशोत्पलानाम् ।
शिरीषसर्जार्जुनकेशराणां प्रियङ्गुपद्मोत्पलकिंशुकानाम् ॥२९॥
अश्वत्थपाठासनवेतसानां कटङ्कटेर्युत्पलमुस्तकानाम् ।
पैत्तेषु मेहेषु दशैव दृष्टाः पादैः कषाया मधुसम्प्रयुक्ताः ॥ ३० ॥
सर्वेषु मेहेषु मतौ तु पूर्वौ कषाययोगौ विहितास्तु सर्वे ।
मन्थस्य पाने यवभावनायां स्युर्भोजने पानविधौ पृथक् च ॥३१॥
सिद्धानि तैलानि घृतानि चैव देयानि मेहेष्वनिलात्मकेषु ।
मेदः कफश्चैव कषाययोगैः स्नेहैश्च वायुः शममेति तेषाम् ॥३२॥
कम्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि ।
कपित्थपुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात् कफपित्तमेही ३३
पिबेद्रसेनामलकस्य वापि कल्कीकृतान्यक्षसमानि काले ।
जीर्णे च भुञ्जीत पुराणमन्नं मेही रसैर्जाङ्गलजैर्मनोज्ञैः ॥३४॥
दृष्टानुबन्ध पवनात् कफस्य पित्तस्य वा स्नेहविधिर्विकल्प्यः ।
तैलं कफे स्यात् स्वकषायसिद्धं पित्ते घृतं पित्तहरैः कषायैः ॥३५॥
त्रिकण्टकाश्मन्तकसोमवल्कैर्भल्लातकैः सातिविषैः सलोध्रैः ।
वचापटोलार्जुननिम्बमुस्तैर्हरिद्रया पद्मकदीप्यकैश्च ॥ ३६ ॥

मञ्जिष्ठया वागुरुचन्दनैश्च सर्वैः समुस्तैः कफवातजेषु ।
मेहेषु तैलं विपचेद्घृतन्तु पैत्तेषु मिश्रं त्रिषु लक्षणेषु ॥ ३७॥
फलत्रिकं दारु निशा विशाला मुस्ता च निःक्वाथ्य निशां ।
पिबेत् कषायं मधुसम्प्रयुक्तं सर्वप्रमेहेषु समुद्भवेषु ॥ ३८ ॥
लोध्रं शटीं पुष्करमूलमेलां मूर्वां विडङ्गं त्रिफलां यमानीम्।
चव्यं प्रियङ्गुं क्रमुकं विशालां किराततिक्तां कटुरोहिणीञ्च ॥
भार्गीं नतं चित्रकपिप्पलीनां मूलं सकुष्ठातिविषं सपाठम्।
कलिङ्गकान् केशरमिन्द्रसाह्वां नखं सपत्रं मरिचं प्लवञ्च ॥४०॥
द्रोणेऽम्भसः कर्षसमानि पक्त्वा पूते चतुर्भागजलावशेषे।
रसेऽर्द्धभागं मधुनः प्रदाय पक्षं निधेयो घृतभाजनस्थः ॥४१॥
मध्वासवोऽयं कफपित्तमेहान् क्षिप्रं निहन्याद्द्विपलप्रयोगात्।
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या दोषं किलासं विविधञ्च कुष्ठम्॥

इति मध्वासवः ।

क्वाथः स एवाष्टपले च दन्त्या भल्लातकानाञ्च चतुष्पलं स्यात्।
सितोपला त्वष्टपला विशेषः क्षौद्रञ्च तावत् पृथगासवौ तौ ॥४३॥
सारोदकञ्चाथ कुशोदकं वा मधूदकं वा त्रिफलारसं वा।
सीधुं पिबेद्वा निगदं प्रमेही माध्वीकमग्र्यं चिरसंस्थितं वा ॥४४॥
मांसानि शूल्यानि मृगद्विजानां खादेद्यवानां विविधांश्च भक्ष्यान्
सशोधनारिष्टकषायलेहैः सन्तर्पणत्थाः शमयेत् प्रमेहान् ॥४५॥
भृष्टान्यवान् भक्षयतः प्रयोगात् शुष्कांश्च सक्तून भवन्ति मेहाः
श्वित्रञ्च कुष्ठञ्च कफश्च कृच्छ्रं तथैव मुद्गामलकप्रयोगात् ॥४६॥
सन्तर्पणोत्थेषु गदेषु योगा मेदस्विनां ये च मयोपदिष्टाः।
विरूक्षणार्थं कफपित्तजेषु सिद्धाः प्रमेहेष्वपि ते प्रयोज्याः ॥४७॥
व्यायामयोगैर्विविधैः प्रगाढैरुद्वर्त्तनैः स्नानजलावसेकैः ।
सेव्यत्वगेलागुरुचन्दनाद्यैर्विलेपनैश्चाशु न सन्ति मेहाः ॥ ४८ ।
क्लेदश्च मेदश्च कफश्च वृद्धो नाशं प्रयाति प्रसमीक्ष्य तस्मात्।

ेन पूर्वं कफपित्तजेषु मेहेषु कार्य्याण्यपतर्पणानि ॥ ४८ ॥
वातमेहान् प्रतिपूर्वमुक्ता वातोल्वणानां विहिता क्रिया सा ।
युर्हिमेहेष्वतिकर्षितानां कुष्यत्यसाध्यान् प्रति नास्ति चिन्ता ५०
हेतुभिर्ये प्रभवन्ति मेहास्तेषु प्रमेहेषु न ते निषेव्याः ।
ो रसे वा विहिता यथैव जातस्य रोगस्य भवेच्चिकित्सा ॥५१॥
ाद्द्रिवर्णं रुधिरस्य मूत्रं विना प्रमेहस्य हि पूर्वरूपैः ।
मूत्रयेत् तं न वदेत् प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः ५२
ा प्रमेह मधुरं सपिच्छं मधूपम स्याद्विविधोपचारः ।
ोणेषु दोषेष्वनिलात्मकः स्यात् सन्तर्पणाद्वा कफसम्भवः स्यात् ५३
ूर्वरूपाः कफपित्तमेहाः क्रमेण ये वातकृताश्च मेहाः ।
ाध्या न ते पित्तकृतास्तु याप्याः साध्यास्तु मेदो यदि नप्रदुष्टम् ५४
ातप्रमेही मधुमेहिनो वा न साध्यरोगः स हि बीजदोषात् ।
चापि केचित् कुलजा विकारा भवन्ति तांश्च प्रवदन्त्यसाध्यान् ५५
मेहिणां याः पिडका मयोक्ताः रोगाधिकारे पृथगेव सम ।
ा. शस्त्रविद्भिः कुशलैश्चिकित्स्याः शस्त्रेण संशोधनरोपणैश्च ॥५६॥

भवन्ति चात्र ।

हेतुर्दोषा दूष्यं मेहानां साध्यतानुरूपश्च ।
मेही द्विविधस्त्रिविध भिषग्जित तत्त्वचपम् ॥ ५७ ॥
आद्या यवान्नविकृतिर्मन्था मेहापहाः कषायाश्च ।
तैलघृतलेहयोगा भक्ष्याः प्रवरासवाः मिहाः ॥ ५८ ॥
व्यायामविधिर्विविधः स्नानान्युद्वर्त्तनानि गन्धाश्च ।
मेहानां प्रशमार्थं चिकित्सिते दृष्टमेतावत् ॥ ५९ ॥

———

मञ्जिष्ठया वागुरुचन्दनैश्च सर्वैः समस्तैः कफवातजेषु।
मेहेषु तैलं विपचेद्घृतन्तु पैत्तेषु मिश्रं त्रिषु लक्षणेषु॥ ३७।
फलत्रिकं दारु निशा विशाला मुस्ता च निःक्वाथ्य निशांशक
पिबेत् कषायं मधुसम्प्रयुक्तं सर्वप्रमेहेषु समुद्धतेषु॥ ३८॥
लोध्रं शटीं पुष्करमूलमेलां मूर्वां विडङ्गं त्रिफलां यमानीम्।
चव्यं प्रियङ्गुं क्रमुकं विशालां किराततिक्तं कटुरोहिणीञ्च॥३
भार्गीं नतं चित्रकपिप्पलीनां मूलं सकुष्ठातिविषं सपाठम्।
कलिङ्गकान् केशरमिन्द्रसाह्वां नखं सपत्रं मरिचं प्लवञ्च॥४०
द्रोणेऽम्भसः कर्षसमानि पक्त्वा पूते चतुर्भागजलावशेषे।
रसेऽर्धभागं मधुनः प्रदाय पक्षं निधेयो घृतभाजनस्थः॥४१॥
मध्वासवोऽयं कफपित्तमेहान् क्षिप्रं निहन्याद्द्विपलप्रयोगात्
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या दोषं किलासं विविधञ्च कुष्ठम्

इति मध्वासवः।

क्वाथः स एवाष्टपले च दन्त्या भल्लातकानाञ्च चतुष्पलं स्यात्
सितोपला त्वष्टपला विशेषः क्षौद्रञ्च तावत् पृथगासवौ तौ॥४
सारोदकञ्चाथ कुशोदकं वा मधूदकं वा त्रिफलारसं वा।
सीधुं पिबेद्वा निगदं प्रमेही माध्वीकमग्र्यं चिरसंस्थितं वा॥४
मांसानि शूल्यानि मृगद्विजानां खादेद्यवानां विविधांश्च भक्ष्या
संशोधनारिष्टकषायलेहैः सन्तर्पणजाः शमयेत् प्रमेहान्॥४५
भृष्टान्यवान् भक्षयतः प्रयोगात् शुष्कांश्च शक्तून् भवन्ति मेहा
श्वित्रञ्च कुष्ठञ्च कफश्च कृच्छ्रं तथैव सुद्गामलकप्रयोगात्॥४६
सन्तर्पणोत्थेषु गदेषु योगा मेदस्विनां ये च मयोपदिष्टाः।
विरूक्षणार्थं कफपित्तजेषु सिद्धाः प्रमेहेष्वपि ते प्रयोज्याः॥४
व्यायामयोगैर्विविधैः प्रगाढैरुद्वर्त्तनैः स्नानजलावसेकैः।
सेव्यत्वगेलागुरुचन्दनाद्यैर्विलेपनैश्चाशु न सन्ति मेहाः॥ ४८
क्लेदश्च मेदश्च कफश्च वृद्धो नाशं प्रयाति प्रसमीक्ष्य तस्मात्।

## सप्तमोऽध्यायः ।

### कुष्ठचिकित्सितम् ।

हेतुं लिङ्गं विविधं कुष्ठानामाश्रयं प्रशमनञ्च ।
शृण्वग्निवेश ! सम्यग्विशेषतः स्पर्शनघ्नानाम् ॥ १ ॥
विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागतां छर्दिं वेगांश्चान्यान् प्रतिघ्नताम् ॥ २ ॥
व्यायाममतिसन्तापमतिभुक्त्वा निषेविणाम् ।
शीतोष्णलङ्घनाहारान् क्रमं मुक्त्वा निषेविणाम् ॥ ३ ॥
घर्मश्रमभयार्त्तानां द्रुतं शीताम्बुसेविनाम् ।
अजीर्णाध्यशिनाञ्चैव पञ्चकर्मापचारिणाम् ॥ ४ ॥
नवान्नदधिमत्स्यातिलवणाम्लनिषेविणाम् ।
माषमूलकपिष्टान्नगुड़क्षीरतिलाशिनाम् ॥ ५ ॥
व्यवायञ्चाप्यजीर्णेऽन्ने निद्राञ्च भजतां दिवा ।
विप्रान् गुरून् धर्षयतां पापं कर्म च कुर्वताम् ॥ ६ ॥
वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च ।
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥ ७ ॥
अतः कुष्ठा विजायन्ते सप्त चैकादशैव च ।
न चैकदोषजं किञ्चित् कुष्ठं समुपलभ्यते ॥ ८ ॥
स्पर्शाज्ञत्वमतिस्वेदो न वा वैवर्ण्यमुन्नतिः ।
कोठानां लोमहर्षश्च कण्डूस्तोदः श्रमः क्लमः ॥ ९ ॥
अणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
दाहः सुप्ताङ्गता चेति कुष्ठलक्षणमग्रजम् ॥ १० ॥

अत ऊर्द्धमष्टादशानां कुष्ठानां कपालोदुम्बरमण्डलर्ष्यजिह्वपुण्डरीकसिध्मकाकणकैक-कुष्ठचर्मकिटिम-विपादिकालसकदद्रुचर्मदलपामाविस्फोटकशतारुर्विचर्चिकानां लक्षणानि उपदेक्ष्यामः ॥ ११ ॥

कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ।
कापालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम् ॥ १२ ॥
कण्डूविदाहरुग्रागपरीतं लोमपिञ्जरम् ।
उदुम्बरफलाभासं कुष्ठमौदुम्बरं विदुः ॥ १३ ॥
श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ।
कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते ॥ १४ ॥
कर्कशं रक्तपर्यन्तमन्तःश्यावं सवेदनम् ।
यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते ॥ १५ ॥
सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् ।
सोत्सेधञ्च सदाहञ्च पुण्डरीकं तदुच्यते ॥ १६ ॥
श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति ।
अलाबुपुष्पवर्णं तत् सिध्मं प्रायेण चोरसि ॥ १७ ॥
यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम् ।
त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति ॥ १८ ॥

इति सप्त महाकुष्ठानि ।

अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ।
तदेककुष्ठं चर्माख्यं बहलं हस्तिचर्मवत् ॥ १९ ॥
श्यावं किणखरस्पर्शं परुषं किटिमं स्मृतम् ।
वैपादिकं करे पादे स्फोटनं तीव्रवेदनम् ॥ २० ॥
सकण्डूकैः सरागैश्च गण्डैरलसकं स्मृतम् ।
सकण्डूरागपिडकं दद्रुमण्डलमुद्गतम् ॥ २१ ॥
रक्तं सकण्डु सस्फोटं सरुग् दलति चापि यत् ।
तच्चर्मदलमाख्यातं संस्पर्शासहमुच्यते ॥ २२ ॥
पामाः श्वेतारुणाः श्यावाः पिडका कण्डुला भृशम् ।
श्वेताः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ॥ २३ ॥
रक्तं श्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम् ।

मसूरगण्डूः पिडकाः श्यावा बहुस्रावा विचर्चिका: ॥ २४ ॥
इति एकादश क्षुद्रकुष्ठानि ।

वातेऽधिकतरे कुष्ठं कापालं मण्डलं कफे ।
पित्ते त्वौदुम्बरं विद्यात् काकणन्तु त्रिदोषजम् ॥ २५ ॥
वातपित्ते श्लेष्मपित्ते वातश्लेष्मणि चाधिके ।
ऋष्यजिह्वं पुण्डरीकं सिध्मकुष्ठञ्च जायते ॥ २६ ॥
चर्माख्यमेककुष्ठञ्च किटिमं सविपादिकम् ।
कुष्ठञ्चालसकं ज्ञेयं प्रायो वातकफाधिकम् ॥ २७ ॥
दद्रुशतारुः पामा विस्फोटाश्च शतारुषः ।
पित्तश्लेष्माधिकाः प्रायः कफप्राया विचर्चिका ॥ २८ ॥
सर्वं त्रिदोषजं कुष्ठं दोषाणाञ्च बलाबलम् ।
यथास्वैर्लक्षणैर्बुद्ध्वा कुष्ठानां क्रियते क्रिया ॥ २९ ॥
दोषस्य यस्य पश्येत् कुष्ठेषु विशेषलिङ्गमुद्रिक्तम् ।
तस्यैव शमं कुर्यात् ततः परञ्चानुबन्धस्य ॥ ३० ॥
कुष्ठविशेषैर्दोषा दोषविशेषैः पुनः कुष्ठानि ।
ज्ञायन्ते तैर्हेतुर्हेतुस्तांश्च प्रकाशयति ॥ ३१ ॥
रौक्ष्यं शोषस्तोदः शूलं सङ्कोचनं तथायामः ।
पारुष्यं खरभावो हर्षः श्यावारुणत्वञ्च ॥ ३२ ॥
कुष्ठेषु वातलिङ्गं दाहो रागः परिस्रावः पाकः ।
विस्रो गन्धः क्लेदस्तथाङ्गपतनञ्च पित्तकृतम् ॥ ३३ ॥
श्वैत्यं शैत्यं कण्डुः स्थैर्यं चोत्सेधगौरवस्नेहाः ।
कुष्ठेषु तु कफलिङ्गं जन्तुभिरभिभक्षणं क्लेदः ॥ ३४ ॥
सर्वैरेतैर्लिङ्गैर्युक्तं मतिमान् विवर्जयेदबलम् ।
तृष्णादाहपरीतं शान्ताग्निं जन्तुभिर्जग्धम् ॥ ३५ ॥
वातकफप्रबलं यद् यदेकदोषोल्बणं न तत् कृच्छ्रम् ।
कफपित्तवातपित्तप्रबलानि तु कृच्छ्रकुष्ठानि ॥ ३६ ॥

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनञ्चाग्रे ॥ ३७ ॥
वमनविरेचनयोगाः कल्पोक्ताः कुष्ठिनां प्रयोक्तव्याः ।
प्रच्छनमल्पे कुष्ठे मतं शिराव्यधनं महति च शस्तम् ॥३८॥
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ।
दोषे ह्यतिमात्रहृते वायुर्हन्यादवलमाशु ॥ ३९ ॥
स्नेहस्य पानमिष्टं शुद्धे कोष्ठे प्रवाहिते रुधिरे ।
वायुर्हि शुद्धकोष्ठं कुष्ठिनमवलं विशति शीघ्रम् ॥ ४० ॥
दोषोत्क्लिष्टे हृदये वाम्यः कुष्ठेषु चोर्द्धभागेषु ।
कुटजफलमदनमधुकैः सपटोलैर्निम्बरसयुक्तैः ॥ ४१ ॥
शीतरसः पक्वरसो मधूनि मधुकञ्च वमनानि ।
कुष्ठेषु त्रिवृता दन्ती त्रिफला च विरेचने शस्ता ॥ ४२ ॥
सौवीरकं तुषोदकमालोड़नमासवांस्तु शीध्वादीन् ।
शंसन्त्यधोहराणां यथा विरेकः क्रमश्चेष्टः ॥ ४३ ॥
दार्वीबृहतीसेव्यैः पटोलपिचुमर्दमदनकृतमालैः ।
सस्नेहैरास्थाप्यः कुष्ठी सकलिङ्गयवमुस्तैः ॥ ४४ ॥
वातोल्वणं विरिक्तं निरूढमनुवासनमालक्ष्य ।
फलमधुकनिम्बकुटजैः सपटोलैः साधयेत् स्नेहम् ॥ ४५ ॥
दन्तीमधूकसैन्धवफणिज्झकाः पिप्पली करञ्जफलम् ।
नस्यं स्यात् सविडङ्गं क्रिमिकुष्ठकफप्रदोषघ्नम् ॥ ४६ ॥
वैरोचनिकैर्धूमैः श्लोकस्थानेरितैश्च शाम्यन्ति ।
क्रिमयः कुष्ठकिलासाः प्रयोजितैरुत्तमाङ्गस्थाः ॥ ४७ ॥
स्थिरकठिनमण्डलानां स्विन्नानां प्रस्तरप्रणाड़ीभिः ।
कूर्च्चैर्विघट्टितानां रक्तोत्क्लेशोऽपनेतव्यः ॥ ४८ ॥
आनूपवारिजानां मांसानां पोट्टलैः सुखोष्णैश्च ।
स्विन्नोत्थितं विलिखेत् कुष्ठं तीक्ष्णेन शस्त्रेण ॥ ४९ ॥

रुधिरागमार्थमथवा शृङ्गालाबुभिराहरेत् रक्तम्।
प्रच्छितमल्पं कुष्ठं विरेचयेद्वा जलौकाभिः ॥ ५० ॥
ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवेत् तेषाम् ॥ ५१ ॥
येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनानि यानि स्युः।
तेषु निपात्यः क्षारो रक्तञ्च दोषञ्च निःस्राव्य ॥ ५२ ॥
पाषाणकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च।
पीतागदस्य कार्य्यो विषैः प्रदेहोऽगदैश्चानु ॥ ५३ ॥
स्तब्धानि सुप्तसुप्तान्यस्वेदकण्डुलानि कुष्ठानि।
कूर्चैर्दन्तीत्रिफलाकरवीरकरञ्जनिम्बकुटजानाम् ॥ ५४ ॥
जात्यर्कनिम्बजैर्वा पत्रैः शस्त्रैः ससमुद्रफेनैर्वा।
घृष्टानि गोमयैर्वा ततः प्रलेपैः प्रदेह्यानि ॥ ५५ ॥
मारुतकफकुष्ठघ्नं कर्मोक्तं पित्तकुष्ठिनां कार्य्यम्।
कफपित्तरक्तहरणं तिक्तकषायैः प्रशमनञ्च ॥५६॥
सर्पींषि तिक्तकानि च यच्चान्यद्रक्तपित्तनुत् कर्म।
बाह्याभ्यन्तरमग्र्यं तत् कार्य्यं पित्तकुष्ठेषु ॥ ५७ ॥
दोषाधिक्यविभागादित्येतत् कर्म कुष्ठनुत् प्रोक्तम्।
वक्ष्यामि कुष्ठशमनं प्रायस्त्वग्दोषसामान्यात् ॥ ५८ ॥
दार्वीं रसाञ्जनं वा गोमूत्रेण प्रबाधते कुष्ठम्।
अभया प्रयोजितावा मास सव्योपगुडतैलाः ॥ ५९ ॥
मूलं पटोलस्य तथाशवाच्याः पृथक्पलांशं त्रिफलात्रिवृच्च।
स्यात् त्रायमाणा कटुरोहिणी च भागार्द्धिका नागरपादयुक्ता ६०
पल तथैकं सह चूर्णितानां जले शृतं दोषहरं पिबेत्ताः।
जीर्णे रसैः धन्वमृगद्विजानां पुराणशाल्योदनमाददीत ॥ ६१ ॥
कुष्ठानि शोफं ग्रहणीप्रदोषमर्शांसि कृच्छ्राणि हलीमकञ्च।
षड्रात्रयोगेण निहन्ति चैव हृद्बस्तिशूलं विषमज्वरञ्च ॥६२॥

मुस्तं व्योषं त्रिफला मञ्जिष्ठा दारुपञ्चमूले द्वे।
सप्तच्छदनिम्बत्वक् सविशालश्चित्रको मूर्वा ॥ ६३ ॥
चूर्णं तर्पणभागैर्नवभिः संयोजितं समध्वाज्यम्।
ज्येष्ठं कुष्ठनिवर्हणमेतत् प्रायोगिकं भक्ष्यम् ॥ ६४ ॥
श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीदोषमर्शांसि।
व्रध्नभगन्दरपिड़काकण्डूकोठांश्च विनिहन्ति ॥ ६५ ॥

इति सर्वकुष्ठनाशकयोगः।

त्रिफलातिविषाकटुकानिम्बकलिङ्गकवचापटोलानाम्।
मागधिकारजनीद्वयपद्मकमूर्वाविशालानाम् ॥ ६६ ॥
भूनिम्बपलाशानां दद्याद्द्विपलं ततस्त्रिवृद्द्विगुणा।
तस्याश्च पुनर्ब्राह्मी तच्चूर्णं सुसितुत् परम् ॥ ६७ ॥

इति सुसिकुष्ठे।

नवनीतकप्रयोगो रसेन ज्ञात्वाः समाचिकः परमः।
सप्तदशकुष्ठघाती माक्षिकधातुश्च मूत्रेण ॥ ६८ ॥
गन्धकयोगसुवर्णमाक्षिकयोगादेव।
सर्वव्याधिविनाशनमद्यात् कुष्ठी रसञ्च नियच्छेतम् ॥ ६९ ॥
वद्यं शिलाजतुमहितं सहितं वा योगराजेन।
सर्वव्याधिहरणार्थमद्यात् कुष्ठी नियच्छ नित्यञ्च ॥ ७० ॥
खदिरसुरदारुसारं श्रपयित्वा तद्रसेन तोयार्थम्।
क्षौद्रप्रस्थे कार्य्यः कार्य्ये ते चाष्टपालिके च ॥ ७१ ॥
ततश्चायश्चूर्णानामष्टपलं प्रक्षिपेत् तथामूलानि।
त्रिफलैले त्वक् मरिचं पत्रं कनकञ्च कार्षांशम् ॥ ७२ ॥
मत्स्याण्डिका मधुसमा तन्मांसमायसे भाण्डे।
मध्वासवमाचरतः कुष्ठकिलासे शमं यातः ॥ ७३ ॥

इति मध्वासवः।

खदिरकषायद्रोणं कुम्भे घृतभाविते समारोप्य।

द्रव्याणि चूर्णितानि त्वष्टपलिकान्यत्र देयानि ॥ ७४ ॥
त्रिफलाव्योषविडङ्गरजनीमुस्ताटरूषकेन्द्रयवमोवर्णोश्च ।
तथा त्वक् छिन्नरुहा चेति तन्मासं निदधीत धान्यमध्ये ॥७५
प्रातःप्रातः पिबेत्ततो युक्त्या मासेन महाकुष्ठं हन्त्येवाल्पम् ।
पक्षेणार्शःश्वासभगन्दरकासकिलासप्रमेहशोषांश्च ।
ना भवति कनकवर्णः पीत्वारिष्टं कनकबिन्दुम् ॥ ७६ ॥
इति कनकबिन्द्वरिष्टम् ।

कुष्ठेष्वनिलकफकृतेष्वेवं पेयास्तथापि पित्तेषु ।
कृतमालक्वाथयाप्येव विशेषात् कफकृतेषु ॥ ७७ ॥
त्रिफलासवश्च गौडः सचित्रकः श्वित्ररोगकुष्ठघ्नः ।
क्रमुकदशमूलदन्तीवराङ्गमधुयोगसंयुक्तः ॥ ७८ ॥
लघूनि चान्नानि हितानि विद्यात् कुष्ठेषु शाकानि च तिक्तकानि
भल्लातकैश्च त्रिफलैः सनिम्बैर्युक्तानि चान्नानि घृतानि चैव ॥७९॥
पुराणधान्यान्यथ जाङ्गलानि मांसानि मुद्गाश्च पटोलयुक्ताः ।
शस्ता न गुर्वम्लपयोदधीनि नानूपमत्स्या न गुडास्तिलाश्च ॥८०॥
एला कुष्ठं दार्वी शतपुष्पा चित्रकं विडङ्गञ्च ।
कुष्ठालेपनमिष्टश्च रसाञ्जनाभया चैव ॥ ८१ ॥
चित्रकमेलां बिम्बीं वृषकं त्रिवृदर्कनागरकम् ।
चूर्णीकृतमष्टाहं भावयितव्यं पलाशस्य ॥ ८२ ॥
क्षारेण गवां मूत्रे स्रुतेन तेनास्य मण्डलान्याशु ।
भिद्यन्ते विलयन्ति च लिप्तान्यर्काभितप्तानि ॥ ८३ ॥
मांसी मरिचं लवणं रजनी तगरं सुधास्त्वग्घ्मः ।
मूत्रं पित्तं क्षारः पलाशः कुष्ठनुल्लेपः ॥ ८४ ॥
त्रपु सीसमयश्चूर्णं मण्डलनुत् फल्गु चित्रक हस्ती ।
गोधारसः सलवणं टारं च मूत्रश्च मण्डलनुत् ॥ ८५ ॥
कदलीपलाशपाटलिनिचुलक्षाराम्भसा प्रसन्नेन ।

मांसेषु तोयकार्य्यं कार्य्यं पिष्टे च किण्वे च ॥ ८६ ॥
तैर्मर्दकः सुजातः किण्वैर्जनितप्रलेपनं शस्तम्।
मण्डलकुष्ठविनाशनमातपसंस्थे क्रिमिघ्नस्य ॥ ८७ ॥
मुस्तं मदनं त्रिफला करञ्ज आरग्वधं कलिङ्गयवाः।
दार्वी सप्तपर्णो स्नानं सिद्धार्थकं नाम ॥ ८८ ॥
एष कषायो वमनं विरेचनं वर्णकास्तथोद्वर्षः।
त्वग्दोषकुष्ठशोफप्रभावनः पाण्डुरोगघ्नः ॥ ८९ ॥
कुष्ठं करञ्जबीजान्येड़गजः कुष्ठसूदनो लेपः।
प्रपुन्नाड़बीजसैन्धवरसाञ्जनकपित्थलोध्राश्च ॥ ९० ॥
करवीरमूलवल्कः कुटजकरञ्जयोः फलं त्वचो दार्व्याः।
सुमनः प्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ९१ ॥
लोध्रस्य धातकीनां वत्सकबीजस्य नक्तमालस्य।
कल्कश्च मालतीनां कुष्ठेषूद्वर्त्तनालेपः ॥ ९२ ॥
शैरीषी त्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि।
पिष्टा च काकमाची चतुर्विधः कुष्ठनुल्लेपः ॥ ९३ ॥
इति चत्वारो लेपाः।
दार्व्या रसाञ्जनस्य च निम्बपटोलस्य खदिरसारस्य।
आरग्वधवृक्षकयोस्त्रिफलायाः सप्तपर्णस्य ॥ ९४ ॥
इति षट्कषाययोगाःकुष्ठघ्नानिर्दिष्टा सप्तमश्च तिनिशस्य।
स्नाने पाने च मतोस्तथाष्टमश्चाश्वमारस्य ॥ ९५ ॥
आलेपनं प्रघर्षणमवचूर्णनमेत एव च कषायाः।
तैलघृतपाकयोगे चेष्यन्ते कुष्ठशान्त्यर्थम् ॥ ९६ ॥
त्रिफलानिम्बपटोलमञ्जिष्ठा रोहिणी वचा रजनी।
एष कषायोऽभ्यस्तो हिनस्ति कफपित्तजं कुष्ठम् ॥ ९७ ॥
एतैरेव च सर्पिः सिद्धं वातोल्वणं जयति कुष्ठम्।
एष च कल्पो दृष्टः खदिरासनदारुनिम्बानाम् ॥ ९८ ॥

कुष्ठार्कतुत्थकट्फलमूलकबीजानि रोहिणी कटुका।
कुटजफलोत्पलमुस्तं बृहतीकरवीरकासीसम् ॥ ९९ ॥
एडगजनिम्बपाठा दुरालभा चित्रको विडङ्गश्च।
तिक्तेक्ष्वाकुबीजं कम्पिल्लकसर्षपवचा दार्वी ॥ १०० ॥
एतैस्तैलं सिद्धं कुष्ठघ्नं योग एष वा लेपः।
उद्वर्त्तनं प्रघर्षणमवचूर्णनमेष एवेष्टः ॥ १०१ ॥
श्वेतकरवीरकरसो गोमूत्रं चित्रको विडङ्गश्च।
कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतो भिषजाम् ॥ १०२ ॥

इति श्वेतकरवीराद्यं तैलम्।

श्वेतकरवीरपल्लवमूलत्वक् वत्सकविडङ्गश्च।
कुष्ठार्कमूलसर्षपशिग्रुत्वग्रोहिणी कटुका ॥ १०३ ॥
एतैस्तैलं साध्यं कल्कैः पादांशिकैर्गवां मूत्रम्।
दत्त्वा तैलचतुर्गुणमभ्यङ्गः कुष्ठकण्डूघ्नः ॥ १०४ ॥

इति श्वेतकरवीरपल्लवाद्यं तैलम्।

तिक्तेक्ष्वाकुबीजं द्वे तुल्ये रोचना हरिद्रे द्वे।
बृहतीफलमेरण्डः सविशालश्चित्रको मूर्वा ॥ १०५ ॥
कासीसहिङ्गुशिग्रुत्र्यूषणसुरदारुतुम्बुरुविडङ्गम्।
लाङ्गलकं कुटजत्वक् कटुकाख्या रोहिणी चैव ॥ १०६ ॥
सर्षपकल्कैरेतैर्मूत्रे चतुर्गुणे साध्यम्।
कण्डूकुष्ठविनाशनमभ्यङ्गान्मारुतकफघ्नं तैलम् ॥ १०७ ॥

तिक्तेक्ष्वाकु तैलम्।

कनकक्षीरीशैला भार्गी दन्त्याः फलानि मूलञ्च।
जातीफलानि प्रवालसर्षपलशुनविडङ्गं करञ्जत्वक् ॥ १०८ ॥
सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोताः।
गुञ्जैरण्डबृहतीमूलकसुरसार्जकफलानि ॥ १०९ ॥
कुष्ठं पाठा मुस्तं तुम्बुरुमूर्वावचाः सषड्ग्रन्थाः।

एडगजकुटजशिग्रुवूषर्षभल्लातकाश्ववकाः ॥ ११० ॥
हरितालमवाक्पुष्पी तुत्थं कम्पिल्लकोऽमृतासंज्ञः।
सौराष्ट्रीकाशीशं दार्वीत्वक् सर्जिकालवणम् ॥ १११ ॥
कल्कैरेतैस्तैलं करवीरकमूलकपल्लवकषाये।
सार्षपमथवा तैलं गोमूत्रचतुर्गुणं साध्यम् ॥ ११२ ॥
स्थाप्य कटुकालाबूनि तत् सिद्धं तेनास्य मण्डलान्याशु।
भिन्द्याद्विषगभ्यङ्गात् क्रिमींश्च कण्डूं विनिहन्यात् ॥११३॥
इति कनकक्षीरतैलम्।

कुष्ठं तमालपत्रं मरिचं समनःशिलं सकाशीशम्।
तैलेन युक्तमुचितं सप्ताहं भाजने ताम्रे ॥ ११४ ॥
तेनालिप्तं सिध्मं सप्ताहाद्व्येति तिष्ठतो घर्मे।
मासान्नवं किलासं स्नानं मुक्त्वा विशुद्धतनोः ॥ ११५ ॥
इति सिध्मलेपः।

सर्षपकरञ्जकोषातकीनां तैलान्यथेङ्गुदीनाञ्च।
कुष्ठेषु हितान्याहुस्तैलं यच्चापि खदिरस्य तैलानि ॥११६॥
इति तैलानि।

जीवन्ती मञ्जिष्ठा दार्वी कम्पिल्लकस्तथा तुत्थम्।
एष घृततैलपाकः सिद्धः सिद्धे च सर्ज्जरसः देयः ॥११७॥
समधूच्छिष्टो विपादिका नश्यति अभ्यक्ता।
चर्मैककुष्ठं किटिभं कुष्ठं शाम्यत्यलसकञ्च ॥ ११८ ॥
इति विपादिकायाम् तैलघृतं।

किण्वं वराहरुधिरं पृथ्वीका सैन्धवञ्च लेपः स्यात्।
लेपो योज्यः कुसुम्भरूषि कुष्ठञ्च मण्डलनुत् ॥ ११९ ॥
इति मण्डलकुष्ठे लेपः।

पूतिकादारुजटिला पक्वासुरा चोद्रमुद्गपर्ण्यौ च।
लेपः सकाकणासो मण्डलकुष्ठापहः सिद्धः ॥ १२० ॥
इति मण्डलकुष्ठे द्वितीयो लेपः।

चित्रकशोभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि ।
खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च ॥ १२१ ॥
लाक्षारसाञ्जनैला पुनर्नवा चेति कुष्ठिनो लेपाः ।
दधिमण्डयुताः सर्वे देयाः पवमारुतकफघ्नाः ॥ १२२ ॥

इति षट् लेपाः ।

एडगजकुष्ठसैन्धवसौवीरकसर्षपैः क्रिमिघ्नैश्च ।
क्रिमिकुष्ठमण्डलाख्यं दद्रुकुष्ठश्च शममुपैति ॥ १२३ ॥

इति एडगजादिलेपः ।

एडगजः सर्जरसो मूलकबीजञ्च सिध्मकुष्ठानाम् ।
काञ्जिकयुक्ताम्तु पृथक्छतमिदमुद्वर्त्तनं क्रमशो लेपाः ॥१२४॥

इति सिध्मकुष्ठे लेपः ।

वासा त्रिफला पाने स्नाने चोद्वर्त्तने प्रलेपे च ।
बृहती सेव्यपटोलाः सशारिवा रोहिणी चैव ॥ १२५ ॥
खदिराश्वघातककुभा रोहीतककुटजधवनिम्बाः ।
सप्तच्छदकरवीराः शस्यन्ते स्नानपानेषु ॥ १२६ ॥

इति कुष्ठे स्नानं पानञ्च ।

जलवाप्यलोहकेशरपत्रप्लवचन्दनं मृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥ १२७ ॥
यष्ट्याह्वलोध्रपद्मकपटोलपिचुमर्दचन्दनरसाश्च ।
स्नाने पाने च हिताः सुशीतलाः पित्तकुष्ठिभ्यः ॥ १२८ ॥
आलेपनं प्रियङ्गुर्हरेणुका वत्सकस्य च फलानि ।
मातिविषा च सेव्या सचन्दना रोहिणी कटुका ।
तिक्तघृतैर्धौत घृतैरभ्यङ्गो दह्यमानकुष्ठेषु ॥ १२९ ॥

इति अभ्यङ्गः ।

तैलेश्चन्दनमधुकप्रपुण्डरीकोत्पलयुतैश्चाभ्यङ्गः ॥ १३० ॥

इति द्वितीयोऽभ्यङ्गः ।

लूते प्रपतति चाङ्गे दाहे विस्फोटके सचर्मदले ।
शीताः प्रदेहसेका व्यधनविरेचकौ घृतं तिक्तम् ॥ १३१ ॥
खदिरघृतं निम्बघृतं दार्वीघृतमुत्तमं पटोलघृतम् ।
कुष्ठेषु रक्तपित्तप्रबलेषु भिषग्जितं सिद्धम् ॥ १३२ ॥
त्रिफलात्वचोऽर्द्धपलिकाः पटोलपत्रञ्च कार्षिकाः शेषाः ।
कटुरोहिणी सनिम्बा यष्ट्याह्वा त्रायमाणा च ॥१३३॥
एष कषायः साध्यो दत्त्वा द्विपलं मसूराणाम् ।
सलिलाढ़केऽष्टभागे शेषे पूतो रसो ग्राह्यः ॥ १३४ ॥
ते च कषायाष्टपले चतुष्पलं सर्पिषश्च पक्तव्यम् ।
यावत् स्यादष्टपलं शेषं पेयं ततः कोष्णम् ॥ १३५ ॥
तद्वातपित्तकुष्ठं वीसर्पं वातशोणितं प्रबलम् ।
ज्वरदाहगुल्मविद्रधिं विभ्रमविस्फोटकान् हन्ति ॥ १३६ ॥
निम्बपटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम् ।
कुर्य्यादर्द्धपलांशं पर्पटकं त्रायमाणाञ्च ॥ १३७ ॥
सलिलाढ़कसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते ।
चन्दनकिराततिक्तकमागधिकात्रायमाणाश्च ॥ १३८ ॥
मुस्तं वत्सकबीजं कल्कीकृत्यार्द्धकार्षिकान् भागान् ।
नवसर्पिषश्च षट्पलमेतत् सिद्धं घृतं पेयम् ॥ १३९ ॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्ड्वामयश्वयथुहारि ।
वीसर्पपिड़कपामाकण्डूमदगण्डनुत् तिक्तम् ॥ १४० ॥
इति तिक्तपट्पलकं घृतम् ।
*सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम् ।*
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥ १४१ ॥
धन्वयवासं चन्दनमुपकुल्यां पद्मकं रजन्यौ च ।
षड्ग्रन्थां सविशालां शतावरीं शारिवे चोभे ॥ १४२ ॥
वत्सकबीजं वासां मूर्वाममृतं किराततिक्तकञ्च ।

कल्कान् कुर्य्यान्मतिमान् यथ्याह्वां त्रायमाणाञ्च ॥ १४३ ॥
कल्कस्य चतुर्भागे जलमष्टगुणे रसोऽमृतफलानाम् ।
द्विगुणो घृतात् प्रदेयस्तत् सर्पिः पाययेत् सिद्धम् ॥ १४४ ॥
कुष्ठानि रक्तपित्तप्रबलान्यर्शांसि रक्तवाहीनि ।
वीसर्पमम्लपित्तं वातासृक्पाण्डुरोगञ्च ॥ १४५ ॥
विस्फोटकान् सपामानुन्मादं कामलां ज्वरं कण्डूम् ।
हृद्रोगं गुल्मपिड़का असृग्दरं गण्डमालाञ्च ॥ १४६ ॥
हन्यादेतत् सर्पिः पीतं काले यथाबलं सद्यः ।
योगशतैरप्यजितान् महाविकारान् महातिक्तम् ॥१४७॥
इति महातिक्तकं घृतम् ।

दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते शमने ।
स्नेहे च कालयुक्ते न कुष्ठमनुवर्त्तते साध्यम् ॥ १४८ ॥
खदिरस्य तुलाः पञ्च शिंशपाशनयोस्तुले ।
तुलार्द्धाः सर्व एवैते करञ्जारिष्टवेतसाः ॥ १४९ ॥
पर्पटः कुटजश्चैव वृषः क्रिमिहरस्तथा ।
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥ १५० ॥
सप्तपर्णश्च सङ्क्षुण्णो दशद्रोणेषु वारिणः ।
धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढ़कं पचेत् ॥ १५१ ॥
अष्टभागावशेषन्तु कषायमवतारयेत् ।
महातिक्तककल्कैस्तु यथोक्तैः पलसम्मितैः ॥ १५२ ॥
निहन्ति सर्वकुष्ठानि पानाभ्यङ्गनिषेवणात् ।
महाखदिरमित्येतत् परं कुष्ठविकारनुत् ॥ १५३ ॥
इति महाखदिरं घृतम् ।

प्रपतत्सु मक्षिकाप्रसुतेषु गात्रेषु जन्तुजग्धेषु ।
मूत्रं निम्बविड़ङ्गे स्नानं पानं प्रदेहश्च ॥ १५४ ॥
हपकुटजसप्तपर्णाः करवीरकरञ्जनिम्बखदिराश्च ।

स्नाने पाने लेपे क्रिमिकुष्ठनुदः सगोमूत्राः ॥ १५५ ॥

इति वा क्रिमिकुष्ठे।

पानाहारविधाने प्रसेचने धूपने प्रदेहे च।

क्रिमिनाशनं विडङ्गं विशिष्यते कुष्ठहृत् खदिरः ॥ १५६ ॥

इति वा क्रिमिकुष्ठे।

एडगजः सविडङ्गो मूलान्यारग्वधस्य कुष्ठानाम्।

उद्दालनं स्नदन्ता गोऽश्वखराहोष्ट्रदन्ताश्च ॥ १५७ ॥

एडगजः सविडङ्गो रजनीद्वयराजवृक्षमूलश्च।

कुष्ठोद्दालनमग्र्यं सपिप्पलीपाकलं योज्यम्।

श्वित्राणां प्रशमार्थं प्रयोक्तव्यं सर्वतो विशुद्धानाम् ॥१५८॥

श्वित्रे स्रंसनमग्र्यं मलपूरस इष्यते सगुडः।

तं पीत्वा सुस्निग्धो यथाबलं सूर्य्यपादसन्तापम् ॥ १५९ ॥

सेवेत विरिक्तश्च त्र्यहं पिपासुः पिबेत् पेयाम्।

श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात् ॥१६०

स्फोटेषु विस्रुतेषु प्रातः प्रातः पिबेत् पक्षम्।

मलपूमशनं प्रियङ्गुं शतपुष्पाञ्चाम्भसा समुत्क्वाथ्य ॥१६१॥

पालाशं वा क्षारं यथाबलं फाणितोपेतम्।

यच्चान्यत् कुष्ठघ्नं श्वित्राणां सर्वमेव तच्छस्तम्।

खदिरोदकसंयुक्तं खदिरोदकपानमग्र्यम् ॥ १६२ ॥

समनःशिलं विडङ्गं कासीसं रोचनां कनकपुष्पीम्।

श्वित्राणां प्रशमार्थं ससैन्धवं लेपनं दद्यात् ॥ १६३ ॥

इति श्वित्रे लेपः।

कदलीक्षारयुतं वा खदिराश्विदग्धं गवां रुधिरयुक्तम्।

हस्तिमदाध्युषितं वा मालत्याः क्षारकक्षारम् ॥ १६४ ॥

इति लेपः।

नीलोत्पलं सकुष्ठं ससैन्धवं हस्तिमूत्रपिष्टं वा।

मूलकबीजावल्गुजलेपः पिष्टो गवां मूत्रे ॥ १६५ ॥

इति द्वौ लेपौ ।

काकोदुम्बरिका वासा वल्गुजचित्रकौ गवां मूत्रे ।
पिष्टाः मनःशिला वा संयुक्ता बर्हिपित्तेन ॥ १६६ ॥

इति वा द्वौ लेपौ ।

किलासहन्तामूलान्यवल्गुजानि लाक्षा च ।
गोपित्तमञ्जने द्वे पिप्पल्यः काललोहरजः ॥ १६७ ॥

इति श्वित्रे प्रलेपः ।

शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ १६८ ॥
दारुणञ्चारुणं श्वित्रं किलासं नामभिस्त्रिभिः ।
विज्ञेयं त्रिविधं तच्च त्रिदोषं प्रायशश्च तत् ॥ १६९ ॥
दोषे रक्ताश्रिते रक्तं ताम्रं मांससमाश्रिते ।
मेदःश्रितं श्रितं श्वित्रे गुरुतच्चोत्तरोत्तरम् ॥ १७० ॥
यत् परस्परतोऽभिन्नं बहु यद्रक्तलोमवत् ।
यच्च वर्षगणोत्पन्नं तच्छ्वित्रं नैव सिध्यति ॥ १७१ ॥
वचांस्यतथ्यानि कृतघ्नभावो निन्दा सुराणां गुरुधर्षणञ्च ।
पापक्रिया पूर्वकृतञ्च कर्म हेतुः किलासस्य विरोधि चान्नम् १७२

भवन्ति चात्र ।

हेतुर्द्रव्यं लिङ्गं समासतो दोषनिर्देशात् ।
साध्यमसाध्यं स्पष्टं कुष्ठापहाश्च ये योगाः ॥ १७३ ॥
सिद्धाः किलासहेतुर्लिङ्गं गुरुलाघवं शान्तिः ।
इति संग्रहः प्रणीतो महर्षिणा कुष्ठनाम्न्यध्याये ।
स्मृतिबुद्धिवर्धनार्थं शिष्याय हुताशवेशाय ॥ १७४ ॥

[illegible] कुष्ठचिकित्सितम् ।

---

# अष्टमोऽध्यायः ।

## राजयक्ष्मचिकित्सितम् ।

दिवौकसां कथयतामृषिभिर्वै श्रुता कथा ।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥ १ ॥
रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः ।
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात् ॥ २ ॥
दुहितृणामसम्भोगाच्छेषाणाञ्च प्रजापतेः ।
क्रोधो निश्वासरूपेण मूर्त्तिमान् निःसृतो मुखात् ॥३॥
प्रजापतेर्हि दुहितॄरष्टाविंशतिमंशुमान् ।
भार्य्यार्थं प्रतिजग्राह न च सर्वास्ववर्त्तत ॥ ४ ॥
गुरुणा तमवध्यातं भार्य्यास्वसमवर्त्तिनम् ।
रजोऽन्वमबलं दीनं यक्ष्मा शशिनमाविशत् ॥ ५ ॥
सोऽभिभूतोऽतिगुरुणा गुरुक्रोधेन निष्प्रभः ।
देवदेवर्षिसहितो जगाम शरणं गुरुम् ॥ ६ ॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः ।
प्रसादं कृतवान् सोमस्ततोऽश्विभ्यां चिकित्सितः ॥ ७ ॥
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः ।
ओजसा वर्द्धितोऽश्विभ्यां शुद्धं सत्त्वमवाप च ॥८॥
क्रोधो यक्ष्मा ज्वरो रोग एकोऽर्थो दुःखसंज्ञितः ।
यस्मात् स राज्ञः प्रागासीद्राजयक्ष्मा ततो मतः ॥ ९ ॥
स यक्ष्मा हुङ्कृतोऽश्विभ्यां मानुषं लोकमागतः ।
लब्ध्वा चतुर्विधं हेतुं समाविशति मानवान् ॥१०॥
अयथाबलमारम्भं वेगसन्धारणं क्षयम् ।
यक्ष्मणः कारणं विद्याच्चतुर्थं विषमाशनम् ॥११॥
युद्धाध्ययनभाराध्वलङ्घनप्लवनादिभिः ।
पतनैरभिघातैर्वा साहसैर्वा तथा परैः ॥ १२ ॥

अथयाबलमारम्भैर्जन्तोरुरसि विघ्नते।
वायुः प्रकुपितो दोषावुदीर्य्योभौ विधावति ॥ १३ ॥
स शिरःस्थः शिरःशूलं करोति गलमाश्रितः।
कण्ठोद्ध्वंसञ्च कासञ्च स्वरभेदमरोचकम् ॥ १४ ॥
पार्श्वशूलञ्च पार्श्वस्थो वर्चोभेदं गुदे स्थितः।
जृम्भां ज्वरञ्च सन्धिस्थ उरस्थयोरसो रुजम् ॥ १५ ॥
क्षणनाच्चोरसो रक्तं कासमानः कफानुगम्।
जर्जरेणोरसा कृच्छ्रमुरःशूली निरस्यति ॥ १६ ॥
इति साहसिको यक्ष्मा रूपैरेतैः प्रपद्यते।
एकादशभिरालक्ष्य भजेत् तस्माच्च साहसम् ॥ १७ ॥
ह्रीमत्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम्।
वातमूत्रपुरीषाणां निगृह्णाति यदा नरः ॥ १८ ॥
तदा वेगप्रतीघातात् कफपित्ते समीरयन्।
ऊर्द्धं तिर्य्यगधः कुर्य्याद्विकारान् कुपितोऽनिलः ॥ १९ ॥
प्रतिश्यायञ्च कासञ्च स्वरभेदमरोचकम्।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्दनम् ॥ २० ॥
अङ्गमर्दं मुहुश्छर्दिर्वर्चोभेदं त्रिलक्षणम्।
रूपाण्येकादशैतानि यक्ष्मा यैरुच्यते महान् ॥ २१ ॥
ईर्ष्योत्कण्ठाभयत्रासक्रोधशोकातिकर्षणात्।
अवायानशनाभ्याञ्च शुक्रमोजश्च क्षीयते ॥२२॥
ततः स्नेहक्षयाद्वायुर्वृद्धो दोषानुदीरयन्।
प्रतिश्यायं ज्वरं कासमङ्गमर्दं शिरोरुजम् ॥२३॥
श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम्।
करोति चांससन्तापमेकादशमिहाङ्गहृत् ॥ २४ ॥
लिङ्गान्यावेदयन्त्येतानेकादश महागदम्।
सम्प्राप्तं राजयक्ष्माणं क्षयात् प्राणक्षयप्रदम् ॥ २५ ॥

विविधान्यन्नपानानि वैषम्येण समश्नतः।
जनयन्त्यामयान् घोरान् विषमान् मारुतादयः ॥२६॥
स्रोतांसि रुधिरादीनां वैषम्याद्विषमं गताः।
रुद्ध्वा रोगाय कल्पन्ते पुष्यन्ति च न धातवः ॥२७॥
प्रतिश्यायं प्रसेकञ्च कासं छर्दिमरोचकम्।
ज्वरमंसाभितापञ्च छर्दनं रुधिरस्य च ॥ २८ ॥
पार्श्वशूलं शिरःशूलं स्वरभेदमथापि वा।
कफपित्तानिलकृतं लिङ्गं विद्याद्यथाक्रमम् ॥ २९ ॥
इति व्याधिसमूहस्य रोगराजस्य हेतुजम्।
रूपमेकादशविधं हेतुश्चोक्तश्चतुर्विधः ॥३०॥
पूर्वरूपं प्रतिश्यायो दौर्बल्यं दोषदर्शनम्।
अदोषेष्वपि भावेषु काये बीभत्सदर्शनम् ॥ ३१ ॥
घृणित्वमश्नतश्चापि बलमांसपरिक्षयः।
स्त्रीमद्यमांसप्रियता प्रियता चावगुण्ठने ॥ ३२ ॥
मक्षिकाघुणकेशानां तृणानां पतनानि च।
प्रायोऽन्नपाने केशानां नखानाञ्चाभिवर्द्धनम् ॥ ३३ ॥
पतत्रिभिः पतङ्गैश्च श्वापदैश्चाभिधर्षणम्।
स्वप्ने केशास्थिराशीनां भस्मनश्चाधिरोहणम् ॥३४॥
जलाशयानां शैलानां वनानां ज्योतिषामपि।
शुष्यतां क्षीयमाणानां पततां यच्च दर्शनम् ॥ ३५ ॥
प्राग्रूपं बहुरूपस्य तज्ज्ञेयं राजयक्ष्मणः।
रूपं तस्य यथोद्देशं परं शृणु सभेषजम् ॥ ३६ ॥
यथास्वेनोष्मणा पाकं शारीरा यान्ति धातवः।
स्रोतसा च यथास्वेन धातुः पुष्यति धातुना ॥ ३७ ॥
स्रोतसां संनिरोधाच्च रक्तादीनाञ्च संक्षयात्।
धातूष्मणाञ्चापचयाद्राजयक्ष्मा प्रवर्त्तते ॥ ३८ ॥

तालुकण्ठपरिशोषः पित्तात् वक्तुमसूयते।
कफात् मन्दो विबद्धश्च स्वरः खुरखुरायते॥ ५२॥
सन्धौ रक्तविबन्धत्वात् स्वरः कृच्छ्रात् प्रवर्त्तते।
कासातिवेगात् करुणः पीनसात् कफवातिकः॥५३॥
पार्श्वशूलन्त्वनियतं सङ्कोचायामलक्षणम्।
शिरःशूलं ससन्तापं यक्ष्मिणः स्यात् सगौरवम्॥५४॥
अतिखिन्ने शरीरे तु यक्ष्मिणो विषमाशनात्।
कण्ठात् प्रवर्त्तते रक्तं श्लेष्मा चोत्क्लिष्टसञ्चितः॥५५॥
रक्तं विवृतमार्गत्वात् मांसादीन् नानुपद्यते।
आमाशयस्थमुत्क्लिष्टं बहुत्वात् कण्ठमेति वा॥ ५६॥
वातश्लेष्मविबन्धत्वादुरसः श्वासमृच्छति।
दोषैरुपहते चाग्नौ सपिच्छमतिसार्य्यते॥ ५७॥
पृथग्दोषैः समस्तैर्वा जिह्वाहृदयसंश्रितैः।
जायतेऽरुचिराहारैर्दुष्टैरर्थैश्च मानसैः॥ ५८॥
कषायतिक्तमधुरैर्विद्यान्मुखरसैः क्रमात्।
वाताद्यैररुचिं जातां मानसीं दोषदर्शनात्॥५९॥
अरोचकात् कासवेगाद्दोषोत्क्लेशाद्भयादपि।
छर्दिर्या सा विकाराणामन्येषामप्युपद्रवः॥ ६०॥
सर्व्वलिङ्गोपसृष्टो यक्ष्मा दोषाणान्तु बलाबलम्।
परीक्ष्यावस्थितं वैद्यः शोषिणं समुपाचरेत्॥ ६१॥
प्रतिश्याये शिरःशूले कासे श्वासे स्वरक्षये।
पार्श्वशूले च विविधाः क्रियाः साधारणीः शृणु॥६२॥
पीनसे स्वेदमभ्यङ्गं धूममालेपनानि च।
परिषेकावगाहांश्च यावकं वाट्यमेव च॥ ६३॥
लवणाम्लकटूष्णांश्च रसान् स्नेहोपसंहितान्।
लावतित्तिरिदक्षाणां वर्त्तकानाञ्च कल्पयेत्॥ ६४॥

सपिप्पलीकं सयवं सकुलत्थं सनागरम्।
दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ॥ ६५ ॥
तेन षड्विनिवर्त्तन्ते विकाराः पीनसादयः।
मूलकानां कुलत्थानां यूषैर्वा सूपकल्पितैः ॥ ६६ ॥
यवगोधूमशाल्यन्नैर्यथासात्म्यमुपाचरेत्।
पिबेत् प्रसन्नां वारुण्या जलं वा पाञ्चमूलिकम् ॥६७॥
धान्यनागरसिद्धं वा तामलक्याथ वा शृतम्।
पर्णिनीभिश्चतसृभिस्तेन चान्नानि कल्पयेत् ॥६८॥
छागलोमालिकामाषकुलत्थश्चयपायसैः।
सङ्करस्वेदविधिना कण्ठं पार्श्वमुरः शिरः ॥६९॥
स्वेदयेत् पत्रभङ्गैश्च शिरश्च परिषेचयेत्।
बलागुडूचीमधुकसृतैर्वा वारिभिः सुखैः ॥ ७० ॥
वस्तमत्स्यशिरोभिर्वा नाड़ीस्वेदैः प्रयोजयेत्।
कण्ठे शिरसि पार्श्वे च पयोभिर्वा सवातिकैः ॥७१॥
औदकानूपमांसानि सलिलं पाञ्चमूलिकम्।
सस्नेहमारनालं वा नाड़ीस्वेदं प्रयोजयेत् ॥ ७२ ॥
जीवन्त्याः शतपुष्पाया बलाया मधुकस्य च।
वचाया वेशवारस्य विदार्या मूलकस्य च ॥ ७३ ॥
औदकानूपमांसानामुपनाहाश्च संस्कृताः।
शस्यन्ते च चतुःस्नेहाः शिरःपार्श्वांसशूलिनाम् ॥७४॥
शतपुष्पा समधुकं कुष्ठं तगरचन्दनम्।
आलेपनं स्यात् सघृतं शिरःपार्श्वांसशूलनुत् ॥७५॥
बलारास्नातिलाः सर्पिर्मधुकं नीलमुत्पलम्।
पलङ्कषा देवदारु चन्दनं केशरं घृतम् ॥ ७६ ॥
वीरा बला विदारी च कृष्णागन्धा पुनर्नवा।
शतावरी पयस्या च कतृणं मधुकं घृतम् ॥ ७७ ॥

चत्वार एते श्लोकार्द्धैः प्रदेहाः परिकीर्त्तिताः।
शस्ताः संसृष्टदोषाणां शिरःपार्श्वांसशूलिनाम् ॥७८॥
भावनं धूमपानानि स्नेहाश्चोत्तरभक्तिकाः।
तैलान्यभ्यङ्गयोगानि वस्तिकर्म तथा परम् ॥ ७९ ॥
जलौकालाबुशृङ्गैर्वा प्रदुष्टं व्यधनेन वा।
शिरःपार्श्वांसशूलेषु रुधिरं तस्य निर्हरेत् ॥ ८० ॥
प्रदेहः सघृतश्चेष्टः पद्मकोशीरचन्दनैः।
दूर्वामधुकमञ्जिष्ठाकेशरैर्वा घृताप्लुतैः ॥ ८१ ॥
प्रपौण्डरीकनिर्गुण्डीपद्मकेशरमुत्पलम्।
कशेरुकाः पयस्या च ससर्पिष्कं प्रलेपनम् ॥ ८२ ॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा।
अभ्यङ्गः पयसा सेकः शस्तश्च मधुकाम्बुना ॥ ८३ ॥
माहेन्द्रेण सुशीतेन चन्दनादिस्रुतेन वा।
परिषेकः प्रयोक्तव्य इति संशमनी क्रिया ॥ ८४ ॥

इति संशमनी क्रिया।

दोषाधिकानां वमनं शस्यते सविरेचनम्।
स्नेहस्वेदोपपन्नानां सस्नेहं यन्न कर्षणम् ॥ ८५ ॥
शोषी मुञ्चति गात्राणि पुरीषस्रंसनादपि।
अबलापेक्षिणीं मात्रां किं पुनर्यो विरिच्यते ॥ ८६ ॥
योगात् संग्रहकोष्ठानां कासे श्वासे स्वरक्षये।
शिरःपार्श्वांसशूलेषु सिद्धानेतान् प्रयोजयेत् ॥ ८७ ॥
बलाविदारिगन्धाद्यैर्विदार्या मधुकेन वा।
सिद्धं सलवणं सर्पिर्नस्यं स्यात् स्वर्यमुत्तमम् ॥ ८८ ॥
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला।
क्षीरं सर्पिश्च तत्सिद्धं स्वर्यं स्याद्वावनं परम् ॥ ८९ ॥
शिरःपार्श्वांसशूलघ्नं कासश्वासनिबर्हणम्।

प्रयुज्यमानं बहुशो घृतश्चोत्तरभक्तिकम् ॥ ९० ॥
दशमूलेन पयसा सिद्धं मांसरसेन च ।
बलागर्भं घृतं सद्यो रोगानेतान् प्रबाधते ॥९१॥
भक्तस्योपरि मध्ये वा यथाग्नि प्रविचारितम् ।
रास्नाघृतं वा सक्षीरं सक्षीरं वा बलाघृतम् ॥९२॥
लेहान् कासापहान् स्वर्यान् श्वासहिक्कानिवर्हणान् ।
शिरःपार्श्वांसशूलघ्नान् स्नेहांश्चातःपरं शृणु ॥९३॥
घृतं खर्जूरमृद्वीकाशर्कराक्षौद्रसंयुतम् ।
सपिप्पलीकं वैस्वर्यकासश्वासनिवर्हणम् ॥९४॥
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकं सक्षौद्रं तत् परं स्वरबोधनम् ॥९५॥
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ।
पञ्चभिः पञ्चमूलैर्वा शृताद् यदुदियाद् घृतम् ॥९६ ॥
पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ।
सिद्धं सर्पिर्जयत्येतत् यक्ष्मणः सप्तकं बलम् ॥९७॥
खर्जूरं पिप्पली द्राक्षा पथ्या शृङ्गी दुरालभा ।
त्रिफला पिप्पली मुस्तं शृङ्गाटीगुडशर्कराः ॥९८॥
वीरा शटी पुष्कराख्यं सुरसः शर्करा गुडः ।
नागरं चित्रको लाजाः पिप्पल्यामलकं गुडः ॥९९॥
श्लोकार्धविहितानेतान् लिह्याद्वा मधुसर्पिषा ।
कासश्वासापहान् स्वर्यान् पार्श्वशूलापहांस्तथा ॥१००॥
सितोपलां तुगाक्षीरीं पिप्पलीं बहुलां त्वचम् ।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेन्मधुसर्पिषा ॥१०१॥
चूर्णितं प्राशयेद्वा तत् श्वासकासकफातुरम् ।
सुप्तजिह्वं रोचकिनमल्पाग्निं पार्श्वशूलिनम् ॥१०२॥
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्ध्वगे ।

वासासर्पिः शतावर्य्या सिद्धं वा परमं हितम् ॥१०३॥
दुरालभां श्वदंष्ट्राञ्च चतस्रः पर्णिनीर्बलाम्।
भागान् पलोन्मितान् कृत्वा पलं पर्पटकस्य च ॥१०४॥
पचेद्दशगुणे तोये दशभागावशेषिते।
रसे सुपूते द्रव्याणामेषां कल्कान् समावपेत् ॥१०५॥
शट्याः पुष्करमूलस्य पिप्पलीत्रायमाणयोः।
तामलक्याः किरातानां तिक्तस्य कुटजस्य च ॥१०६॥
फलानां शारिवायाश्च सुपिष्टान् कर्षसम्मितान्।
ततस्तेन घृतप्रस्थं क्षीरद्विगुणितं पचेत् ॥१०७॥
ज्वरं दाहं भ्रमं कासमंसपार्श्वशिरोरुजम्।
तृष्णां छर्दिरतीसारमेतान् सर्पिरपोहति ॥१०८॥

इति गोक्षुराद्यघृतम्।

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च।
शटीं पुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम् ॥१०९॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम्।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥११०॥
एतद्व्याधिसमूहस्य रोगेशस्य समुत्थितम्।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥१११॥
बलां स्थिरां पृश्निपर्णीं बृहतीं सनिदिग्धिकाम्।
साधयित्वा रसे तस्मिन् पयो गव्यं सनागरम् ॥११२॥
द्राक्षा खर्जूरसर्पिर्भिः पिप्पल्या च शृतं सह।
सक्षौद्रं ज्वरकासघ्नं स्वर्य्यञ्चैतत् प्रयोजयेत् ॥११३॥
आजस्य पयसश्चैव प्रयोगो जाङ्गला रसाः।
यूषार्थे चणका मुद्गा मुकुष्ठाश्चोपकल्पिता।
ज्वराणां शमनीयो यः पूर्वमुक्तः क्रियाविधिः ॥ ११४ ॥
यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते।

कफप्रसेके बलवान् श्लैष्मिकश्छर्दयेन्नरः ॥ ११५ ॥
पयसा फलयुक्तेन मधुरेण रसेन वा ।
सर्पिष्मत्या यवाग्वा वा वमनीयोपसिद्धया ॥ ११६ ॥
स वान्तोऽद्याच्च लघ्वन्नमन्नकाले सदीपनम् ।
यवगोधूममाध्वीकशीध्वरिष्टसुरासवान् ।
जाङ्गलानि च शूल्यानि सेवमानः कफं जयेत् ॥ ११७॥
श्लेष्मणोऽतिप्रसेके तु वायुः श्लेष्माणमस्यति ।
कफप्रसेकं तं विद्वान् स्निग्धोष्णैरेव निर्जयेत् ॥११८॥
क्रिया कफप्रसेके या वम्यां सैव प्रशस्यते ।
हृद्यानि चान्नपानानि वातघ्नानि लघूनि च ॥११९॥
प्रायोपोपहताग्नित्वात् सपिच्छमतिसार्यते ।
प्राप्नोत्यास्यस्य वैरस्यं न चान्नमभिनन्दति ॥१२०॥
तस्याग्निदीपनान् योगानतीसारनिबर्हणान् ।
वक्त्रशुद्धिकरान् कुर्यादरुचिप्रतिबाधकान् ॥१२१॥
सनागरानिन्द्रयवान् पिबेद्वा तण्डुलाम्बुना ।
सिद्धां यवागूं जीर्णे च चाङ्गेरीतक्रदाडिमैः ॥१२२॥
पाठां बिल्वं यमानीश्च पातव्यं तक्रसंयुतम् ।
दुरालभां शृङ्गवेरं पाठाञ्च सुरया सह ॥१२३॥
जम्ब्वाम्रमध्यं बिल्वञ्च सकपित्थं सनागरम् ।
पेया मण्डेन पातव्यमतीसारनिवृत्तये ॥१२४॥
एतानेव च योगांस्त्रीन् पाठादीन् कारयेत् खडान् ।
मधुरधान्यान् सस्नेहान् साम्लान् मेघ्रप्रधानान् यवान् ॥१२५॥
वेतसार्जुनजम्बूनां मृणालीकृष्णगन्धयोः ।
श्रीपर्ण्यां मदयन्त्याश्च यूथिकायाश्च पल्लवान् ॥१२६॥
चाङ्गेर्याश्चुक्रिकायाश्च दुग्धिकायाश्च कारयेत् ।
खडान् दधिसरोपेतान् ससर्पिष्कान् सदाडिमान् ॥१२७॥

मांसानां लघुपाकानां रसाः सांग्राहिकैर्युताः।
व्यञ्जनार्थे प्रशस्यन्ते भोज्यार्थे रक्तशालयः॥ १२७॥
स्थिरादिपञ्चमूलेन पाने शस्तं शृतं जलम्।
तक्रं सुरा मधुक्रोका दाड़िमस्याथवा रसः॥ १२८॥
दीपनं ग्राहि निर्दिष्टं भेषजं भिन्नवर्चसे।
परं मुखस्य वैरस्यनाशनं रोचनं शृणु॥ १२९॥
द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनम्।
तद्वत् प्रक्षालयेदास्यं धारयेत् कवलग्रहान्॥ १३०॥
पिबेद्धूमं ततो मृष्टमद्याद्दीपनपाचनम्।
भेषजं पानमन्नञ्च हितमिष्टोपकल्पितम्॥ १३१॥
त्वङ्मुस्तमेलाधान्यानि मुस्तमामलकं त्वचम्।
दार्वीत्वचो यमानी च पिप्पल्यस्तेजवत्यपि॥ १३२॥
यमानी तिन्तिड़ीकञ्च पञ्चैते मुखधावनाः।
श्लोकपादेषु विहिता रोचना मुखशोधनाः॥ १३३॥
गुलिकां धारयेदास्ये चूर्णैर्वा शोधयेन्मुखम्।
एषामालोड़ितानां वा धारयेत् कवलग्रहान्॥ १३४॥
सुरामाध्वीकशीधूनां तैलस्य मधुसर्पिषोः।
कवलान् धारयेदिष्टान् क्षीरस्येक्षुरसस्य च॥१३५॥
यमानीं तिन्तिडीकञ्च नागरं साम्लवेतसम्।
दाड़िमं बदरञ्चाम्लं कार्षिकञ्चोपकल्पयेत्॥ १३६॥
धान्यसौवर्चलाजाजीवराङ्गञ्चार्द्धकार्षिकम्।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च॥ १३७॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत्।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचकम्॥ १३८॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम्।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत्॥ १३९॥
इति यमानीषाड़वम्।

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके ॥ १४० ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥ १४१ ॥
हृत्पाण्डुग्रहणीदोषशोषप्लीहज्वरापहम् ।
वम्यतीसारशूलघ्नमूढवातानुलोमनम् ॥ १४२ ॥
कल्पयेद् गुटिकाश्चैव चूर्णं पक्त्वा सितोपलैः ।
गुटिका ह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः ॥ १४३ ॥
इति तालीशाद्यं चूर्णं गुडिका च ।

शस्यते क्षीणमांसाय कल्पितानि विधानवित् ।
दद्यान्मांसादमांसानि बृंहणानि विशेषतः ॥ १४४ ॥
शोषिणे बार्हिणं दद्याद् बर्हिशब्देन चापरान् ।
गृध्रानुलूकांश्चाषांश्च विधिवत् सूपकल्पितान् ॥ १४५ ॥
काकांस्तित्तिरिशब्देन वर्मिशब्देन चोरगान् ।
भृष्टान्मत्स्यान्त्रशब्देन दद्यात् गण्डूपदानपि ॥ १४६ ॥
लोमशान् स्थूलनकुलान् विडालांश्चोपकल्पितान् ।
शृगालशावांश्च भिषक् शशशब्देन दापयेत् ॥ १४७ ॥
सिंहानृक्षांस्तरक्षूंश्च व्याघ्रानेवंविधांस्तथा ।
मांसादान् मृगशब्देन दद्यान्मांसाभिवृद्धये ॥ १४८ ॥
गजखड्गितुरङ्गाणां वेशवारकृतान् भिषक् ।
दद्यान्महिषशब्देन मांसं मांसाभिवृद्धये ॥ १४९ ॥
मांसेनोपचिताङ्गानां मांसं मांसकरं परम् ।
तीक्ष्णोष्णलाघवाच्छस्तं विशेषान् मृगपक्षिणाम् ॥१५०॥
मांसानि यान्यनभ्यासादनिष्टानि प्रयोजयेत् ।
तेषूपधा सुखं भोक्तुं तथा शक्यानि तानि हि ॥१५१॥
जानन् जुगुप्सन्नैवाद्याज्जग्धं वा पुनरुल्लिखेत् ।

तस्माच्छ्वोपसिद्धानि मांसान्येतानि दापयेत् ॥१५२॥
बर्हितित्तिरिदक्षाणां हंसानां शूकरोष्ट्रयोः।
खरगोमहिषाणाञ्च मांसं मांसकरं परम् ॥१५३॥
योनिरष्टविधा चोक्ता मांसानामन्नपानिके।
तान् परीक्ष्य भिषग्विद्वान् दद्यान्मांसानि शोषिणे ॥१५४॥
प्रसहाभूशयानूपवारिजावारिचारिणः।
आहारार्थं प्रदातव्या मात्रया वातशोषिणे ॥१५५॥
प्रतुदा विष्किराश्चैव धन्वजाश्च मृगद्विजाः।
कफपित्तपरीतानां प्रयोज्याः शोषरोगिणाम् ॥१५६॥
विधिवत् सूपसिद्धानि मनोज्ञानि मृदूनि च।
रसवन्ति सुगन्धीनि मांसान्येतानि भक्षयेत् ॥ १५७ ॥
मांसमेवाश्नतः शोषे माध्वीकं पिबतोऽपि च।
नियतानल्पचित्तस्य चिरं काये न तिष्ठति ॥१५८॥
वारुणीमण्डनित्यस्य बहिर्मार्जनसेविनः।
अविधारितवेगस्य यक्ष्मा न लभतेऽन्तरम् ॥१५९॥
प्रसन्नां वारुणीं सीधुमरिष्टानासवान् मधु।
यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयेत् ॥ १६० ॥
मद्यं तैक्ष्ण्यौष्ण्यवैशद्यसूक्ष्मत्वात् स्रोतसां मुखम्।
प्रमथ्य विवृणोत्याशु तन्मोक्षात् सप्त धातवः ॥१६१॥
पुष्यन्ति धातुपोषाच्च शीघ्रं शोषः प्रशाम्यति।
मांसादमांसस्वरसे सिद्धं सर्पिः प्रयोजयेत्।
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ॥ १६२ ॥
सिद्धं मधुरकैर्द्रव्यैर्दशमूलकषायिकैः।
क्षीरमांसरसोपेतं घृतं शोषहरं परम् ॥ १६३ ॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
सयावशूकैः सक्षीरैः स्रोतसां शोधनं घृतम् ॥ १६४ ॥

रास्नाबलागोक्षुरकं स्थिरा वर्षाभूसाधितम् ।
जीवन्तीपिप्पलीगर्भं सक्षीरं शोफनुद्भृतम् ॥ १६५ ॥
यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुना सह ।
सिद्धानां सर्पिषामेषामद्यादन्नेन वा सह ॥ १६६ ॥
शुष्यतामेष निर्दिष्टो विधिराभ्यवहारिकः ।
बहिःस्पर्शनमाश्रित्य वक्ष्यतेऽतः परं विधिः ॥ १६७ ॥
स्नेहक्षीराम्बुकोष्ठे तं स्वभ्यक्तमवगाहयेत् ।
स्रोतोविबन्धमोक्षार्थं बलपुष्ट्यर्थमेव वा ॥ १६८ ॥
उत्तीर्णं मिश्रकैः स्नेहैः पुनरक्तैः सुखैः करैः ।
मृद्नीयात् सुखमासीनं सुखश्चोत्सादयेन्नरम् ॥ १६९ ॥
जीवन्तीं शतवीर्यां च विकसां सपुनर्नवाम् ।
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ॥ १७० ॥
विदारीं सर्षपं कुष्ठं तण्डुलानतसीफलम् ।
माषांस्तिलांश्च किण्वं च सर्वमेकत्र चूर्णयेत् ॥ १७१ ॥
त्रिगुणं यवचूर्णेन दध्ना युक्तं समाक्षिकम् ।
एतदुत्सादनं कार्यं पुष्टिवर्णबलप्रदम् ॥ १७२ ॥
गौरसर्षपकल्केन गन्धैश्चापि सुगन्धिभिः ।
स्नायादृतुसुखैस्तोयैर्जीवनीयौषधैः शृतैः ॥ १७३ ॥
गन्धैः समाल्यैर्वासोभिर्भूषणैश्च विभूषितः ।
स्पृश्यान् संस्पृश्य संपूज्य देवताः सभिषग्द्विजाः ॥१७४॥
इष्टवर्णरसस्पर्शं गन्धवत् पानभोजनम् ।
इष्टमिष्टैरुपहितं सुखमद्यात् सुखप्रदम् ॥ १७५ ॥
समातीतानि धान्यानि कल्पनीयानि शुष्यताम् ।
लघूनि हीनवीर्याणि तानि पथ्यतमानि हि ॥ १७६ ॥
यच्चोपदेक्ष्यते पथ्यं क्षतक्षीणचिकित्सिते ।
यक्ष्मिणस्तत् प्रयोक्तव्यं बलमांसाभिवृद्धये ॥ १७७ ॥

अभ्यङ्गोत्सादनैः स्नानैरवगाहैर्विमार्जनैः।
वस्तिभिः क्षीरसर्पिर्भिर्मांसैर्मांसरसौदनैः॥ १८८॥
इष्टैर्मद्यैर्मनोज्ञानां गन्धानामुपसेवनैः।
यथर्त्तुविहितैः स्नानैर्वासोभिरहतैः प्रियैः॥१८९॥
सुहृदां रमणीयानां प्रमदानाञ्च दर्शनैः।
गीतवादित्रशब्दैश्च प्रियश्रुतिभिरेव च॥ १९०॥
हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः।
ब्रह्मचर्य्येण दानेन तपसा देवतार्च्चनैः॥ १९१॥
सत्येनाचारयोगेन मङ्गलैरविहिंसया।
वैद्यविप्रार्च्चनाच्चैव रोगराजो निवर्त्तते॥ १९२॥
यया प्रयुक्तया चेष्ट्या राजयक्ष्मा पुरा जितः।
तां वेदविहितामिष्टिमारोग्यार्थी प्रयोजयेत्॥१९३॥

तत्र श्लोकौ।

प्रागुत्पत्तिर्निमित्तानि प्राग्रूपं रूपसंग्रहः।
समासव्यासतश्चोक्तं भेषजं राजयक्ष्मणः॥१९४॥
नाम हेतुरसाध्यत्वं साध्यत्वं कृच्छ्रसाध्यता।
इत्युक्तः संग्रहः कृत्स्नो राजयक्ष्मचिकित्सिते॥ १९५॥

---

## नवमोऽध्यायः।

### अर्शश्चिकित्सितम्।

आसीनं मुनिमव्यग्रं कृतजप्यं कृतक्षणम्।
पृष्टवानर्शसां मुक्तिमग्निवेशः पुनर्वसुम्॥ १॥
प्रकोपहेतुसंस्थानं स्थानं लिङ्गं चिकित्सितम्।
साध्यासाध्यविभागञ्च तस्मै तन्मुनिरब्रवीत्॥ २॥

इह खलु अग्निवेश। द्विविधान्यर्शांसि सहजानि कानिचित्

कानिचित् जातस्योत्तरकालजानि। तत्र बीजं गुदवलि बीजो-
तप्तमायतनमर्शसां सहजानाम्। तत्र द्विविधो बीजो उपतप्ते
हेतु मातापित्रोरपचारः पूर्वकृतञ्च कर्म तथा अन्येषामपि स-
जाना विकाराणाम्। तत्र सहजानि सहजातानि, शरीर-
अर्शो सौत्यधिमासविकारा ॥ ३ ॥

सर्वेषाञ्चार्शसां चेत्रं गुदस्यार्धपञ्चमाङ्गुलेऽवकाशे विभाग-
न्तरास्तिस्रो गुदवलय चेत्रमिति देश ॥ ४ ॥

केचित् तु भूयासमेव देशमुपदिशन्ति अर्शसां शिश्नमपत्य-
गलमुखनासिकाकर्णाक्षिवर्त्मानि त्वक् च। तदस्त्यधिकमा-
देश एव गुदवलिजानान्त्वर्शांसीति संज्ञा तत्र यस्मिन् स-
पाञ्च अर्शसामधिष्ठान मेदो मांस त्वक् च ॥ ५ ॥

तत्र सहजानि अर्शांसि कानिचिदणूनि कानिचिन्महान्ति
कानिचिद्दीर्घाणि कानिचिद्ध्रस्वानि कानिचिद्वृत्तानि कानि-
चिद्विषमविसृतानि कानिचिदन्तःकुटिलानि कानिचिद्बहि-
कुटिलानि कानिचिज्जटिलानि कानिचिदन्तर्मुखानि यथा-
दोषानुबन्धवर्णानि ॥ ६

तैरुपहतो जन्मप्रभृति भवति अतिकृशो विवर्णः क्षाम-
दीन प्रचुरविबद्धवातमूत्रपुरीष शार्करी अश्मरी वा त-
नियतविबद्धमुक्तपक्वामशुष्कभिन्नवर्चा अन्तरान्तरा श्वे-
पाण्डुहरितपीतरक्तारुणतनुसान्द्रपिच्छिलकुणपगन्ध्यामपुरीषी
वेगो नाभिबस्तिवंक्षणोद्देशे प्रचुरपरिकर्त्तिकान्वित सशूलगु-
प्रवाहिक परिहर्षप्रमेहप्रसक्तविष्टम्भान्त्रकूजोदावर्त्तहृदयेन्द्रिय-
प्रलेप प्रचुरविबद्धतिक्ताम्लोद्गारः सुदुर्बलो दुर्बलाग्निरल्पशुक्र-
क्रोधनो दुःखोपचारशील कासश्वासतमकतृष्णाहृल्लासच्छर्दि-
रोचकाविपाकपीनसक्षवथुपरीतस्तैमिरिक शिरःशूली क्षाम-
भिन्नसन्नसक्तजर्जरस्वर कर्णरोगी सशूनपाणिपादवदनाक्षि

हृटः सज्वरः साङ्गमर्दः सर्वपर्वास्थिशूली च भवत्यन्तरान्तरा पार्श्व-कुक्षिवस्तिहृदयपृष्ठत्रिकग्रहोपतप्तः प्रध्यानपरः परमालसश्चेति जन्मप्रभृति अस्य गुदजैरावृतो मार्गोपरोधाद्वायुरपानः प्रत्यारोहन् समानव्यानप्राणोदानान् पित्तश्लेष्माणौ च प्रकोपयति। ते कुपिताः पञ्च वाताः पित्तश्लेष्माणौ चार्शसमभिद्रवन्त एतान् विकारानुपजनयन्तीत्युक्तानि सहजान्यर्शांसि ॥ ७ ॥

अत ऊर्ध्वं जातस्योत्तरकालजानि व्याख्यास्यामः ॥ ८ ॥

गुरुमधुरशीताभिष्यन्दिविदाहिविरुद्धाजीर्णप्रमिताशनासात्म्यभोजनाद्गव्यमात्स्यवाराहमाहिषाजाविकपिशितभक्षणात् कृशशुष्कपूतिमांसपैष्टिकपरमान्नक्षीरमोदकदधितिलगुडविकृतिसेवनात् माषयूषेक्षुरसपिण्याकपिण्डालुकशुष्कशाकशुक्तलशुनकिलाट-पिण्डक-बिस-मृणाल-शालूक क्रौञ्चादन-कशेरुका-शृङ्गाटक-तरूटविरूढनवशूकशमीधान्याममूलकोपयोगाद् गुरुफलशाकरागहरितकमर्दकवसाशिरस्पदपर्युषितपूतिशीतसङ्कीर्णान्नाभ्यवहरणान्मन्दकातिक्रान्तमद्यपानाद् व्यापन्नगुरुसलिलपानादतिस्नेहपानात् असंशोधनाद्वस्तिकर्मविभ्रमादव्यायामाद्दिवास्वप्नात् सुखशयनासनसेवनाच्चोपहताग्नेर्मलोपचयो भवति अतिमात्रम्। तथोत्कटुकविषमकठिनासनसेवनादुद्भ्रान्तयानोष्ट्रयानादतिव्यवायाद्वस्तिनेत्रासम्यक्प्रणिधानात् गुदक्षणनादभीक्ष्णं शीताम्बुसंस्पर्शाच्चेललोष्टतृणादिघर्षणात् प्रततातिनिर्वाहणाद्वातमूत्रपुरीषवेगोदीरणात् समुदीर्णवेगविनिग्रहात् स्त्रीणां चामगर्भभ्रंशाद्गर्भोत्पीडनाद्विषमप्रसूतिभिश्च प्रकुपितो वायुरपानस्तं मलमुपचितमधोगममासाद्य गुदवलिष्वाधत्ते ततस्तास्वर्शांसि प्रादुर्भवन्ति ॥ ९ ॥

सर्षपमसूरमाषमुद्गमकुष्ठकयवकलायपिण्डिटिण्टिकेरखर्जूर-कर्कन्धुकाककणन्तिका बिम्बीबदरकरीरोदुम्बरजाम्बवगोस्तना-

ङ्गुष्ठकशेरुकशृङ्गाटकशृङ्गीदर्भशिखिशुकतुण्डजिह्वामुकुलकर्णि-
कासस्थानानि सामान्याद्वातपित्तकफप्रबलानि ॥ १० ॥

तेषामयं विशेषः। शुष्कम्लानकठिनपरुषरूक्षश्यावानि तीक्ष्णाग्राणि वक्राणि स्फुटितमुखानि विषमविसृतानि शूलाक्षेपतोदस्फुरणचिमिचिमासंहर्षणपरीतानि स्निग्धोष्णोपशयानि प्रवाहिकाध्मानशिश्नवृषणबस्तिवङ्क्षणहृद्ग्रहाङ्गमर्दहृदयप्रबलानि प्रततविबद्धवातमूत्रवर्चांसि कठिनवर्चांस्यूरुकटीपृष्ठत्रिकपार्श्वकुक्षि-बस्तिशूल-शिरोऽभितापक्षवथूद्गारप्रतिश्यायकासोदावर्त्तायासशोषशोथ-मूर्च्छारोचकमुखवैरस्यतैमिर्यकण्डूनासाकर्णशङ्खशूलस्वरोपघातकराणि श्यावारुणपरुषनखनयनवदनत्वङ्मूत्रपुरीषस्य वातोल्वणानि अर्शांसीति विद्यात् ॥११॥

भवतः चात्र।

कषायकटुतिक्तानि रूक्षशीतलघूनि च।
प्रमिताल्पाशनं तीक्ष्णमद्यमैथुनसेवनम् ॥ १२ ॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च।
तीक्ष्णो वातातपस्पर्शौ हेतुर्वातार्शसामिति ॥ १३ ॥

तत्र यानि मृदुशिथिलसुकुमाराणि अस्पर्शासहानि रक्तपीतनीलकृष्णानि स्वेदोपक्लेदबहुलानि विस्रगन्धीनि तनुपीतरक्तस्रावीणि दाहकण्डूशूलनिस्तोदपाकवन्ति शिशिरोपशयानि संभिन्नपीतहरितवर्चांसि पीतविस्रगन्धप्रचुरविण्मूत्राणि पिपासाज्वरतमकसम्मोहभोजनद्वेषकराणि पीतनखनयनत्वङ्मूत्रपुरीषस्य पित्तोल्वणानि अर्शांसीति विद्यात् ॥ १४ ॥

भवतः चात्र।

कट्वम्ललवणक्षारव्यायामाग्न्यातपप्रभाः।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ १५ ॥
विदाहि तीक्ष्णमुष्णञ्च सर्वं पानान्नभेषजम्।

पित्तोल्बणाना विज्ञेय प्रकोपहेतुरर्शसाम् ॥ १६ ॥

तत्र यानि प्रमाणवन्ति उपचितानि श्लक्ष्णानि स्पर्शस हानिश्वेतपाण्डुपिच्छिलानि स्तब्धानि गुरूणि स्तिमितानि सुप्तसुप्तानि स्थिरश्वयथूनि कण्डूबहुलानि प्रततपिच्छरश्वेतरक्त-पिच्छास्रावीणि गुरुपिच्छिलश्वेतमूत्रपुरीषाणि रूचोष्णोप शयानि प्रवाहिकातिमात्रोत्थानवङ्क्षणानाहवन्ति परिकर्त्तिका हृल्लासनिष्ठीविकाकासारोचकप्रतिश्यायगौरवच्छर्दिमूत्रकृच्छ्र शोषशोथपाण्डुरोगशीतज्वराश्मरीशर्कराहृदयेन्द्रियास्योपलेपा स्यमाधुर्य्यप्रमेहकराणि दीर्घकालानुषयानि अतिमात्रमग्नि मार्दवक्लैव्यकराणि आमविकारप्रबलानि गुरूणि च शुक्लनख नयनवदनत्वङ्मूत्रपुरीषस्य श्लेष्मोल्बणानि अर्शासीति विद्यात् ॥ १७ ॥

भवन्ति चात्र।

मधुरस्निग्धशीतानि लवणाम्लगुरूणि च।
अव्यायामदिवास्वप्नशय्यासनसुखे रति ॥ १८ ॥
प्राग्वातसेवाशीतौ च देशकालावचिन्तनम्।
श्लैष्मिकाणा समुद्दिष्टमेतत् कारणमर्शसाम् ॥ १९ ॥
हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्बणानि च।
सर्वो हेतुस्त्रिदोषाणा सहजैर्लक्षण समम् ॥ २० ॥
विष्टम्भोऽन्नस्य दौर्बल्य कुक्षेराटोप एव च।
कार्श्यमुद्गारबाहुल्य सक्थिसादोऽल्पविट्कता ॥२१॥
ग्रहणीदोषपाण्ड्वार्त्तिराशङ्का चोदरस्य च।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥२२॥
अर्शासि खलु जायन्ते नासन्निपतितैस्त्रिभि।
दोषैर्दोषविशेषात् तु विशेष कल्पतेऽर्शसाम् ॥२३॥
पञ्चात्मा मारुत पित्त कफो गुदवलित्रयम्।
सर्व एव प्रकुप्यन्ति गुदजाना समुद्भवे ॥२४॥

तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ।
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥ २५ ॥
हस्ते पादे गुदे नाभ्यां मुखे वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूलञ्च यस्यासाध्योऽर्शसो हि सः ॥२६॥
हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग्ज्वरः ।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ २७ ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम् ।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥२८॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते ।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयोऽन्यतोऽन्यथा ॥२९॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥३०॥
बाह्यायान्तु वलौ जातान्येकदोषोल्बणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥३१॥
तेषां प्रशमने यत्नमाशु कुर्याद्विचक्षणः ।
तान्याशु हि गुदं बद्ध्वा कुर्यात् बद्धगुदोदरम् ॥३२॥
तत्राहुरेके शस्त्रेण कर्त्तनं हितमर्शसाम् ।
दाहं क्षारेण चाप्येके दाहमेके तथाग्निना ॥३३॥
अस्त्येतद्भूरितन्त्रेण धीमता दृष्टकर्मणा ।
क्रियते त्रिविधं कर्म भ्रंशस्तत्र सुदारुणः ॥३४॥
पुंस्त्वोपघातः श्वयथुर्गुदे वेगविनिग्रहः ।
आध्मानं दारुणं शूलं व्यथा रक्तातिवर्त्तनम् ॥३५॥
पुनर्विरोहो रूढानां क्लेदो भ्रंशो गुदस्य च ।
मरणं वा भवेच्छीघ्रं शस्त्रक्षाराग्निविभ्रमात् ॥३६॥
यत् तु कर्म सुखोपायमल्पभ्रंशमदारुणम् ।
तदर्शसां प्रवक्ष्यामि समूलानां निवृत्तये ॥३७॥

वातश्लेष्मोल्वणान्याहुः शुष्काण्यर्शांसि तद्विदः।
प्रस्रावीणि तथार्द्राणि रक्तपित्तोल्वणानि च ॥ ३८ ॥
तत्र शुष्कार्शसां पूर्वं प्रवक्ष्यामि चिकित्सितम्।
स्तब्धानि स्वेदयेत् पूर्वं शोफशूलान्वितानि च ॥३९॥
चित्रकक्षारबिल्वानां तैलेनाभ्यज्य बुद्धिमान्।
यवमाषपुलाकानां कुलत्थानाञ्च पोट्टलैः ॥ ४० ॥
गोखराश्वशकृत्पिण्डैस्तिलकल्कैस्तुषैरपि।
वचाशताह्वापिण्डैर्वा सुखोष्णैः स्नेहसंयुतैः ॥ ४१ ॥
सक्तूनां पिण्डिकाभिर्वा स्निग्धानां तैलसर्पिषा।
शुष्कमूलकपिण्डैर्वा पिण्डैर्वा कार्ष्णगन्धिकैः ॥४२॥
रास्नापिण्डैः सुखोष्णैर्वा ससेहैर्हपुषैरपि।
इष्टकस्य खराह्वायाः शाकैर्धत्तूरकस्य च ॥ ४३ ॥
अभ्यज्य कुष्ठतैलेन स्वेदयेत् पोट्टलोद्धृतैः।
हपार्कैरण्डबिल्वानां पत्रोत्क्वाथैश्च सेचयेत् ॥४४॥
मूलकत्रिफलार्काणां वेणूनां वरुणस्य च।
अग्निमन्थस्य शिग्रोश्च पत्राण्यश्मन्तकस्य च ॥ ४५ ॥
जलेनोत्क्वाथ्य शूलार्त्तं स्वभ्यक्तमवगाहयेत्।
कोलोत्क्वाथेऽथवा कोष्णे सौवीरकतुषोदके ॥ ४६ ॥
बिल्वोत्क्वाथेऽथवा तक्रे दधिमण्डाम्लकाञ्जिके।
गोमूत्रे वा सुखोष्णे त शूलार्त्तमुपवेशयेत् ॥४७॥
कृष्णसर्पवराहोष्ट्रजतुकाहपदंशजाम्।
वसामभ्यञ्जनं कुर्य्यात् धूपनञ्चार्शसां हितम् ॥ ४८ ॥
नृकेशाः सर्पनिर्मोको हपदंशस्य चर्म च।
अर्कमूल शमीपत्रमर्शोभ्यो धूपन हितम् ॥४९॥
तुम्बुरूणि विडङ्गानि देवदार्वक्षता घृतम्।
बृहती चाश्वगन्धा च पिप्पल्यः सुरसा घृतम् ॥ ५० ॥

वराहवृषविट्चैव धूपनं शल्लकी घृतम् ।
कुञ्जरस्य पुरीषन्तु घृतं सर्जरसो रसः ॥ ५१ ॥
हरिद्राचूर्णसंयुक्तं सुधा चीरं प्रलेपनम् ।
गोपित्तपिष्टाः पिप्पल्यः सहरिद्राः प्रलेपनम् ॥५२॥
शिरीषबीजं कुष्ठञ्च पिप्पल्यः सैन्धवं गुड़ः ।
अर्कचीरं सुधाचीरं त्रिफला च प्रलेपनम् ॥ ५३ ॥
पिप्पल्यश्चित्रकाः श्यामाः किण्वं मदनतण्डुलाः ।
प्रलेपः कुक्कुटशकृत् हरिद्रा गुड़संयुतः ॥ ५४ ॥
निकुम्भः साक्षतासङ्गः पारावतशकृद्गुड़ः ।
प्रलेपः स्यादजाक्षीनि निम्बो भल्लातकानि च ॥ ५५ ॥
प्रलेपः स्याद्दलर्केण वासन्तकवसा युतः ।
शूलश्वयथुहृद्युक्तायुष्मूकीवसयाथवा ॥ ५६ ॥
आर्कं पयः सुधाकाण्डं कटुकालाबुपल्लवाः ।
करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥ ५७ ॥
अभ्यङ्गाद्याः प्रदेहान्ता य एते परिकीर्त्तिताः ।
स्तम्भश्वयथुकण्डूर्त्तिशमनास्तेऽर्शसां मताः ॥५८॥
प्रदेहाद्यैरुपक्रान्तान्यर्शांसि प्रस्रवन्ति हि ।
सञ्चितं दुष्टरुधिरं ततः सम्पद्यते सुखम् ॥ ५९ ॥
शीतोष्णस्निग्धरूक्षैर्हि न व्याधिरुपशाम्यति ।
रक्ते दुष्टे भिषक् तस्माद्रक्तमेवावसेचयेत् ॥६०॥
जलौकोभिस्तथा शस्त्रैः सूचीभिर्वा पुनःपुनः ।
अवर्त्तमानं रुधिरं रक्तार्शोभ्यः प्रवाहयेत् ॥ ६१ ॥
गुदश्वयथुशूलार्त्तं मन्दाग्निं पाययेत् तु तम् ।
त्र्यूषणं पिप्पलीमूलं पाठां हिङ्गु सचित्रकम् ॥६२॥
सौवर्चलं पुष्कराख्यमजाजीं बिल्वपेषिकाम् ।
विड़ं यमानीं हपुषां विडङ्गं सैन्धवं वचाम् ॥६३॥

तिन्तिडीकस्य मस्तेन मद्येनोष्णोदकेन च।
तथार्शो ग्रहणीदोषशूलानाहादिमुच्यते ॥ ६४ ॥
कुर्याद्वा पाचनं तस्य यदुक्तं ह्यातिसारिके।
सगुडामभयां वाथ प्राशयेत् पौर्वभक्तिकीम् ॥६५॥
पाययेत त्रिवृच्चूर्णं त्रिफलाया रसेन वा।
हते गुदाश्रये दोषे गच्छन्त्यर्शांसि संचयम् ॥६६॥
गोमूत्राध्युषितां दद्यात् सगुडां वा हरीतकीम्।
हरीतकीं तक्रयुतां त्रिफलां वा प्रयोजयेत् ॥६७॥
सनागरं चित्रकं वा सीधुयुक्तं प्रयोजयेत्।
चव्यं वा सीधुसंयुक्तमजाजीदीप्यकं पिबेत् ॥६८॥
सुरां वा हपुषां पाठां युक्तां सौवर्चलायुताम्।
दधित्थबिल्वसंयुक्तां तथा वा चव्यचित्रकौ ॥६९॥
भल्लातकयुतं वाथ प्रदद्यात् तत्र तर्पणम्।
बिल्वनागरयुक्तं वा यमान्या चित्रकेण वा ॥७०॥
चित्रकं हपुषां हिङ्गु दद्याद्वा तक्रसंयुतम्।
पञ्चकोलयुतं वापि तक्रमस्मै प्रदापयेत् ॥ ७१ ॥
हपुषां कुञ्चिकां धान्यमजाजीं कारवीं शटीम्।
पिप्पलीपिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥७२॥
यमानीञ्चाजमोदाञ्च चूर्णितं तक्रसंयुतम्।
मन्दाम्लकटुकं विद्वान् स्थापयेद् घृतभाजने ॥७३॥
व्यक्ताम्लकटुकं जातं तक्रारिष्टं सुखप्रियम्।
प्रपिबेन्मात्रया कालेष्वन्नस्य तृषितस्त्रिषु ॥७४॥
दीपनं रोचनं वर्ण्यं कफवातानुलोमनम्।
गुदश्वयथुकण्ड्वार्त्तिनाशनं बलवर्द्धनम् ॥ ७५ ॥

इति तक्रारिष्टः।

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्।

तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥७६॥
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम्।
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ॥७७॥
सप्ताहं वा दशाहं वा पक्षं मासमथापि वा।
बलकालविशेषज्ञो भिषक् तक्रं प्रयोजयेत् ॥ ७८ ॥
अत्यर्थं मृदुकायाग्नेस्तक्रमेवावचारयेत्।
सायं वा लाजसक्तूनां दद्यात् तक्रावलेहिकाम् ॥७९॥
जीर्णे तक्रे प्रदद्याद्वा तक्रं पेयां ससैन्धवाम् ॥८०॥
तक्रानुपानं सस्नेहं तक्रौदनमतः परम्।
यूषैर्मांसरसैर्वापि भोजयेत् तक्रसंयुतैः ॥ ८१ ॥
कालक्रमज्ञः सहसा न च तक्रं निवारयेत्।
तक्रप्रयोगान्मासान्ते क्रमेणोपरमो मतः ॥ ८२ ॥
अपकर्षो यथोत्कर्षो न त्वस्मादपहाप्यते।
ग्रहण्या रक्षणार्थं दार्ढ्यार्थमनलस्य च ॥ ८३ ॥
बलोपचयवर्णार्थमेष निर्दिश्यते क्रमः।
रूक्षमर्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् ॥ ८४ ॥
तक्रं दोषाग्निबलवित् त्रिविधं तत् प्रयोजयेत्।
हतानि न विरोहन्ति तक्रेण गुदजानि तु ॥ ८५ ॥
भूमावपि निषिक्तं तत् दहेत् तक्रं तृणोलुपम्।
किं पुनर्दीप्तकायाग्नेः शुष्काण्यर्शांसि देहिनः ॥८६॥
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः।
तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते ॥ ८७ ॥
वातश्लेष्मविकाराणां शतं चापि निवर्तते।
नास्ति तक्रात् परं किञ्चिदौषधं कफवातजे ॥ ८८ ॥
पिप्पलीपिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्।
शृङ्गवेरमजाजीं च कारवीं धान्यतुम्बुरुम् ॥ ८९ ॥

बिल्वं कर्कटकं पाठां पिष्ट्वा पेयां विपाचयेत्।
फलाम्लां यमकस्नेहां तां दद्यात् गुदजापहाम् ॥९०॥
एतैश्चैव खड़ं कुर्य्यादेतैश्चैव पचेज्जलम्।
एतैश्चैव घृतं साध्यमर्शसां विनिवृत्तये ॥ ९१ ॥
शटीपलाशसिद्धां वा पिप्पल्या नागरेण वा।
दद्याद् यवागूं तक्राम्लां मरिचैरवचूर्णिताम् ॥९२॥
शुष्कमूलकयूषं वा यूषं कौलत्थमेव वा।
दधित्थविल्वयूषं वा सकुलत्थमकुष्ठकम् ॥ ९३ ॥
छागलं वा रसं दद्याद् यूषैरेतैर्विमिश्रितम्।
लावादीनां फलाम्लं वा सतक्रं ग्राहिभिर्युतम् ॥ ९४ ॥
रक्तशालिर्महाशालिः कलमो लाङ्गलः सितः।
शारदः षष्टिकश्चैव स्यादन्नविधिरर्शसाम् ॥ ९५ ॥
इत्युक्तो भिन्नशकृतामर्शसाञ्च विधिक्रमः।
येऽत्यर्थं गाढ़शकृतस्तेषां वक्ष्यामि भेषजम् ॥९६॥
सस्नेहैः शक्तुभिर्युक्तां ससर्पां लवणीकृताम्।
दद्यात् मत्स्याण्डिकां पूर्वं भक्षयित्वा सनागराम् ॥९७॥
गुड़ं सनागरं पाठां फलाम्लं पाययेच्च तम्।
गुड़ं घृतं यवक्षारं युक्तं वापि प्रयोजयेत् ॥९८॥
यमानीं नागरं पाठां दाड़िमस्य रसं गुड़म्।
सतक्रं लवणं दद्याद्वातवर्च्चोऽनुलोमनम् ॥ ९९ ॥
दुःस्पर्शकेन विल्वेन यमान्या नागरेण वा।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ॥ १०० ॥
प्रागुक्तान् यमके सृष्टान् शक्तुभिश्चावचूर्णितान्।
करञ्जपल्लवान् दद्यात् वातवर्च्चोऽनुलोमनान् ॥१०१॥
मदिरां वा सलवणां शीधुं सौवीरकं तथा।
गुड़नागरसंयुक्तां पिवेद्वा पौर्वभक्तिकाम् ॥१०२॥

पिप्पलीनागरक्षारकारवीधान्यजीरकैः।
फाणितेन च संयोज्य फलाम्लं दापयेत् घृतम् ॥१०३॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
शृङ्गवेरं यवक्षारं तैः सिद्धं वा पिबेत् घृतम् ॥१०४॥
चव्यचित्रकसिद्धं वा गुड़क्षारसमन्वितम्।
पिप्पलीमूलसिद्धं वा सगुड़क्षारनागरम् ॥१०५॥
पिप्पलीपिप्लीमूलदधिदाड़िमधान्यकैः।
सिद्धं सर्पिर्विधातव्यं वातवर्चोविबन्धनुत् ॥ १०६ ॥
चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च।
यमानीं पिप्पलीमूलमुभे च विड़सैन्धवे ॥ १०७ ॥
चित्रकं विल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥ १०८ ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्।
गुदवङ्क्षणशूलञ्च घृतमेतत् व्यपोहति ॥ १०९ ॥
नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं विल्वपाठायमानिकाः ॥११०॥
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचयेत्।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत् ॥ १११ ॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम्।
गुदभ्रंशार्तिमानाहं घृतमेतद्व्यपोहति ॥ ११२ ॥
पिप्पलीं नागरं पाठां श्वदंष्ट्रां च पृथक् पृथक्।
भागांस्त्रिपालिकान् कृत्वा कषायमुपकल्पयेत् ॥११३॥
कण्टीरं पिप्पलीमूलं व्योषं चव्यं च चित्रकम्।
पिष्ट्वा कषाये विनयेत् पूते द्विपलिकं भिषक् ॥११४॥
पलानि सर्पिषस्त्वत्र चत्वारिंशत् प्रदापयेत्।
चाङ्गेरीस्वरसं तुल्यं सर्पिषा दधि षड्गुणम् ॥११५॥

स्वह्निना ततः साध्यं सिद्धं सर्पिर्निधापयेत्।
तदाहारे विधातव्यं पाने प्रायोगिके विधौ ॥११६॥
ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम्।
शोथप्लीहोदरानाहमूत्रकृच्छ्रज्वरापहम् ॥ ११७ ॥
कासहिक्कारुचिश्वासस्दनं पार्श्वशूलनुत्।
बलपुष्टिकरं वर्ण्यमग्निसन्दीपनं परम् ॥ ११८ ॥
सगुडां पिप्पलीयुक्तां घृतभृष्टां हरीतकीम्।
त्रिवृद्दन्तीयुतां वापि भक्षयेदानुलोमिकीम् ॥११९॥
विड्वातकफपित्तानामानुलोम्येन निर्मले।
गुदेऽर्शांसि प्रशाम्यन्ति पावकश्चाभिवर्द्धते ॥ १२० ॥
वर्हितित्तिरिलावानां रसानम्लान् सुसंस्कृतान्।
दक्षाणां वर्त्तकानाञ्च दद्याद्विड्वातसंग्रहे ॥ १२१ ॥
त्रिवृद्दन्तीपलाशानां चाङ्गेर्याश्चित्रकस्य च।
सुभृष्टं यमके दद्याच्छाकं दधिसमन्वितम् ॥ १२२ ॥
उपोदिकां तण्डुलीयं वीरां वास्तुकपल्लवान्।
सुवर्चलां सलोणीकां यवशाकमवल्गुजम् ॥ १२३ ॥
काकमाचीं रुहापर्णं महापर्णं तथाम्लिकाम्।
जीवन्तीमटिशाकञ्च शाकं गृञ्जनकस्य च ॥ १२४ ॥
दधिदाड़िमसिद्धानि भृष्टानि यमकेऽपि च।
धान्यनागरयुक्तानि शाकान्येतानि दापयेत् ॥ १२५ ॥
गोधाश्वाविल्लोपाकमार्जारोष्ट्रगवामपि।
कूर्मशल्लकयोश्चैव साधयेच्छाकवद्रसान् ॥ १२६ ॥
रक्तशाल्योदनं दद्याद्रसैस्तैर्वातशान्तये।
ज्ञात्वा वातोल्वणं रूक्षं दीप्ताग्निं गुदजातुरम् ॥१२७॥
मदिरां शार्करं जातं शीधु तक्रं तुषोदकम्।
अरिष्टं दधिमण्डं वा शृतं वा शिशिरं जलम् ॥ १२८ ॥

कण्टकार्य्या शृतं वापि शृतं नागरधान्यकैः।
अनुपानं भिषक् दद्याद् वातवर्चोऽनुलोमनम् ॥ १२९ ॥
उदावर्त्तपरीता ये ये चात्यर्थं विरूक्षिताः।
विलोमवाताः शूलार्त्तास्तेष्विष्टमनुवासनम् ॥ १३० ॥
पिप्पलीं मदनं बिल्वं शताह्वां मधुकं वचाम्।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च ॥ १३१ ॥
पिष्ट्वा तैलं विपक्तव्यं पयसा द्विगुणेन च।
अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ॥ १३२ ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम्।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ॥ १३३ ॥
पिच्छास्रावं गुदे शोफं वातवर्चोविनिग्रहम्।
उत्थानं बहुशो यच्च जयेत् तच्चानुवासनात् ॥ १३४ ॥
आनुवासनिकैः पिष्टैः सुखोष्णैः स्नेहसंयुतैः।
दार्व्यन्तैः स्तब्धशूलानि गुदजानि प्रलेपयेत् ॥ १३५ ॥
दिग्धा तैः प्रस्रवन्त्याशु श्लेष्मपिच्छासृगुक्षिताः।
कण्डूः स्तम्भः सरुक् शोफः स्रुतानां विनिवर्त्तते ॥१३६॥
निरूहं वा प्रयुञ्जीत सक्षीरं दाशमूलिकम्।
समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः ॥ १३७ ॥
हरीतकीनां प्रस्थार्द्धं प्रस्थमामलकस्य च।
स्यात् कपित्थाद्दशपलं ततोऽर्द्धा चेन्द्रवारुणी ॥ १३८ ॥
विडङ्गं पिप्पली लोध्रं मरिचं सैलवालुकम्।
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत् ॥ १३९ ॥
द्रोणशेषे रसे तस्मिन् पूते शीते समावपेत्।
गुडस्य द्विशतं तिष्ठेत् तत् पक्षं घृतभाजने ॥ १४० ॥
पक्षादूर्द्धं भवेत् पेया ततो मात्रां यथाबलम्।
अस्याभ्यासादरिष्टस्य नश्यन्ति गुदजानपि ॥१४१॥

ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदरापहः ।
कुष्ठशोफारुचिहरो बलवर्णाग्निवर्द्धनः ॥ १४२ ॥
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः ।
क्रिमिग्रन्थ्यर्बुदव्यङ्गराजयक्ष्मज्वरान्तकृत् ॥ १४३ ॥
इत्यभयारिष्टः ।

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् ॥ १४४ ॥
त्रिफलाया दलानाञ्च प्रक्षिप्य त्रिपलं ततः ।
रसे चतुर्थशेषे तु पूते शीते समावपेत् ॥ १४५ ॥
तुलां गुड़स्य तत् तिष्ठेत् मासार्द्धं घृतभाजने ।
तन्मात्रया पिबेन्नित्यमर्शोभ्योऽपि प्रमुच्यते ॥ १४६ ॥
ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम् ।
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिदं विदुः ॥ १४७ ॥
इति दन्त्यरिष्टम् ।

फलीतकीफलप्रस्थं प्रस्थमामलकस्य च ।
विशालाया दधित्थस्य पाठाचित्रकमूलयोः ॥ १४८ ॥
द्वे द्वे पले समापोथ्य द्विद्रोणे साधयेदपाम् ।
पादावशेषे पूते च रसे तस्मिन् प्रदापयेत् ॥ १४९ ॥
गुड़स्यैकां तुलां वैद्यः संस्थाप्यो घृतभाजने ।
पक्षस्थितं पिबेदेनं ग्रहण्यर्शोविकारवान् ॥ १५० ॥
हृत्पाण्डुरोगं प्लीहानं कामलां विषमज्वरम् ।
वर्चोमूत्रानिलकृतान् विबन्धानग्निमार्दवम् ॥ १५१ ॥
कासं गुल्ममुदावर्त्तं फलारिष्टो व्यपोहति ।
अग्निसन्दीपनोह्येष कृष्णात्रेयेण भाषितः ॥ १५२ ॥
इति फलारिष्टम् ।

दुरालभायाः प्रस्थः स्याच्चित्रकस्य वृषस्य च ।

पथ्यामलकयोश्चैव पाठाया नागरस्य च ॥ १५३ ॥
दन्त्याश्च द्विपलान् भागान् जलद्रोणे विपाचयेत् ।
पादावशेषे पूते च सुशीते शर्कराशतम् ॥ १५४ ॥
प्रक्षिप्य स्थापयेत् कुम्भे मासार्धं घृतभाजने ।
प्रलिप्ते पिप्पलीचव्यप्रियङ्गुक्षौद्रसर्पिषा ॥ १५५ ॥
तस्य मात्रां पिबेत् काले शार्करस्य यथाबलम् ।
अर्शांसि ग्रहणीदोषमुदावर्त्तमरोचकम् ॥ १५६ ॥
शकृन्मूत्रानिलोद्गारविबन्धानग्निमार्दवम् ।
हृद्रोगं पाण्डुरोगञ्च सर्वमेतेन साधयेत् ॥ १५७ ॥

इति द्वितीयफलारिष्टम् ।

नवस्यामलकस्यैकां कुर्य्याज्जर्जरितां तुलाम् ।
कुडवांश्च विडङ्गानि पिप्पलीमरिचानि च ॥ १५८ ॥
पाठां मूलञ्च पिप्पल्याः क्रमुकं चव्यचित्रकौ ।
मञ्जिष्ठां नालुकं लोध्रं पलिकान्युपकल्पयेत् ॥ १५९ ॥
कुष्ठं दारुहरिद्राञ्च सुराह्वं शारिवाद्वयम् ।
इन्द्राह्वं भद्रमुस्तञ्च कुर्य्यादर्धपलोन्मितम् ॥ १६० ॥
चत्वारि नागपुष्पस्य पलान्यभिनवस्य च ।
द्रोणाभ्यामम्भसो ह्याभ्यां साधयित्वावतारयेत् ॥ १६१ ॥
पादावशेषे पूते च शीते तस्मिन् समावपेत् ।
मृद्वीकाद्याढकरसं शीतं निर्य्यूहसंमितम् ॥ १६२ ॥
शर्करायाश्च भिन्नाया दद्याद्द्विगुणितां तुलाम् ।
कुसुमस्य रसस्यैकमर्धप्रस्थं नवस्य च ॥ १६३ ॥
त्वगेलाम्बुवपत्राम्बुसेव्यक्रमुककेशरान् ।
चूर्णयित्वा तु मतिमान् कार्षिकानत्र दापयेत् ॥ १६४ ॥
तत् सर्वं स्थापयेत् पक्षं शुचौ च घृतभाजने ।
प्रलिप्ते सर्पिषा किञ्चिच्छर्करागुरुधूपिते ॥ १६५ ॥

पत्रादूर्द्धमरिष्टोऽयं कनको नाम विश्रुतः।
पेयः स्वादुरसो हृद्यः प्रयोगाद्भक्तरोचनः॥ १६६॥
अर्शांसि ग्रहणीदोषमानाहमुदरं ज्वरम्।
हृद्रोगं पाण्डुतां शोथं गुल्मवर्चोविनिग्रहम्॥ १६७॥
कासं श्लेष्मामयांश्चोग्रान् सर्व्वानेवापकर्षति।
वलीपलितखालित्यं दोषजं च व्यपोहति॥ १६८॥
इति कनकारिष्टः।
पत्रभङ्गोदकैः शौचं कुर्य्यादुष्णेन चाम्भसा।
इति शुष्कार्शसां सिद्धमुक्तमेतच्चिकित्सितम्॥ १६९॥
चिकित्सितमिदं सिद्धं स्राविणां शृणुतःपरम्।
तत्रानुबन्धो द्विविधः श्लेष्मणो मारुतस्य च॥ १७०॥
विट् श्यावं कठिनं रूक्षञ्चाधो वायुर्न वर्त्तते।
तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसाम्॥ १७१॥
कट्यूरुगुदशूलञ्च दौर्व्वल्यं यदि चाधिकम्।
तत्रानुबन्धो वातस्य हेतुर्यदि विरूक्षणम्॥ १७२॥
शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरुशीतलम्।
यद्यर्शसां घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलम्॥१७३॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम्।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः॥ १७४॥
स्निग्धशीतं हितं वाते रूक्षशीतं कफानुगे।
चिकित्सितमिदं तस्मात् सम्प्रधार्य्य प्रयोजयेत्॥ १७५॥
पित्तश्लेष्माधिकं मत्वा शोधनेनोपपादयेत्।
स्रवणञ्चाप्युपेक्षेत लङ्घनैर्वा समाचरेत्॥ १७६॥
प्रवृत्तमादावर्शोभ्यो यो निगृह्णात्यबुद्धिमान्।
शोणितं दोषमलिनं तद्रोगान् जनयेदसृन्॥ १७७॥
रक्तपित्तं ज्वरं तृष्णामग्निनाशमरोचकम्।

सिद्धं पलाण्डुशाकञ्च तक्रेणोपोदिकां सबदराम्लाञ्च।
रुधिरस्रवे प्रदद्यान्मसूरसूपञ्च तक्राम्लम् ॥२०४॥
पयसा शृतेन यूषैर्मसूरमुद्गाढ़कीमकुष्ठानाम्।
भोजनमद्यादम्लैः शालिश्यामाककोद्रवजम् ॥ २०५ ॥
शशहरिणलावमांसैः कपिञ्जलैणेयैः सुसिद्धैश्च।
भोजनमद्यादम्लैर्मधुरैरोषत् समरिचैर्वा ॥ २०६ ॥
दक्षशिखितित्तिरिरसैर्द्विककुदलोपाकजैश्च मधुराम्लैः।
अद्याद्भैरतिवहैर्वर्चःस्वनिलोल्वणशरीरः ॥ २०७ ॥
रसखड़यूषयवागूसंयुक्तः केवलोऽथवा जयति।
रक्तमतिवर्त्तमानं वातञ्च पलाण्डुरुपयुक्तः ॥ २०८ ॥
छागान्तराधितरुणं सरुधिरसुपसाधितं बहुपलाण्डु।
व्यत्यासान्मधुराम्लं विट्शोणितसंचये देयम् ॥ २०९ ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात्।
दधिवरमथिताभ्यामादर्शांस्युपयान्ति रक्तानि ॥ २१० ॥
नवनीतं घृतं छागं मांसं सषष्टिकः शालिः।
तरुणश्च सुरामण्डस्तरुणा च सुरा निहन्त्यजसम् ॥२११॥
प्रायेण वातबहुलान्यर्शांसि भवन्त्यतिस्रुते रक्ते।
दुष्टेऽपि कफपित्ते तस्मादनिलोऽधिको ज्ञेयः ॥ २१२ ॥
दृष्ट्वा तु रक्तपित्तं प्रबलं कफवातलिङ्गमल्पञ्च।
शीताः क्रियाः प्रयोज्या यथेरिता वक्ष्यते चान्या ॥२१३॥
मधुकं सपद्मवल्कं बदरीलगुदुम्बरं धवपटोलम्।
परिषेचने विदध्याद्वृषककुभयवासनिम्बांश्च ॥२१४॥
रक्तेऽतिवर्त्तमाने दाहे क्लेदे च गाहयेच्चापि।
मधुकमृणालपद्मकचन्दनकुशकाशनिःक्वाथे ॥२१५॥
इक्षुरसमधुकवेतसनिर्यूहे शीतले पयसि वा तम्।
अवगाहयेत् प्रदिग्धं पूर्वं शिशिरेण तैलेन ॥ २१६ ॥

सिद्धं पलाण्डुशाकञ्च तक्रेणोपोदिकां सबदराम्लाञ्च ।
रुधिरस्रवे प्रदद्यान्मसूरसूपञ्च तक्राम्लम् ॥२०४॥
पयसा श्रृतेन यूषैर्मसूरमुद्गाढ़कीमकुष्ठानाम् ।
भोजनमद्यादर्शैः शालिश्यामाककोद्रवजम् ॥ २०५ ॥
शशहरिणलावमांसैः कपिञ्जलैणेयैः सुसिद्धैश्च ।
भोजनमद्यादस्रैर्मधुरैरीषत् समरिचैर्वा ॥ २०६ ॥
दक्षशिखितित्तिरिरसैर्द्विककुटलोपाकजैश्च मधुराम्लैः ।
अद्यादर्शैरतिवहैर्व्यर्थःस्वनिलोल्बणशरीरः ॥ २०७ ॥
रसखड्यूषयवागूसंयुक्तः केवलोऽथवा जयति ।
रक्तमतिवर्त्तमानं वातञ्च पलाण्डुरुपयुक्तः ॥ २०८ ॥
छागान्तराधितरुणं सरुधिरमुपसाधितं बहुपलाण्डु ।
व्यत्यासान्मधुराम्लं विट्शोणितसंक्षये देयम् ॥ २०९ ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासादर्शांस्यपयान्ति रक्तानि ॥ २१० ॥
नवनीतं घृतं छागं मांसं सषष्ठिकः शालिः ।
तरुणश्च सुरामण्डस्तरुणा च सुरा निहन्त्यस्नम् ॥२११॥
प्रायेण वातबहुलान्यर्शांसि भवन्त्यतिस्रुते रक्ते ।
दुष्टेऽपि कफपित्ते तस्मादनिलोऽधिको ज्ञेयः ॥ २१२ ॥
दृष्ट्वा रक्तपित्तं प्रबलं कफवातलिङ्गमल्पञ्च ।
शीताः क्रियाः प्रयोज्या यथेरिता वक्ष्यते चान्या ॥२१३॥
मधुकं सपद्मकल्कं बदरीलघुदुम्बरं धवपटोलम् ।
परिषेचने विदध्याद्वृषककुभयवासनिम्बाश्च ॥२१४॥
रक्तेऽतिवर्त्तमाने दाहे क्लेदे च गाहयेद्वापि ।
मधुकमृणालपद्मकचन्दनकुशकाशनिःक्वाथे ॥२१५॥
इक्षुरसमधुकवेतसनिर्यूहे शीतले पयसि वा तम् ।
अवगाहयेत् प्रदिग्धं पूर्वं शिशिरेण तैलेन ॥ २१६ ॥

सिद्धं पलाण्डुशाकञ्च तक्रेणोपोदिकां सबदरांम्लाञ्च।
रुधिरस्रवे प्रदद्यान्मसूरसूपञ्च तक्राम्लम् ॥२०४॥
पयसा शृतेन यूषैर्मसूरमुद्गाढ़कीमकुष्ठानाम्।
भोजनमद्यादम्लैः शालिश्यामाककोद्रवजम् ॥ २०५॥
शशहरिणलावमांसैः कपिञ्जलैणेयैः सुसिद्धैश्च।
भोजनमद्यादम्लैर्मधुरैरीषत् समरिचैर्वा ॥ २०६ ॥
दक्षशिखितित्तिरिरसैर्द्विकगुदलोपाकजैश्च मधुराम्लैः
अद्यादग्नेरतिवृद्धेर्वर्चःस्वनिलोल्वणशरीरः ॥ २०७॥
रसखड़यूषयवागूसंयुक्तः केवलोऽथवा जयति।
रक्तमतिवर्त्तमानं वातञ्च पलाण्डुरुपयुक्तः ॥ २०८॥
छागान्तराधितरुणं सरुधिरमुपसाधितं वस्तुपलाण्डु।
व्यत्यासान्मधुराम्लं विट्शोणितसंचये देयम् ॥ २०९॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात्।
दधिसरमथिताभ्यासादर्शांस्यपयान्ति रक्तानि ॥ २१०
नवनीतं घृतं छागं मांसं सषष्ठिकः शालिः।
तरुणश्च सुरामण्डस्तरुणा च सुरा निहन्त्यसृजम् ॥२११
प्रायेण वातबहुलान्यर्शांसि भवन्त्यतिस्रुते रक्ते।
दुष्टेऽपि कफपित्ते तस्मादनिलोऽधिको ज्ञेयः ॥ २१२॥
दृष्ट्वा तु रक्तपित्तं प्रबलं कफवातलिङ्गमल्पञ्च।
शीताः क्रियाः प्रयोज्या यथेरिता वक्ष्यते चान्या ॥२१३॥
मधुकं सपद्मवल्कं बदरीत्वगुदुम्बरं धवपटोलम्।
परिषेचने विदध्याद्वृषककुभयवासनिम्बांश्च ॥२१४॥
रक्तेऽतिवर्त्तमाने दाहे क्लेदे च गाहयेच्चापि।
मधुकमृणालपद्मकचन्दनकुशकाशनिःक्वाथे ॥२१५॥
इक्षुरसमधुकवेतसनिर्य्यूहे शीतले पयसि वा तम्।
अवगाहयेत् प्रदिग्धं पूर्वं शिशिरेण तैलेन ॥ २१६॥

पिष्टानुवासनं स्नेहं क्षीरद्विगुणितं पचेत् ॥ २२९ ॥
ह्रीवेरमुत्पलं लोध्रं समङ्गाचव्यचन्दनम् ।
पाठा सातिविषा विल्वं धातकी देवदारु च ॥२३०॥
दार्वी त्वक् नागरं मांसी मुस्तं क्षारो यवाग्रजः ।
चित्रकश्चेति पेष्याणि चाङ्गेरीस्वरसे घृतम् ॥२३१॥
एकस्थं साधयेत् सर्वं तत् सर्पिः परमौषधम् ।
अर्शोऽतिसारग्रहणीपाण्डुरोगज्वरारुचौ ॥२३२॥
मूत्रकृच्छ्रे गुदभ्रंशे वस्त्यानाहे प्रवाहणे ।
पिच्छास्रावेऽर्शसां शूले योज्यमेतत् त्रिदोषनुत् ॥२३३॥
इति ह्रीवेरादिघृतम् ।

अवाक्पुष्पी बला दार्वी पृश्निपर्णी त्रिकण्टकः ।
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥२३४॥
कषाय एषां पेष्यास्तु जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं नागरं सुरदारु च ॥२३५॥
कलिङ्गाः शाल्मलं पुष्पं वीरा चन्दनमुत्पलम् ।
कट्फलं चित्रकं मुस्तं प्रियङ्ग्वतिविषास्थिराः ॥२३६॥
पद्मोत्पलानां किञ्जल्कं समङ्गा सनिदिग्धिका ।
विल्वं मोचरसः पाठा भागाः कर्षसमन्विताः ॥२३७॥
चतुःप्रस्थे शृतं प्रस्थं कषायमवतारयेत् ।
विंशत्पलानि प्रस्थोऽत्र विज्ञेयो द्विपलाधिकः ॥२३८॥
सुनिषण्णकचाङ्गेर्योः प्रस्थौ द्वौ स्वरसस्य च ।
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥ २३९ ॥
एतदर्शःस्वतीसारे रक्तस्रावे त्रिदोषजे ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥ २४० ॥
उत्थाने चातिबहुशः शोथशूले गुदाश्रये ।
मूत्रग्रहे मूढवाते मन्देऽग्नावरुचावपि ॥२४१॥

अतिशीतस्निग्ध रूक्षोष्ण गुरुखरकठिनविषमविरुद्धासात्म्य-भोजनात् अभोजनात् कालातीतभोजनाद् यत्किञ्चिदभ्यवहरणाद् दुष्टमद्यपानीयपानात् अतिमद्यपानात् असंशोधनात् प्रतिकर्म्मणां विषमगमनात् अनुपचारा-ज्ज्वलनादित्य-पवनसलिलातिसेवनात् अस्वप्नात् अतिस्वप्नाद्वेगविधारणादृतुविपर्य्ययात् अयथाबलमारम्भाद्भयशोकचित्तोद्वेगातियोगात् क्रिमिशोषज्वरार्शोविकारातिकर्शनाद्वा विपन्नाग्नेस्त्रयो दोषाः प्रकुपिता भूय एवाग्निमुपहत्य पक्वाशयमनुप्रविश्य अतीसारं सर्वदोषलिङ्गं जनयन्ति ॥ ११ ॥

अपि च शोणितादीन् धातूनतिप्रदुष्टान् दूषयन्तो धातुदोषस्वभावकृतानतीसारवर्णानुपदर्शयन्ति। तत्र शोणितादिषु धातुषु अतिप्रदुष्टेषु हारिद्रहरितनीलमाञ्जिष्ठमांसधावनसन्निकाशं रक्तं कृष्णं श्वेतं वराहमेदःसदृशमनुबद्धवेदनमवेदनं वा समासव्यत्यासादुपवेश्यते शकृद् ग्रथितमामं सकृत् सकृदपि पक्वमनतिक्षीणमांसशोणितबलो मन्दाग्निर्विहतमुखरसश्चाद्दशमातुरं कृच्छ्रसाध्यं विद्यात्। एभिर्वर्णैरतिसार्यमाणं सोपद्रवमातुरमसाध्योऽयमिति प्रत्याचक्षीत। तद्यथा—कायशोणिताभं यकृत्पिण्डोपमं मांसोदकसन्निकाशं दधितृतमज्जतैलवसाक्षीरवेशवाराभमतिनीलमतिरक्तमतिकृष्णमुदकमिवाच्छं पुनर्मेचकाभम् अतिस्निग्धं हरितनीलकषायवर्णं कर्बुरमाविलं तन्तुमदामं चन्द्रकोपगतमतिकुणपपूतिपूयगन्धमाममत्स्यगन्धिमक्षिकाक्रान्तं क्वथितबहुधातुद्रवमल्पपुरीषमपुरीषं वातिसार्य्यमाणं तृष्णादाहज्वरभ्रमतमकहिक्काश्वासानुबन्धमतिवेदनमवेदनं वा स्रस्तपक्वगुदं पतितगुदवलिं मुक्तनालमतिक्षीणबलमांसशोणितं सर्वपर्वास्थिशूलिनमरोचकातिप्रलापसंमोहपरीतं सहसोपरतविकारमतिसारिणमचिकित्स्यं विद्यादिति सान्निपातातिसारः ॥ १२ ॥

तमसाध्यतामसंप्राप्तं चिकित्सेद् यथाप्रधानोपक्रमेण हेतु-पथ्यदोषविशेषपरीक्षया चेति ॥१३॥

आगन्तू द्वावतीसारौ मानसौ भयशोकजौ।
तत् तयोर्लक्षणं वायोर्यदतीसारलक्षणम् ॥ १४ ॥
मारुतो भयशोकाभ्यां शीघ्रं हि परिकुप्यति।
तयोः क्रिया वातहरा हर्षणाश्वासनानि च ॥ १५ ॥
इत्युक्ताः षडतीसाराः साध्यानां साधनन्त्वतः।
प्रवक्ष्याम्यानुपूर्वेण यथावत् तन्निबोधत ॥ १६ ॥
दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः।
अतीसाराय कल्पन्ते भूयस्तान् संप्रवर्त्तयेत् ॥ १७ ॥
न तु संग्रहणं देयं पूर्वमामातिसारिणे।
विबध्यमानाः प्राग्दोषा जनयन्त्यामयान् बहून् ॥ १८ ॥
दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा।
शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् ॥ १९ ॥
तस्मादुपेक्षेतोत्क्लिष्टान् वर्त्तमानान् स्वयं मलान्।
कृच्छ्रं वा वहतां दद्यादभयां संप्रवर्त्तिनीम् ॥ २० ॥
तया प्रवाहिते दोषे प्रशाम्यत्युदरामयः।
जायते देहलघुता जठराग्निश्च वर्द्धते ॥ २१ ॥
प्रमथ्यां मध्यदोषाणां दद्याद्दीपनपाचनीम्।
लङ्घनञ्चाल्पदोषाणां प्रशस्तमतिसारिणाम् ॥ २२ ॥
पिप्पली नागरं धान्यं भूतीकमभया वचा।
ह्रीवेरं भद्रमुस्तानि बिल्वं नागरधान्यकम् ॥ २३ ॥
पृश्निपर्णी श्वदंष्ट्रा च समाङ्गा कण्टकारिका।
तिस्रः प्रमथ्या विहिताः श्लोकार्द्धैरतिसारिणाम् ॥ २४ ॥
वचाप्रतिविषाभ्यां वा मुस्तपर्पटकेन वा।
ह्रीवेरशृङ्गवेराभ्यां पक्वं वा पाययेज्जलम् ॥ २५ ॥

युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत् ।
तथा स शीघ्रमाप्नोति रुचिमग्निबलं बलम् ॥ २६ ॥
तक्रेणावन्तिसोमेन यवाग्वा तर्पणेन वा ।
सुरया मधुना चादौ यथासात्म्यमुपाचरेत् ॥ २७ ॥
यवागूभिर्विलेपीभिः खड्डैर्यूषैः रसौदनैः ।
दीपनग्राहिसंयुक्तैः क्रमश्च स्यादतः परम् ॥ २८ ॥
शालपर्णीं पृश्निपर्णीं बृहतीं कण्टकारिकाम् ।
बलां श्वदंष्ट्रां बिल्वानि पाठां नागरधान्यकम् ॥ २९ ॥
शटीं पलाशं हपुषां वचां जीरकपिप्पलीम् ।
यमानीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥ ३० ॥
वृक्षाम्लं दाडिमाम्लञ्च सहिङ्गु विडसैन्धवम् ।
प्रयोजयेदन्नपाने विधिना सूपकल्पितम् ॥ ३१ ॥
वातश्लेष्महरो ह्येष गणो दीपनपाचनः ।
ग्राही बल्यो रोचनश्च तस्माच्छस्तोऽतिसारिणाम् ॥ ३२
आमे परिणते यस्तु विबन्धमतिसार्यते ।
सशूलपिच्छमल्पाल्पं बहुशः सप्रवाहिकम् ॥ ३३ ॥
तं मूलकानां यूषेण बदराणामथापि वा ।
उपोदिकायाः चौरिण्या यमान्या वास्तुकस्य वा ॥ ३४ ॥
सुवर्चलायाश्चोर्वा शाकेनावल्गुजस्य वा ।
गव्याः कर्कारुकाणां वा जीवन्त्याश्चिर्भटस्य वा ॥ ३५ ॥
लोणीकायाः सपाठायाः शुष्कशाकेन वा पुनः ।
दधिदाडिमसिद्धेन बहुस्नेहेन भोजयेत् ॥ ३६ ॥
कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः ।
दध्नः सरोऽम्लस्नेहाढ्यः खड्डो हन्यात् प्रवाहिकाम् ॥ ३७ ॥
यवानां मुद्गमाषाणां शालिनाञ्च तिलस्य च ।
कोलानां बालबिल्वानां धान्ययूषं प्रकल्पयेत् ॥ ३८ ॥

ऐकध्वं यमके भृष्टं दधि दाड़िमसाधितम्।
वर्चःचये गुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥ ३९ ॥
दध्नः सरं वा यमके भृष्टं सगुड़नागरम्।
सुरां वा यमके भृष्टां व्यञ्जनार्थे प्रदापयेत् ॥ ४० ॥
फलाम्लं यमके भृष्टं यूषं गृञ्जनकस्य वा।
लोपाकरसमम्लं वा स्निग्धाम्लं कच्छपस्य वा ॥ ४१ ॥
बर्हितित्तिरिदक्षाणां वर्त्तकानां तथा रसः।
स्निग्धाम्लाः शालयश्चाग्र्या वर्चःचयरुजापहाः ॥ ४२ ॥
मल्लराविरसं पुत्वा रक्तां मेषस्य चोभयम्।
पचेद्दाड़िमसाराम्लं सधान्यस्नेहनागरम् ॥ ४३ ॥
भोजनं रक्तशालीनां तेनाद्यात् प्रपिबेच्च तत्।
तथा वर्चःचयकृतैर्व्याधिभिर्विप्रमुच्यते ॥ ४४ ॥
गुदनिःसरणे शूले पानमम्लस्य सर्पिषः।
प्रशस्यते निरामाणामथवाप्यनुवासनम् ॥ ४५ ॥
चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम्।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥ ४६ ॥
इति चाङ्गेरीघृतम्।
सचव्यपिप्पलीमूलं सव्योषविड़दाड़िमम्।
पेयमम्लं घृतं युक्त्या सधान्याजाजिचित्रकम् ॥ ४७ ॥
इति गुदभ्रंशे चव्यादिघृतम्।
दशमूलोपसिद्धं वा सबिल्वमनुवासनम्।
शताह्वाशटिबिल्वैर्वा वचया चित्रकेण वा।
स्नाव्यभ्रष्टगुदे पूर्वं स्नेहस्वेदौ प्रयोजयेत् ॥ ४८ ॥
इति गुदभ्रंशेऽनुवासनम्।
सुस्विन्नञ्च मृदुभूतं पिचुना संप्रवेशयेत्।
विबन्धवातवर्चास्तु बहुशूलप्रवाहिकः ॥ ४९ ॥

सरक्तपिच्छस्तृष्णार्त्तः क्षीरसौहित्यमर्हति ।
यमकस्योपरि क्षीरं धारोष्णं वा पिबेन्नरः ॥ ५० ॥
शृतमेरण्डमूलेन बालबिल्वेन वा पयः ।
एवं क्षीरप्रयोगेण रक्तं पिच्छा च शाम्यति ॥ ५१ ॥
शूलं प्रवाहिका चैव विबन्धश्चोपशाम्यति ।

पित्तातिसारं पुनर्निदानोपशयाकृतिभिरामान्वयमुपलभ्य यथाबलं लङ्घनपाचनाभ्यामुपाचरेत् ॥ ५२ ॥

तृष्यतस्तु मुस्तपर्पटकोशीरशारिवाचन्दनकिराततिक्तकोदीच्यवारिभिरुपचारः ॥ ५३ ॥

लङ्घितस्य चाहारकाले बलातिबला-सूर्प-शालपर्णी-पृश्निपर्णी-बृहती-कण्टकारिकाशतावरीश्वदंष्ट्रानिर्यूहसंयुक्तेन यथासात्म्यं यवागूमण्डादिना तर्पणादिना वा क्रमेणोपचारः ॥५४॥

मुद्गमसूरहरेणुमकुष्ठकयूषैर्वा लावकपिञ्जलशशहरिणैणेयकालपुच्छकरसैरीषदम्लैरनम्लैर्वा क्रमयोऽग्निं सन्धुक्षयेत् ॥५५

अनुबन्धत्वे तु अस्य दीपनीयपाचनीयोपशमनीयसंग्रहणीयान् योगान् प्रयोजयेदिति ॥ ५६ ॥

भवन्ति चात्र ।

सक्षौद्रातिविषं पिष्ट्वा वत्सकस्य फलत्वचम् ।
पिबेत् पित्तातिसारघ्नं तण्डुलोदकसंयुतम् ॥ ५७ ॥
किराततिक्तकं मुस्तं वत्सकः सरसाञ्जनः ।
बिल्वं दारुहरिद्रा च त्वक् ह्रीबेरं दुरालभाम् ॥ ५८ ॥
चन्दनञ्च मृणालञ्च नागरं लोध्रमुत्पलम् ।
तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम् ॥ ५९ ॥
उत्पलं धातकीपुष्पं दाडिमत्वङ्महौषधम् ।
कट्फलं नागरं पाठा जम्ब्वाम्रास्थिदुरालभाः ॥६०॥
योगाः षडेते सक्षौद्रास्तण्डुलोदकसंयुताः ।

पेयाः पित्तातिसारघ्नाः श्लोकार्द्धेन निदर्शिताः ॥ ६१ ॥
जीर्णौषधानां शस्यन्ते यथायोगं प्रकल्पितैः।
रसैः सांग्राहिकैर्युक्ताः पुराणा रक्तशालयः ॥ ६२ ॥
पित्तातिसारो दीप्ताग्नेः क्षिप्रं समुपशाम्यति।
अजाक्षीरप्रयोगेण बलं वर्णश्च वर्द्धते ॥ ६३ ॥
बहुदोषस्य दीप्ताग्नेः सप्राणस्य न तिष्ठति।
पैत्तिको यद्यतीसारः पयसा तं विरेचयेत् ॥ ६४ ॥
पलाशफलनिर्य्यूहं पयसा पाययेत तम्।
ततोऽनुपाययेत् कोष्णं क्षीरमेव यथाबलम् ॥ ६५ ॥
प्रवाहिते तेन मले प्रशाम्यत्युदरामयः।
पलाशवत् प्रयोज्या वा त्रायमाणा विशोधिनी ॥ ६६ ॥
ससर्ग्यां क्रियमाणायां शूलं यद्यनुवर्त्तते।
स्रुतदोषस्य तं शीघ्रं यथावदनुवासयेत् ॥ ६७ ॥
शतपुष्पावरीभ्याञ्च पयसा मधुकेन च।
तैलपादं घृतं सिद्धं सबिल्वमनुवासनम् ॥ ६८ ॥
कृतानुवासनस्यापि कृतसंसर्जनस्य च।
वर्त्तते यद्यतीसारः पिच्छावस्तिरतः परम् ॥ ६९ ॥
परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः।
कृष्णमृत्तिकयालिप्य स्वेदयेत् गोमयाग्निना ॥७०॥
सुशुष्कां मृत्तिकां ज्ञात्वा तानि वृन्तानि शाल्मलेः।
सृते पयसि मृद्नीयादापोथ्योलूखले ततः ॥ ७१ ॥
पिष्टं मुष्टिसमं प्रस्थे तत् पूतं तैलसर्पिषा।
योजितं मात्रया युक्तं कल्केन मधुकस्य च ॥ ७२ ॥
वस्तिमभ्यक्तगात्राय दद्यात् प्रत्यागते ततः।
स्नात्वा भुञ्जीत पयसा जाङ्गलानां रसेन वा ॥७३॥
पैत्तातिसारज्वरशोथगुल्माजीर्णातिसारग्रहणीप्रदोषान्।

जयत्ययं शीघ्रमतिप्रवृद्धान् विरेचनास्थापनयोश्च बस्तिः ॥७४॥
पित्तातिसारी यस्त्वेतां क्रियां मुक्त्वा निषेवते ।
पित्तलान्यन्नपानानि तस्य पित्तं महाबलम् ॥७५॥
कुर्य्याद्रक्तातिसारन्तु रक्तमाशु प्रदूषयत् ।
तृष्णां शूलं विदाहञ्च गुदपाकञ्च दारुणम् ॥७६॥
छागं तत्र पयः शस्तं शीतं समधुशर्करम् ।
पानार्थं व्यञ्जनार्थं च गुदप्रक्षालनं तथा ॥७७॥
भोजनं रक्तशालीनां पयसा तेन भोजयेत् ।
रसैः पारावतादीनां घृतभृष्टैः सशर्करैः ॥ ७८ ॥
शशपक्षिमृगाणाञ्च शीतानां वनचारिणाम् ।
रसैरनम्लैः सघृतैर्भोजयेत् तं सशर्करैः ॥ ७९ ॥
रुधिरं मार्गमाजं वा घृतभृष्टं प्रशस्यते ।
काश्मर्य्याः फलयूषो वा किञ्चिदम्लः सशर्करः ॥८०॥
नीलोत्पलं मोचरसो समङ्गा पद्मकेशरम् ।
अजाक्षीरयुतं दद्याज्जीर्णे च पयसौदनम् ॥८१॥
दुर्बलं पाययित्वा वा तस्यैवोपरि भोजयेत् ।
प्रागुक्तं नवनीतं वा दद्यात् समधुशर्करम् ॥८२॥
प्राश्य क्षीरोत्थितं सर्पिः कपिञ्जलरसाशनः ।
तस्माद्दारोग्यमाप्नोति पयसा क्षीरभुक् तथा ॥८३॥
पीत्वा शतावरीकल्कं पयसा क्षीरभुक् जयेत् ।
रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः ॥ ८४ ॥
घृतं यवागूमण्डेन कुटजस्य फलैः शृतम् ।
पेयं तस्यानुपातव्या पेया रक्तोपशान्तये ॥ ८५ ॥
त्वक् च दारुहरिद्रायाः कुटजस्य फलानि च ।
पिप्पली शृङ्गवेरञ्च द्राक्षा कटुकरोहिणी ॥८६॥
षड्भिरेतैर्घृतं सिद्धं पेयामण्डावचारितम् ।

अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥८७॥
कृष्णमृन्मधुकं शङ्खं रुधिरं तण्डुलोदकम्।
पीतमेकत्र सक्षौद्रं रक्तसंग्रहणं परम् ॥ ८८ ॥
पीतः प्रियङ्गुकाकल्कः सक्षौद्रस्तण्डुलाम्भसा।
रक्तस्रावं जयेच्छीघ्रं धन्वमांसरसाशिनः ॥ ८९ ॥
कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥९०॥
पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत्।
यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥९१॥
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्भसा।
दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाद्विमुच्यते ॥९२॥
गुदो बहुभिरुत्थानैर्यस्य पित्तेन पच्यते।
सेचयेत् तं सुशीतेन पटोलमधुकाम्बुना ॥९३॥
पञ्चवल्कमधूकानां रसैरिक्षुरसैर्घृतैः।
छागैर्गव्यैः पयोभिर्वा शर्कराक्षौद्रसंयुतैः ॥ ९४ ॥
प्रक्षालनानां कल्कैर्वा ससर्पिष्कैः प्रलेपयेत्।
एषां वा सुकृतैश्चूर्णैस्तं गुदं प्रतिसारयेत् ॥९५॥
धातकीलोध्रचूर्णैर्वा समांशैः प्रतिसारयेत्।
तथा तत्र स्रवत्यस्रं गुदं तैः प्रतिसारितम् ॥९६॥
पक्वता प्रथमं याति वेदना चोपशाम्यति।
यथोक्तैः सेचनैः शीतैः शोणिते निःस्रवत्यपि।
गुदवह्नप्रकस्तूरं सेचयेद् घृतभावितम् ॥९७॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा।
कार्पासमञ्जयोगेन सेचयेद् गुदवङ्क्षणौ ॥९८॥
अल्पाल्पं बहुशो रक्तं सशूलमुपवेश्यते।
यदा वायुर्विबद्धश्च कृच्छ्रं चरति वा न वा ॥९९॥

पिच्छावस्तिं तदा तस्य यथोक्तमुपकल्पयेत् ।
प्रपौण्डरीकसिद्धेन सर्पिषा चानुवासयेत् ॥१००॥
प्रायशो दुर्बलगुदाश्चिरकालातिसारिणः ।
तस्मादभीक्ष्णमस्तेषां गुदस्नेहं प्रयोजयेत् ॥१०१॥
पवनोऽतिप्रवृत्तो हि स्वे स्थाने लभतेऽधिकम् ।
बलं तस्य सपित्तस्य जयार्थे वस्तिरुत्तमः ॥१०२॥
रक्तं विट्सहितं पूर्वं पश्चाद्वा योऽतिसार्यते ।
शतावरीघृतं तस्य लेह्यार्थमुपकल्पयेत् ॥१०३॥
शर्करार्द्धांशिकं लीढ़ं नवनीतं नवोद्धृतम् ।
क्षौद्रपादं जयेच्छीघ्रं तं विकारं हिताशिनः ॥१०४॥
न्यग्रोधोदुम्बराश्वत्थशुङ्गानापोथ्य वासयेत् ।
अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत् ॥१०५॥
तदर्द्धं शर्करायुक्तं लिह्यात् सक्षौद्रपादिकम् ।
अधो वा यदि वाप्यूर्द्धं यस्य रक्तं प्रवर्त्तते ॥१०६॥
यस्त्वेवं दुर्बलो मोहात् पित्तलान्येव सेवते ।
शीघ्रं विपद्यते प्राप्य बलोपाकं सुदारुणम् ॥१०७॥
श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम् ।
योऽप्ययामातिसारघ्नो यथोक्तो दीपनो गणः ॥१०८॥
लङ्घितस्यानुपूर्व्याच्च क्रियायां न निवर्त्तते ।
कफजो यद्यतीसारः कफघ्नैस्तमुपाचरेत् ॥१०९॥
बिल्वकर्कटिकामुस्तमभया विश्वभेषजम् ।
वचा विड़ङ्गं भूतीकं धान्यकं देवदारु च ॥११०॥
कुष्ठं सातिविषा पाठा चव्यं कटुकरोहिणी ।
पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली ॥१११॥
योगान् श्लोकार्द्धविहितांश्चतुरस्तान् प्रयोजयेत् ।
स्मृतान् श्लेष्मातिसारेषु कायाग्निबलवर्द्धनान् ॥११२॥

अजाजीं ससितां पाठां नागरं मरिचानि च।
धातकीं द्विगुणं दद्यान्मातुलुङ्गरसाप्लुतम् ॥११३॥
रसाञ्जनं सातिविषं कुटजस्य फलानि च।
धातकीद्विगुणं दद्यात् पातुं सक्षौद्रनागरम् ॥११४॥
धातकी नागरं बिल्वं लोध्रं पद्मस्य केशरम्।
जम्बूत्वक् नागरं धान्यं पाठा मोचरसं बला ॥११५॥
समङ्गा धातकी बिल्वमध्यं जम्ब्वाम्रयोस्त्वचा।
कपित्थानि विड़ङ्गानि नागरं मरिचानि च ॥११६॥
चाङ्गेरीकोलतक्राम्लांस्तुरसान् कफातुरे।
श्लोकार्द्धविहितान् दद्यात् सस्नेहलवणान् खड़ान् ॥११७॥
कपित्थमध्यं लीढ्वा तु सव्योषक्षौद्रशर्करम्।
कट्फलं मधुयुक्तं वा मुच्यते जठरामयात् ॥११८॥
कणां मधुयुतां पीत्वा तक्रं पीत्वा सचित्रकम्।
जग्ध्वा वा बालबिल्वानि मुच्यते जठरामयात् ॥११९॥
बालबिल्वं गुड़ं तैलं पिप्पलीं विश्वभेषजम्।
लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ॥ १२० ॥
भोज्यं मूलकयूषेण वातघ्नैर्वोपसेवनैः।
वातातिसारविहितैर्यूषैर्मांसरसैः खड़ैः ॥१२१॥
पूर्वोक्तमम्लसर्पिर्वा षट्पलं वा यथाबलम्।
पुराणं वा घृतं दद्याद् यवागूमण्डमिश्रितम् ॥१२२॥
वातश्लेष्मविबन्धे वा कफे वातिस्रवत्यपि।
शूले प्रवाहिकायां वा पिच्छाबस्तिं प्रयोजयेत् ॥१२३॥
पिप्पलीबिल्वकुष्ठानां शताह्वावचयोरपि।
कल्कैः सलवणैर्युक्तं पूर्वोक्तं सन्निधापयेत् ॥१२४॥
प्रत्यागते सुखे स्नातं कृताहारं दिनात्यये।
बिल्वतैलेन मतिमान् सुखोष्णेनानुवासयेत् ॥१२५॥

वचान्तैरथवा कल्कैस्तैलं पक्वानुवासयेत्।
वङ्क्षणः कफवातार्त्तः तथा स लभते सुखम् ॥१२६॥
स्वे स्थाने मारुतोऽवश्यं वर्द्धते कफसंचये।
स वृद्धः सहसा हन्यात् तस्मात् तं त्वरया जयेत् ॥१२७॥
वातस्यानुजयेत् पित्तं पित्तस्यानुजयेत् कफम्।
त्रयाणां वा जयेत् पूर्वं यो भवेद् बलवत्तमः ॥१२८॥

तत्र श्लोकः।

प्रागुत्पत्तिनिमित्तानि लक्षणं साध्यता तथा।
क्रिया चावस्थिकी सिद्धा निर्दिष्टा ह्यतिसारिणाम् ॥१२९॥

---

## एकादशोऽध्यायः।

### विसर्पचिकित्सितम्।

कैलासे किन्नराकीर्णे बहुप्रस्रवणौषधे।
पादपैर्विविधैः स्निग्धैर्नित्यं कुसुमसम्पदैः ॥ १ ॥
वहद्भिर्मधुरान् गन्धान् सर्वतः समभिलङ्कृते।
विहरन्तं जितात्मानमात्रेयमृषिवन्दितम् ॥२॥
महर्षिभिः परिवृतं विभुं भूतहिते रतम्।
अग्निवेशो गुरुं काले विनयादिदमुक्तवान् ॥३॥
भगवन्! दारुणं रोगमाशीविषविषोपमम्।
विसर्पन्तं शरीरेषु देहिनामुपलक्षये ॥ ४ ॥
सहसैव नरास्तेन परीताः शीघ्रकारिणा।
विनश्यन्त्यनुपक्रान्तास्तत्र नः संशयो महान् ॥५॥
स नाम्ना केन विज्ञेयः संश्रितः केन हेतुना।
कतिभेदः कियद्धातुः किं निदानः किमाश्रयः ॥६॥
सुखसाध्यः कृच्छ्रसाध्यो ज्ञेयो यश्चानुपक्रमः।
कथं कैरौषधैः किञ्च भगवन्! तस्य भिषजम् ॥७॥

तदग्निवेशस्य वचः श्रुत्वात्रेयः पुनर्वसुः।
यथावदखिलं सर्वं प्रोवाच मुनिसत्तमः॥ ८॥
विविधं सर्पति यतो विसर्पस्तेन स स्मृतः।
परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात्॥९॥
स च सप्तविधो दोषैर्विज्ञेयः सप्तधातुकः।
पृथक्त्रयस्त्रिभिश्चैको विसर्पो द्वन्द्वजास्त्रयः॥ १०॥
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः।
चत्वार एते विसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः॥११॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः।
यस्तु कर्दमको घोरः स पित्तकफसम्भवः॥ १२॥
रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः।
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः॥१३॥
लवणाम्लकटूष्णानां रसानामतिसेवनात्।
दध्यम्लमस्तुशुक्तानां सुरासौवीरकस्य च॥१४॥
व्यापन्नबहुमद्योष्णरागषाडवसेवनात्।
शाकानां हरितानाञ्च सेवनाच्च विदाहिनाम्॥१५॥
कूर्चिकानां किलाटानां सेवनान्मन्दकस्य च।
दध्नः शाण्डाकिपूर्वाणामासुतानाञ्च सेवनात्॥१६॥
तिलमाषकुलत्थानां तैलानां पैष्टिकस्य च।
ग्राम्यानूपौदकानाञ्च मांसानां लशुनस्य च॥१७॥
प्रक्लिन्नानामसात्म्यानां विरुद्धानाञ्च सेवनात्।
अत्यादानाद्दिवास्वप्नादजीर्णाध्यशनात् क्षतात्॥१८॥
वधबन्धप्रपतनाद्घर्मकर्मातिसेवनात्।
विषवाताग्निदोषाच्च विसर्पाणां समुद्भवः॥१९॥
एतैर्निदानैर्व्यामिश्रैः कुपिता मारुतादयः।
दूष्यं संदूष्य रक्तादि विसर्पन्त्यहिताशिनाम्॥२०॥

वहिःश्रितः श्रितश्चान्तस्तथा चोभयसंश्रितः।
विसर्पो बलमेतेषां ज्ञेयं गुरु यथोत्तरम् ॥ २१ ॥
वहिर्मार्गाश्रितं साध्यमसाध्यमुभयाश्रितम्।
विसर्पं दारुणं विद्यात् सुकृच्छ्रन्त्वन्तराश्रयम् ॥२२॥
अन्तःप्रकुपिता दोषा विसर्पन्त्यन्तराश्रये।
वहिर्वहिः प्रकुपिताः सर्वत्रोभयसंश्रिताः ॥२३॥
मर्मोपघातात् संमोहादयनानां विघट्टनात्।
तृष्णातियोगाद्वेगानां विषमाणां प्रवर्त्तनात् ॥२४॥
विद्याद्विसर्पमन्तर्यदाशु चाग्निबलक्षयात्।
अतो विपर्य्ययाद्वाह्यमन्यैर्विद्यात् स्वलक्षणैः ॥२५॥
यस्य लिङ्गानि सर्वाणि बलवद् यस्य कारणम्।
यस्य चोपद्रवाः कष्टा मर्मगो यश्च हन्ति सः ॥२६॥
रूक्षोष्णैः केवलो वायुः पूरणैर्वा समावृतः।
प्रदुष्टो दूषयन् दूष्यं विसर्पति यथाबलम् ॥२७॥

तस्य रूपाणि।

भ्रमदवथुपिपासानिस्तोदशूलाङ्गमर्दोद्वेष्टनकम्पज्वरतमककासास्थिसन्धिभेदविश्लेषणवेपनारोचकाविपाकाश्चक्षुषोराकुलत्वमस्रागमनं पिपीलिकासञ्चार इव चाङ्गेषु यस्मिंश्चावकाशे विसर्पो विसर्पति सोऽवकाशः श्यावारुणावभासः श्वयथुमान् निस्तोदभेदशूलायाससङ्कोचहर्षस्फुरणैरतिमात्रं प्रपीड्यते। अनुपक्रान्तश्चोपचीयते शीघ्रं भेदैः स्फोटकैस्तनुभिररुणाभैः श्यावैर्वा तनुविषमदारुणाल्पास्रावैर्विबद्धवातमूत्रवर्चस्तानि निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत इति वातविसर्पः ॥२८॥

पित्तमुष्णोपचारादि विदाह्यम्लाशनैश्चितम्।
दूष्यं संदूष्य मार्गाञ्च पूरयन् वै विसर्पति ॥२९॥
तस्य रूपाणि ज्वरस्तृष्णा मूर्च्छामोहश्छर्दिररोचकोऽ

स्त्वभेदः स्वेदोऽतिमात्रमन्तर्दाहः प्रलापः शिरोरुक् चक्षुषोराकुलत्वमस्वप्नमरतिर्भ्रमः शीतवातवारितर्षोऽतिमात्रं हरितनेत्रमूत्रवर्चस्त्वक् तेषां हरितहारिद्ररूपदर्शनं यस्मिंश्चावकाशे विसर्पोऽनुसर्पति सोऽवकाशस्ताम्रहारितहारिद्रनीललोहितरक्तानां वर्णानामन्यतमं पश्यति। सोत्सेधैश्चातिमात्रं दाहसम्भेदनपरीतैः स्फोटकैरुपचीयते तुल्यवर्णास्रावैरचिरपाकैर्निदानोक्तानि नोपशेरते विपरीतानि चोपशेरत इति पित्तविसर्पः॥२०॥

स्वाद्वम्ललवणस्निग्धगुर्वन्नस्वप्नसञ्चितः।
कफः संदूषयन् दूष्यं कृच्छ्रमङ्गे विसर्पति॥२१॥

तस्य रूपाणि शीतकः शीतकज्वरो गौरवं निद्रा तन्द्रारोचको मधुरास्यत्वमास्योपलेपो निष्ठीविकाच्छर्दिरालस्यं स्तैमित्यमग्निनाशो दौर्बल्यं यस्मिंश्चावकाशे विसर्पति सोऽवकाशः श्वयथुमान् पाण्डुमान् नातिरक्तस्नेहः सुप्तिस्तम्भगौरवैरन्वितोऽल्पवेदनः कृच्छ्रपाकैश्चिरकारिभिः बहुलत्वगुपलेपैः स्फोटैः श्वेतपाण्डुभिरनुबध्यते प्रभिन्नस्तु श्वेतं पिच्छिलं तन्तुमद्घनमनुबद्धं स्निग्धमास्रावं स्रवत्यूर्ध्वं गुरुभिः स्निग्धैर्जालावततैः स्निग्धैर्बहुलत्वगुपलेपैर्व्रणैरनुबध्यतेऽनुषङ्गी श्वेतनखनयनवदनत्वङ्मूत्रवर्चस्त्वानि निदानोक्तानि नोपशेरते विपरीतानि चोपशेरत इति श्लेष्मविसर्पः॥ २२॥

वातपित्ते प्रकुपितमतिमात्रं स्वहेतुभिः।
परस्परं लब्धबलं दहद्गात्रं विसर्पति॥ २३॥

तदुपतापादातुरः सर्वशरीरमङ्गारैरिवाकीर्यमाणं मन्यते। छर्द्यतीसार-मूर्च्छा-दाह-मोह-ज्वर-तमकारोचकास्थि सन्धिभेदतृष्णाविपाकाङ्गभेदादिभिश्चाभिभूयते। यं यं चावकाशं विसर्पोऽनुसर्पति सोऽवकाशः शान्ताङ्गारप्रकाशोऽतिरक्तो वा भवत्यग्निदग्धप्रकारैश्च स्फोटैरुपचीयते स शीघ्रगत्वादाशु एव

मर्मानुसारी भवति मर्माणि चोपतप्तपवनोऽतिबलो भिनत्ति अङ्गानि अतिमात्रं प्रमोहयति संज्ञां हिक्काश्वासौ जनयति नाशयति निद्रां स नष्टनिद्रः प्रमूढसंज्ञो व्यथितचेता न क्वचन सुखमुपलभते अरतिपरीतः स्थानादासनात् शय्यां क्रान्तुमिच्छति क्लिष्टभूयिष्ठश्चाशु निद्रां भजति अबलो दुःखप्रबोधश्च तमेवंविधमग्निविसर्पपरीतमचिकित्स्यं विद्यात् ॥ ३४ ॥

कफपित्तं प्रकुपितं बलवत् स्वेन हेतुना ।
विसर्पत्येकदेशन्तु प्रक्लेदयति देहिनः ॥ ३५ ॥

तद्विकाराः—शीतज्वरः शिरोगुरुत्वं दाहः स्तैमित्यमङ्गावमर्दनं निद्रा तन्द्रा मोहोऽन्नद्वेषः प्रलापोऽग्निनाशो दौर्बल्यमस्थिभेदो मूर्च्छा पिपासा स्रोतसां प्रलेपो जाड्यमिन्द्रियाणां प्रायोपवेशनम् अङ्गविक्षेपोऽङ्गमर्दोऽरतिरौत्सुक्यञ्च उपजायते प्रायशश्चामाशये विसर्पत्येकदेशग्राही यस्मिंश्चावकाशे विसर्पति सोऽवकाशो रक्तपीतपाण्डुपीडकापकीर्ण इव मेचकाभः कालो मलिनः स्निग्धो बहूष्मा गुरुः स्तिमितवेदनः श्वयथुमान् गम्भीरपाकः निरास्रावः शीघ्रक्लेदः स्विन्नक्लिन्नपूतिमांसत्वक् क्रमेणाल्परुक् परामृष्टोऽवदीर्यते कर्दम इवावपीडितोऽनन्तरमयच्छत्युपक्लिन्नपूतमांसत्यागी शिरास्नायुसन्दर्शी कुणपगन्धी च भवति संज्ञास्मृतिहन्ता तं कर्दमविसर्पपरीतमचिकित्स्यं विद्यात् ॥ ३६ ॥

स्निग्धगुरुकठिन-मधुरशीत-स्निग्धान्न पानाभिष्यन्दिसेविनामव्यायामसेविनामप्रतिकर्मशालिनां श्लेष्मा वायुश्च प्रकोपमापद्येते तावुभौ दुष्टप्रवृद्धौ अतिबलौ प्रदूष्य दूष्यं विसर्पाय कल्पेते। तत्र वायुः श्लेष्मणा विबद्धमार्गस्तमेव श्लेष्माणमनेकधा भिन्दन् क्रमेण ग्रन्थिमालां क्षुद्रग्रन्थीनां वा कफाशये मजनयति उपस्थितरक्तस्य वा प्रदूष्य रक्तं शिरास्नायुमांसत्वगाश्रितं ग्रन्थि-

विसर्पं कुरुते तीव्ररुजा ग्रन्थीनां स्थूलानामणूनां दीर्घवृत्तरक्तानां तदुपातपाज्ज्वरातीसार-कासहिक्काश्वासशोषप्रमोहवैवर्ण्यारोचकाविपाक-च्छर्दिमूर्च्छाङ्गभङ्गनिद्रा-रतिसंसदनाद्याः प्रादुर्भवन्ति उपद्रवास्तैरुपद्रुतः सर्वकर्मणां विषयमतिपतितो विवर्जनीयो भवतीति ग्रन्थिविसर्पः ॥ ३७ ॥

उपद्रवस्तु खलु रोगोत्तरकालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा रोगात् पश्चाज्जायत इति उपद्रवसंज्ञः। तत्र प्रधानो व्याधिर्व्याधेर्गुणीभूत उपद्रवस्तस्य प्रायः प्रधानप्रशमे प्रशमो भवति। स तु पीडाकरतरो भवति इति पश्चादुत्पद्यमानो व्याधिः परिक्लिष्टशरीरत्वात् तस्मादुपद्रव त्वरमाणोऽभिबाधेत ॥ ३८ ॥

सर्वायतनसमुत्थं सर्वलिङ्गव्यापिनं सर्वधात्वनुसारिणमाशुकारिणं महात्ययिकमिति सन्निपातविसर्पमचिकित्स्यं विद्यात् ॥ ३९ ॥

तत्र वातपित्तश्लेष्मनिमित्ता विसर्पास्त्रयः साध्याः भवन्त्यग्निकर्दमाख्यौ पुनरनुपसृष्टे मर्मणि अनुपहते वा शिरास्नायुमांसक्लेदे साधारणक्रियाभिरुपायैः ताविवाभ्यस्यमानौ प्रशान्तिमापद्येयातामनादरोपक्रान्तं पुनस्तयोरन्यतरो हन्यात् देहमाश्वेवाशीविषवत् ॥ ४० ॥

तथा ग्रन्थिविसर्पमजातोपद्रवमारभेत चिकित्सितुमुपद्रवोपद्रुतस्त्वेनं परिहरेत्। सन्निपातजं सर्वधात्वनुसारित्वादाशुकारित्वाद्विरुद्धोपक्रमत्वाच्च असाध्यं विद्यात् ॥ ४१ ॥

तत्र साध्यानां साधनमनुव्याख्यास्यामः ॥ ४२ ॥

लङ्घनोल्लेखने शस्ते तिक्तकानाञ्च सेवनम्।
कफस्थानगते सामे रूक्षशीतैः प्रलेपयेत् ॥ ४३ ॥
पित्तस्थानगतेऽप्येतत् सामे कुर्य्याच्चिकित्सितम्।

आदितः खल्वदीयाणां क्रिया बाह्या प्रवक्ष्यते ॥७०॥
उदुम्बरत्वङ्मधुकं पद्मकिञ्जल्कमुत्पलम् ।
नागपुष्पं प्रियङ्गुश्च प्रदेहः सघृतो हितः ॥७१॥
न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः ।
बिसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥७२॥
कालीयं मधुकं हेम वल्कं चन्दनपद्मकम् ।
एला मृणालं फलिनी प्रलेपः स्याद् घृताप्लुतः ॥७३॥
शाद्वलश्च मृणालश्च शङ्खचन्दनमुत्पलम् ।
वेतसस्य च मूलानि प्रदेहः स्यात् सतण्डुलः ॥७४॥
शारिवा पद्मकिञ्जल्कमुशीरं नीलमुत्पलम् ।
मञ्जिष्ठा चन्दनं लोध्रमभया च प्रलेपनम् ॥७५॥
नलदश्च हरेणुश्च लोध्रं मधुकपद्मकौ ।
दूर्वा सर्जरसश्चैव सघृतं स्यात् प्रलेपनम् ॥७६॥
यावकाः शक्तवश्चैव सर्पिषा सह योजिताः ।
प्रदेहो मधुकं वीरा सघृता यवशक्तवः ॥७७॥
बलामुत्पलशालूकं वीरामगुरुचन्दनम् ।
कुर्यादालेपनं वैद्यो मृणालश्च बिसान्वितम् ॥७८॥
यवचूर्णं समधुकं सघृतश्च प्रलेपनम् ।
हरेणवो मसूराश्च समुद्गाः श्वेतशालयः ।
पृथक् पृथक् प्रदेहाः स्युः सर्वे वा सर्पिषा सह ॥७९॥
पद्मिनी कर्दमः शीतो मौक्तिकं पिष्टमेव वा ।
शङ्खः प्रवालः शुक्तिर्वा गैरिको वा घृताप्लुतः ॥८०॥
प्रपौण्डरीकं मधुकं बला शालूकमुत्पलम् ।
न्यग्रोधपत्रं दुग्धीका सघृतं स्यात् प्रलेपनम् ॥८१॥
बिसानि च मृणालश्च सघृता च कसेरुका ।
शतावर्या विदार्याश्च कन्दौ धौतघृताप्लुतौ ॥८२॥

शैवालं नलमूलानि गोजिह्वा वृषकर्णिका।
इन्द्राणीशाकं सघृतं शिरीषत्वग्बलाघृतम् ॥८३॥
न्यग्रोधोदुम्बरप्लक्षवेतसाश्वत्थपल्लवैः।
त्वक् कल्कैर्बहुसर्पिष्कैस्तैरेवालेपनं हितम् ॥८४॥
प्रदेहाः सर्व एवैते वातपित्तोल्बणे शुभाः।
सकफे तु प्रवक्ष्यामि प्रलेपानपरान् शुभान् ॥८५॥
त्रिफलां पद्मकोशीरं समङ्गां करवीरकम्।
नलमूलान्यनन्तञ्च प्रदेहमुपकल्पयेत् ॥८६॥
खदिरं सप्तपर्णञ्च मुस्तमारग्वधं धवम्।
कुरण्टकं देवदारु दद्यादालेपनं भिषक् ॥८७॥
आरग्वधस्य पत्राणि त्वचं श्लेष्मान्तकस्य च।
इन्द्राणीशाकं काकाह्वां शिरीषकुसुमानि च ॥८८॥
शैवालं नलमूलानि वीरा गन्धप्रियङ्गुकौ।
त्रिफलां मधुकं वीरां शिरीषकुसुमानि च ॥८९॥
प्रपौण्डरीकं ह्रीवेरं दार्वी त्वङ्मधुकं बलाम्।
पृथगालेपनं कुर्याद्द्वन्द्वशः सर्वशोऽपि वा ॥९०॥
प्रदेहाः सर्व एवैते देयाः स्वल्पघृताप्लुताः।
वातपित्तोल्बणे ये तु प्रदेहास्ते घृताधिकाः ॥९१॥
प्रदेहाः सर्व एवैते कर्त्तव्याः संप्रसादनाः।
चये चये युज्यमाना पूर्वमुद्धृत्य लेपनम् ॥९२॥
घृतेन शतधौतेन प्रदिह्यात् केवलेन च।
घृतमण्डेन शीतेन पयसा मधुकाम्बुना ॥९३॥
पञ्चवल्ककषायेण सेचयेत् शीतलेन वा।
वातासृक् पित्तबहुलं विसर्पं बहुशो भिषक् ॥९४॥
सेचनास्ते प्रदेहा ये त एव घृतसाधनाः।
ते चूर्णयोगा विसर्पचूर्णानामवचूर्णनाः ॥९५॥

दूर्वास्वरससिद्धञ्च घृतं स्याद् व्रणरोपणम्।
दार्वीत्वङ्मधुकं लोध्रं केशराश्चावचूर्णनम् ॥९६॥
पटोलः पिचुमर्दश्च त्रिफला मधुकोत्पले।
एतत् प्रक्षालनं सर्पिर्व्रणचूर्णं प्रलेपनम् ॥९७॥
प्रदेहाः सर्व एवैते कर्त्तव्याः संप्रसादनाः।
क्षणे क्षणे प्रयोक्तव्याः पूर्वमुद्धृत्य लेपनम् ॥९८॥
नवनीते घृते पूर्वं प्रदेहा बहुशोधनाः।
देयाः प्रदेहाः वातजे पर्य्याधानीकृते घनाः ॥९९॥
त्रिभागाङ्गुष्ठमात्रः स्यात् प्रलेपः कल्कपेषितः।
नातिस्निग्धो न रूक्षश्च न पिण्डो न द्रवः समः ॥१००॥
न च पर्य्युषितं लेपं कदाचिदवचारयेत्।
न च तेनैव लेपेन पुनर्जातु प्रलेपयेत् ॥१०१॥
क्लेदविसर्पशूलानि सोष्माभावात् प्रवर्त्तयेत्।
लेपो ह्युपरि पट्टस्य क्षतः स्वेदयति व्रणम् ॥१०२॥
स्वेदजाः पोड़कास्तस्य कण्डूश्चैवोपजायते।
उपर्य्युपरि लेपस्य लेपो यश्चावचार्य्यते ॥१०३॥
तानेव दोषान् जनयेत् पट्टस्योपरि यान् क्षतः।
अतिस्निग्धोऽतिद्रवश्च लेपो यश्चावचार्य्यते ॥१०४॥
त्वचि न श्लिष्यते सम्यक् न दोषं शमयत्यपि।
तन्वा लिप्तं न कुर्वीत संशुष्को ह्यपुटायते ॥१०५॥
न चौषधिरसो व्याधिं प्राप्नोत्यपि च शुष्यति।
तन्वा लिप्तेन ये दोषास्तानेव जनयेद् घनम् ॥१०६॥
सशुष्कः पोड़येत् व्याधिं निस्नेहो ह्यवचारितः।
अन्नपानानि वक्ष्यामि विसर्पाणां निवृत्तये ॥१०७॥
लङ्घितेभ्यो हितो मन्थो रूक्षः सक्षौद्रशर्करः।
मधुरः किञ्चिदम्लो वा दाड़िमामलकान्वितः ॥१०८॥

सपरूपकस्यद्दीकः सखर्जूरः शृताम्बुना ।
तर्पणैर्यवशालीनां सस्नेहा वावलेहिका ॥१०९॥
जीर्णे पुराणशालीनां यूषैर्भुञ्जीत भोजनम् ।
मुद्गान् मसूरांश्चणकान् यूषार्थमुपकल्पयेत् ॥११०॥
अनम्लान् दाड़िमाम्लान् वा पटोलामलकैः सह ।
लाङ्गलानाञ्च मांसानां रसांश्चस्योपकल्पयेत् ॥१११॥
रूक्षान् परूषकद्राक्षादाड़िमामलकान्विताम् ।
रक्ताः श्वेता महाह्वाश्च शालयः षष्टिकैः सह ॥११२॥
भोजनार्थे प्रशस्यन्ते पुराणाः सुपरिस्रुताः ।
यवगोधूमशालीनां सात्म्यान्येव प्रदापयेत् ॥११३॥
येषां नात्युचितः शालिर्नरा ये च कफाधिकाः ।
विदाहीन्यन्नपानानि विरुद्धं स्वपनं दिवा ॥११४॥
क्रोधव्यायामसूर्य्याग्निप्रावातांश्च विवर्जयेत् ।
कुर्य्याच्चिकित्सितान्यस्मात् शीतप्रायाणि पैत्तिके ॥११५॥
रूक्षप्रायाणि कफजे स्नैह्विकान्यनिलात्मके ।
वातपित्तप्रशमनमग्निविसर्पणे हितम् ॥११६॥
कफपित्तप्रशमनं प्रायः कर्दमसंज्ञिते ।
रक्तपित्तोत्तरं दृष्ट्वा ग्रन्थिविसर्पमादितः ॥११७॥
रूक्षणैर्लङ्घनैः सेकैः प्रदेहैः पाचवल्किकैः ।
शिरामोक्षैर्जलौकोभिर्वमनैः सविरेचनैः ॥११८॥
घृतैः कषायतिक्तैश्च कालज्ञैः समुपाचरेत् ।
ऊर्द्ध्वाञ्चाधश्च शुद्धाय रक्ते चाप्यवसेचिते ॥११९॥
वातश्लेष्महरं कर्म ग्रन्थिविसर्पिणे हितम् ।
उत्कारिकाभिरुष्णाभिरुपनाहः प्रशस्यते ॥१२०॥
स्निग्धाभिर्वेशवारैर्वा ग्रन्थिविसर्पशूलिनः ।
दशमूलोपसिद्धेन तैलेनोष्णेन सेचयेत् ॥१२१॥

अपगाम्यति दोषे च पाचनं वा प्रशस्यते।
प्रक्लिन्ने दाहपाकाभ्यां भिषक् शोधनरोपणैः ॥१३५॥
बाह्यैश्चाभ्यन्तरैश्चैव व्रणवत् समुपाचरेत्।
कम्पिल्लकं विडङ्गानि दार्वीं कारञ्जकं फलम्।
पिष्ट्वा तैलं विपक्तव्यं ग्रन्थिव्रणचिकित्सितम् ॥१३६॥
द्विव्रणीयोपदिष्टेन कर्मणा चाप्युपाचरेत्।
देशकालविभागज्ञो व्रणग्रन्थिविसर्पवित् ॥१३७॥

इति ग्रन्थिविसर्पचिकित्सा।

य एव विधिरुद्दिष्टो ग्रन्थीनां विनिवृत्तये।
स एव गलगण्डानां कफजानां निवृत्तये ॥१३८॥
गलगण्डास्तु वातोत्था ये कफानुगता नृणाम्।
घृतक्षीरकषायाणामभ्यासाच्च भवन्ति ते ॥१३९॥
यान्युक्तानि कर्माणि विसर्पाणां निवृत्तये।
एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः ॥१४०॥
विसर्पो न ह्यसंसृष्टो रक्तपित्तेन जायते।
तस्मात् साधारणं सर्वमुक्तमेतच्चिकित्सितम् ॥१४१॥
विशेषो दोषवैषम्याच्च च नोक्तः समासतः।
समासव्यासनिर्दिष्टां क्रियां विद्वानुपाचरेत् ॥१४२॥

भवन्ति चात्र।

निरुक्तनामभेदाश्च दोषा दूष्याणि हेतवः।
आश्रयो मार्गतश्चैव विसर्पगुरुलाघवम् ॥१४३॥
लिङ्गान्युपद्रवा ये च यल्लक्षण उपद्रवाः।
साध्यत्वं न च साध्यानां साधनञ्च यथाक्रमम् ॥१४४॥
इति पिप्रच्छवे सिद्धिमग्निवेशाय धीमते।
उक्तं भगवता ह्येतत् विसर्पाणां चिकित्सिते ॥१४५॥

---

## द्वादशोऽध्यायः ।

### मदात्ययचिकित्सितम् ।

सुरैः सुरेशप्रहितैर्या सुरा परिपूजिता ।
सौत्रामण्यां हूयते या कर्मभिर्या प्रतिष्ठिता ॥ १ ॥
यज्ञे हि या च शक्रस्य सोमोऽतिपतितो यया ।
नीरजस्तमसाविष्टस्तस्माद् दुर्गात् समुद्धृतः ॥ २ ॥
विधिभिर्वेदविहितैर्या यजद्भिर्महात्मभिः ।
इष्टा सृष्टा प्रकल्प्या च यज्ञिया यज्ञसिद्धये ॥ ३ ॥
योनिसंस्कारनामाद्यैर्विशेषैर्बहुधा च या ।
भूत्वा भवत्येकविधा सामान्यान्मदलक्षणात् ॥ ४ ॥
या देवानमृतं भूत्वा स्वधा भूत्वा पितॄंश्च या ।
सोमो भूत्वा द्विजातीन् या युङ्क्ते श्रेयोभिरुत्तमैः ॥ ५ ॥
आश्विनं या महत् तेजो वीर्यं सारस्वतञ्च या ।
बलमैन्द्रञ्च या सोमे सौत्रामण्याञ्च या मता ॥ ६ ॥
शोकारतिभयोद्वेगनाशिनी या महाबला ।
या प्रीतिर्या रतिर्या वाग् पुष्टिर्या च निर्वृतिः ॥ ७ ॥
या सुरा सुरगन्धर्वयक्षराक्षसमानुषैः ।
रतिः सुरेत्यभिहिता तां सुरां विधिना पिबेत् ॥ ८ ॥
शरीरकृतसंस्कारः शुचिरुत्तमगन्धवान् ।
प्रावृतो निर्मलैर्वस्त्रैर्यथर्त्तुहृदानगन्धिभिः ॥ ९ ॥
विचित्रविविधस्रग्वी रत्नाभरणभूषितः ।
देवद्विजातीन् संपूज्य स्पृष्ट्वा मङ्गलमुत्तमम् ॥ १० ॥
देशे यथर्त्तुके शस्ते कुसुमप्रकरोत्कते ।
संवाससंमते सुख्ये धूपसंमोदबोधिते ॥ ११ ॥
[illegible] सुसंस्तीर्णे विहिते शयनासने ।
[illegible] तिर्यक् स्वशरीरसुखे स्थितः ॥ १२ ॥

सौवर्णे राजतैश्चापि तथा मणिमयैरपि।
भाजनैर्विमलैश्चान्यैः सुकृतैश्च पिबेत् सदा ॥ १३ ॥
स्त्रीभिर्यौवनमत्ताभिः शिक्षिताभिर्यथर्त्तुकैः।
वस्त्राभरणमाल्यैश्च भूषिताभिर्विभूषितः ॥ १४ ॥
शौचानुरागयुक्ताभिः प्रमदाभिरितस्ततः।
संवाह्यमान इष्टाभिः पिबेन्मद्यमनुत्तमम् ॥ १५ ॥
पिबेन्मद्यानुकूलैर्वा फलैर्हरितकैः शुभैः।
लवणैर्गन्धपिशुनैरवदंशैर्यथर्त्तुकैः ॥ १६ ॥
भृष्टैर्मांसैर्बहुविधैर्भूजलाम्बरचारिणाम्।
पौरोगवगविहितैर्भक्ष्यैश्च विविधात्मकैः ॥ १७ ॥
पूजयित्वा सुरान् पूर्वमाशिषः प्राक् प्रयुज्य च।
प्रदाय सजलं मद्यमादितो वसुधातले ॥ १८ ॥
अभ्यङ्गोत्सादनस्नानवासोधूपानुलेपनैः।
स्निग्धोष्णैर्भावितैश्चान्नैर्वातिको मद्यमाचरेत् ॥ १९ ॥
शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः।
पैत्तिको भावितश्चान्नैः पिबन्मद्यं न सीदति ॥ २० ॥
उपचारैश्च शिशिरैर्यवगोधूमभुक् पिबेत्।
श्लैष्मिको धन्वजैर्मांसैर्मद्यं मरीचकैः सह ॥ २१ ॥
विधिर्वहुमतामेष भविष्यद्विभवाय ये।
यथोपपत्तिकैर्मद्यं पातव्यं मात्रया हितम् ॥ २२ ॥
वातिकेभ्यो हितं मद्यं प्रायो गौड़िकपैष्टिकम्।
कफपित्ताधिकेभ्यस्तु फालमाधवशार्करम् ॥ २३ ॥
बहुद्रवं बहुगुणं बहुकर्मप्रदात्मकम्।
गुणैर्दोषैश्च तन्मद्यमुभयश्चोपलक्ष्यते ॥ २४ ॥
विधिना मात्रया काले हितैरन्नैर्यथाबलम्।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ॥ २५ ॥

यथोपेत पुनर्मद्यं प्रसङ्गाद्येन पीयते ।
रूक्षव्यायामनित्येन विषवद् याति तस्य तत् ॥ २६ ॥
मद्यं हृदयमाविश्य स्वगुणैरोजसो गुणान् ।
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥ २७ ॥
लघूष्णतीक्ष्णसूक्ष्माम्लव्यवायाशुगमेव च ।
रूक्षं विकाशि विशदं मद्यं दशगुणं स्मृतम् ॥ २८ ॥
गुरु शीतं मृदु श्लक्ष्णं बहलं मधुरं स्थिरम् ।
प्रसन्नं पिच्छिलं स्निग्धमोजो दशगुणं स्मृतम् ॥ २९ ॥
गुरुत्वं लाघवाच्छैत्यमौष्ण्यादम्लस्वभावतः ।
माधुर्यं मार्दवं तैक्ष्ण्यात् प्रसादं चाशुभावनात् ॥ ३० ॥
रौक्ष्यात् स्नेहं व्यवायित्वात् स्थिरत्वं श्लक्ष्णतामपि ।
विकासिभावात् पैच्छिल्यं वैशद्यात् सान्द्रतां तथा ॥३१॥
सौक्ष्म्यान्मद्यं निहन्त्येवमोजसः स्वगुणैर्गुणान् ।
सत्त्वं तदाश्रयत्वाच्च संक्षोभ्य जनयेन्मदम् ॥ ३२ ॥
रसधात्वादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम् ।
प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते ॥ ३३ ॥
अतिपीतेन मद्येन विहृतेनौजसा च तत् ।
हृदयं याति वैकल्यं तत्स्था ये च धातवः ॥ ३४ ॥
ओजस्यविहृते पूर्वो हृदि च प्रतिबोधिते ।
मध्यमो विहृतेऽल्पे च विहृते तूत्तमो मदः ॥ ३५ ॥
नैवं विघातं जनयेन्मद्यं पैष्टिकमोजसः ।
विकाशरूक्षविशदा गुणास्तत्र हि नोल्बणाः ॥ ३६ ॥
हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम् ।
विकाराश्च यथासत्त्वं चित्रा राजसतामसाः ॥ ३७ ॥
जायन्ते मोहनिद्रान्ता मद्यस्यातिनिषेवणात् ।
स मद्यविभ्रमो नाम्ना मद इत्यभिधीयते ॥ ३८ ॥

पीयमानस्य मद्यस्य विज्ञातव्यास्त्रयो मदाः।
प्रथमो मध्यमोऽन्त्यश्च लक्षणैस्तान् प्रवक्ष्यते ॥ ३९ ॥
प्रहर्षणः प्रीतिकरः पानान्नगुणदर्शकः।
वाद्यगीतप्रहासानां कथानाञ्च प्रवर्त्तकः ॥ ४० ॥
न च बुद्धिस्मृतिहरो विषयेषु न चाक्षमः।
सुखनिद्राप्रबोधश्च प्रथमः सुखदो मदः ॥ ४१ ॥
मुहुः स्मृतिर्मुहुर्मोहो व्यक्ता सज्जति वाङ्मुहुः।
युक्तायुक्तप्रलापश्च प्रचलायनमेव च ॥ ४२ ॥
स्थानपानान्नसांकथ्ये योजना सविपर्य्यया।
लिङ्गान्येतानि जानीयादाविष्टे मध्यमे मदे ॥ ४३ ॥
मध्यमं मदमुत्क्रम्य मदमप्राप्य चोत्तमम्।
न किञ्चिन्नाशुभं कुर्य्युर्नरा राजसतामसाः ॥ ४४ ॥
को मदं तादृशं विद्वानुन्मादमिव दारुणम्।
गच्छेदध्वानमसक्तं बहुदोषमिवाध्वगः ॥ ४५ ॥
तृतीयन्तु मदं प्राप्य भग्नदार्विव निष्क्रियः।
मदमोहावृतमना जीवन्नपि मृतैः समः ॥ ४६ ॥
रमणीयान् स विषयान् न वेत्ति न सुहृज्जनम्।
यदर्थं पीयते मद्यं रतिं ताञ्च न विन्दति ॥ ४७ ॥
कार्य्याकार्य्यं सुखं दुःखं लोके यच्च हिताहितम्।
यदवस्थो न जानाति कोऽवस्थां तां व्रजेत् बुधः ॥ ४८ ॥
स दूष्यः सर्वभूतानां निन्द्यश्चाप्राह्य एव च।
व्यसनित्वादुदर्के च सदुःखं व्याधिमश्नुते ॥ ४९ ॥
प्रेत्य चेह च यच्छ्रेयः श्रेयो मोक्षश्च यत् परम्।
मनःसमाधौ तत् सर्वमायत्तं सर्वदेहिनाम् ॥ ५० ॥
मद्येन मनसश्चास्य संक्षोभः क्रियते महान्।
महामारुतवेगेन तटस्थस्येव शाखिनः ॥ ५१ ॥

मद्यप्रसङ्गमज्ञात्वा महादोषं महागदम्।
सुखमित्यधिगच्छन्ति रजोमोहपराजिताः ॥ ५२ ॥
मद्योपहतविज्ञाना वियुक्ताः सात्त्विकैर्गुणैः।
श्रेयोभिर्विप्रयुज्यन्ते मदान्धा मदलालसाः ॥ ५३ ॥
मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः।
सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः ॥ ५४ ॥
यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधुवत्।
इत्येवं मद्यदोषज्ञा मद्यं गर्हन्ति यत्नतः ॥ ५५ ॥
सत्यमेते महादोषा मद्यस्योक्ता न संशयः।
अहितस्यातिमात्रस्य पीतस्य विधिवर्जनम् ॥ ५६ ॥
किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्।
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम् ॥ ५७ ॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून्।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ ५८ ॥
हर्षमूर्जां मदं पुष्टिमारोग्यं पौरुषं परम्।
युक्त्या पीतं करोत्याशु मद्यं मदसुखावहम् ॥ ५९ ॥
रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम्।
प्रीणनं बृंहणं बल्यं भयशोकश्रमापहम् ॥ ६० ॥
स्वापनं नष्टनिद्राणां मूकानां वाग्विबोधनम्।
बोधनञ्चातिनिद्राणां विबद्धानां विबन्धनुत् ॥ ६१ ॥
वधबन्धपरिक्लेशदुःखानाञ्चावमोहनम्।
मद्योत्थानाञ्च रोगाणां मद्यमेव प्रबाधकम् ॥६२॥
रतिविषयसंयोगे प्रीतिसंयोगवर्द्धनम्।
अतिप्रवयसां मद्यमुत्सवामोदकारकम् ॥६३॥
पञ्चस्वर्थेषु कान्तेषु या रतिः प्रथमे मदे।
यूनां वा स्थविराणां वा तस्य नास्त्युपमा भवि ॥६४॥

बहुदुःखक्षतस्यास्य शोकेनोपहतस्य च।
विश्रामो जीवलोकस्य मद्यं युक्त्या निषेवितम् ॥६५॥
अन्नपानवयोव्याधिबलकालविकारवित् ।
त्रीन् दोषांस्त्रिविधं सत्त्वं ज्ञात्वा मद्यं पिबेत् सदा ॥६६॥
येषां विकाराणामष्टानां योजना युक्तिरुच्यते।
यथा युक्त्या पिबेन्मद्यं मद्यदोषैर्न युज्यते ॥६७॥
मद्यस्य च गुणान् सर्वान् यथोक्तान् स समश्नुते।
धर्मार्थयोरपीडार्थैर्नरः सत्त्वगुणोच्छ्रितः ॥६८॥
सत्त्वानि तु प्रबुध्यन्ते प्रायशः प्रथमे मदे।
द्वितीये व्यक्ततां यान्ति मदे चोत्तममध्ययोः ॥६९॥
सत्त्वसंबोधकं रूपं मोहप्रकृतिदर्शकम्।
हुताशः सर्वसत्त्वानां मद्यन्तूभयकारकम् ॥७०॥
प्रधानावरमध्यानां रुक्माणां व्यक्तिसाधकः।
यथाग्निरेवं सत्त्वानां मद्यं प्रकृतिदर्शकम् ॥७१॥
सुगन्धिमाल्यगन्धैर्वा सुप्रयोतमनाकुलम्।
मिष्टान्नपानविशदं सदा मधुरसंकथम् ॥७२॥
सुखप्रपानं सुमदं हर्षप्रीतिविवर्द्धनम्।
स्वन्तं सात्त्विकमापानं न चोत्तममदप्रदम् ॥७३॥
वैगुण्यं सहसा यान्ति मद्यदोषैर्न सात्त्विकाः।
मद्यं हि बलवत् सत्त्वं ग्लानाति सहसा न तु ॥७४॥
सौम्यासौम्यकथाप्राय विशदाविशदं क्षणात्।
चित्तं राजसमापन्नं प्रायेणास्वन्तकाकुलम् ॥७५॥
हर्षप्रीतिकथोपेतमदुष्टं पानभोजने।
सम्मोहक्रोधनिद्रान्तमापानं तामसं स्मृतम् ॥७६॥
आपाने सात्त्विकान् बुद्धा तथा राजसतामसान्।
जह्यात् सहायान् यैः पीत्वा सह दोषानुपाश्नुते ॥७७॥

सुखशीलाः सुसम्भाषाः सुमुखाः सम्मताः सताम्।
कलासु वाक्यविशदा विषयप्रवणाश्च ये ॥७८॥
परस्परविधेया ये येषामैक्यं सुहृत्तया।
प्रहर्षप्रीतिमाधुर्यैरापानं वर्द्धयन्ति ये ॥७९॥
उत्सवादुत्सवतरं येषामन्योन्यदर्शनम्।
ते सहायाः सुखाः पाने तैः पिबन् सह मोदते ॥८०॥
रूपगन्धरसस्पर्शैः शब्दैश्चापि मनोरमैः।
पिबन्ति सुसहाया ये ते वै सुकृतिभिः समाः ॥८१॥
पञ्चभिर्विषयैरिष्टैरुपेतैर्मनसः प्रियैः।
देशे काले पिबेन्मद्यं प्रहृष्टेनान्तरात्मना ॥८२॥
स्थिरसत्त्वशरीरा ये पुराणा मद्यपान्वयाः।
बहुमद्योचिता ये च माद्यन्ति सहसा न ते ॥८३॥
प्राक् मद्यात् क्षुत्पिपासार्त्ता दुर्बला वातपैत्तिकाः।
रूक्षाल्पप्रमिताहारा विष्टब्धाः सत्त्वदुर्बलाः ॥८४॥
क्रोधिनोऽनुचिताः क्षीणाः परिश्रान्ता मदक्षताः।
स्वल्पेनापि मदं शीघ्रं यान्ति मद्येन मानवाः ॥८५॥
ऊर्द्ध्वं मदात्ययस्यातः सम्यक् सल्लक्षणम्।
अग्निवेश ! चिकित्सां च प्रवक्ष्यामि यथाक्रमम् ॥८६॥
स्त्रीशोकभयभाराध्वकर्मभिर्योऽतिकर्षितः।
रूक्षाल्पप्रमिताशी वा यः पिबत्यतिमात्रया ॥८७॥
रूक्षं परिणतं मद्यं निशि निद्रां विहत्य च।
करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम् ॥८८॥
हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः।
विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ॥८९॥
तीक्ष्णोष्णं मद्यमम्लं वा योऽतिमात्रं निषेवते।
अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽग्न्यातपप्रियः ॥९०॥

तस्योपजायते पित्ताद्विशेषेण मदात्ययः।
स तु वातोल्बणत्वाच्च प्रशमं याति हन्ति वा ॥८१॥
तृष्णादाहज्वरस्वेदमूर्च्छातीसारविभ्रमैः।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥८२॥
तरुणं मधुरप्रायं गौड़ं पैष्टिकमेव वा।
मधुरस्निग्धगुर्वाशी यः पिबत्यतिमात्रया ॥८३॥
अव्यायामदिवास्वप्नशय्यासनसुखे रतः।
मदात्ययं कफप्रायं स शीघ्रमधिगच्छति ॥८४॥
छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥८५॥
विषस्य ये गुणा दृष्टाः सन्निपातप्रकोपणाः।
त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः ॥८६॥
हन्त्याशु हि विषं किञ्चित् किञ्चित् रोगाय कल्पते।
यथा विषं तथैवान्त्यो ज्ञेयो मद्यकृतो मदः ॥८७॥
तस्मात् त्रिदोषजं लिङ्गं सर्वत्रापि मदात्यये।
दृश्यते रूपवैशेष्यात् पृथक्त्वञ्चास्य लक्ष्यते ॥८८॥
शरीरदुःखं बलवत् सम्मोहो हृदयव्यथा।
अरुचिः प्रतता तृष्णा ज्वरः शीतोष्णलक्षणः ॥८९॥
शिरःपार्श्वास्थिसन्धीनां विद्युत्तुल्या च वेदना।
जायतेऽतिबला जृम्भा स्फुरणं वेपनं श्रमः ॥१००॥
उरोविबन्धः कासश्च हिक्का श्वासः प्रजागरः।
शरीरकम्पः कर्णाक्षिमुखरोगस्त्रिकग्रहः ॥१०१॥
छर्द्यतीसारमुत्क्लेशो वातपित्तकफात्मकः।
भ्रमः प्रलापो रूपाणामसताञ्चैव दर्शनम् ॥१०२॥
तृणभस्मलतापर्णपांशुभिश्चावपूरणम्।
प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते ॥१०३॥

व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च।
मदात्ययस्य रूपाणि सर्वाण्येतानि लक्षयेत् ॥१०४॥
सर्वं मदात्ययं विद्यात् त्रिदोषमधिकन्तु यत्।
दोषं मदात्यये पश्येत् तस्यादौ प्रतिकारयेत् ॥१०५॥
कफस्थानानुपूर्व्या च क्रिया कार्य्या मदात्यये।
पित्तमारुतपर्य्यन्तः प्रायेण हि मदात्ययः ॥१०६॥
मिथ्यातिहीनपीतेन यो व्याधिरुपजायते।
समपीतेन तेनैव स मद्येनोपशाम्यति ॥१०७॥
जीर्णममद्यदोषाय मद्यमेव प्रदापयेत्।
प्रकाङ्क्षा लाघवे जाते यद् यदस्मै हितं भवेत् ॥१०८॥
सौवर्चलानुसंसृष्टं शीतं सबिड़सैन्धवम्।
मातुलुङ्गार्द्रकोपेतं जलयुक्तं प्रमाणवित् ॥१०९॥
तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना।
मद्येनान्नरसक्लेदो विदग्धः क्षारतां गतः ॥११०॥
अन्तर्दाहं ज्वरं तृष्णां प्रमोहं विभ्रमं मदम्।
जनयत्याशु तच्छान्त्यै मद्यमेव प्रदापयेत् ॥१११॥
क्षारो हि याति माधुर्य्यं शीघ्रमम्लोपसंहृतः।
श्रेष्ठमम्लेषु मद्यञ्च यैर्गुणैस्तान् परं शृणु ॥११२॥
मद्यस्याम्लस्वभावस्य चत्वारोऽनुरसाः स्मृताः।
मधुरश्च कषायश्च तिक्तः कटुक एव च ॥११३॥
गुणाश्च दश पूर्वोक्तास्तैयतुर्दशभिर्गुणैः।
सर्वेषां मद्यमम्लानामुपर्य्युपरि तिष्ठति ॥११४॥
मद्योत्क्लिष्टेन दोषेण रुद्धः स्रोतःसु मारुतः।
करोति वेदनां तीव्रां शिरस्यस्थिषु सन्धिषु ॥११५॥
दोषविष्यन्दनार्थं हि तस्मै मद्यं विशेषतः।
व्यवायि तीक्ष्णोष्णतया देयमम्लेषु सत्स्वपि ॥११६॥

स्रोतोविबन्धमुक्षय मारुतस्यानुलोमनम्।
रोचनं दीपनञ्चाग्नेरभ्यासात् सात्म्यमेव च ॥११७॥
रसस्रोतःस्वरुद्धेषु मारुते चानुलोमिते।
निवर्त्तन्ते विकाराश्च शाम्यन्त्यस्य मदोदयाः ॥११८॥
वीजपूरकवृक्षाम्लकोलदाड़िमसंयुतम्।
यमानीहपुषाजाजीशृङ्गवेरावचूर्णितम् ॥११९॥
सक्तैः शष्कुलिभिर्युक्तमर्दं सैर्घिरोल्थितम्।
दद्यात् सलवणं मद्यं पैष्टिकं वातशान्तये ॥१२०॥
दृष्ट्वा वातोल्वणं लिङ्गं रसैश्चैनमुपाचरेत्।
लावतित्तिरदक्षाणां स्निग्धाम्लैः शिखिनामपि ॥१२१॥
पक्षिणां मृगमत्स्यानामानूपानाञ्च संस्कृतैः।
भूशयप्रसहानाञ्च रसैः शाल्योदनेन च ॥१२२॥
स्निग्धोष्णलवणाम्लैश्च वेशवारैस्तु खर्मितैः।
चित्रैर्गोधूमिकैर्वार्यैर्वारुणीमण्डसंयुतैः ॥१२३॥
पिशिताद्रककगर्भाभिः स्निग्धाभिर्भूपवर्त्तिभिः।
माषपूपलिकाभिश्च वातिकं समुपाचरेत् ॥१२४॥
नातिस्निग्धं न चाम्लेन युक्तं समरिचार्द्रकम्।
मध्ये प्राशुदितं मांसं दाडिमस्वरसेन वा ॥१२५॥
पृथक्त्रिजातकोपेतसधान्यमरिचार्द्रकम्।
रसप्रलेपिसंपूपैः सुखोष्णैः सम्प्रदापयेत् ॥१२६॥
भक्तेन वारुणीमण्डं दद्यात् यातं पिपासवे।
दाडिमस्य रसं वाथ जलं वा पाञ्चमूलिकम् ॥१२७॥
धान्यनागरतोयञ्च दधिमण्डमथापि वा।
अम्लकाञ्जिकमण्डं वा शुक्तोदकमथापि वा ॥१२८॥
कर्मणानेन सिद्धेन विकार उपशाम्यति।
मात्राकालप्रयुक्तेन बलं वर्णश्च वर्द्धते ॥१२९॥

रागषाड्वसंयोगैर्विविधैर्भक्तरोचनैः ।
पिशितैर्बहुपिष्टान्नैर्यवगोधूमशालिभिः ॥१३०॥
अभ्यङ्गोत्सादनैः स्नानैरुष्णैः प्रावरणैर्घनैः ।
घनैरगुरुपङ्कैश्च धूपैश्चागुरुजैर्घनैः ॥ १३१ ॥
नारीणां यौवनोष्माणां निर्दयैरवगूहनैः ।
श्रोण्यूरुकुचभारैश्च संरोधोष्णसुखावहैः ॥१३२॥
शयनाच्छादनैरुष्णैः कुथैश्चान्तर्गृहैः सुखैः ।
मारुतप्रबलः शीघ्रं प्रशाम्यति मदात्ययः ॥१३३॥
मद्यं खर्जूरमृद्वीकापरूषकरसैर्युतम् ।
सदाडिमरसं शीतं सक्तुभिः खवचूर्णितम् ॥१३४॥
सशर्करं शार्करं वा माध्वीकमथवापरम् ।
दद्यात् बहूदकं काले पातुं पित्तमदात्यये ॥१३५॥
शशान् कपिञ्जलानेणान् लावानसितपुच्छकान् ।
मधुराम्लान् प्रयुञ्जीत भोजने शालिषष्टिकान् ॥१३६॥
षटीलयूषमिश्रं वा छागलं कल्पयेद्रसम् ।
सतीनमुद्गमिश्रं वा दाडिमामलकान्वितम् ॥१३७॥
द्राक्षामलकखर्जूरपरूषकरसेन वा ।
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान् ॥१३८॥
षामाशयसमुत्क्लिष्टं कफपित्तमदात्यये ।
विज्ञाय बहुदोषस्य दह्यमानस्य छर्दयेत् ॥१३९॥
मद्यं द्राक्षारसं तोयं दत्त्वा तर्पणमेव वा ।
निःशेषं वामयेच्छीघ्रमेवं रोगाद्विमुच्यते ॥१४०॥
काले पुनस्तर्पणाद्यं क्रमं कुर्यात् प्रकाङ्क्षिते ।
तेनाग्निर्दीप्यते तस्य दोषशेषात्रपाचनः ॥१४१॥
कामं मदक्रनिर्दाहे यार्यस्तनरुजोस्तथा ।
वपते मदिदाहे च शीतले मे हृदयोरमि ॥१४२॥

गुडूचीभद्रमुस्तानां पटोलस्याथवा भिषक्।
रसं सनागरं दद्यात् तित्तिरिप्रतिभोजनम् ॥१४३॥
तृष्यते चातिबलवद्वातपित्ते समुद्धते।
दद्याद् द्राक्षारसं पातुं शीतं दोषानुलोमनम् ॥१४४॥
जीर्णे समधुराम्लेन छागमांसरसेन तम्।
भोजनं भोजयेन्मद्यस्यानुतर्षञ्च पाययेत् ॥१४५॥
अनुतर्षस्य मात्रा सा यया नो हन्यते मनः।
तृष्यते मद्यमल्पाल्पं प्रदेयं स्याद् बहूदकम् ॥१४६॥
तृष्णा येन च संशाम्येन्मदं येन च नाप्नुयात्।
परूषकाणां पीलूनां रसं शीतमथापि वा ॥१४७॥
पर्णिनीनां चतसृणां पिबेद्वा शिशिरं जलम्।
मुस्तदाड़िमलाजानां तृष्णाघ्नं वा पिबेद्रसम् ॥१४८॥
कोलदाड़िमवृक्षाम्लचुक्रीकाचुक्रिकारसः।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥१४९॥
शीतलान्यन्नपानानि शीतशय्यासनानि च।
शीतवातजलस्पर्शाः शीतान्युपवनानि च ॥१५०॥
चौमपद्मोत्पलानाञ्च मणीनां मौक्तिकस्य च।
चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाः ॥१५१॥
हेमराजतकांस्यानां पात्राणां शीतवारिभिः।
पूर्णानां हिमपूर्णानां हतानां पवनाहृताः ॥१५२॥
संस्पर्शाश्चन्दनार्द्राणां नारीणाञ्च समारुताः।
चन्दनानाञ्च मुख्यानां शस्ताः पित्तमदात्यये ॥१५३॥
कुमुदोत्पलपत्राणां सिक्तानां चन्दनाम्बुना।
चिताः स्पर्शा मनोज्ञानां दाहे मद्यसमुत्थिते ॥१५४॥
कथाश्च विविधाः शस्ताः शब्दाश्च शिखिनां शिवाः।
तोयदानाञ्च शब्दा हि शमयन्ति मदात्ययम् ॥१५५॥

जलयन्त्राभिवर्षीणि वातयन्त्रवह्माणि च ।
कल्पनीयानि भिषजा दाहे धारागृहाणि च ॥१५६॥
फलिनीसेव्यलोध्राम्बुहेमपत्रं कुटवटम् ।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥१५७॥
वदरीपल्लवोत्थाश्च तथैवारिष्टकोद्भवाः ।
फेनिलायाश्च यः फेनस्तैर्दाहे लेपनं शुभम् ॥१५८॥
सुरा समण्डा दध्यम्लं मातुलुङ्गरसो मधु ।
सेकप्रदेहे शस्यन्ते दाहघ्नाः साम्लकाञ्जिकाः ॥१५९॥
परिषेकावगाहेषु व्यञ्जनानाञ्च सेवने ।
शस्यते शिशिरं तोयं दाहतृष्णाप्रशान्तये ॥१६०॥
मात्राकालप्रयुक्तेन कर्मणानेन शाम्यति ।
धीमतो वैद्यवश्यस्य शीघ्रं पित्तमदात्ययम् ॥१६१॥
उल्लेखनोपवासाभ्यां जयेत् कफमदात्ययम् ।
दध्यते सलिलञ्चास्मै दद्याद् ह्रीवेरसाधितम् ॥१६२॥
बलायाः पृश्निपर्ण्या वा कण्टकार्य्याथवा शृतम् ।
सनागराभिः सर्वाभिर्जलं वा शृतशीतलम् ॥१६३॥
दुःस्पर्शितेन मुस्तेन मुस्तपर्पटकेन वा ।
जलं मुस्तैः शृतं वापि दद्याद्दीपनपाचनम् ॥१६४॥
एतदेव च पानीयं सर्वत्रापि मदात्यये ।
निरत्ययं पीयमानं पिपासाज्वरनाशनम् ॥१६५॥
निरामं,काङ्क्षितं काले सर्वोद्रं पाययेत्तम् ।
मार्द्वीकं मधु वा जीर्णमरिष्टं सीधुमेव वा ॥१६६॥
रूक्षतर्पणसंयुक्तं यमानीनागरान्वितम् ।
यवगोधूमिकं चाद्यं रूक्षयूषेण भोजयेत् ॥१६७॥
कुलत्थानां मुद्गानां मूलकानां रसेन वा ।
तनुनाम्लेन लघुना कटुकेनाल्पसर्पिषा ॥ १६८ ॥

व्योषयूषमथाम्लं वा यूषं वा साम्लवेतसम्।
छागमांसरसं रूक्षमम्लं वा जाङ्गलं रसम्॥ १६८॥
स्थाल्यां वाथ कपाले वा भृष्टं निर्द्रववर्त्तितम्।
कट्वम्ललवणं मांसं भक्षयन् प्रणयान्मधु॥ १७०॥
व्यक्तमारीचकं मांसं मातुलुङ्गरसान्वितम्।
भृष्टं दाड़िमसाराम्लमुष्णयूषोपवेष्टितम्॥ १७१॥
यथाग्नि भक्षयेत् काले प्रभूतार्द्रकपेषितम्।
पिवेच्च निगदं मद्यं कफप्राये मदात्यये॥ १७२॥
सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम्।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम्॥ १७३॥
एतल्लवणमष्टाङ्गमग्निसन्दीपनं परम्।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम्॥ १७४॥
एतदेव पुनर्युक्त्या मधुराम्लैर्द्रवीकृतम्।
गोधूमान्नयवान्नानां मांसानाञ्चातिरोचनम्॥ १७५॥
देपयेत् कटुकैर्युक्तां श्वेतां वीजविवर्जिताम्।
मृद्वीकां मातुलुङ्गस्य दाड़िमस्य रसेन वा॥ १७६॥
सौवर्चलैलामरिचैरजाजीभृङ्गदीप्यकैः।
मरागः क्षौद्रसंयुक्तः श्रेष्ठो रोचनदीपनः॥ १७७॥
मृद्वीकानां विधानेन कारयेत् कारवीमपि।
युक्तमल्पाण्डिकोपेतं रागं दीपनपाचनम्॥ १७८॥
आम्रामलकपेशीनां रागान् कुर्यात् पृथक् पृथक्।
धान्यसौवर्चलाजाजीकारवीमरिचान्वितान्॥ १७९॥
गुडेन मधुयुक्तेन व्यक्ताम्ललवणीकृतान्।
तैरन्नं रोचते दिग्धं सम्यक् भुक्तं विजीर्य्यति॥ १८०॥
रूक्षोष्णेनान्नपानेन स्नानेनाशिशिरेण च।
व्यायामलङ्घनाभ्याञ्च युक्ताभ्यां जागरेण तु॥ १८१॥

कालयुक्तेन रूक्षेण स्नानेनोद्वर्त्तनेन च।
स्नानवर्णकवासानां प्रहर्षाणाञ्च सेवया॥ १८२॥
प्राणवर्णकराणाञ्च गुरूणामगुरोरपि।
सकामोष्णसुखाङ्गीनामङ्गनानाञ्च सेवया॥ १८३॥
सुखशिचितहस्तानां स्त्रीणां सवाहनेन च।
मदात्ययः कफप्रायः शीघ्रमेवोपशाम्यति॥ १८४॥
यदिदं कर्म निर्दिष्टं पृथग्दोषबलं प्रति।
सन्निपाते दशविधे तद्विकल्प्यं भिषग्विदा॥ १८५॥
यस्तु दोषविकल्पज्ञो यथौषधिविकल्पवित्।
स साध्यान् साधयेद्व्याधीन् साध्यासाध्यविभागवित्॥१८६॥
वनानि रमणीयानि सपद्माः सलिलाशयाः।
विशदान्यन्नपानानि सहायाश्च प्रहर्षणाः॥ १८७॥
माल्यानि गन्धयोगाश्च वासांसि विमलानि च।
गान्धर्वशब्दाः कान्ताश्च गोष्ठ्यश्च हृदयप्रियाः॥ १८८॥
सङ्कथाहास्यगीतानां विशदाश्चैव योजनाः।
प्रियाश्चानुगता नार्यो नाशयन्ति मदात्ययम्॥ १८९॥
नाक्षोभ्य हि मनो मद्य शरीरमवहत्य च।
कुर्य्यान्मदात्ययं तस्मादिष्टव्या हर्षणी क्रिया॥ १९०॥
आभिः क्रियाभिः सिद्धाभिः शमं याति मदात्ययः।
न चेन्नाशयविधिं हित्वा क्षीरमस्य प्रयोजयेत्॥ १९१॥
लङ्घनैः पाचनैश्चैव दोषसंशोधनैरपि।
विमदस्य कफे क्षीणे जाते दौर्बल्यलाघवे॥ १९२॥
तस्य मद्यविदग्धस्य वातपित्ताधिकस्य वा।
ग्रीष्मोपततप्तस्य तरोर्यथा वर्षं तथा पयः॥ १९३॥
पयसाभिहते रोगे बले जाते निवर्त्तयेत्।
क्षीरप्रयोगं मद्यञ्च क्रमेणाल्पाल्पमाचरेत्॥ १९४॥

विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते।
ध्वंसको विक्षयश्चैव रोगस्तस्योपजायते॥ १९५॥
व्याध्युपक्षीणदेहस्य दुश्चिकित्स्यतमौ मतौ।
तयोर्लिङ्गं चिकित्साञ्च यथावदुपदेक्ष्यते॥ १९६॥
श्लेष्मप्रकोपः कण्ठस्य शोषः शब्दासहिष्णुता।
तन्द्रा निद्राभियोगश्च ज्ञेयं ध्वंसकलक्षणम्॥ १९७॥
हृत्कण्ठरोगः सम्मोहश्छर्दिरङ्गरुजा ज्वरः।
तृष्णा कासः शिरःशूलमेतद्विक्षयलक्षणम्॥ १९८॥
तयोः कर्म तदेवेष्टं वातिके यन्मदात्यये।
तौ हि प्रक्षीणदेहस्य जायते दुर्बलस्य वा॥ १९९॥
वस्तयः सर्पिषः पानं प्रयोगः क्षीरसर्पिषोः।
अभ्यङ्गोद्वर्त्तनस्नानान्यनुपानञ्च वातनुत्॥ २००॥
ध्वंसको विक्षयश्चैव कर्म्मणानेन शाम्यति।
युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते॥ २०१॥
निवृत्तः सर्वमद्येभ्यो नरो यः स्याज्जितेन्द्रियः।
शारीरमानसैर्धीमान् विकारैर्न स युज्यते॥ २०२॥

भवन्ति चात्र।

यत्प्रभावा भगवती सुरा पेया यथा च सा।
यद्द्रव्यः यस्य या चेष्टा योगश्चापेक्षते यथा॥ २०३॥
यथा यथा मदयते येश्च युक्ता महागुणैः।
यो मदो मदभेदाश्च ये त्रयः स्वस्वलक्षणाः॥ २०४॥
ये च मद्यकृता दोषा गुणा ये च मदात्मकाः।
यश्च विविधमापानं यथासत्त्वश्च लक्षणम्॥ २०५॥
ये सहायाः सुखा ये च चिरक्षिप्रमदा नराः।
मदात्ययस्य यो हेतुर्लक्षणं यद् यथा च यत्॥ २०६॥

मद्यं मद्योत्थितान् रोगान् हन्ति यश्च क्रियाक्रमः।
सर्वं तदुक्तमखिलं मदात्ययचिकित्सिते ॥ २०७ ॥

---

## त्रयोदशोऽध्यायः।

### द्विव्रणीयचिकित्सितम्।

परावरज्ञमात्रेयं गतमानमदव्यथम्।
अग्निवेशो गुरुं काले विनयादिदमुक्तवान् ॥ १ ॥
भगवन्! पूर्वमुद्दिष्टौ द्वौ व्रणौ रोगसंग्रहे।
तयोर्लिङ्गं चिकित्साञ्च वक्तुमर्हसि मानद! ॥२ ॥
इत्यग्निवेशस्य वचो निशम्य गुरुरब्रवीत्।
यौ व्रणौ पूर्वमुद्दिष्टौ निजश्चागन्तुरेव च ॥ ३ ॥
श्रूयतां विधिवत् सौम्य! तयोर्लिङ्गञ्च भेषजम्।
निजः शरीरदोषोत्थ आगन्तुर्बाह्यहेतुजः ॥ ४ ॥
वधबन्धप्रपतनाद्दंष्ट्रादन्तनखक्षतात्।
आगन्तवो व्रणास्तद्वद्विषस्पर्शाग्निशस्त्रजाः ॥ ५ ॥
मन्त्रागदप्रलेपाद्यैर्भेषजैर्हेतुभिश्च ते।
लिङ्गैकदेशैर्निर्दिष्टा विपरीता निजैर्व्रणाः ॥ ६ ॥
व्रणानां निजहेतूनामागन्तूनामसाध्यताम्।
कुर्याद्दोषबलापेक्षो निजानामौषधं यथा ॥ ७ ॥
यथास्वैर्हेतुभिर्दुष्टा वातपित्तकफा नृणाम्।
बहिर्मार्गं समाश्रित्य जनयन्ति निजान् व्रणान् ॥ ८ ॥
स्तब्धः कठिनसंस्पर्शो मन्दस्रावोऽतितीव्ररुक्।
तुद्यते स्फुरति श्यावो व्रणो मारुतसम्भवः ॥९॥
सपूरणैः स्नेहपानैः स्निग्धैः स्वेदोपनाहनैः।
प्रदेहैः परिषेकैश्च वातव्रणमुपाचरेत् ॥ १० ॥

तृष्णामोहज्वरस्वेददाहदुष्ट्यवदारणैः।
व्रणं पित्तकृतं विद्यात् गन्धस्रावैः सपूतिकैः ॥ ११ ॥
शीतलैर्मधुरैस्तिक्तैः प्रदेहपरिषेचनैः।
सर्पिःपानैर्विरेकैश्च पैत्तिकं शमयेद्व्रणम् ॥ १२ ॥
बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः।
पाण्डुवर्णोऽल्पसंक्लेदश्चिरकारी कफव्रणः ॥ १३ ॥
कषायकटुरूक्षोष्णैः प्रदेहपरिषेचनैः।
कफव्रणं प्रशमयेत् तथा लङ्घनपाचनैः ॥ १४ ॥
तौ द्वौ नानात्वभेदेन निरुक्ता विंशतिर्व्रणाः।
तेषां परीक्षा त्रिविधा प्रदुष्टा द्वादश स्मृताः ॥ १५ ॥
स्थानान्यष्टौ तथा गन्धाः परिस्रावाश्चतुर्दश।
षोड़शोपद्रवा दोषाश्चत्वारो विंशतिस्तथा ॥ १६ ॥
तथा चोपक्रमाः सिद्धाः षट्त्रिंशत् समुदाहृताः।
विभाव्यमानाः शृणु तान् सर्वानेव यथेरितान् ॥ १७ ॥
क्लत्योत्कृत्यस्तथा दुष्टस्तथा मर्मस्थितो नव।
सद्यतो दारुणः स्रावी सविषो विषमस्थितः ॥ १८ ॥
त्वक्सङ्कृतस्त्र एवाच्च व्रणान् विद्याद्विपर्ययात्।
इति नानात्वभेदेन निरुक्ता विंशतिर्व्रणाः ॥ १९ ॥
दर्शनप्रश्नसंस्पर्शैः परीक्षा त्रिविधा स्मृता।
वयोवर्णशरीराणामिन्द्रियाणाञ्च दर्शनात् ॥ २० ॥
हेतुर्विसात्म्यमग्निबल परीक्ष्यं वचनाद्बुधैः।
स्पर्शात् मार्दवशैत्ये च परीक्ष्ये सविपर्यये ॥ २१ ॥
श्वेतोपसन्नवर्मातिस्थूलवर्मातिपिञ्जरः।
नीलः श्यावोऽतिपिड़को रक्तः कृष्णोऽतिपूतिकः ॥२२॥
रोप्यः कुम्भीमुखश्चेति प्रदुष्टा द्वादश व्रणाः।
कल्पेनानेन दोषाणां चतुर्विंशतिरुच्यते ॥ २३ ॥

त्वक्‌सिरामांसमेदोऽस्थिस्नायुमर्मान्तराश्रयाः।
व्रणस्थानानि निर्दिष्टान्यष्टावेतानि संग्रहे ॥ २४ ॥
सर्पिस्तैलवसापूयरक्तश्यावाम्लपूतिकाः।
व्रणानां व्रणगन्धज्ञैरष्टौ गन्धाः प्रकीर्त्तिताः ॥ २५ ॥
लसीकाजलपूयासृक्‌हरिताऽरुणपिञ्जराः।
कषायनीलहरितस्निग्धरूक्षसितासिताः ॥ २६ ॥
इति रूपैः समुद्दिष्टैर्व्रणस्रावाश्चतुर्दश।
विसर्पः पक्षघातश्च शिरास्तम्भोऽपतानकः ॥२७॥
मोहोन्मादव्रणरुजो ज्वरस्तृष्णा हनुग्रहः।
कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः ॥२८॥
षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः।
स्नायुक्लेदात् सिराक्लेदाद्गाम्भीर्यात् क्रिमिदर्शनात् ॥२९॥
अस्थिभेदात् सशल्यत्वात् सविषत्वाच्च सर्पणात्।
नखकाष्ठप्रभेदाच्च चर्मलोमातिघट्टनात् ॥३०॥
मिथ्याबन्धादतिस्नेहादतिभैषज्यकर्षणात्।
अजीर्णादतिभुक्ताच्च विरुद्धासात्म्यभोजनात् ॥३१॥
शोकात् क्रोधात् दिवास्वप्नाद्व्यायामान्मैथुनात् तथा।
व्रणा न प्रशमं यान्ति निष्क्रियत्वाच्च देहिनाम् ॥३२॥
परिस्रावाच्च गन्धाच्च दोषवोपद्रवैः सह।
व्रणाना बहुदोषाणां कृच्छ्रत्वञ्चोपजायते ॥३३॥
त्वङ्‌मांसजः सुखे देशे तरुणस्यानुपद्रवः।
धीमतोऽभिनवः काले सुखसाध्यः स्मृतो व्रणः ॥३४॥
गुणैरन्यतमैर्हीनस्ततः कृच्छ्रतमः स्मृतः।
सर्वैर्विहीनो विज्ञेयस्त्वसाध्यो निरुपक्रमः ॥३५॥
व्रणानामादितः कार्य्यं यथासन्नं विशोधनम्।
ऊर्द्ध्वभागैरधोभागैः शस्त्रैर्वस्तिभिरेव च ॥३६॥

सद्यः शुद्धशरीराणां प्रशमं यान्ति हि व्रणाः।
यथाक्रमसतश्चोर्द्धं शृणु सर्वानुपक्रमान् ॥३७॥
शोफघ्नं षड्विधश्चैव शस्त्रकर्मावपीड़नम्।
निर्वापणं ससन्धानं स्वेदः शमनमेषणा ॥३८॥
शोधनी रोपणीयौ च कषायौ सप्रलेपनौ।
द्वौ स्नेहौ तद्गुणौ पत्रच्छेदने द्वे च बन्धने ॥३९॥
भोज्यमुत्सादनं दाहो द्विविधः सावसादनः।
काठिन्यमार्दवकरे धूपने लेपने शुभे ॥४०॥
व्रणावचूर्णनं वर्ण्य-लेपनं लोमरोपणम्।
इति षट्त्रिंशदुद्दिष्टा व्रणानां समुपक्रमाः ॥४१॥
पूर्वरूपं भिषक् बुद्धा व्रणानां शोफमादितः।
रक्तावसेचनं कुर्य्यादजातव्रणशान्तये ॥४२॥
शोधयेदशुदोषांस्तु स्वल्पदोषान् विलङ्घयेत्।
पूर्वं कषायैः सर्पिर्भिर्जयेद्वा मारुतोत्तरम् ॥४३॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलाः।
ससर्पिष्काः प्रलेपः स्याच्छोफनिर्वापणं परम् ॥४४॥
विजया मधुकं वीरा विसग्रन्थिः शतावरी।
नीलोत्पलं नागपुष्पं प्रदेहः स्यात् सचन्दनः ॥४५॥
शक्तवो मधुकं सर्पिः प्रदेहः स्यात् सशर्करः।
अविदाहीनि चान्नानि शोफे भेषजमुत्तमम् ॥४६॥
स चेदेवमुपक्रान्तः शोफो न प्रशमं व्रजेत्।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते ॥४७॥
तैलेन वा सर्पिषा वा ताभ्यां वा शक्तुपिण्डिका।
सुखोष्णा शोफपाकार्थमुपनाहः प्रशस्यते ॥४८॥
सतिला सातसीवीजदध्यम्ला शक्तुपिण्डिका।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥४९॥

रुग्दाहरागतोदैश्च विदग्धं शोफमादिशेत्।
जलवत् स्तिमितस्पर्शं संपक्वं पिच्छितोन्नतम् ॥५०॥
उमाथो गुग्गुलुः सौधं पयो दक्षकपोतयोः।
विट् पलाशभवः क्षारो हेमक्षीरी मकूलकः ॥५१॥
इत्युक्तो भेषजगणः पक्वशोथप्रभेदनः।
सुकुमारस्य कृच्छ्रस्य शस्त्रन्तु परमुच्यते ॥५२॥
पाटनं व्यधनञ्चैव छेदनं लेपनं तथा।
प्रोच्छनं सीवनञ्चैव षड्विधं शस्त्रकर्म तत् ॥५३॥
नाडीव्रणाः पक्वशोथास्तथा क्षतगुदोदरम्।
अन्तःशल्याश्च ये शोफाः पाट्यास्ते तद्विधाश्च ये ॥५४॥
दकोदराणि संपक्वा गुल्मा ये ये च रक्तजाः।
व्यध्याः शोणितरोगाश्च विसर्पपिड़कादयः ॥५५॥
उद्वृत्तान् स्थूलपर्यन्तानुत्सन्नान् कठिनान् व्रणान्।
अर्शःप्रभृत्यधोमांसं छेदनेनोपपादयेत् ॥५६॥
किलासानि सकुष्ठानि लिखेल्लेख्यानि बुद्धिमान्।
वातासृग्ग्रन्थिपिड़काः सकोठा रक्तमण्डलाः ॥५७॥
कुष्ठान्यभिहतश्चाङ्गं शोथांश्च प्रच्छयेद्भिषक्।
सीव्यं कुक्ष्युदराद्यन्तु गम्भीरं यद्विपाटितम् ॥५८॥
इति षड्विधमुद्दिष्टं शस्त्रकर्म मनीषिभिः।
सूक्ष्माननाः कोषवन्तो ये व्रणास्तान् प्रपीडयेत् ॥५९॥
कलायाश्च मसूराश्च गोधूमाः सहरेणवः।
वाल्कीशताः प्रशस्यन्ते निःस्नेहा व्रणपीड़ने ॥६०॥
शाल्मलीलम्बलानूनं तथा न्यग्रोधपल्लवाः।
न्यग्रोधादिकमुद्दिष्टं बलादिकमथापि या ॥६१॥
आलेपनं निर्वपणं तद्विधान्येव सेचनम्।
सर्पिषा शतधौतेन पयसा मधुकाम्बुना ॥६२॥

निर्वापयेत् सुशीतेन रक्तपित्तोत्तरान् व्रणान्।
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ॥६३॥
सन्दधीत समं वैद्यो बन्धनैश्चोपपादयेत्।
तान् समान् सुस्थितान् ज्ञात्वा फलिनीलोध्रकट्‌फलैः ॥६४
समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत्।
पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः ॥ ६५ ॥
धातकीलोध्रचूर्णैर्वा तथा रोहन्ति ते व्रणाः।
अस्थिभग्नं च्युतं सन्धिं संदधीत समं पुनः ॥ ६६ ॥
समेन सममङ्गेन कृत्वान्येन विचक्षणः।
स्थिरैः कवलिकाबन्धैः कुशिकाभिश्च संस्थितम् ॥६७॥
पट्टैः प्रभूतसर्पिष्कैर्बध्नीयादचलं सुखम्।
अविदाहिभिरन्नैश्च पैष्टिकैस्तमुपाचरेत् ॥ ६८ ॥
व्यायामो मैथुनं कोपः शीतमन्नं विपाकि च।
वर्ज्यानि तस्य सन्धिविश्लेषकारिका।
विच्युताभिहताङ्गानां विसर्पादीनुपद्रवान् ॥ ६९ ॥
उपाचरेद्यथाकालं कालज्ञः स्वचिकित्सितात्।
शूका महारुजः स्तब्धा ये व्रणा मारुतोत्तराः।
स्वेद्याः शङ्करकल्केन ते स्युः कृशरपायसैः ॥ ७० ॥
ग्राम्यनैलाम्बुजानूपैर्वेशवारैश्च संस्कृतैः।
उत्कारिकाभिरुष्णाभिः सुखी स्याद्व्रणितस्तदा ॥ ७१ ॥
सदाहवेदनावन्तो ये व्रणा मारुतोत्तराः।
तेषां तिलानुमाश्चैव भृष्टान् पयसि निर्वृतान् ॥ ७२ ॥
तेनैव पयसा पिष्ट्वा कुर्यादालेपनं भिषक्।
बला गुडूची मधुकं पृश्निपर्णी शतावरी ॥ ७३ ॥
जीवन्तीशर्कराक्षीरं तैलमज्जवसाष्टकम्।
समेदा समधूच्छिष्टा शूलघ्नी स्वेदशर्करा ॥ ७४ ॥
द्विपञ्चमूलक्वथितेनाम्भसा पयसाथवा।

सर्पिषा वा सतैलेन कोष्णेन परिषेचयेत् ॥ ७५ ॥
यवचूर्णं समधुकं सतैलं सह सर्पिषा ।
दद्यादालेपनं कोष्णं दाहशूलोपशान्तये ॥ ७६ ॥
उपनाहश्च कर्त्तव्यः सतिलो मुद्गपायसः ।
रुग्दाहयोः प्रशमनो व्रणेष्वेषु विधिर्हितः ॥ ७७ ॥
सूक्ष्माननाः बहुस्रावाः कोषवन्तश्च ये व्रणाः ।
न च मर्माश्रितास्तेषामेषणं हितमुच्यते ॥ ७८ ॥
द्विविधामेषणां विद्यान्मृद्वीश्च कठिनामपि ।
उद्भिदैर्मृदुभिर्नालैर्लौहानां वा शलाकया ॥ ७९ ॥
गम्भीरमांसगे देशे पार्श्वे लौहशलाकया ।
एष्यं विद्यात् व्रणं नालैर्विपरीतमतो भिषक् ॥ ८० ॥
पूतिगन्धान् विवर्णांश्च बहुस्रावान् महारुजः ।
व्रणानशुद्धान् विज्ञाय शोधनैः समुपाचरेत् ॥ ८१ ॥
त्रिफला खदिरो दार्वी न्यग्रोधादिर्बला कुशः ।
निम्बकोलकपत्राणि कषायाः शोधना मताः ॥ ८२ ॥
तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम् ।
मधुकं निम्बपत्राणि प्रलेपो व्रणशोधनः ॥ ८३ ॥
नातिरक्तो नातिपाण्डुर्नातिश्यावो न चातिरुक् ।
न चोत्सन्नो न चोत्सङ्गी शुद्धो रोप्यः परं व्रणः ॥ ८४ ॥
न्यग्रोधोदुम्बराश्वत्थकदम्बप्लक्षवेतसाः ।
करवीरार्ककुटजाः कषाया रोपणाः स्मृताः ॥ ८५ ॥
चन्दनं पद्मकिञ्जल्कं दार्व्यौ त्वङ्नीलमुत्पलम् ।
मेदां मूर्वां समङ्गां च यष्ट्याह्वां व्रणरोपणम् ॥ ८६ ॥
प्रपौण्डरीकं जीवन्तीं गोजिह्वां धातकीं बलाम् ।
रोपणं सतिलं दद्यात् प्रलेपं मधुना व्रणे ॥ ८७ ॥
कम्पिल्लकं विडङ्गानि वत्सकं त्रिफला बलाम् ।

पटोलं पिचुमर्दञ्च लोध्रं मुस्तं प्रियङ्गुकम् ॥ ८८ ॥
खदिरं धातकीं सर्जमेलामगुरुचन्दने।
पिष्ट्वा साध्यं भवेत् तैलं तत् परं व्रणशोधनम् ॥ ८९ ॥
प्रपौण्डरीकं मधुकं काकोल्यौ द्वे च चन्दने।
सिद्धमेतैः समैस्तैलं तर्पणं व्रणरोपणम् ॥ ९० ॥
दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ ९१ ॥
येनैव विधिना तैलं घृतं तेनैव साधयेत्।
रक्तपित्तोत्तरं दृष्ट्वा रोपणीयं घृतं तथा ॥ ९२ ॥
कदम्बार्जुननिम्बानां पाटल्याः पिप्पलस्य च।
व्रणप्रच्छादने विद्वान् पत्राण्यर्कस्य चादिशेत् ॥ ९३ ॥
ताक्ष्णोऽथ वादरश्चैव पट्टो व्रणहितः स्मृतः।
बन्धश्च द्विविधः शस्तो व्रणानां सव्यदक्षिणः ॥ ९४ ॥
लवणाम्लकटूष्णानि विदाहीनि गुरूणि च।
वर्जयेदन्नपानानि व्रणी मैथुनमेव च ॥ ९५ ॥
नातिशीतगुरुस्निग्धमविदाहि यथाक्रमम्।
अन्नपाने व्रणहितं हितञ्चास्वपनं दिवा ॥ ९६ ॥
स्तन्यानि जीवनीयानि बृंहणीयानि यानि च।
उत्सादनार्थं निम्नानां व्रणानां तानि कल्पयेत् ॥ ९७ ॥
भूर्जग्रन्थ्यश्मकासीसमधोभागानि गुग्गुलुः।
व्रणावसादनं तद्वत् कलविङ्ककपोतविट् ॥ ९८ ॥
रुधिरेऽतिप्रवृत्ते तु छिन्ने च्छेद्येऽधिमांसके।
कफग्रन्थिषु गण्डेषु वातस्तम्भानिलार्त्तिषु ॥ ९९ ॥
गूढपूयलसीकेषु गम्भीरेषु स्थिरेषु च।
क्लिन्नेषु चाङ्गदेशेषु कर्माग्नेः सम्प्रशस्यते ॥ १०० ॥
मधूच्छिष्टेन तैलेन मज्जक्षौद्रवसाघृतैः।

तथैवा विविधैर्लोहैर्दहेद्देशाद्यविशेषवित् ॥ १०१ ॥
रूक्षाणां सुकुमाराणां गम्भीरान् मारुतोत्तरान्।
दहेत् स्नेहैर्मधूच्छिष्टैर्लोहैः क्षौद्रैस्ततो हृतैः ॥ १०२॥
बालदुर्बलवृद्धानां गर्भिण्या रक्तपित्तिनाम्।
तृष्णाज्वरपरीतानामबलानां विषादिनाम् ॥ १०३ ॥
नाग्निकर्मोपदेष्टव्यं स्नायुमर्मव्रणेषु च।
सविषेषु च शल्येषु नेत्रकुष्ठव्रणेषु च ॥ १०४ ॥
रोगदोषबलापेक्षी मात्राकालाग्निकोविदः।
शस्त्रकर्माग्निशल्येषु क्षारमप्यवचारयेत् ॥ १०५ ॥
कठिनत्वं व्रणा यान्ति गन्धैः सारैश्च धूपिताः।
सर्पिर्मज्जवसाधूपैः शैथिल्यं यान्ति हि व्रणाः ॥ १०६ ॥
रुजः स्रावाश्च गन्धाश्च क्रिमयश्च व्रणाश्रिताः।
शैथिल्यं मार्दवं चापि धूपनेनोपशाम्यति ॥ १०७ ॥
लोध्रन्यग्रोधशुङ्गानि खदिरस्त्रिफलाघृतम्।
प्रलेपो व्रणशैथिल्यं सौकुमार्यप्रबोधनः ॥ १०८ ॥
सरुजः कठिनाः स्तब्धा निरास्रावाश्च ये व्रणाः।
यवचूर्णैः ससर्पिष्कैर्बहुशस्तान् प्रलेपयेत् ॥ १०९ ॥
मुद्गषष्टिकशालीनां पायसैर्वा यथाक्रमम्।
सघृतैर्लापनीयैर्वा तर्पयेत् तानभीक्ष्णशः ॥ ११० ॥
ककुभोदुम्बराश्वत्थलोध्रजाम्बवकट्फलैः।
त्वचमाशु व गृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥ १११ ॥
मनःशिलैला मञ्जिष्ठा लाक्षा च रजनीद्वयम्।
प्रलेपः सघृतः क्षौद्रस्त्वग्विशुद्धिकरः परः ॥ ११२ ॥
अयोरजः सकासीसं त्रिफलाकुसुमानि च।
करोति लेपः कृष्णत्वं सद्य एव नवत्वचि ॥ ११३ ॥
कालीयकनताम्रास्थिहेमकाला रसोत्तमाः।

लेपः सगोमयरसः सवर्णीकरणः परः॥ ११४॥
ध्यामकाश्वत्थनिचुलमूलं लाक्षा सगैरिका।
सहेमपुष्पान्तःसङ्गा कासीसञ्चेति वर्णकृत्॥ ११५॥
चतुष्पदानां त्वग्लोमखुरशृङ्गास्थिभस्मना।
तैलाक्ता चूर्णिता भूमिर्भवेल्लोमवती पुनः॥ ११६॥
षोड़शोपद्रवा ये च व्रणानां परिकीर्त्तिताः।
तेषां चिकित्सा निर्दिष्टा यथास्वं स्वे चिकित्सिते॥ ११७॥

तत्र श्लोकौ।

द्वौ व्रणौ व्रणभेदाश्च परीक्षा दुष्टिरेव च।
स्थानानि गन्धाः स्रावाश्च सोपसर्गाः क्रियाश्च याः॥११८॥
व्रणाधिकारे सम्प्रश्नमितवत्सकसुक्तवान्।
सुनिर्ष्यासमासाभ्यामग्निवेशाय धीमते॥ ११९॥

---

## चतुर्दशोऽध्यायः।

### उन्मादचिकित्सितम्।

द्युतिस्मृतिज्ञानतपोनिवासः पुनर्वसुः प्राणभृतां शरण्यः।
उन्मादहेत्वाकृतिभेषजानि कालेऽग्निवेशाय शशंस पृष्टः॥१॥
विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्।
उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः॥२॥
तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य।
स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः॥३॥
धीविभ्रमः सत्त्वपरिप्लवश्च पर्य्याकुला दृष्टिरधीरता च।
अबद्धवाक्त्वं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम्॥४॥
सम्मूढ़चेता न सुखं न दुःखं नाचारधर्मौ कुत एव शान्तिम्।
विन्दत्यपास्तस्मृतिबुद्धिसंज्ञो भ्रमत्ययं चेत इतस्ततश्च॥५॥
समुद्भ्रमं बुद्धिमनःस्मृतीनामुन्मादमागन्तुनिजोत्थमाहुः।

तस्योद्भवं पञ्चविधस्य भूयो वक्ष्यामि लिङ्गानि चिकित्सितञ्च ॥
रूक्षाल्पशीतान्नविरेकधातुक्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तादिजुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिञ्चाप्युपहन्ति शीघ्रम् ॥७॥
अस्थानहासस्मितनृत्यगीतवागङ्गविक्षेपणरोदनानि ।
पारुष्यकार्श्यारुणवर्णता च जीर्णे बलञ्चानिलजस्य रूपम् ॥८॥
अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।
उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदेव कुर्य्यात् ॥९॥
अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः ।
प्रच्छायशीतान्नजलाभिलाषः पीता च भाः पित्तकृतस्य लिङ्गम् १
संपूरणैर्मन्दविचेष्टनैश्च सोष्मा कफो मर्मणि सम्प्रवृद्धः ।
बुद्धिं स्मृतिञ्चाप्युपहत्य चित्तं प्रमोहयन् सञ्जनयेद्विकारम् ॥११
वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियतातिनिद्रा ।
छर्दिश्च लाला च बलञ्च भुङ्क्ते नखादिशौक्ल्यञ्च कफात्मके स्यात् १
यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स तु हेतुभिः स्यात् ।
सर्वाणि रूपाणि बिभर्त्ति तादृग् विरुद्धभैषज्यविधिर्विवर्ज्यः ॥१३
देवर्षिगन्धर्वपिशाचयक्षरक्षः पितॄणामभिधर्षणानि ।
आगन्तुहेतुर्नियमव्रतादि मिथ्या कृतं कर्म च पूर्वदेहे ॥१४॥
अमर्त्त्यवाग्विक्रमवीर्य्यचेष्टाज्ञानादिविज्ञानबलादिभिर्यः ।
उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत् तम् ॥१५॥
अदूषयन्तः पुरुषस्य देहं देवादयः स्वैश्च गुणप्रभावैः ।
विशन्त्यदृश्यास्तरसा,यथैव छायातपौ दर्पणसूर्य्यकान्तौ ॥१६॥

आयातकालो हि स पूर्वरूपः प्रोक्तो निदानेऽस्य परं सुराद्यैः
उन्मादरूपाणि पृथङ्निबोध कालञ्च गम्यान् पुरुषांश्च तेषाम् १७

तद्यथा,—सौम्यदृष्टिं गम्भीरमप्रधृष्यमकोपनमस्वप्नम् अभोजनाभिलाषिणमल्पस्वेदमूत्रपुरीषवातं शुभगन्धं फुल्लपद्मवदनमिति देवोन्मत्तं विद्यात् ॥ १८ ॥

गुरुवृद्धसिद्धर्षीणामभिशापाभिचाराभिध्यानानुरूपाहारचेष्टाव्याहारं तेनोन्मत्तं विद्यात्॥ १९॥

अप्रसन्नदृष्टिमपश्यन्तं निद्रालुं प्रतिहतवाचमनन्नाभिलाषारोचकाविपाकपरीतं पितृभिरुन्मत्तं विद्यात्॥ २०॥

चण्डं साहसिकं तीक्ष्णं गम्भीरमप्रधृष्यं मुखवाद्यनृत्यगीतान्नपानस्नानमाल्यधूपगन्धरत्नवस्त्र-बलिकर्महास्यकथायोगप्रियं शुभगन्धमिति गन्धर्वोन्मत्तं विद्यात्॥ २१॥

असकृत्स्वप्नरोदनहास्यं नृत्यगीतवाद्यकथान्नपानस्नानमाल्यधूपगन्धरतिं रक्तविप्लुताक्षं द्विजातिवैद्यपरिवादिनं रहस्यभाषिणमिति यक्षोन्मत्तं विद्यात्॥ २२॥

नष्टनिद्रमन्नपानद्वेषिणमनाहारमप्रतिबलिनं शस्त्रशोणितमांसरक्तमाल्याभिलाषिणं सन्तर्जकमिति राक्षसोन्मत्तं विद्यात्॥ २३॥

प्रहासनृत्यप्रधानं देवविप्रवैद्यद्वेषावज्ञाभिस्तुतिवेदमन्त्रशास्त्रोदाहरणैः काष्ठादिभिरात्मपीडनेन च ब्रह्मराक्षसोन्मत्तं विद्यात्॥ २४॥

अस्वस्थचित्तं स्थानमलभमानं नृत्यगीतहासिनं बद्धाबद्धप्रभाषिणं सङ्कटकूटमलिनरथ्याचेलतृणेषु आरोहणरतिं सभिन्नवर्णरूक्षस्वरं नग्नं विधावन्तं नैकत्र तिष्ठन्तं दुःखानि आवेदयन्तं नष्टस्मृतिं पिशाचोन्मत्तं विद्यात्॥ २५॥

तत्र शौचाचारं तपःस्वाध्यायकोविदं नरं प्रायः शुक्लप्रतिपदि त्रयोदश्याञ्च देवाः धर्षयन्ति॥ २६॥

स्नानशुचिविविक्तसेविनं धर्मशास्त्रश्रुतिकाव्यकुशलं प्रायः षष्ठीनवम्योऋषयः धर्षयन्ति॥ २७॥

मातृपितृगुरुवृद्धसिद्धाचार्य्योपसेविनं प्रायो दशम्याममावस्यायाञ्च पितरः धर्षयन्ति॥ २८॥

गन्धर्वास्तु स्तुतिगीतवादित्ररतिं परदारगन्धमाल्यप्रियं शौचाचारं द्वादश्यां चतुर्दश्याञ्च धर्षयन्ति॥ २९॥

सत्त्वबलरूपगर्वशौर्य्ययुक्तं माल्यानुलेपनं हास्यप्रियमतिवाक्करणं प्रायः शुक्लैकादश्यां समभ्याश्च यक्षाः धर्षयन्ति ॥३०

स्वाध्यायतपोनियमोपवासव्रतचर्य्यादेवगतिगुरुपूजारतिं भ्रष्टशौचं ब्राह्मणमब्राह्मणं वा ब्रह्मवादिनं शूरमानिनं देवतागारसलिलक्रीड़नरात प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने च ब्रह्मराक्षसाः धर्षयन्ति ॥ ३१ ॥

रक्षःपिशाचास्तु हीनसत्त्वपिशुनस्त्रैणलुब्धं प्रायो द्वितीयातृतीयाष्टमीषु पुरुषं छिद्रमवेक्ष्य अभिधर्षयन्ति ।

इति अपरिसंख्येयानां ग्रहाणामाविष्कृततया ह्यष्टाविति व्याख्याताः ॥ ३२ ॥

सर्वेषु अपि तु खलु एषु यो हस्तावुद्यम्य रोषसंरम्भान्निःसम्भमन्येषु आत्मनि वा पातयेत् स हि असाध्यो ज्ञेयस्तथा यः साश्रुनेत्रो मेढ्रप्रवृत्तरक्तः क्षतजिह्वः प्रस्रुतनासिकश्छिद्यमानमर्माप्रतिहन्यमानपाणिः सततं विकूजन् दुर्वर्णस्तृषार्त्तः पूतिगन्धिश्च हिंसार्थो उन्मत्तो ज्ञेयस्तं परिवर्जयेत् ॥ ३३ ॥

रत्यर्चनकामोन्मादिनौ तु भिषक् अभिचाराभिशापाभ्यां बुद्धा तदङ्गोपहारबलिश्रमेण मन्त्रभैषज्यविधिना उपक्रमेत् ॥ ३४ ॥

तत्र द्वयोरपि निजागन्तुनिमित्तयोरुन्मादयोः समासविस्ताराभ्यां भेषजविधिं व्याख्यास्यामः ॥ ३५ ॥

उन्मादे वातजे पूर्वं स्नेहपानं विशेषवित् ।
कुर्य्यादावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥ ३६ ॥
कफपित्तभवेऽप्यादौ वमनं सविरेचनम् ।
स्निग्धस्विन्नस्य कर्त्तव्यं शुद्धे संसर्जनक्रमः ॥ ३७ ॥
निरूहणस्नेहवस्ती शिरसश्च विरेचनम् ।
ततः कुर्य्याद् यथादोषं तेषां भूयस्त्वमाचरेत् ॥३८॥
हृदिन्द्रियशिरः कोष्ठे संशुद्धे वमनादिभिः ।

मनः प्रसादमाप्नोति स्मृतिं संज्ञाञ्च विन्दति ॥३९॥
गुह्यस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।
ताड़नञ्च मनोबुद्धिदेहसंतर्जनं हितम् ॥ ४० ॥
यः सक्तो विनयेत् पट्टैः संयम्य सुदृढ़ैः सुखैः।
अपेतलोष्टकाष्ठाद्यैः संरोधयेत् तमो गृहे ॥ ४१ ॥
तर्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम्।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥ ४२ ॥
प्रदेहोत्सादनाभ्यङ्गधूमपानञ्च सर्पिषः।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम् ॥ ४३ ॥
सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः।
अतः सिद्धतमान् योगान् शृणून्मादविनाशनान् ॥ ४४ ॥
हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढ़कम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ ४५ ॥
विशाला त्रिफला कौन्ती देवदार्वेलवालुकम्।
स्थिरानन्ता रजन्यौ द्वे शारिवे द्वे प्रियङ्गुकम् ॥ ४६ ॥
नीलोत्पलैलामञ्जिष्ठा दन्तीदाड़िमकेशरम्।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥ ४७ ॥
विड़ङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ।
कल्कैः कर्षसमैरेतैर्विंशत्याष्टाभिरेव च ॥ ४८ ॥
चतुर्गुणे जले पक्वा घृतप्रस्थं विपाचयेत्।
अपस्मारे ज्वरे कासे श्वासे मन्देऽनलक्षये ॥ ४९ ॥
वातरोगे प्रतिश्याये तृतीयकचतुर्थके।
छर्द्यर्शोमूत्रकृच्छ्रे च विसर्पोपहतेषु च ॥ ५० ॥
कण्डुपाण्ड्वामयोन्मादविषमेहगदेषु च।
भूतोपहतचित्तानां गद्गदानामचेतसाम् ॥ ५१ ॥
शस्तं स्त्रीणाञ्च वन्ध्यानां धन्यमायुर्बलप्रदम्।

अलक्ष्मीपापरक्षोघ्नं सर्वग्रहविनाशनम् ॥ ५२ ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ।

इति कल्याणकं घृतम् ।

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरचतुर्गुणे ॥ ५३ ॥
वीराद्विमाषकाकोलीस्वयंगुप्तर्षभकर्द्धिभिः ।
मेदया च समैः कल्कैस्तत् स्यात् कल्याणकं महत् ॥५४॥
बृंहणीयं विशेषेण सन्निपातहरं परम् ।

इति महाकल्याणकं घृतम् ।

जटिलां पूतनां केशीं चारटीं मर्कटीं वचाम् ।
त्रायमाणां जयां वीरां चोरकं कटुरोहिणीम् ॥ ५५ ॥
कायस्थां शूकरीं छत्रामतिच्छत्रां पलङ्कषाम् ।
महापुरुषदन्ताञ्च वयःस्थां नाकुलीद्वयम् ॥ ५६ ॥
कटम्भरां वृश्चिकालीं स्थिराञ्चाहृत्य तैर्घृतम् ।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम् ॥ ५७ ॥
महापैशाचिकं नाम घृतमेतद्यथामृतम् ।
बुद्धिमेधास्मृतिकरञ्चैव बालानाञ्चाङ्गवर्द्धनम् ॥ ५८ ॥

इति महापैशाचिकं घृतम् ।

लशुनानां शतं त्रिंशदभया त्र्यूषणात् पलम् ।
गवां चर्ममसीप्रस्थो द्व्याढकं क्षीरमूत्रयोः ॥ ५९ ॥
पुराणसर्पिषः प्रस्थमेभिः सिद्धं प्रयोजयेत् ।
हिङ्गुचूर्णपलं शीते दत्त्वा च मधुमाणिकाम् ॥ ६० ॥
तद्दोषागन्तुसम्भूतानुन्मादान् विषमज्वरान् ।
अपस्मारांश्च हन्त्याशु पानाभ्यञ्जननावनैः ॥ ६१ ॥

इति लशुनाद्यं घृतम् ।

नष्टनस्यायिनष्टस्य तुलार्द्धं निम्बुपीलुतम् ।

तदर्धं दशमूलस्य द्रवाढ़कोऽपां विपाचयेत् ॥ ६२ ॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः ॥ ६३ ॥
दाड़िमाम्बुसुरामस्तुकाञ्जिकाम्लैस्तदर्द्धिकैः।
साधयेत् त्रिफलादारुलवणव्योपदीप्यकैः ॥६४॥
यमानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्द्धिकैः।
सिद्धमेतत् पिबेच्छूलगुल्मार्शोजठरापहम् ॥६५॥
ब्रध्नपाण्ड्वामयप्लीहयोनिदोषज्वरक्रिमीन्।
वातश्लेष्मामयान् सर्वानुन्मादश्चापकर्षति ॥६६॥

इति द्वितीयलशुनाद्यं घृतम्।

हिङ्गुना हिङ्गुपर्ण्या च सकायस्था वयःस्थया।
सिद्धं सर्पिर्हितं तद्वद्वयःस्थाहिङ्गुरोचकैः ॥६७॥
केवलं सिद्धमेभिर्वा पुराणं पाययेद् घृतम्।
पाययित्वोत्तमां मात्रां श्वभ्रे रुन्ध्याद् गृहेऽपि वा ॥६८॥
विशेषतः पुराणञ्च घृतं तं पाययेद्भिषक्।
त्रिदोषघ्नं पवित्रत्वात् विशेषाद् ग्रहमोचनम् ॥६९॥
गुणकर्माधिकं स्यानादास्वादात् कटुतिक्तकम्।
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ॥७०॥
लाक्षारसनिभं शीतं तद्धि सर्वग्रहापहम्।
मेध्यं विरेचनेष्वग्र्यं प्रपुराणमतः परम् ॥ ७१ ॥
नासाध्यं नाम तस्यास्ति यत् स्याद्वर्षशतस्थितम्।
दृष्टं स्पृष्टमथाघ्रातं तद्धि सर्वग्रहापहम्।
अपस्मारग्रहोन्मादवतां शस्तं विशेषतः ॥ ७२ ॥
एतैरौषधवर्गैर्वा स्थिरत्वं स गच्छति।
अञ्जनोत्सादनालेपान् नावनादींश्च योजयेत् ॥ ७३ ॥
शिरीषो मधुकं हिङ्गु लशुनं तगरं वचाम्।

कुष्ठञ्च वस्तमूत्रेण पिष्टं स्याच्चावनाञ्जनम् ॥ ७४ ॥

इति नस्याञ्जनम्।

तद्वदोषं हरिद्रे द्वे मञ्जिष्ठाहिङ्गुसर्षपाः।
शिरीषवीजञ्चोन्मादग्रहापस्मारनाशनम् ॥ ७५ ॥
पिष्ट्वा तुल्यमपामार्गं हिङ्गुलं हिङ्गुपत्रिकाम्।
वर्त्तिः स्यान्मरिचाष्टांशा पित्ताभ्यां गोशृगालयोः ॥७६॥
तथाञ्जयेदपस्मारभूतोन्मादज्वरार्दितान्।
भूतार्त्तानमरार्त्तांश्च नरार्त्तांश्चैव गोमये ॥ ७७ ॥
मरिचञ्चातपे मासं सपित्तं स्थितमञ्जनम्।
वैकृतं पश्यतः कार्यं दोषभूतहतस्मृतेः ॥ ७८ ॥

इति अञ्जनम्।

सिद्धार्थको वचा हिङ्गुकरञ्जो देवदारु च।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥७९॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥८०॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा।
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः ॥८१॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥८२॥
प्रसक्ते पीनसे गन्धैर्धूमवर्त्तिं कृता पिवेत्।
येन्त्वनिकधूमोक्तेः श्वेताद्यैर्वा सहिङ्गुभिः ॥८३॥
शल्लकोलूकमार्जारजम्बूकवृकवस्तजैः।
मूत्रपित्तशकृल्लोमनखचर्मभिरेव च ॥८४॥
सकाञ्जनं प्रधमनं नस्यं धूमञ्च कारयेत्।
वातश्लेष्मात्मके प्रायः पैत्तिके च प्रशस्यते ॥८५॥
तिक्तकं जीवनीयञ्च सर्पिः स्नेहश्च मिश्रकः।

शीतानि चान्नपानानि मधुराणि मृदूनि च ॥८६॥
शङ्कके शान्तसन्धौ वा मोचयेज्जो भिषक् शिराम्।
उन्मादे विषमे चैव ज्वरेऽपस्मार एव च ॥८७॥
घृतमांसविष्टमं वा निवाते स्थापयेत् सुखम्।
त्यक्ता मतिस्मृतिभ्रंशं संज्ञां लब्धा प्रबुध्यते ॥८८॥
आश्वासयेत् सुहृद्दा तं वाक्यैर्धर्मार्थसंहितैः।
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ॥८९॥
बद्धा सर्षपतैलाक्तं न्यसेद्दोत्तानमातपे।
कपिकच्छ्राथवा तप्तलौहतैलजलैः स्पृशेत् ॥९०॥
कशाभिस्ताड़यित्वा वा सुबद्धं विजने गृहे।
रुन्ध्याच्चेतो हि विभ्रान्तं व्रजत्यस्य यथा शमम् ॥९१॥
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम्।
त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा ॥९२॥
अथवा राजपुरुषा वहिर्नीत्वा सुसंयतम्।
त्रासयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ॥ ९३ ॥
देहदुःखभयेभ्यो हि परं प्राणभयं महत्।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥९४॥
इष्टद्रव्यविनाशात् तु मनो यस्योपहन्यते।
तस्य तत्सदृशप्राप्तिशान्त्या श्वासैः शमं नयेत् ॥९५॥
कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान्।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ ९६ ॥
बुद्धा देशं वयः सात्म्यं दोषं कालं बलाबलम्।
चिकित्सितमिदं कुर्यादुन्मादे भूतदोषजे ॥९७॥
देवर्षिपितृगन्धर्वैरुन्मत्तस्य तु बुद्धिमान्।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म च ॥९८॥
सर्पिष्पानादि तस्येह मृदुभैषज्यमाचरेत्।

पूजां वल्युपहारांश्च मन्त्राञ्जनविधींस्तथा ॥९९॥
शान्तिकर्मेष्टिहोमांश्च जप्यस्वस्त्ययनानि च ।
वेदोक्तान् नियमांश्चापि प्रायश्चित्तानि चाचरेत् ॥१००॥
भूतानामधिपं देवमीश्वरं जगतः प्रभुम् ।
पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम् ॥१०१॥
रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये ।
तेषां पूजाञ्च कुर्वाण उन्मादेभ्यो विमुच्यते ॥१०२॥
वलिभिर्मङ्गलैर्होमैरोषध्यगदधारणैः ।
सत्याचारतपोज्ञानप्रदाननियमव्रतैः ॥१०३॥
देवगुह्यकविप्राणां गुरूणां पूजनेन च ।
आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा ॥१०४॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारे चिकित्सिते ।
उन्मादे तच्च कर्त्तव्यं सामान्याद्धेतुदूष्ययोः ॥ १०५ ॥
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।
निजागन्तुभिरुन्मादैः सत्त्ववान् न स युज्यते ॥१०६॥
प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥१०७॥
तत्र श्लोकः ।
उन्मादानां समुत्थानं लक्षणं सचिकित्सितम् ।
निजागन्तुनिमित्तानामुक्तवान् भिषगुत्तमः ॥१०८॥

---

## पञ्चदशोऽध्यायः ।

### अपस्मारचिकित्सितम् ।

स्मृतेरपगमं प्राहुरपस्मारं भिषग्विदः ।
तमःप्रवेशबीभत्सचेष्टं धीसत्त्वसम्प्लवात् ॥ १ ॥

विभ्रान्तबहुदोषाणामहिताशुचिभोजिनाम्।
रजस्तमोभ्यां विहते सत्त्वे दोषावृते हृदि ॥ २ ॥
चिन्ताकामभयक्रोधशोकोद्वेगादिभिस्तथा।
मनस्यभ्याहते नृणामपस्मारः प्रवर्त्तते ॥ ३ ॥
धमनीभिः श्रिता दोषा हृदयं पीड़यन्ति हि।
सम्पीड्यमानो व्यथते मूढ़ो भ्रान्तेन चेतसा ॥ ४ ॥
पश्यत्यसन्ति रूपाणि पतति प्रस्फुरत्यपि।
जिह्माक्षिभ्रुस्रवल्लालो हस्तौ पादौ च विक्षिपन् ॥ ५ ॥
दोषवेगे च विगते सुप्तवत् प्रतिबुध्यते।
पृथग्दोषैः समस्तैश्च बध्यते स चतुर्विधः ॥ ६ ॥
कम्पते दशते दन्तान् फेनोद्वामी श्वसित्यपि।
परुषाणि च कृष्णानि पश्येद्रूपाणि चानिलात् ॥ ७ ॥
पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः।
सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिकः ॥ ८ ॥
शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः।
पश्यन् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥ ९ ॥
सर्वैरेतैः समस्तैस्तु लिङ्गैर्ज्ञेयस्त्रिदोषजः।
अपस्मारः स चासाध्यो यः क्षीणस्यानवश्च यः ॥ १० ॥
पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः।
अपस्मारा़य कुर्वन्ति वेगं किञ्चिदथान्तरम् ॥ ११ ॥
तैरावृतानां हृत्स्रोतो मनसां संप्रबोधनम्।
तीक्ष्णैरादौ भिषक् कुर्य्यात् कर्मभिर्वमनादिभिः ॥ १२ ॥
वातिकं वस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः।
श्लैष्मिकं वमनप्रायैरपस्मारं समाचरेत् ॥ १३ ॥
सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु ॥ १४ ॥

गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम्।
सिद्धं पिबेदपस्मारकामलाज्वरनाशनम्॥ १५॥

इति पञ्चगव्यं घृतम्।

द्वे पञ्चमूले त्रिफला रजन्यौ कुटजत्वचम्।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम्॥ १६॥
सम्याकं फल्गुमूलञ्च पौष्करं सदुरालभम्।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते॥ १७॥
भार्गीं पाठां त्रिकटुकां त्रिवृतां निचुलानि च।
श्रेयसीमाढकीं मूर्वां दन्तीं भूनिम्बचित्रकौ॥ १८॥
द्वे शारिवे रोहिषञ्च भूतीकं मदयन्तिकाम्।
पिपेत् पिष्ट्वाक्षमात्राणि तेन प्रस्थं घृतात् पचेत्॥ १९॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः।
पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम्॥ २०॥
अपस्मारे तथोन्मादे श्वयथावुदरेषु च।
गुल्मार्शःपाण्डुरोगेषु कामलासु भगन्दरे।
अलक्ष्मीग्रहरोगघ्नं चातुर्थिकविनाशनम्॥ २१॥

इति महापञ्चगव्यं घृतम्।

ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीभिरेव च।
पुराणं घृतमुन्मादालक्ष्म्यपस्मारपाप्मजित्॥ २२॥
घृतं सैन्धवहिङ्गुभ्यां वार्षे वास्ते चतुर्गुणे।
मूत्रे सिद्धमपस्मारहृद्‌ग्रहामयनाशनम्॥ २३॥
वचाशम्याककैटर्यवयःस्थाहिङ्गुचोरकैः।
सिद्धं पलङ्कषायुक्तैर्जाटलम्यापस्मारकं घृतम्॥ २४॥
तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः।
क्षीरद्रोणे पचेत् सिद्धमपस्मारविनाशनम्॥ २५॥
कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे।

कार्षिकैर्जीवनीयैश्च घृतप्रस्थं विपाचयेत् ॥ २६ ॥
वातपित्तोद्भवं क्षिप्रमपस्मारं नियच्छति।
तद्वत् काश्मविदारीक्षुकुशकाथशृतं घृतम् ॥ २७ ॥
मधुकाद्विपले कल्के द्रोणे चामलकीरसात्।
तद्वत् सिद्धो घृतप्रस्थः पित्तापस्मारभेषजम् ॥ २८ ॥
अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे।
सिद्धं स्याद्गोशकृन्मूत्रे स्नानोत्सादनमेव च ॥ २९ ॥
कटभिनिम्बकट्वङ्गमधुशिग्रुत्वचां रसे।
सिद्धं मूत्रसमं तैलमभ्यङ्गार्थे प्रशस्यते ॥ ३० ॥
पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः।
जटिलापूतनाकेशीनाकुलीहिङ्गुचोरकैः ॥ ३१ ॥
लशुनातिरसाचित्राकुष्ठैर्विड्भिश्च पक्षिणाम्।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥ ३२ ॥
सिद्धमभ्यञ्जनं तैलमपस्मारविनाशनम्।
एतैरेवौषधैः कार्यं धूपनं सप्रलेपनम् ॥ ३३ ॥
पिप्पलीं लवणं शिग्रुं हिङ्गु हिङ्गुशिवाटिकाम्।
काकोलीं सर्षपान् काशनासां कैटर्यचन्दने ॥३४॥
श्वनःस्कन्धास्थिनखरान् पश्च कांचेति पेषयेत्।
वस्तमूत्रेण पुष्यर्क्षे प्रदेहः स्यात् सधूपनः ॥३५॥
अपेतराक्षसीकुष्ठपूतनाकेशिचोरकैः।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥३६॥
जलौकाशकृता तद्वद्धूमो वा वस्तलोमभिः।
खराश्विभिर्हस्तिनखैस्तथा गोपुच्छलोमभिः ॥३७॥
कपिलानां गवां मूत्रं नावनं परमं हितम्।
श्वशृगालविड़ालानां सिंहादीनाञ्च शस्यते ॥३८॥
भार्गी वचा नागदन्ती श्वेता श्वेता विषाणिका।

ज्योतिष्मती नागदन्ती पादोंत्या मूत्रपेषिताः ॥३९॥
योगास्त्रयोऽतः षड्विन्दून् पञ्च वा नावयेद्भिषक्।
त्रिफला व्योषपीतद्रुयवचारफणिज्झकैः ॥४०॥
श्यामापामार्गकारञ्जफलैर्मूत्रेऽथ वस्तजे।
साधितं नावनं तैलमपस्मारविनाशनम् ॥४१॥
पिप्पलीलवणिकाली च कुष्ठञ्च लवणानि च।
भार्गी च चूर्णितं नस्तः कार्य्यं प्रधमनं परम् ॥४२॥
कायस्थान् शारदान् मुद्गान् सुस्त्रीशीरयवांस्तथा।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्तीः प्रकल्पयेत् ॥४३॥
अपस्मारे तथोन्मादे सर्पदष्टे तथार्दिते।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥ ४४ ॥
मुस्तं वयःस्थां त्रिफलां कायस्थां हिङ्गु शाद्वलम्।
व्योषं मासान् यवान् मूत्रैर्वस्तिमेषगवैस्त्रिभिः ॥४५॥
पिष्ट्वा कृत्वा च तां वर्त्तिमपस्मारे प्रयोजयेत्।
किलासेषु तथोन्मादे ज्वरेषु विषमेषु च ॥ ४६ ॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम्।
तदेव सर्पिषा युक्तं धूपनं परमं मतम् ॥४७॥
नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥४८॥
आभिः क्रियाभिः सिद्धाभिर्हृदयं संप्रबुध्यते।
स्रोतांसि चापि शुध्यन्ति ततः संज्ञां स विन्दति ॥४९॥
यस्यानुबन्धस्त्वागन्तुर्दोषलिङ्गाधिकाकृतिम्।
पश्येत् तस्य भिषक् कुर्य्यादागन्तून्मादभेषजम् ॥५०॥
अनन्तरमुवाचेदमग्निवेशः कृताञ्जलिः।
भगवन् ! प्राक् समुद्दिष्टः श्लोकस्थाने मदागदः ॥५१॥
अतस्त्वाभिनिवेशस्य तस्य व्याख्याविधोच्यताम्।

शुश्रूषवे वचः श्रुत्वा शिष्यायाह पुनर्वसुः ॥५२॥
महागदं सौम्य ! शृणु सहेत्वाकृतिभेषजम्।
मलिनाहारशीलस्य वेगान् प्राप्तान् निगृह्णतः।
शीतोष्णस्निग्धरूक्षाद्यैर्हेतुभिश्चातिसेवितैः ॥५३॥
हृदयं समुपाश्रित्य मनोबुद्धिवहाः शिराः।
दोषाः संदूष्य तिष्ठन्ति रजोमोहावृतात्मनः ॥५४॥
रजस्तमोभ्यां वृद्धाभ्यां बुद्धौ मनसि चावृते।
हृदये व्याकुले दोषैरथ मूढोऽल्पचेतनः ॥५५॥
करोति विषमां बुद्धिं नित्यानित्ये हिताहिते।
अतत्त्वाभिनिवेशं तमाहुराप्ता महागदम् ॥५६॥
स्नेहस्वेदोपपन्नं तं संशोध्य वमनादिभिः।
कृतसंसर्जनं मेध्यैरन्नपानैरुपाचरेत् ॥५७॥
ब्राह्मीस्वरससंयुक्तं पञ्चगव्यमुदाहृतम्।
तत् सेव्यं शङ्खपुष्पी च यच्च मेध्यं रसायनम् ॥५८॥
सुहृदश्चानुकूलास्तं स्वाप्तधर्मार्थवादिनः।
संयोजयेयुर्विज्ञानधैर्यस्मृतिसमाधिभिः ॥५९॥
प्रयुञ्ज्यात् तैललशुनं पयसा वा शतावरीम्।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥६०॥
दुश्चिकित्स्यो ह्यपस्मारश्चिरकारी कृतास्पदः।
तस्माद्रसायनैरेनं प्रायशः समुपाचरेत् ॥६१॥
जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा।
रक्षेदुन्मादिनञ्चैव सद्यः प्राणहरा हि ते ॥६२॥

तत्र श्लोकौ।

हेतुं कुर्वन्त्यपस्मारं दोषाः प्रकुपिता यथा।
सामान्यतः पृथक्त्वाच्च लिङ्गं तेषाञ्च भेषजम् ॥६३॥

अष्टागदसमुत्थानं लिङ्गञ्चोवाच सौषधम्।
मुनिर्व्याससमासाभ्यामपस्मारचिकित्सिते ॥६४॥

---

## षोड़शोऽध्यायः।

### क्षतक्षीणचिकित्सितम्।

उदारकीर्त्तिर्ब्रह्मर्षिरात्रेयः परमार्थवित्।
क्षतक्षीणचिकित्सार्थमिदमाह चिकित्सितम् ॥ १ ॥
धनुषायस्यतोऽत्यर्थं भारमुद्वहतो गुरुम्।
पततो विषमोच्चेभ्यो युध्यमानस्य चाधिकैः ॥ २ ॥
वृषं हयं वा धावन्तं दम्यं वान्यं निगृह्णतः।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ॥ ३ ॥
अधीयमानस्यात्युच्चैर्दूरं वा व्रजतो द्रुतम्।
महानदीं वा तरतो गजैर्वा सह धावतः ॥ ४ ॥
सहसोत्पततो दूरं तूर्णञ्चाति प्रनृत्यतः।
तथान्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा।
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्य्यते ॥ ५ ॥

इति क्षतनिदानं।

स्त्रीषु चातिप्रसक्तस्य रुक्षाल्पप्रमिताशिनः।
उरो विरुज्यते तस्य भिद्यतेऽथ विदह्यते ॥ ६ ॥

इति क्षीणरोगनिदानम्।

प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते।
क्रमाद्वीर्य्यं बलं वर्णो रुचिरग्निश्च हीयते ॥ ७ ॥
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधस्तथा।
दुष्टः श्यावः सदुर्गन्धः पीतो विग्रथितो बहुः ॥ ८ ॥
कासमानस्य च श्लेष्मा सरक्तः संप्रवर्त्तते।

सचतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ॥ ९ ॥
अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम्।
उरोरुक्शोणितच्छर्दिः कासो वैशेषिकः क्षते ॥ १० ॥
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः।
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नरः ॥ ११ ॥
गते संवत्सरे याप्यः सर्वलिङ्गन्तु वर्जयेत्।
उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम् ॥ १२ ॥
सद्य एव पिबेज्जीर्णे पयसाद्यात् सशर्करम्।
पार्श्ववस्तिरुजयाल्पपित्ताग्निस्तां सुरायुताम् ॥ १३ ॥
भिन्नविट्कः समुस्तातिविषां पाठां सवत्सकाम्।
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम् ॥ १४ ॥
त्वक्क्षीरीसमितं क्षीरे पक्वा दीप्तानलः पिबेत्।
इक्ष्वालिकाविसग्रन्थिपद्मकेशरचन्दनैः ॥ १५ ॥
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती।
यवानां चूर्णमादाय क्षीरसिद्धं घृतप्लुतम् ॥१६॥
ज्वरदाहे सिताक्षौद्रसक्तून् वा पयसा पिबेत्।
कासी पर्वास्थिशूली च लिह्यात् सघृतमाक्षिकाः।
मधूकमधुकद्राक्षा त्वक्क्षीरीपिप्पलीबला. ॥१७॥
एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा।
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥१८॥
सचूर्ण्य मधुना युक्ता गुलिकाः संप्रकल्पयेत्।
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने ॥१९॥
कास श्वास ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम्।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥२०॥
शोषप्लीहाढ्यवाताश्च स्वरभेदं क्षतं क्षयम्।
गुलिका तर्पणी हृद्या रक्तपित्तञ्च नाशयेत् ॥२१॥
इति एलादिगुडिका।

रक्तेऽतिवृत्ते दद्याच्च यूषैस्तोयेन वा पिबेत् ।
चटकाण्डरसं वापि रक्तं वा छागजाङ्गलम् ॥२२॥
चूर्णं पौनर्नवं रक्तशालितण्डुलशर्करम् ।
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः ॥२३॥
मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ।
मूढवातस्त्वजामेदः सुराभृष्टं ससैन्धवम् ॥२४॥
क्षामः क्षीणः क्षतोरस्कस्त्वनिद्रः सबलेऽनिले ।
शृतक्षीरसेनाद्यात् सक्षौद्रघृतशर्करम् ॥२५॥
शर्कराञ्च यवक्षौद्रजीवकर्षभको मधु ।
शृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षतः कृशः ॥२६॥
क्रव्यादमांसनिर्यूहं घृतभृष्टं पिबेच्च सः ।
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्द्धनम् ॥२७॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षशालप्रियङ्गुभिः ।
तालमस्तकजम्बूत्वक्प्रियालैश्च सपद्मकैः ॥२८॥
साश्वकर्णैः शृतात् क्षीरादद्याज्जातेन सर्पिषा ।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रश्च मानवः ॥२९॥
यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम् ।
पयस्या पिप्पली वांशी कल्कसिद्धं क्षते शुभम् ॥३०॥
कोललाक्षारसे तद्वत् क्षीराष्टगुणसाधितम् ।
कल्कैः कटुत्वदार्वीलम्बश्चकत्वक्फलैर्घृतम् ॥३१॥
जीवकर्षभकौ वीरां जीवन्तीं नागरं शटीम् ।
चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिके ॥३२॥
पुनर्नवे द्वे मधुके सात्मगुप्तां शतावरीम् ।
ऋद्धिं पर्पटकं भार्गीं मृद्वीकां बृहतीं तथा ॥ ३३ ॥
शृङ्गाटकीं तामलकीं पयस्यां पिप्पलीं बलाम् ।
बदराक्षोटखर्जूरवातामाभिषुकाण्यपि ॥ ३४ ॥

फलानि चैवमादीनि कल्कान् कुर्वीत कार्षिकान्।
धात्रीरसविदारीक्षुच्छागमांसरसं पयः ॥ ३५ ॥
कुर्य्यात् प्रस्थोन्मितं तेन घृतप्रस्थं विपाचयेत्।
प्रस्थार्द्धं मधुनः शीते शर्कराईतुलां तथा ॥३६॥
द्विकार्षिकाणि पत्रैलाहेमत्वङ्मरिचानि च।
चूर्णितानि विनीयास्माल्लिह्यान्मात्रां सदा नरः ॥३७॥
अमृतप्रायमित्येतन्नराणाममृतं घृतम्।
सुधामृतरसं प्राश्य क्षीरमांसरसाशिना ॥३८॥
नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्षितान्।
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च बृंहयेत् ॥३९॥
कासहिक्काज्वरश्वासदाहतृष्णास्रपित्तनुत्।
पुत्रदं वमिमूर्च्छाहृद्योनिमूत्रामयापहम् ॥४०॥
इति अमृतप्राशघृतम्।
श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम्।
दर्भमूलं पृथक्पर्णीं पलाशर्षभकौ स्थिराम् ॥४१॥
पालिकं साधयेत् तेषां रसे क्षीरचतुर्गुणे।
कल्कैः स्वगुप्ताजीवन्तीमेदकर्षभजीवकैः ॥४२॥
शतावर्य्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः।
प्रस्थः सिद्धो घृतादातपित्तहृद् द्रवशूलनुत् ॥४३॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥४४॥
इति श्वदंष्ट्रादिघृतम्।
मधुकाष्टपलं द्राक्षाप्रस्थकाथे घृतं पचेत्।
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥४५॥
पृथगष्टपलं क्षौद्रं शर्कराभ्यां विमिश्रयेत्।
समं सक्तु क्षतक्षीणे रक्तगुल्मेषु तद्धितम् ॥४६॥
इति सक्तुप्रयोगः।

धात्रीफलविदारीक्षुजीवनीयरसाद् घृतात्।
छागगोपयसोश्चैव सप्त प्रस्थान् पचेदग्निपक् ॥४७॥
सिद्धशीते सिताक्षौद्रद्विप्रस्थं विनयेत् ततः।
यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहम् ॥४८॥
वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम्।
घृतन्तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिवेत् ॥४९॥
लीढं निर्वापयेत् पित्तमल्पत्वाद्धन्ति नानिलम्।
आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥५०॥
क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि च।
त्वक्क्षीरीशर्करालाजचूर्णैः पानानि योजयेत् ॥५१॥
सर्पिर्गुड़ान् समध्वंशान् जग्ध्वा दद्यात् पयोनु च।
रेतो वीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥५२॥
वलां विदारीं ह्रस्वाञ्च पञ्चमूलीं पुनर्नवाम्।
पञ्चानां क्षीरिवृक्षाणां शुङ्गां मुच्यंशकामपि ॥५३॥
एषां कषाये द्विक्षीरे विदार्याजरसांशिके।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढ़कम् ॥५४॥
सितापलानि पूतेऽस्मिन् शीते द्वात्रिंशतं क्षिपेत्।
गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥ ५५ ॥
सक्षौद्रं कुड़वांशेन तत् सर्वं खजमूर्च्छितम्।
स्त्यानं सर्पिर्गुड़ान् कृत्वा भूर्जपत्रेण वेष्टयेत् ॥५६॥
तान् जग्ध्वा पलिकान् क्षीरं मद्यं वानुपिवेत् कफे।
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्षिते ॥५७॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते।
शस्ताः पार्श्वशिरःशूले विभेदे स्वरवर्णयोः ॥५८॥

इति सर्पिर्गुड़ः।

त्वक्क्षीरीयवपणीद्राक्षामूर्वकर्षभजीवकैः।

वीरर्षिक्षीरकाकोलीद्वयजीवकपिकच्छुभिः ॥५९॥
खर्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः ।
धात्रीविदारीक्षुरसप्रस्थैः प्रस्थं घृतात् पचेत् ॥६०॥
शर्करार्द्धतुलां शीते क्षौद्रार्द्धप्रस्थमेव च ।
क्षिप्त्वा सर्पिर्गुड़ान् कुर्य्यात् कासहिक्काज्वरापहान् ॥६१॥
यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम् ।
शुक्रनिद्राक्षयं तृष्णां हन्युः कार्श्यं सकामलम् ॥६२॥
इति सर्पिर्गुड़कः ।

द्राक्षां मधुकमामलकीमात्मगुप्तां पुनर्नवाम् ।
शतावरीं विदारीञ्च स्वगन्धां पिप्पलीं तथा ॥६३॥
पृथग्दशपलान् भागान् पलान्यष्टौ च नागरात् ।
यष्ट्याह्वसौवर्चलयोर्द्विपलं मरिचस्य च ॥ ६४ ॥
क्षीरतैलघृतानाञ्च त्वाढ़के शर्करायुते ।
क्वथिते तानि चूर्णानि दत्त्वा बिल्वसमान् गुड़ान् ॥ ६५ ॥
कुर्य्यात् तान् भक्षयेत् क्षीणः क्षतशुक्रश्च मानवः ।
तेन सद्यो रसादीनां वृद्धा पुष्टिं स विन्दति ॥ ६६ ॥
इति तृतीयसर्पिर्गुड़कः ।

गोक्षीरात् द्व्याढ़कं सर्पिःप्रस्थमिक्षुरसाढ़कम् ।
विदार्य्याः स्वरसात् प्रस्थं रसात् प्रस्थञ्च तैत्तिरात् ॥६७॥
दद्यात् सिध्यति तस्मिंस्तु पिष्टानिक्षुरसैरिमान् ।
मधुकपुष्पं कुड़वं पियालकुड़वं तथा ॥ ६८ ॥
तुगाक्षीर्य्यर्द्धकुड़वां खर्जूराणि च विंशतिम् ।
पृथग्बिभीतकामज्जः पिप्पल्याश्च चतुर्थिकाम् ॥ ६९ ॥
त्रिंशत्पलानि खण्डाच्च मधुकात् कर्षमेव च । .
तथार्द्धपलिकान्यत्र जीवनीयानि चावपेत् ॥ ७० ॥
सिद्धेऽस्मिन् कुड़वं क्षौद्रं शीते चिप्राय मोदकान् ।

कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान् ॥ ७१ ॥
वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च।
शुष्यतां क्षीणशुक्राणां रक्ते चोरसि संस्थिते ॥ ७२ ॥
क्षामदुर्बलवृद्धानां पुष्टिवर्णबलार्थिनाम्।
योनिदोषक्षतस्रावक्षतानामार्त्तवापि योषिताम् ॥ ७३ ॥
गर्भार्थिनीनां गर्भश्च स्रवेद् यासां म्रियेत वा।
धन्या बल्या हितास्ताभ्यः शुक्रशोणितवर्द्धनाः ॥ ७४ ॥

चतुर्थसर्पिर्मोदकम्

वस्तिदेशे विकुर्वाणे क्षीणसक्तस्य मारुते।
वातघ्नान् बृंहणान् हृद्यान् योगांस्तस्य प्रयोजयेत् ॥७५॥
शर्करापिप्पलीचूर्णैः सर्पिषा माक्षिकेण वा।
संयुक्तं वा शृतं क्षीरं पिबेत् कासज्वरापहम् ॥ ७६ ॥
फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे शृतम्।
स्त्रीषु क्षीणः पिबेद्यूषं जीवनं बृंहणं परम् ॥ ७७ ॥
शकूनां वस्त्रपूतानां मण्डं क्षौद्रघृतान्वितम्।
यावच्च सात्म्यो दीप्ताग्निः क्षतक्षीणः पिबेन्नरः ॥ ७८ ॥
जीवनीयोषधिदं वा घृतभृष्टन्तु जाङ्गलम्।
रसं प्रयोजयेत् क्षीणो व्यञ्जनार्थं सशर्करम् ॥ ७९ ॥
गोमहिषाश्वनागाजैः क्षीरैर्मांसरसैस्तथा।
यथाग्नि भोजयेद्यूषैः फलाम्लैर्घृतसंस्कृतैः ॥ ८० ॥
दीप्तेऽग्नौ विधिरेषः स्यान्मन्दे दीपनपाचनः।
यक्ष्मिणां विहितो यश्च भिन्ने शकृति चेष्यते ॥ ८१ ॥
पलिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात् पले।
कुडवांशानि वृक्षाम्लं दाडिमं पत्रमर्जकात् ॥ ८२ ॥
एकैकं मरिचाजाज्योर्धान्यकाद् चतुर्थिकं।
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् ॥ ८३ ॥

कृत्वा चूर्णमतो मात्रामन्नपाने प्रयोजयेत्।
रोचनं दीपनं वर्ण्यं पार्श्वार्त्तिश्वासकासनुत्॥ ८४॥

इति सैन्धवादिचूर्णम्।

एका षोड़शिका धान्याद्वि द्व्यंशाज्यजमोदयोः।
ताभ्यां दाड़िमवृक्षाम्लाद्विर्द्विः सौवर्चलात् पलम्॥ ८५॥
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्च पलानि च।
तच्चूर्णं षोड़शपले शर्करायाः विमिश्रयेत्।
षाड़वोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत्॥ ८६॥

इति षाड़वः।

पिबेन्नागबलामूलस्यार्द्धकर्षविवर्द्धनम्।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक्॥ ८७॥
एष प्रयोगः पुष्ट्यायुर्बलारोग्यकरः परः।
मण्डूकपर्ण्याः कल्पोऽयं शण्ठीमधुकयोस्तथा॥ ८८॥
यद्यत् सन्तर्पणं शीतमविदाहि हितं लघु।
अन्नपानं निषेव्यं तत् क्षतक्षीणैः सुखार्थिभिः॥ ८९॥
यच्चोक्तं यक्ष्मिणां पथ्यं कासिनां रक्तपित्तिनाम्।
तच्च कुर्य्यादपेक्ष्याग्निं व्याधिं सात्म्यबलांस्तथा॥ ९०॥
उपेक्षितो भवेत् तस्मिन्ननुबन्धो हि यक्ष्मणः।
प्रागेवागमनात् तस्य तस्मात् तं त्वरया जयेत्॥ ९१॥

तत्र श्लोकौ।

क्षतक्षयसमुत्थानं सामान्यपृथगाकृतिम्।
असाध्ययाप्यसाध्यत्वं साध्यानां सिद्धिमेव च॥ ९२॥
उक्तवान् ज्येष्ठमिथ्याय क्षतक्षीणचिकित्सिते।
तस्यार्थविद्वीतरजस्तमोदोषः पुनर्वसुः॥ ९३॥

# सप्तदशोऽध्यायः ।

## श्वयथुचिकित्सितम् ।

भिषग्वरिष्ठं सुरसिद्धजुष्टं मुनीन्द्रमत्रात्मजमग्निवेशः ।
महागदस्य श्वयथोर्यथावत् प्रकोपरूपप्रशमानपृच्छत् ॥१॥
तस्मै जगादागदवेदविन्मुप्रवर्त्तनार्थं प्रवरोऽत्रिजस्तान् ।
वातादिभेदात्त्रिविधस्य सम्यङ्निजानिजैकाङ्गजसर्वजस्य ॥२॥
शुद्ध्यामयाभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्याममृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणञ्च ॥३॥
अर्शांस्यचेष्टा न च देहशुद्धिर्मर्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥४॥
बाह्यास्त्वचो दूषयिताभिघातः काष्ठाश्मशस्त्राग्न्यशनीविषाद्यैः ।
आगन्तुहेतुस्त्रिविधो निजश्च सर्वाङ्गगात्रावयवाश्रितत्वात् ॥५॥
बाह्याः सिराः प्राप्य यदा कफासृक्पित्तानि संदूषयतीह वायुः
तैर्बद्धमार्गः स तदा विसर्पन्नुत्सेधलिङ्गं श्वयथुं करोति ॥६॥
उरःस्थितैरूर्ध्वमधस्तु वायोः स्थानस्थितैर्मध्यगतैस्तु मध्ये ।
सर्वाङ्गगैः सर्वगतैः क्वचित्स्थैर्दोषैः क्वचित्स्याच्छ्वयथुस्तदाख्यः ॥७॥
ऊष्मा तथा स्याद्दवथुः सिराणामायाम इत्येव च पूर्वरूपम् ।
सर्वस्त्रिदोषोऽधिकदोषलिङ्गैस्तत् संज्ञमभ्येति भिषग्जितञ्च ॥८॥
सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माथ सिरातनुत्वम् ।
सलोमहर्षाङ्गविवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥८॥
चलस्तनुत्वक्परुषोऽरुणोऽसितः प्रसुप्तिहर्षार्त्तियुतोऽनिमित्ततः ।
प्रशाम्यति प्रोन्नमतिप्रपीड़ितो दिवाबली च श्वयथुः समीरणात् ॥१०॥
मृदुः सगन्धोऽसितपीतरागवान् भ्रमज्वरस्वेदतृषामदान्वितः ।
य उष्यते स्पर्शरुगक्षिरागकृत् स पित्तशोथो भृशदाहपाकवान् ॥११॥
गुरुः स्थिरः पाण्डुररोचकान्वितः प्रसेकनिद्रावमिवह्निमान्द्यकृत् ।

सुक्तस्त्वजन्मप्रशमो निपीड़ितो न चोन्नमेद्रात्रिबली कफान्वितः॥१२
क्षयस्य रोगैरबलस्य यो भवेदुपद्रवैर्वा वमिपूर्वकैर्युतः।
मर्हात्तिमर्मानुगतोऽथ राजिमान् परिस्रवन् भीमबलश्च सर्वगः॥१३
अहीनमांसस्य य एकदोषजो नवोऽबलस्तस्य सुखः ससाधने।
निदानदोषर्त्तुविपर्य्ययक्रमैरुपाचरेत् तं बलदोषकालवित् ॥१४॥
अथामजं लङ्घनपाचनक्रमैर्विशोधनैरुल्वणदोषमादितः।
शिरोगतं शीर्षविरेचनैरधोविरेचनैरूर्द्ध्वहरैस्तथोर्द्धजम् ॥१५॥
उपाचरेत् स्नेहगतं विरूक्षणैः प्रकल्पयेत् स्नेहविधिश्च रूक्षजे।
विबद्धविट्केऽनिलजे निरूहणं घृतन्तु पित्तानिलजे सतिक्तकम्॥१६
पयश्च मूर्च्छारतिदाहतर्षिते विशोधनीये तु समूत्रमिष्यते।
कफोत्थितं चारकटूष्णसंयुतैः समूत्रतक्रासवयुक्तिभिर्जयेत् ॥१७॥

ग्राम्यानूपं पिशितलवणं शुष्कशाकं नवान्नं
गौड़ं पिष्टं दधितिलकृतं विज्जलं मद्यमम्लम्।
धाना वल्लूरमशनमथो गुर्व्वसात्म्यं विदाहि
स्वप्नं रात्रौ श्वयथुगदवान् वर्ज्जयेन्मैथुनञ्च ॥१८॥

व्योषं त्रिवृच्चित्रककरोङ्घ्रिणी च सार्धोरजस्का त्रिफलारसेन।
पीतं कफोत्थं शमयेत्तु शोफं मूत्रेण गव्येन हरीतकी वा ॥१९॥
हरीतकीनागरदेवदारुसुखाम्बुयुक्तं सपुनर्नवं वा।
सर्वं पिबेत् त्रिष्वपि मूत्रयुक्तं स्नातश्च जीर्णे पयसाऽन्नमद्यात् ॥२०
पुनर्नवानागरसुस्तकल्कान् प्रस्थेन धीरः पयसोऽक्षमात्रान्।
मयूरकं मागधिकां समूलां सनागरां वा प्रपिबेत् सवाते ॥२१॥
दन्तीत्रिवृन्मूर्वाचित्रकैर्वा पयः शृतं दोषहरं पिबेद्वा।
द्विप्रस्थमात्रञ्च पलार्द्धिकैस्तैरर्द्धावशिष्टं पवने सपित्ते ॥२२॥
सशुण्ठि पीतद्रुरसं प्रयोज्यं श्यामोरुबूकोपपसाधितं वा।
त्वग्दारुवर्षाभुमहौषधैर्वा गुडूचिकानागरदन्तिभिर्वा ॥ २३ ॥
सप्ताहमोष्टं यदि वापि मासं पयः पिबेद्भोजनवारिवर्ज्जी।

गव्यं समूत्रं महिषीपयो वा क्षीराशनं मूत्रमथो गवां वा ॥२४॥
तक्रं पिबेद्वा गुदभिन्नवर्चाः सव्योषसौवर्चलमाक्षिकं वा ।
गुडाभया वा गुडनागरं वा सदीपभिन्नामविबद्धवर्चाः ॥२५॥
विड्वातसङ्गे पयसारुदैर्वा प्रागभुक्तमद्यादुरुवूकतैलम् ।
स्रोतोविबन्धेऽग्निरुचिप्रणाशेमद्यान्यरिष्टांश्चपिबेत्सुजातान् ॥२६
कण्डीरभल्लातकचित्रकांश्च व्योषं विडङ्गं बृहतीद्वयश्च ।
हिमस्थितं गोमयपावकेन द्रोणे पचेत् कूर्चिकमस्तुनस्तु ॥२७॥
त्रिभागशेषञ्च सुपूतशीतं द्रोणेन तत् प्राकृतमस्तुना च ।
सितोपलायाश्च शतेन युक्तं लिप्ते घटे चित्रकपिप्पलीनाम् ॥२८॥
यैर्वापयेत् स्थापितमादशाहात्प्रयोजयं स्त्वद्विनिहन्ति शोफान् ।
भगन्दरार्शःक्रिमिकुष्ठमेहान् वैवर्ण्यकार्श्यानिलहिक्कनश्च ॥२९॥
इति गण्डीराद्यरिष्टः ।

कालस्य धात्रीमरिचाभयानां द्राक्षाफलानाञ्च सपिप्पलीनाम् ।
शतं शतं जीर्णगुडात् तुलाञ्च संसृज्य कुम्भे मधुना प्रलिप्ते ॥३०॥
सप्ताहमुष्णे द्विगुणन्तु शीते स्थितं जलद्रोणयुतं पिबेद्वा ।
शोफान् विबन्धान् कफवातजांश्च सहन्त्यरिष्टोऽप्यतोऽग्निसञ्च३१
इति अरिष्टः ।

पुनर्नवे द्वे च बले सपाठे दन्तीं गुडूचीमथ चित्रकञ्च ।
निदिग्धिकाञ्च त्रिपलानि पक्त्वा द्रोणावशेषे सलिले ततस्तम् ३२
पूत्वा रसं द्वे च गुडात् पुराणात् तुले मधुप्रस्थयुतं सुशीतम् ।
मासं निदध्याद् घृतभाजनस्थं पले यवानां परितस्तु मासान्३३
चूर्णीकृतैरर्द्धपलांशिकैस्तै पत्रत्वगेलामरिचाम्बुलोहैः ।
गन्धान्वितं क्षौद्रघृतप्रदिग्धेर्जीर्णे पिबेद्याधिबलं समीक्ष्य ॥३४॥
हृत्पाण्डुरोग श्वयथुं प्रवृद्धं प्लीहभ्रमारोचकमेहगुल्मान् ।
भगन्दरं षड्जठराणि कासं श्वासं ग्रहण्यामयकुष्ठकण्डूः ॥३५॥
शाखानिलं बद्धपुरीषताञ्च हिक्कां किलासञ्च हलीमकञ्च ।

चिप्रं जयेदर्शःस्तथायुरोजस्तेजोन्वितोमांसरसान्नभोक्ता ॥ ३६ ॥

इति पुनर्नवाद्यरिष्टः।

फलत्रिक दीप्यकचित्रकौ च सपिप्पलीजोदरजोविडङ्गम्।
चूर्णीकृत कोड़विकं द्विरंशं चौद्रं पुराणस्य तुलां गुडस्य।
मासं निदध्यात् घृतभाजनस्थं यवेषु तानेव निहन्ति रोगान्॥३७

इति त्रिफलाद्यरिष्टः।

येवार्शसाम्पाण्डुविकारिणाञ्च प्रोक्ताः शुभाःशोफिषुतेऽप्यरिष्टाः।
कृष्णा सपाठा गजपिप्पली च निर्दिग्धिका चित्रकनागरे च ॥३८
सपिप्पलीमूलरजन्यजाजी मुस्तञ्च चूर्णं सुखतोयपीतम्।
हन्यात् विदोष चिरजञ्च शोथं कल्कश्च भूनिम्बमहौषधस्य ॥३९
अयोरजस्तूषणयावशूकं चूर्णञ्च पीतं त्रिफलारसेन।
चारद्वयं स्याल्लवणानि चत्वार्ययोरजो व्योषफलत्रिकञ्च ॥ ४० ॥
सपिप्पलीमूलविड़ङ्गसारं मुस्ताजमोदामरदारुविल्वम्।
कलिङ्गकाचित्रकमूलपाठं सयष्टिकञ्चातिविष पलांशम् ॥४१॥
सहिङ्गु कर्षस्तनुसूक्ष्मचूर्णं द्रोणं यथा मूलकशुण्ठिकानाम्।
स्याङ्गस्मनस्तत् सलिलेन साध्यमालोड्य यावद्घनमप्रदग्धम् ॥४२॥
स्थानं ततः कोलसमान्तु मात्रां कृत्वा सुशुष्कांविधिनाभजेत।
प्लीहोदराश्वित्रहलीमकांस्तु पाण्डामयारोचकशोषशोफान्।
विसूचिकागुल्मगराश्मरीश्च सश्वासकासाः प्रणुदेत् सकुष्ठाः ॥४३

इति चारगुड़िका।

प्रयोजवेदार्द्रकनागरं वा तुल्य गुडेनार्द्धपलाभिवृद्धा।
मात्रापल पञ्चपलानि मास जीर्णे पयो यूषरसान्नभोक्ता ॥४४॥
गुल्मोदरार्शःश्वयथुप्रमेहान् श्वासप्रतिश्यालसकाविपाकान्।
सकामलां शोषमनोविकारान्कासकफञ्चैव जयेत्प्रयोगः।४५॥

इति गुडार्द्रकप्रयोगः।

रसस्तथैवार्द्रकनागरस्य पेयोऽथ जीर्णे पयसाचमद्यात्।

·क्रेण वाप्यात् सघृतेन तेन भोज्यानि सिद्धामथवा यवागूम् ॥५६

इति चित्रकघृतम्।

जीवन्त्यजाजीशटिपुष्कराह्वैः सकारवीचित्रकबिल्वमध्यैः।
यवाशूकैर्बदरप्रमाणैर्द्वाम्लयुक्ता घृततैलभृष्टाः ॥५७॥
अर्शोऽतिसारानिलगुल्मशोफहृद्रोगमन्दाग्निहिता यवागूः।
पञ्चकोलैर्विधिनैव तेन सिद्धा भवेत् सा च समा तथैव ॥५८॥
कुलत्थयूषश्च सपिप्पलीको मौद्गश्च सव्योषयवायवशूकः।
रसाश्च विष्किरजाङ्गलानां सकूर्मगोधाशिखिशल्लकानाम् ॥५९॥
सुवर्चिका टङ्कनकं पटोलं सवायसीमूलकनीलनिम्बम्।
पाकार्थिनां शाकमतिप्रशस्तं भोज्यं पुराणश्च यवः सशालिः ॥६०
आभ्यन्तरं भेषजमुक्तमेतद् बहिर्हितं यच्छृणु तद्यथावत्।
लेपान् प्रदेहान् परिषेचनानि स्वेदांश्च वातप्रबलांश्च कुर्य्यात् ६१
शैलेयकुष्ठागुरुदारुकौन्तीत्वक्पद्मकैलाम्बुपलाशमुस्तैः।
प्रियङ्गुथौणेयकहेममांसीतालीशपत्रप्लवपत्रधान्यैः ॥६२॥
श्रीवेष्टकध्यामकपिप्पलीभिः स्पृक्कानखैश्चैव यथोपलाभम्।
वातान्वितेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम् ॥६३॥

इति शैलेयाद्यं तैलम्।

सलैव वासार्ककरञ्जशिग्रुकाश्मर्य्यपत्रार्जकजैश्च सिद्धैः।
स्विन्नोऽम्बुभिर्वितततोय स्नातश्च गन्धैरनुलेपनीयः ॥६४॥
सवेतसाः क्षीरवतां द्रुमाणां त्वचः समञ्जिष्ठलताम्बुणालाः।
सचन्दनाः पद्मकबालकौ च पैत्ते प्रदेहस्तु सतैलपाकः ॥६५॥
आम्रस्य तेनाम्बुर्विप्रतप्तं सचन्दनं साभयपद्मकञ्च।
स्नाने मतं क्षीरवतां कषायः क्षीरोदकं चन्दनलेपनञ्च ॥६६॥
कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनञ्च ॥६७॥
विभीतकानां फलमध्यलेपः सर्वेषु दाहार्त्तिहरः प्रलेपः।

मध्वाज्यमुस्तैः सकपित्थपत्रैः सचन्दनैस्तत् पिडकासु लेपः ॥६९
रास्नात्वचाकैटर्यविडङ्गशिग्रुपुत्रञ्जीवा मूषिककर्णिका च।
निर्माजनो ग्राह्यनघः मदूर्वा सुवर्चला तिक्तकरोहिणी च ॥६
सक्षारमाषो हस्ती सकुष्ठा पुनर्नवाचित्रकनागरं च।
उन्मर्दने शोफिषु मूत्रपिष्टं शस्तस्तथा मूलकतोयसेकः ॥७०॥
शोफास्तु गात्रावयवाश्रिता ये ते स्थानदूष्याकृतिनामभेदात्।
अनेकसंख्याः कतिचिच्च तेषां निदर्शनार्थं शृणु चोच्यमानान् ॥७१
दोषास्त्रयः स्वैः कुपिता निदानैः कुर्वन्ति शोफान् शिरसः सुघोरा
अन्तर्गले घुर्घुरिकान्वितश्च शालूकमुच्छ्वासनिरोधनानि ॥७२॥
गलस्य मध्ये चिबुके गले च सदाहरागश्वसनास्तु शोफः।
शोफोऽभ्यार्त्तिस्तु विडालिका स्याद्धन्वास्तले चेद्वलयीकृता स्यात् ॥७३
स्यात्तालुविद्रध्यपि दाहरोगैर्युता भवेत्तालुनि सा त्रिदोषात्।
जिह्वोपरिष्टादुपजिह्विका स्यात् कफादधस्तादधिजिह्विका च ॥७४
यो दन्तमांसेषु तु रक्तपित्तात् पाकोभवेत् सोपकुशः प्रदिष्टः।
स्याद्दन्तविद्रध्यपि दन्तमांसे शोफः कफाच्छोणितसंश्रयोत्थः ॥७५॥
गलस्य पार्श्वे गलगण्ड एकः स्याद्गण्डमाला बहुभिस्तु गण्डैः।
साध्याः स्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वसाध्याः ७६
येषां शिराकायशिरोविरेको धूमः पुराणस्य घृतस्य पानम्।
सलङ्घनं वक्त्रभवेषु चापि प्रधर्षणं स्यात् कवलग्रहश्च ॥७७॥
अङ्गैकदेशेष्वनिलादिभिः स्यात् स्वरूपधारी स्फुरणः शिराभिः।
ग्रन्थिर्मसान्मांसभवस्त्वनर्त्तिर्मेदोभवः स्निग्धतमश्चलश्च ॥७८॥
तं शोधितं स्वेदितमश्मकाष्ठैः साङ्गुष्ठदण्डैर्विनयेदपक्वम्।
विपाट्य चोद्धृत्य भिषक् ससकोषं शस्त्रेण दग्ध्वा व्रणवच्चिकित्सेत् ॥७९
अदग्ध ईषत् परिशेषितश्च प्रयाति भूयोऽपि शनैर्विवृद्धिम्।
तस्मादशेषः कुशलैः समन्ताच्छेद्यो भवेद्रक्ष्य शरीरदेशान् ॥८०॥
शेषे कृते पाकवशेन शोथोऽततश्चतोऽस्य प्रसर्पेद्विसर्पः।

उपद्रवं तं प्रतिवार्य्य तज्ज्ञः स्वैर्भेषजैः पूर्ब्बतरैर्यथोक्तैः ॥८१॥
ततः क्रमेणास्य यथाविधानं व्रणं व्रणज्ञस्त्वरया चिकित्सेत्।
विवर्जयेत् कुक्ष्युदराश्रितञ्च तथा गले मर्मणि संश्रितञ्च ॥८२॥
स्थूलः खरश्चापि भवेद्विवर्ज्यो यश्चापि बालस्थविराबलानाम्।
ग्रन्थ्यर्ब्बुदानाञ्च यतोऽविशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः ॥८३॥
ततश्चिकित्सेद्भिषगर्ब्बुदानि विधानविद् ग्रन्थिचिकित्सितेन।
ताम्रा सशूला पिड़कासवेद् या सा त्वालजीनामपरिस्रुतास्याद८४
शोफः क्षतश्चर्म्मनखान्तरे स्यान्मांसास्रदूषी श्वयथौग्रपाकः।
ज्वरान्विता वह्निकचजा या वर्त्तिर्निरर्त्तिः कठिनायता च ॥८५
विदारिका सा कफमारुताभ्यां तेषां यथादोषमुपक्रमः स्यात्।
विस्रावणं पिण्डिकयोपनाहः पक्वेषु चैव व्रणवच्चिकित्सा ॥८६॥
विस्फोटकाः सर्व्वशरीरजाः स्युः स्फोटास्तु रागज्वरतर्षयुक्ताः।
यज्ञोपवीतप्रतिमाः प्रभूताः पित्तानिलाल्लाजनिभास्तु कक्षाः ॥८७
याश्चापराः स्युः पिड़काःप्रकीर्णाः स्थूलाल्पमध्या अपि पित्तजास्ताः
सर्व्वत्र गात्रेषु मसूरमात्रा मसूरिकाः पित्तकफात् प्रदिष्टाः ॥८८॥
विसर्पयात्यै विहिता क्रिया या तां तासु कुर्य्येषु हितां विदध्यात्।
प्रशान्तिलाद्यैश्च व्रणे स्वलिङ्गैरन्यान् निरर्त्ति प्रविशेन्मुहुश्च ॥८९॥
मूलेण पूर्वं मृदुमेदसा तु स्निग्धञ्च विद्यात् कठिनञ्च शोथम्।
विरेचनाभ्यङ्गनिरूहलेपाः पक्वेषु चैव व्रणवच्चिकित्सा ॥९०॥
स्याम्भूतसेकः कफजं विपाच्य विशोध्य सीव्यं व्रणवच्च पक्कम्।
क्लिम्यस्विसूक्ष्मचयनव्यवायप्रवाहणान्युत्कटुकाश्वपृष्ठैः ॥९१॥
गुदस्य पार्श्वे पिडका भृशार्त्तिः पक्वप्रभिन्ना तु भगन्दरः स्यात्।
विरेचनस्त्रैषणपाटनञ्च विशुद्धमार्गस्य च तैलदाहः ॥ ९२ ॥
स्यात् चारसूत्रेण सुपाचितेन छिन्नस्य चास्य व्रणवच्चिकित्सा।
जङ्घासुपिण्डीप्रपदोपरिष्टात् स्यात् श्लीपदं मांसकफास्रदोषात्९३
शिराकफघ्नश्च विधिः समग्रस्तत्रेष्यते सर्षपलेपनञ्च।

मन्दास्तु पित्तप्रबलाः प्रदिष्टा दोषाः सुतीव्रं तनुरक्तपाकम् ॥८
कुर्वन्ति शोथं ज्वरतर्षयुक्तं विसर्पणं जालकगर्दभाख्यम् ।
विलङ्घनं रक्तविमोचणञ्च विरूक्षणं कायविरेचनञ्च ॥ ८५ ॥
धात्रीप्रयोगान् शिशिरान् प्रदेहान् कुर्य्यात् सदा जालकगर्दभे ॥ ८
एवंविधांश्चाप्यपरान् निगम्य शोथप्रकाराननिलादिलिङ्गैः ॥८६
शान्तिं नयेद्दोषहरैर्यथास्वमालेपनच्छेदनभेददाहैः ।
प्रायोऽभिघातादनिलः सरक्तः शोथं सरागं प्रकरोति तत्र ।
वीसर्पवन्मारुतरक्तनुच्च कार्य्यं विपक्वे विपजे च कर्म ॥८७॥
भवति चात्र । त्रिविधस्य दोषभेदात् सर्वार्द्धावयवगात्रभेदाच्च ।
श्वयथोर्द्विविधस्य तथा लिङ्गानि चिकित्सितञ्चोक्तम् ॥८८॥

---

## अष्टादशोऽध्यायः ।

### उदरचिकित्सितम् ।

सिद्धविद्याधराकीर्णे कैलासे नन्दनोपमे ।
तप्यमाने तपस्तीव्रं साक्षाद्धर्ममिव स्थितम् ॥१॥
आयुर्वेदविदां श्रेष्ठं भिषग्विद्याप्रवर्त्तकम् ।
पुनर्वसुं जितात्मानमग्निवेशोऽब्रवीद्वचः ॥२॥
भगवन्नुदरैर्दुःखैर्दृश्यन्ते ह्यर्दिता नराः ।
शुष्कवक्त्राः कृशैर्गात्रैराध्मातोदरकुक्षयः ॥ ३ ॥
प्रनष्टाग्निबलाहाराः सर्वचेष्टास्वनीश्वराः ।
दीनाः प्रतिक्रियाभावाज्जह्वतोऽसूननाथवत् ॥ [redacted] ॥
तेषामायतनं संख्यां प्राग्रूपाकृतिभेषजान् ।
यथावज्ज्ञातुमिच्छामि गुरुणा सम्यगीरितम् ॥५॥
सर्वभूतहितायर्षिः शिष्येणैवं प्रचोदितः ।
सर्वभूतहितं वाक्यं व्याहर्त्तुमुपचक्रमे ॥ ६ ॥

अग्निदोषान्मनुष्याणां रोगसङ्घाः पृथग्विधाः।
मलवृद्ध्या प्रवर्त्तन्ते विशेषेणोदराणि तु ॥ ७ ॥
मन्देऽग्नौ मलिनैर्भुक्तैरपाकाद्दोषसञ्चयः।
प्राणाग्न्यपानान् संदूष्य मार्गान् बद्धोत्तरोत्तरान् ॥८॥
त्वङ्मांसान्तरमागम्य कुक्षिमाध्मापयन् भृशम्।
जनयत्युदरं तस्य हेतुं शृणु सलक्षणम् ॥९॥
अत्युष्णलवणक्षारविदाह्यम्लरसाशनात्।
मिथ्यासंसर्जनाद्रूक्षविरुद्धाशुचिभोजनात् ॥१०॥
प्लीहार्शो ग्रहणीदोषकर्षणात् कर्मविभ्रमात्।
क्लिष्टानामप्रतीकाराद्रौक्ष्याद्वेगविधारणात् ॥११॥
स्रोतसां दूषणादामात् संक्षोभादतिपूरणात्।
अर्शोवलिगणक्रोधादन्त्रस्फुटनभेदनात् ॥१२॥
अतिसञ्चितदोषाणां पापं कर्म च कुर्वताम्।
उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः ॥१३॥
क्षुन्नाशः स्वाद्वतिस्निग्धगुर्वन्नं पच्यते चिरात्।
भुक्तं विदह्यते सर्वं जीर्णाजीर्णं न वेत्ति च ॥१४॥
सहते नातिसौहित्यमीषच्छोफश्च पादयोः।
शश्वद्बलक्षयोऽल्पेऽपि व्यायामे श्वासश्चरति ॥१५॥
पुरीषनिचयो रूक्षविदाहावर्तकता च रुक्।
वस्तिसन्धौ रुगाध्मानं वर्धते पाट्यतेऽपि च ॥१६॥
आतन्यते च जठरमपि लघ्वल्पभोजनात्।
राजीजन्म वलीनाश इति लिङ्गं भविष्यताम् ॥१७॥
रुद्ध्वा स्वेदाम्बुवाहानि दोषाः स्रोतांसि सञ्चिताः।
प्राणापानान् हि संदूष्य जनयन्त्युदरं नृणाम् ॥१८॥
कुक्षेराध्मानमाटोपः शोफः पादकरस्य च।
मन्दोऽग्निः श्लक्ष्णगण्डत्वं कार्श्यं चोदरलक्षणम् ॥१९॥

पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ।
सम्भवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ॥२०॥
रूक्षाल्पभोजनायासवेगोदावर्तकर्शनैः ।
वायुः प्रकुपितः कुक्षिहृद्बस्तिगुदमार्गगः ॥२१॥
हत्वाग्निं कफमुद्धूय तेन रुद्धगतिस्ततः ।
आचिनोत्युदरं जन्तोस्त्वङ्मांसान्तरमाश्रितः ॥२२॥

तस्य रूपाणि—कुक्षिपाणिपादवृषणश्वयथुरुदरविपाटनमनियतौ च वृद्धिह्रासौ कुक्षिपार्श्वशूलोदावर्ताङ्गमर्दपर्वभेदशुष्ककासकार्श्यदौर्बल्यारोचकाविपाका अधोगुरुत्वं वातवर्चोमूत्रसङ्गः श्यावारुणत्वं नखनयनवदनत्वङ्मूत्रवर्चसामपि चोदरं तनु कृष्णसिराजालसन्ततमाहतमाध्मातदृतिशब्दवद्भवति । वायुश्चोर्ध्वमधस्तिर्यक् च सशूलशब्दश्चरति एतद्वातोदरं विद्यात् ॥ २३ ॥

कट्वम्ललवणात्युष्णतीक्ष्णाग्न्यातपसेवनैः ।
विदाह्यध्यशनाजीर्णैश्चाशु पित्तं समाचितम् ॥२४॥
प्राप्यानिलकफौ रुद्ध्वा मार्गमुन्मार्गमास्थितम् ।
निहन्त्यामाशये वह्निं जनयत्युदरं ततः ॥२५॥

तस्य रूपाणि—दाहज्वरतृष्णामूर्च्छातीसारभ्रमाः कटुकास्यत्वं हरितहारिद्रत्वं नखनयनवदनत्वङ्मूत्रवर्चसामपि चोदरं नीलपीतहारिद्रहरितताम्रराजीसिरावनद्धं दह्यते दूयते धूप्यते उष्मायते स्विद्यते क्लिद्यते मृदुस्पर्शं क्षिप्रपाकं च भवति एतत् पित्तोदरं विद्यात् ॥ २६ ॥

अव्यायामदिवास्वप्नस्वाद्वतिस्निग्धपिच्छिलैः ।
दधिदुग्धोदकानूपमांसैश्चाप्युपसेवितैः ॥२७॥
क्रुद्धेन श्लेष्मणा स्रोतःस्वावृतेष्वावृतोऽनिलः ।
तमेव पीडयन् कुर्यादुदरं बहिरन्वगः ॥२८॥

तस्य रूपाणि—गौरवारोचकाविपाकाङ्गमर्दसुप्तिपाणि-पादमुष्कोरुशोफोत्क्लेशनिद्राकासश्वासाः शुक्लत्वञ्च नखनयन-वदनत्वङ्मूत्रवर्चसामपि चोदरं शुक्लराजीशिरासन्ततं गुरु स्तिमितस्थिरं कठिनञ्च भवति एतत् श्लेष्मोदरं विद्यात् ॥ २८ ॥

दुर्बलाग्नेरपथ्यामविरोधिगुरुभोजनात्।
स्त्रीदत्तैश्च रजोरोमविण्मूत्रास्थिनखादिभिः ॥ ३० ॥
विषैश्च मन्दैर्वाताद्याः कुपिताः सञ्चितास्त्रयः।
शनैः कोष्ठे प्रकुर्वन्तो जनयन्त्युदरं नृणाम् ॥ ३१ ॥

तस्य रूपाणि—सर्वेषामेव दोषाणां समस्तानि लिङ्गान्युप-लभ्यन्ते,वर्णाश्च नखादिषु उदरमपि नानावर्णराजीशिरासन्ततं भवति एतत् सन्निपातोदरं विद्यात् ॥ ३२ ॥

अशितस्यातिसंक्षोभाद्यानयानातिचेष्टितैः।
अतिव्यवायभाराध्ववमनव्याधिकर्षणैः ॥ ३३ ॥
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानात् प्रवर्द्धते।
शोणितं वा रसादिभ्यो विवृद्धं तं विवर्द्धयेत् ॥ ३४ ॥

इति तस्य प्लीहा कठिनोऽष्ठीलेवादौ वर्द्धमानः कच्छप-संस्थान उपलभ्यते स चोपेक्षितः क्रमेण कुक्षिं जठरमग्न्यधि-ष्ठानञ्च परिक्षिपन्नुदरमभिनिर्वर्त्तयति ॥ ३५ ॥

तस्य रूपाणि—दौर्बल्यारोचकाविपाकवर्चोमूत्रग्रहतमः पिपासाङ्गमर्दच्छर्दिमूर्च्छाङ्गसादकासश्वासमृदुज्वरानाहाग्नि-नाशकार्श्यास्यवैरस्यपर्वभेदकोष्ठवातशूलान्यपि चोदरमरुणवर्णं विवर्णं वा नीलहरितहारिद्रराजिमच्च भवति एवमेव यकृदपि दक्षिणपार्श्वस्थं कुर्य्यात् तुल्यहेतुलिङ्गौषधत्वात् तस्य प्लीहज्जठर एवावरोधः इत्येतद् यकृत्प्लीहोदरं विद्यात् ॥ ३६ ॥

पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे।
उदावर्त्तैस्तथार्शोभिरन्त्रसंमूर्च्छनेन वा ॥ ३७ ॥

अपानो मार्गसंरोधाद्धत्वाग्निं कुपितोऽनिलः।
वर्चःपित्तकफान् रुद्ध्वा जनयत्युदरं ततः॥ ३८॥

तस्य रूपाणि—तृष्णादाहज्वरमुखतालुशोषोरुसादकासश्वासदौर्बल्यारोचकाविपाकवर्चोमूत्रसङ्गाध्मानच्छर्दिक्षवथुशिरोहृन्नाभिगुदशूलान्यपि चोदरं मूढवातं स्थिरमरुणं नीलराजिशिरावनद्धमराजिकं वा प्रायो नाभ्युपरि गोपुच्छवदभिनिवर्त्तत इत्येतद्बद्धगुदोदरं विद्यात्॥ ३९॥

शर्करातृणकाष्ठास्थिकण्टकैरन्नसंयुतैः।
भिद्येतान्त्रं यदा भुक्तैर्जृम्भयात्यशनेन वा॥ ४०॥
स्यात् पाकस्तस्तेभ्यश्छिद्रेभ्यः प्रस्रवन् बहिः।
पूरयन् गुदमन्त्रस्तु जनयत्युदरं ततः॥ ४१॥

इति तदधो नाभ्याः प्रायोऽभिनिवर्त्तमानमुदकोदरस्य च यथाबलञ्च दोषाणां रूपाणि दर्शयत्यपि चातुरः स लोहितनीलपीतपिच्छिलकुणपगन्धामवर्चं उपवेश्यते हिक्काश्वासकासतृष्णाप्रमेहारोचकाविपाकदौर्बल्यपरीतश्च भवति एतच्छिद्रोदरं विद्यात्॥ ४२॥

स्नेहपीतस्य मन्दाग्नेः क्षीणस्यातिकृशस्य वा।
अत्यम्बुपानान्नष्टेऽग्नौ मारुतः क्लोम्नि संस्थितः॥ ४३॥
स्रोतःसु रुद्धमार्गेषु कफश्चोदकमूर्च्छितः।
वर्द्धयेतां तदेवाम्बु स्वस्थानादुदराय तौ॥ ४४॥

तस्य रूपाणि। अनन्नकाङ्क्षापिपासागुदस्रावशूलश्वासकासदौर्बल्यान्यपि चोदरं नानावर्णराजिशिरासन्ततमुदकपूर्णदृतिक्षोभसंस्पर्शं भवति एतदुदकोदरं विद्यात्॥ ४५॥

तत्र अचिरोत्पन्नमनुपद्रवमनुदकमप्रमाणमुदरं त्वरमाणश्चिकित्सेदुपेक्षितानां ह्येषां दोषाः स्वस्थानादपावृत्ता अपरिपाकाद्द्रवीभूताः सन्धीन् स्रोतांसि चोपक्लेदयन्ति स्वेदश्च बाह्येषु

स्रोतःसु प्रतिहतगतिस्तिर्य्यगवतिष्ठमानस्तदेवोदकमाप्याययति॥ ४६॥

तत्र पिच्छोत्पत्तौ मण्डलमुदरं गुरुस्तिमितमाकोठितमशब्दं मृदुस्पर्शमपगतराजीकमाक्रान्तं नाभ्यां सर्पतीति। ततोऽनन्तरं उदकप्रादुर्भावः।—तस्य रूपाणि कुक्षेरतिमात्रवृद्धिः शिरान्तर्द्धानगमनमुदकपूर्णदृतिसंक्षोभसंस्पर्शश्च॥ ४७॥

तदातुरमुपद्रवाः स्पृशन्ति छर्द्यतीसारतमकतृष्णाश्वासकासहिक्कादौर्बल्यपार्श्वशूलारुचिस्वरभेदमूत्रसङ्गादयस्तथाविधमचिकित्स्यं विद्यादिति॥ ४८॥

भवति चात्र।

वातात् पित्तात् कफात् प्लीह्नः सन्निपातात् तथोदकात्।
परस्परं कृच्छ्रतरमुदरं भिषगादिशेत्॥ ४९॥
पक्षाद्वद्धगुदन्तूर्द्ध्वं सर्व्वं जातोदकं यथा।
प्रायो भवत्यभावाय छिद्रान्त्रञ्चोदरं नृणाम्॥ ५०॥
शूनाक्षं कुटिलोपस्थमपक्लिन्नतनुत्वचम्।
बलशोणितमांसाग्निपरिक्षीणञ्च संत्यजेत्॥ ५१॥
श्वयथुः सर्व्वमर्म्मोत्थः श्वासो हिक्कारुचिः सतृट्।
मूर्च्छाच्छर्द्यतिसारश्च निहन्त्युदरिणं नरम्॥ ५२॥
जन्मनैवोदरं सर्व्वं प्रायः कृच्छ्रतमं मतम्।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम्॥५३॥

अजातजललक्षणमाह।

अशोथमरुणाभासं सशब्दं नातिभारिकम्।
सदा गुड़गुडायन्तं शिराजालगवाक्षितम्॥५४॥
नाभिं विष्टभ्य पायौ तु वेगं कृत्वा प्रणश्यति।
हृन्नाभिवङ्क्षणकटीगुदप्रत्येकशूलिनः॥५५॥
कर्कशं सृजतो वातं नातिमन्दे च पावके।

मूत्रेऽल्पे संहतविषि लालया विरसे मुखे ॥५६॥
अजातोदकमित्येतैर्लिङ्गैर्विज्ञाय तत्त्वतः।
उपक्रमेत् भिषग्दोषबलकालविशेषवित् ॥५७॥
वातोदरे बलवतः पूर्वं स्नेहैरुपाचरेत्।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम् ॥५८
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम्।
तथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः ॥५९॥
दोषातिमात्रोपचयात् स्रोतसां सन्निरोधनात्।
सम्भवन्त्युदराण्येवमतो नित्यं विशोधयेत् ॥६०॥
शुद्धं संसृज्य च क्षीरं बलार्थं पाययेत् तु तम्।
प्रागुत्क्लेशान्निवर्त्यं च बले लब्धे क्रमात् पयः ॥६१॥
यूषै रसैर्वा मन्दाम्ललवणैः रोधितानलम्।
सोदावर्त्तं पुनः स्निग्धं स्विन्नमास्थापयेन्नरम् ॥६२॥
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्त्तिषु।
दीप्ताग्निं बद्धविड्वातं रूक्षमप्यनुवासयेत् ॥६३॥
तीक्ष्णाधोभागयुक्तः स्यान्निरूहो दाशमूलिकः।
वातघ्नाम्लशृतैरण्डतिलतैलानुवासनः ॥६४॥
अविरेच्यन्तु यं विद्याद्दुर्बलं स्थविरं शिशुम्।
सुकुमारं प्रकृत्याल्पदोषं वातोल्बणानिलम् ॥६५॥
तं भिषक् शमनैः सर्पिर्यूषमांसरसौदनैः।
वस्त्यभ्यङ्गानुवासैश्च क्षीरैश्चोपाचरेद्बुधः ॥ ६६ ॥
पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत्।
दुर्बलन्त्वनुवास्यादौ शोधयेत् क्षीरवस्तिना ॥६७॥
सञ्जातबलकायाग्निं पुनः स्निग्धं विरेचयेत्।
पयसा सत्रिवृत्कल्केनोरुवूकशृतेन वा ॥ ६८ ॥
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा।

सकफे वा समूत्रेण सवाते तिक्तसर्पिषा ॥६८॥
पुनः क्षीरप्रयोगश्च वस्तिकर्म विरेचनम्।
क्रमेण ध्रुवमातिष्ठन् युक्तः पित्तोदरं जयेत् ॥७०॥
स्निग्धं स्विन्नं विशुद्धन्तु कफोदरिणमातुरम्।
संसर्जयेत् कटुक्षारयुक्तैरन्नैः कफापहैः ॥७१॥
गोमूत्रारिष्टपानैश्च चूर्णायस्कृतिभिस्तथा।
सक्षारैस्तैलपानैश्च शमयेत् तु कफोदरम् ॥७२॥
सन्निपातोदरे सर्वा यथोक्ताः कारयेत् क्रियाः।
सोपद्रवन्तु निर्वृत्तं प्रत्याख्येयं विजानता ॥७३॥
उदावर्त्तरुजानाहैर्दाहमोहतृषाज्वरैः।
गौरवारुचिकाठिन्यैश्चानिलादीन् यथाक्रमम् ॥७४॥
लिङ्गैः प्लीहोदरान् दृष्ट्वा रक्तं वापि स्वलक्षणैः।
चिकित्सां संप्रकुर्वीत यथादोषं यथाबलम् ॥७५॥
स्नेहं स्वेदं विरेकञ्च निरूहमनुवासनम्।
समीक्ष्य कारयेद्बाहौ वामे वा व्यधयेच्छिराम् ॥७६॥
षट्पलं वा पिबेत् सर्पिः पिप्पलीर्वा प्रयोजयेत्।
सगुडामभयां वापि क्षारारिष्टगणांस्तथा ॥७७॥
पिप्पली नागरं दन्ती चित्रकं द्विगुणाभयम्।
विडङ्गांशयुतं चूर्णमेतदुष्णाम्बुना पिबेत् ॥७८॥
विडङ्गं चित्रकं शक्तीं सघृतां सैन्धवं वचाम्।
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं भवेत् ॥७९॥
रोहीतकलतानान्तु काण्डकाः साभया जले।
मूत्रे वा शतमेतञ्च सप्तरात्रस्थितं पिबेत् ॥८०॥
कामलागुल्ममेहार्शःप्लीहसर्वोदरक्रिमीन्।
तद्धन्यान्माड्गलसंजीर्णे स्वाचात्र भोजनम् ॥८१॥
रोहीतकत्वचः कृत्वा पलानां पञ्चविंशतिम्।

कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ ८२ ॥
पाक्षिकैः पञ्चकोलैस्तु तैः सर्वैश्चापि तुल्यया ।
रोहीतकत्वचा पिष्टैः घृतप्रस्थं विपाचयेत् ॥ ८३ ॥
प्लिहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम् ।
तथा गुल्मोदरश्वासक्रिमिपाण्डुत्वकामलाः ॥ ८४ ॥
अग्निकर्म च कुर्वीत भिषग्वातकफोल्बणे ।
पैत्तिके जीवनीयानि सर्पींषि क्षीरबस्तयः ॥ ८५ ॥
रक्तावसेकः संशुद्धिः क्षीरपानञ्च शस्यते ।
यूषैर्मांसरसैश्चापि दीपनीयसमायुतैः ॥ ८६ ॥
लघून्यन्नानि संसृज्य भजेत् प्लीहोदरी नरः ।
स्विन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम् ॥ ८७ ॥
सतैललवणं दद्यान्निरूहं सानुवासनम् ।
परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम् ॥ ८८ ॥
उदावर्त्तहरं कर्म कार्यं वातघ्नमेव च ।
छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत् ॥ ८९ ॥
जातं जातं जलं स्राव्यमेवं तद् यापयेद्भिषक् ।
तृष्णाकासज्वरार्त्तन्तु क्षीणमांसाग्निभोजनम् ॥ ९० ॥
वर्जयेच्छ्वासिनं तद्वच्छूलिनं दुर्बलेन्द्रियम् ।
सर्वां दोषे यथावस्थं विदध्यादुदकोदरे ॥ ९१ ॥
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ।
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ॥ ९२ ॥
द्रवेभ्यश्चोदकादिभ्यो नियच्छेदनुपूर्वशः ।
सर्वमेवोदरं प्रायो दोषसङ्घातजं मतम् ॥ ९३ ॥
तस्मात् त्रिदोषशमनीं क्रियां सर्वेषु कारयेत् ।
दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति ॥ ९४ ॥

रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगद्विजान् ॥ ९५ ॥
पयोमूत्रासवारिष्टान् मधु शीधुंस्तथा सुराम् ।
यवागूमोदनं वापि यूषैरद्यात्ससैरपि ॥ ९६ ॥
मन्दाम्लस्नेहकटुभिर्यच्च मूलोपसाधितैः ।
श्रौदकानूपजं मांसं शाकं पिष्टकृतं तिलान् ॥ ९७ ॥
व्यायामाध्वदिवास्वप्नं यानयानञ्च वर्जयेत् ।
तथोष्णलवणाम्लानि विदाहीनि गुरूणि च ॥ ९८ ॥
नाद्यादन्नानि जठरी तोयपानञ्च वर्जयेत् ।
नातिसान्द्रं मतं पाने स्वादु तक्रमपेलवम् ॥ ९९ ॥
त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरी ।
वातोदरी पिबेत् तक्रं पिप्पलीलवणान्वितम् ॥ १०० ॥
शर्करामधुकोपेतं स्वादु पित्तोदरी पिबेत् ।
यमानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ॥ १०१ ॥
पिबेन्मधुयुत तक्रं व्यक्ताम्लं नातिपेलवम् ।
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ॥ १०२ ॥
युक्तं प्लीहोदरी जातं सव्योषन्तूदकोदरी ।
बद्धोदरी तु ह्वुषायमान्यजाजीसैन्धवैः ॥ १०३ ॥
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ।
गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम् ॥ १०४ ॥
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते ।
शोफानाहार्त्तितृष्णामूर्च्छापीडिते कारभं पयः ॥ १०५ ॥
शुद्धानां क्षामदेहानां गव्यं छागं समाहिषम् ।
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ॥ १०६ ॥
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं समैः ।
वृश्चिकालीं वचां कुष्ठं पञ्चमूलीं पुनर्नवाम् ॥ १०७ ॥
भूतीकं नागरं धान्यं जले पक्त्वावसेचयेत् ।

पलाशं कत्तृणं रास्ना तद्वद् पक्त्वावसेचयेत् ॥ १०८ ॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ।
रूक्षाणां बहुवातानां तथा संशोधनार्थिनाम् ॥ १०९ ॥
दीपनीयानि सर्पींषि जठरघ्नानि वक्ष्यते ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥ ११० ॥
सक्षारैरर्धपलिकैर्द्विप्रस्थं सर्पिषः पचेत् ।
कल्कैर्द्विपञ्चमूलस्य तुलार्धस्य रसेन च ॥ १११ ॥
दधिमण्डाढकोपेतं तत् सर्पिर्जठरापहम् ।
श्वयथुं वातविष्टम्भं गुल्मार्शांसि च नाशयेत् ॥ ११२ ॥

इति पञ्चकोलघृतम् ।

नागरत्रिफलाप्रस्थं घृततैलात् तथाढकम् ।
मस्तुनः साधयित्वैतत् पिबेत् सर्वोदरापहम् ।
कफमारुतसम्भूते गुल्मे चैतत् प्रशस्यते ॥ ११३ ॥

इति नागरघृतम् ।

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ ११४ ॥

इति चित्रकघृतम् ।

यवकोलकुलत्थानां पञ्चमूलरसेन च ।
सुरासौवीरकाभ्यां च सिद्धं वापि पिबेद्घृतम् ॥ ११५ ॥

इति यवाद्यघृतम् ॥

एभिः स्निग्धाय संजाते बले शान्ते च मारुते ।
स्रस्ते दोषाशये दद्यात् कल्पदृष्टं विरेचनम् ॥११६॥
पटोलमूलरजनीविडङ्गत्रिफलात्वचम् ।
काम्पिल्लकं नीलिनीं च त्रिवृतां चेति चूर्णयेत् ॥११७॥
षडाद्यान् कार्षिकानन्त्यांस्त्रीन् द्वित्रिचतुरुत्तरान् ।
कृत्वा चूर्णमतो मुष्टिं गवां मूत्रेण वा पिबेत् ॥११८॥

विरिक्तो मृदु गृह्णीत भोजनं जाङ्गलै रसैः।
मण्डपेयाञ्च पीत्वा वा सव्योषं षड़ङ्गं पयः॥११८॥
शृतं पिबेत् ततश्चूर्णं पिबेदेवं पुनःपुनः।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि।
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति॥ १२०॥
इति पटोलाद्यं चूर्णम्॥

यवानीं,शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम्।
पिबेद्द्राचाम्बुगोमूत्रकोलकर्कन्धुसीधुभिः॥ १२१॥
यमानी हवुषा धान्यं त्रिफला चोपकुञ्चिका।
कारवी पिप्पलीमूलमजगन्धा शटी वचा॥ १२२॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम्॥ १२३॥
विड़ङ्गञ्च समांशानि दन्त्या भागास्त्रयस्तथा।
त्रिवृद्विशालयोर्द्वौ द्वौ सातला स्याच्चतुर्गुणा॥१२४॥
एतन्नारायणं नाम चूर्णं रोगगणापहम्।
नैतत् प्राप्याभिवर्त्तन्ते रोगा विष्णुमिवासुराः॥१२५॥
तक्रेणोदरिभिः पेयं गुल्मिभिर्वदराम्बुना।
आनद्धवाते सुरया वातरोगे प्रसन्नया॥ १२६॥
दधिमण्डेन विट्सङ्गे दाड़िमाम्बुभिरर्शसैः।
परिकर्त्ते सवृक्षाम्लमुष्णाम्बुभिरजीर्णके॥ १२७॥
भगन्दरे पाण्डुरोगे श्वासे कासे गलग्रहे।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्दानले ज्वरे॥ १२८॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम्॥ १२९॥
इति नारायणचूर्णम्।

हवुषा काञ्चना चीरी त्रिफला कटुरोहिणी।

शौलिनी त्रायमाणा च शातला त्रिवृता वचा ॥१३०॥
सैन्धवं काललवणं पिप्पली चेति चूर्णयेत् ।
दाड़िमत्रिफलामांसरसमूत्रसुखोदकैः ॥१३१॥
पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च ।
कुष्ठे श्विन्ने सङ्गके सवाते विषमाग्निषु ॥ १३२ ॥
शोथार्शःपाण्डुरोगेषु कामलासु हलीमके ।
वातं पित्तं कफञ्चाशु विरेकात् संप्रसाधयेत् ॥ १३३ ॥
इति हबुषाद्यं चूर्णम् ।
शौलिनी निचुलं व्योषं द्वौ क्षारौ लवणानि च ।
चित्रकञ्च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥ १३४ ॥
इति निलीन्याद्यं चूर्णम् ।
क्षीरद्रोणं सुधाक्षीरप्रस्थार्द्धसहितं दधि ।
जातं विमथ्य तद्युक्त्या त्रिवृत्सिद्धं पिबेद् घृतम् ॥१३५॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ।
स्नुक्क्षीरपलकल्केन त्रिवृता षट्पलेन च ।
गुल्मानां गरदोषाणामुदराणाञ्च शान्तये ॥ १३६ ॥
इति स्नुहीक्षीरघृतम् ।
दधिमण्डाढ़के सिद्धात् स्नुक्क्षीरपलकल्कितात् ।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये ॥ १३७ ॥
पयश्चानुपिबेत् पेया पयो वा स्वादु वा रसम् ।
घृते जीर्णे विरिक्तन्तु कोष्णनागरकैः शृतम् ॥१३८॥
अप्रशाः पिबेत् ततः पेयां यूषं कौलत्थकं ततः ।
पिबेद्रूक्षस्त्र्यहन्त्वेवं पयो वा प्रतिभोजितः ॥१३९॥
पुनःपुनः पिबेत् सर्पिरानुपूर्व्या तयैव च ।
घृतान्येतानि सिद्धानि विदध्यात् कुशलो भिषक् ॥१४०॥
गुल्मानां गरदोषाणामुदराणाञ्च शान्तये ।

पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम्॥ १४१॥
गुल्मघ्ननीलिनीसर्पिःसिद्धं वा मिश्रकं पिबेत्।
क्रमाद्विद्धं तद्दोषाणां जाङ्गलप्रतिभोजिनाम्॥ १४२॥
दोषशेषनिहृत्यर्थं योगान् वक्ष्यामतः परम्।
चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत्॥१४३॥
मांसयुक्तं तथा हस्तिपिप्पली विश्वभेषजम्।
विडङ्गं चित्रकं दन्ती चव्यं व्योषञ्च तैः समैः॥ १४४॥
कल्कैः कोलसमैः पीत्वा प्रहृष्टमुदरं जयेत्।
पिबेत् कषायं त्रिफलादन्तीरोहीतकैः स्तम्॥१४५॥
व्योषक्षारयुतं जीर्णे रसैर्द्यात् सजाङ्गलैः।
मांसं वा भोजनं भोज्यं सुधाक्षीरघृतान्वितम्॥१४६॥
क्षीरानुपानं गोमूत्रेणाभयां वा प्रयोजयेत्।
ससाहं माहिषं मूत्रं क्षीरश्चानन्नभुक् पिबेत्॥१४७॥
मासमौष्ट्रं पयश्छागं त्रीन् मासान् व्योषसंयुतम्।
हरीतकीसहस्रं वा क्षीराशी वा शिलाजतु॥१४८॥
शिलाजतुविधानेन गुग्गुलुं वा प्रयोजयेत्।
शृङ्गवेरार्द्रकरसः पाने क्षीरसमो मतः॥१४९॥
तैलं रसेन तेनैव सिद्ध दशगुणेन वा।
दन्तीद्रवन्तीफलजं तैलं दूष्योदरे हितम्॥१५०॥
शूलानाहविबन्धेषु शकृत्पुरसादिभिः।
सरलामरशिग्रूणां वीजेभ्यो मूलकस्य च॥१५१॥
तैलान्यभ्यङ्गपानार्थे शूलघ्नान्यनिलोदरे।
स्तैमित्यारुचिहृल्लासेष्वल्पाग्निर्मदयस्तथा॥१५२॥
अरिष्टान् वा पिबेत् क्षारान् कफस्थानस्थिरोदरः।
पिप्पलीं तिल्वकं हिङ्गु नागरं हस्तिपिप्पलीम्॥१५३॥
भल्लातकं शिग्रुफलं त्रिफलां कटुरोहिणीम्।

देवदारु हरिद्रे द्वे सरलातिविषे वचाम् ॥१५४॥
कुष्ठं मुस्तं तथा पञ्च लवणानि प्रकल्पय च ।
दधिसर्पिर्वसातैलमज्जयुक्तानि दाहयेत् ॥१५५॥
अन्तर्धूमं ततः क्षारात् बिडालपदकं पिबेत् ।
मदिरादधिमण्डोष्णजलारिष्टसुरासवैः ॥१५६॥
हृद्रोगं श्वयथुं गुल्मं प्लीहार्शोजठराणि च ।
विसूचिकामुदावर्त्तं वाताष्ठीलाञ्च नाशयेत् ॥१५७॥
क्षारश्चाजकरीषाणां स्रुतं मूत्रैर्विपाचयेत् ।
कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च ॥१५८॥
पिप्पलीं चित्रकं शुण्ठीं त्रिफलां त्रिवृतां वचाम् ।
द्वौ क्षारौ सातलां दन्तीं स्वर्णक्षीरीं विषाणिकाम् ॥१५९॥
कोलप्रमाणां वटिकां पिबेत् सौवीरसंयुताम् ।
श्वयथावविपाके च प्लीह्ने चोदकोदरे ॥ १६० ॥
भावितानां गवां मूत्रे षष्टिकानान्तु तण्डुलैः ।
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ॥१६१॥
पिबेदिक्षुरसञ्चानु जठराणां निवृत्तये ।
स्वं स्वं स्थानं व्रजन्त्येवं तथा पित्तकफानिलाः ॥१६२॥
शङ्खिनीस्नुक्त्रिवृद्दन्तीचिरिविल्वादिपल्लवैः ।
शाकं गाढपुरीषाय प्राग्भक्तं दापयेद्भिषक् ॥१६३॥
ततोऽस्मै शिथिलीभूतवर्चोदोषाय शास्त्रवित् ।
दद्यान्मूत्रयुतं क्षीरं दोषशेषहरं शिवम् ॥१६४॥
पार्श्वशूलमुपस्तम्भं हृदयस्थापि मारुतम् ।
जनयेद्यस्य तैलं स बिल्वक्षारेण वा पिबेत् ॥१६५॥
तथाग्निमन्थश्योनाकपलाशतिलनालजैः ।
बलाकदल्यपामार्गक्षारैः प्रत्येकशः स्रुतैः ॥१६६॥
तैलं पक्त्वा भिषग्दद्यादुदराणां प्रशान्तये ।

निवर्त्तते चोदरिणां हृद्ग्रहश्चानिलोद्भवः ॥१६७॥
कफे वातेन पित्तेन ताभ्यां वाप्यावृतेऽनिले।
बलिनः स्वौषधयुतं तैलमैरण्डजं हितम् ॥१६८॥
सुविरिक्तो नरो यस्तु पुनराध्मतीह तम्।
सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ॥१६९॥
सोपस्तम्भोऽपि वा वायुराध्मापयति यं नरम्।
तीक्ष्णैः सक्षारगोमूत्रैर्बस्तिभिस्तमुपाचरेत् ॥१७०॥
क्रियातीते त्रिदोषे च जठरे चाप्यसाध्यति।
ज्ञातीन् ससुहृदो दारान् ब्राह्मणान् नृपतीन् गुरून् ॥१७१॥
अनुज्ञाप्य भिषक् कर्म विदध्यात् संशयं ब्रुवन्।
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥१७२॥
एवमाख्याय तस्येदमनुज्ञातः प्रयोजयेत्।
पानभोजनसंयुक्तं विषमस्मै प्रदापयेत् ॥ १७३ ॥
यस्मिन् वा कुपितः सर्पो विसृजेद्धि फले विषम्।
तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः ॥१७४॥
विषेणाशु प्रमाथित्वादाशु भिन्नः प्रवर्त्तते।
विषेण हृतदोषं तं शीताम्बुपरिषेचितम् ॥१७५॥
पाययेत भिषग्दुग्धं यवागूं वा यथाबलम्।
त्रिवृन्मण्डूकपर्ण्योश्च शाकं सयववास्तुकम् ॥१७६॥
भक्षयेत् कालशाकं वा स्वरसोदकसाधितम्।
निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्यभुक् ॥ १७७ ॥
मासमेकं ततश्चैव तृषितः स्वरसं पिबेत्।
एवं विनिर्हृते दोषे शाकैर्मासात् परं ततः ॥१७८॥
दुर्बलाय प्रयुञ्जीत प्राणभृत् कारभं पयः।
दकस्तु मन्यहर्तॄणां कर्म स्याद् दृष्टकर्मणाम् ॥१७९॥
वामं कुक्षिं मापयित्वा नाभ्यधश्चतुरङ्गुलम्।

मात्रायुक्तेन शस्त्रेण पाटयेन्मतिमान् भिषक् ॥१८०॥
विपाट्यान्त्रं ततः पश्चाद्वीक्ष्य बद्धच्युतान्त्रयोः ।
सर्पिषाभ्यज्य केशादीनवसृज्य विमोक्षयेत् ॥१८१॥
मूर्च्छनात् यत्र संमूढमन्त्रं तत्र विमोचयेत् ।
छिद्राण्यन्त्रस्य तु स्थूलैर्दंशयित्वा पिपीलिकैः ॥१८२॥
बहुशः संदष्टस्रोतांसि ज्ञात्वा छित्त्वा पिपीलिकान् ।
प्रतियोगैः प्रवेश्यान्त्रं प्रैषैः सीव्येद्व्रणं ततः ॥ १८३ ॥
तथा जातोदकं सर्वमुदरं व्यधयेद्भिषक् ।
वामपार्श्वे त्वधो नाभेर्नाडीं दत्त्वा च गालयेत् ॥ १८४ ॥
निःस्राव्य च विमृज्यैतद्वेष्टयेद्दासमोदरम् ।
तथा वस्तिविरेकाद्यैर्ध्मानं सर्वञ्च वेष्टयेत् ॥ १८५ ॥
निःसृते लङ्घितः पेयामस्नेहलवणां पिबेत् ।
अतः परञ्च षण्मासान् क्षीरवृत्तिर्भवेन्नरः ॥ १८६ ॥
त्रीन् मासान् पयसा पेयां पिबेत् त्रींश्चापि भोजयेत् ।
श्यामाकं कोरदूषं वा क्षीरेण लघुभोजनः ॥ १८७
नरः संवत्सरेणैवं जयेत् प्राप्तं जलोदरम् ।
प्रयोगाणाञ्च सर्वेषामनुक्षीरं प्रयोजयेत् ॥ १८८ ॥
दोषानुबन्धरक्षार्थं बलस्थैर्यार्थमेव च ।
प्रयोगापचिताङ्गानां हितं ह्युदरिणां पयः ।
सर्वधातुक्षयार्त्तानां देवानाममृतं यथा ॥ १८८ ॥

तत्र श्लोकौ ।

हेतुं प्राग्रूपमष्टानां लिङ्गं व्यामसयामतः ।
उपद्रवान् गरीयस्त्वं साध्यासाध्यत्वमेव च ॥ १८० ॥
आमाजातास्रुचिह्नानि चिकित्साञ्चोत्रयानृषिः ।
समासव्यासनिर्देशैरुदराणां चिकित्सितम् ॥ १८१ ॥

---

# एकोनविंशोऽध्यायः ।

## ग्रहणीचिकित्सितम् ।

आयुर्वर्णो बलं स्वास्थ्यमुत्साहोपचयौ प्रभा ।
ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः ॥ १ ॥
शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः ।
रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यते ॥२॥
यदन्नं देहधात्वोजोबलवर्णादिपोषकम् ।
तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ॥ ३ ॥
अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति ।
तद्द्रवैर्भिन्नसङ्घातं स्नेहेन मृदुतां गतम् ॥ ४ ॥
समानेनावधूतोऽग्निरुदर्यः पवनेन तु ।
काले भुक्तं समं सम्यक् पचत्यायुर्विवृद्धये ॥५॥
एवं रसमलायान्नमाशयस्थमधःस्थितः ।
पचत्यग्निर्यथा स्थाल्यामोदनायाम्बु तण्डुलम् ॥६॥
अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः ।
मधुरात् प्राक् कफोद्भावात् फेनभूत उदीर्यते ॥ ७ ॥
परन्तु पच्यमानस्य विदग्धस्याम्लभावतः ।
आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते ॥ ८ ॥
पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना ।
परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः ॥ ९ ॥
अन्नमिष्टं ह्युपहितमिष्टैर्गन्धादिभिः पृथक् ।
देहे प्रीणाति गन्धादीन् घ्राणादीनिन्द्रियाणि च ॥१०॥
भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।
पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्ति हि ॥११॥
यथास्वं स्वञ्च पुष्यन्ति देहद्रव्यगुणाः पृथक् ।

पार्थिवाः पार्थिवानेव शेषाः शेषांश्च कृत्स्नशः ॥ १२ ॥
सप्तभिर्देहधातारो द्विविधाश्च पुनःपुनः ।
यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत् ॥१३॥
रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ।
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते ॥ १४ ॥
रसात् स्तन्यं ततो रक्तमसृजः कण्डराः शिराः ।
मांसाद्वसात्वचः षट् च मेदसः स्नायुसम्भवः ॥ १५ ॥
इत्युक्तवन्तमाचार्यं शिष्यस्त्विदमचोदयत् ।
रसाद्रक्तं विसदृशात् कथं देहेऽभिजायते ॥ १६ ॥
रसस्य च न रङ्गोऽस्ति स कथं याति रक्तताम् ।
रसाद्रक्तात् स्थिरं मांसं कथं तज्जायते नृणाम् ॥ १७ ॥
रसाद्रक्तात् तथा मांसान्मेदसः श्वेतता कथम् ।
स्निग्धाभ्यां मांसमेदोभ्यां खरत्वं कथमस्थिषु ॥ १८ ॥
खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा ।
मज्ज्ञश्च परिणामेन यदि शुक्रं प्रवर्त्तते ॥ १९ ॥
सर्वदेहगतं शुक्रं प्रवदन्ति मनीषिणः ।
अत्रापि मध्ये मज्ज्ञश्च शुक्रं भवति देहिनाम् ॥ २० ॥
छिद्रं न दृश्यतेऽस्थ्नश्च तन्निःसरति वा कथम् ।
एवमुक्तस्तु शिष्येण गुरुः प्राहेदमुत्तरम् ॥ २१ ॥
तेजोरसानां सर्वेषां मनुजानां यदुच्यते ।
पित्तोष्मणः स रागेण रसो रक्तत्वमृच्छति ॥ २२ ॥
वाय्वम्बुतेजसा रक्तमूष्मणा चाभिसंयुतम् ।
स्थिरतां प्राप्य शौक्ल्याच्च मेदो देहेऽभिजायते ॥ २३ ॥
पृथिव्यग्न्यनिलादीनां संघातः श्लेष्मणावृतः ।
खरत्वं प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम् ॥ २४ ॥
करोति तत्र सौषिर्य्यमस्थ्नां मध्ये समीरणः ।

मेदस्स्तानि पूर्यन्ते स्नेहो मज्जा ततः स्मृतः ॥ २५ ॥
तस्मान्मज्ज्ञस्तु यः स्नेहः शुक्रं सञ्जायते ततः।
वाय्वाकाशादिभिर्भावैः सौषिर्यं जायतेऽस्थिषु ॥ २६ ॥
तेन स्रवति तच्छुक्रं नवात् कुम्भादिवोदकम्।
स्रोतोऽभिष्यन्दते देहात् समन्ताच्छुक्रवाहिभिः ॥ २७ ॥
हर्षेणोदीरितं रागात् सङ्कल्पाच्च मनोभवात्।
विलीनं घृतवद् व्यायामोष्मणा स्थानविच्युतम् ॥ २८ ॥
वस्तौ संहृत्य निर्याति स्थलान्निम्नादिवोदकम्।
किट्टमन्नस्य विण्मूत्रं रसस्य च कफोऽसृजः ॥ २९ ॥
पित्तं मांसस्य च मलो मलः स्वेदस्तु मेदसः।
स्यात् किट्टं केशलोमास्थ्नोमज्ज्ञः स्नेहोऽक्षिविट्त्वचाम् ॥३०॥
प्रसादकिट्टे धातूनां पाकादेवंविधः स्मृतः।
परस्परोपसंस्तब्धा धातुस्नेहपरम्परा ॥ ३१ ॥
वृष्यादीनां प्रभावस्तु पुष्णाति बलमाशु हि।
षड्भिः केचिदहोरात्रैरिच्छन्ति परिवर्त्तनम् ॥ ३२ ॥
सन्तत्याभोज्यधातूनां परिवृत्तिस्तु चक्रवत्।
व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ॥ ३३ ॥
युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा।
क्षिप्यमाणस्तु वैगुण्याद्रसः सज्जति यत्र सः ॥ ३४ ॥
करोति विकृतिं तत्र खे वर्षमिव तोयदः।
दोषाणामपि चैवं स्यादेकदेशप्रकोपणम् ॥ ३५ ॥
इति भौतिकधात्वन्नपक्तॄणां कर्म भाषितम्।
अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः ॥ ३६ ॥
तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः।
तस्मात् तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ॥ ३७ ॥
पालयेत् प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः।

यो हि भुङ्क्ते विधिं मुक्त्वा ग्रहणीदोषजान् गदान्।
स लौल्याल्लभते शीघ्रं वक्ष्यन्तेऽतः परन्तु ये।
अभोजनादजीर्णातिभोजनाद्विषमाशनात्॥ ३९॥
असात्म्यगुरुशीतातिरूक्षसन्दुष्टभोजनात्।
विरेकवमनस्नेहविभ्रमाद्व्याधिकर्षणात्॥ ४०॥
देशकालर्तुवैषम्याद्वेगानाञ्च विधारणात्।
दुष्यत्यग्निः स दुष्टोऽन्नं न तत् पचति लघ्वपि॥ ४१॥
अपच्यमानं शुक्तत्वं यात्यन्नं विषताञ्च तत्।
तस्य लिङ्गमजीर्णस्य विष्टम्भोऽङ्गञ्च सीदति॥ ४२॥
शिरसो रुक् च मूर्च्छा च भ्रमः पृष्ठकटिग्रहः।
जृम्भाङ्गमर्दस्तृष्णा च ज्वरश्छर्दिः प्रवाहणम्॥ ४३॥
अरोचकोऽविपाकश्च घोरमन्नविषञ्च तत्।
संसृज्यमानं पित्तेन दाहं तृष्णां मुखामयान्॥ ४४॥
जनयत्यम्लपित्तञ्च पित्तजांश्चापरान् गदान्।
यक्ष्मपीनसमेहादीन् कफजान् कफसङ्गतः॥ ४५॥
करोति वातसंसृष्टं वातजांश्च गदान् बहून्।
मूत्ररोगांश्च मूत्रस्थं कुक्षिरोगान् शकृद्गतम्॥ ४६॥
रसादिभिश्च संसृष्टं कुर्य्याद्रोगान् रसादिजान्।
विषमो धातुवैषम्यं करोति विषमं पचन्॥ ४७॥
तीक्ष्णो मन्देन्धनो धातून् विशोषयति पावकः।
युक्तं भुक्तवतो युक्तो धातुसाम्यं समं पचन्॥ ४८॥
दुर्बलो विदहत्यन्नं तद्यात्यूर्द्धमधोऽपि वा।
अधस्तु पक्वमामं वा प्रवृत्तं ग्रहणीगदः॥ ४९॥
उच्यते सर्वमेवान्नं प्रायो ह्यस्य विदह्यते।
अतिसृष्टं विबद्धं वा द्रवं तदुपदिश्यते॥ ५०॥
तृष्णारोचकवैरस्यप्रसेकतमकान्वितः।

शूनपादकरः सास्थिपर्वरुक् छर्दनं ज्वरः ॥५१॥
लोहामगन्धिस्तिक्ताम्ल उद्गारश्चास्य जायते।
पूर्वरूपन्तु तस्येदं तृष्णालस्यं बलक्षयः ॥५२॥
विदाहोऽन्नस्य पाकश्च चिरात् कायस्य गौरवम्।
अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणीमता ॥५३॥
नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता।
अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः ॥५४॥
दुर्बलाग्निबलाद् दुष्टात्वाममेव विमुञ्चति।
वातात् पित्तात् कफात् सर्वाद् ग्रहणीदोष उच्यते ॥५५॥
हेतुं लिङ्गं चिकित्साञ्च शृणु तस्य पृथक् पृथक्।
कटुतिक्तकषायातिरूक्षशीतलभोजनैः ॥ ५७ ॥
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः।
करोति कुपितो मन्दमग्निं संछाद्य मारुतः ॥५८॥
तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता।
कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ॥५९॥
पार्श्वोरुवङ्क्षणग्रीवारुजोऽभीक्ष्णं विसूचिका।
हृत्पीडा कार्श्यदौर्बल्यं वैरस्यं परिकर्त्तिका ॥६०॥
गृद्धिः सर्वरसानाञ्च मनसः सदनं तथा।
जीर्णे जीर्य्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च ॥ ६१॥
स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः।
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ॥ ६२ ॥
पुनःपुनः सृजेद्वर्चःकासश्वासान्वितोऽनिलात्।
कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् ॥ ६३ ॥
अग्निमाप्लावयद्धन्ति जलं तप्तमिवानलम्।
सोऽजीर्णं नीलपीताभं पीताभः सार्य्यते द्रवम् ॥ ६४ ॥
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः।

गुर्वतिस्निग्धशीतान्नभोजनादतिभोजनात् ॥ ६५ ॥
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ।
तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः ॥ ६६ ॥
आस्योपदेहमाधुर्यकासष्ठीवनपीनसाः ।
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ॥ ६७ ॥
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ।
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्त्तनम् ॥ ६८ ॥
अकृशस्यापि दौर्बल्यमालस्यञ्च कफात्मके ।
यथाग्निः पूर्वमुद्दिष्टो रोगानीके चतुर्विधः ॥ ६९ ॥
तथापि ग्रहणीदोषं समवर्जं प्रचक्षते ।
पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे ॥ ७० ॥
त्रिदोषं निर्दिशेत् तेषां भेषजं शृणुतः परम् ।
ग्रहणीमाश्रितं दोषं विदग्धाहारमूर्च्छितम् ॥ ७१ ॥
सविष्टम्भप्रसेकार्त्तिविदाहारुचिगौरवम् ।
आमलिङ्गान्वितं दृष्ट्वा सुखोष्णेनाम्बुनोद्धरेत् ॥ ७२ ॥
फलानां वा कषायेण पिप्पलीसर्षपैस्तथा ।
लीनं पक्वाशयस्थं वाप्यामं स्राव्यं सदीपनैः ॥ ७३ ॥
शरीरानुगते सामे रसे लङ्घनपाचनम् ।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम् ॥ ७४ ॥
दद्यात् पेयादिलघ्वन्नं पुनर्योगांश्च दीपनान् ।
ज्ञात्वा तु परिपक्वामं मारुतग्रहणीगदम् ॥ ७५ ॥
दीपनीययुतं सर्पिः पाययेताल्पशो भिषक् ।
किञ्चित्सन्धुक्षिते त्वग्नौ सक्तविण्मूत्रमारुतम् ॥ ७६ ॥
द्वित्रीण्यहानि संस्नेह्य स्वेदाभ्यक्तं निरूहयेत् ।
तत एरण्डतैलेन सर्पिषा तैलकेन वा ॥ ७७ ॥
सक्षारेणानिले शान्ते स्रस्तदोषं विरेचयेत् ।

शुद्धं रूक्षाशयं बद्धवर्चसञ्चानुवासयेत् ।
दीपनीयाम्लवातघ्नसिद्धतैलेन मात्रया ॥ ७८ ॥
निरूढ्य विरिच्य सम्यक् चैवानुवासितः ।
लघ्वन्नप्रतिसंभुक्तः सर्पिरभ्यासयेत् पुनः ॥ ७९ ॥
द्वे पञ्चमूले सरलं देवदारु सनागरम् ।
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥ ८० ॥
शणबीजं यवान् कोलान् कुलत्थान् सुरभीस्तथा ।
पाचयेदारनालेन दध्ना सौवीरकेण वा ॥ ८१ ॥
चतुर्भागावशेषेण पचेत् तेन घृताढकम् ।
स्वर्जिकायावशूकाख्यौ क्षारौ दत्त्वा च युक्तितः ॥ ८२ ॥
सैन्धवौद्भिदसामुद्रविडानां रोमकस्य च ।
ससौवर्चलपाक्यानां भागान् द्विपलिकान् पृथक् ॥ ८३ ॥
विनीय चूर्णितान् सिद्धात् ततो द्वे द्वे पले पिबेत् ।
करोत्यग्निं बलं वर्णं वातघ्नं भुक्तपाचनम् ॥ ८४ ॥

इति दशमूलाद्यं घृतम् ।

त्र्यूषणत्रिफलाकल्के बिल्वमात्रे गुडात् पले ।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत् ॥ ८५ ॥

इति त्र्यूषणाद्यं घृतम् ।

पञ्चमूलाभयाव्योषविडङ्गशटिभिर्घृतम् ।
रसेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च ॥ ८६ ॥
शुष्कमूलककोलाम्बुचुक्रिकादाडिमस्य च ।
तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः ॥ ८७ ॥
काञ्जिकेन च तत् पक्वमग्निदीप्तिकरं परम् ।
शूलगुल्मोदरश्वासकासानिलकफापहम् ॥ ८८ ॥
सबीजपूररसं सिद्धं वा पाययेद्घृतम् ।
सिद्धमभ्यञ्जनार्थञ्च तैलमेतैः प्रयोजयेत् ॥ ८९ ॥

एतेषामौषधानां वा पिबेच्चूर्णं सुखाम्बुना ।
वाते श्लेष्मावृते सामे कफे वा वायुनोद्धते ।
दद्यात् चूर्णं पाचनार्थम् अग्निसन्दीपनं परम् ॥ ८० ॥

इति पञ्चमूलाद्यं घृत चूर्णं

मज्जत्यामाद् गुरुत्वाद्विट् पक्वा तूत्प्लवते जले ।
विनातिद्रवसङ्घातशैत्यश्लेष्मप्रदूषणात् ॥ ८१ ॥
परीक्ष्यैवं पुरा सामं निरामं वा सदोषिणाम् ।
विधिनोपाचरेत् सम्यक् पाचनेनेतरेण वा ॥ ८२ ॥
चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ।
व्योषं हिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् ॥ ८३ ॥
गुडिका मातुलुङ्गस्य दाडिमस्य रसेन वा ।
कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥ ८४ ॥

इति चित्रकाद्या गुडिका

नागरातिविषामुस्तक्वाथः स्यादामपाचनः ।
मुस्तान्तकल्कः पथ्या वा नागरञ्चोष्णवारिणा ॥ ८५ ॥
देवदारुवचामुस्तनागरातिविषाभयाः ।
वारुण्यामामुत्ताम्तोये कोष्णे वा लवणं पिबेत् ॥ ८६ ॥
पिबेत् सपरिकर्त्तामे मद्ये वा दाडिमाम्बुना ।
विडेन लवणं पिष्टं विल्वं चित्रकनागरम् ॥ ८७ ॥
वर्चस्यामे सशूले च पिबेद्वा दाडिमाम्बुना ॥ ८८ ॥
सामे वा सकफे वाते कोष्ठशूलज्वरे पिबेत् ।
कलिङ्गहिङ्ग्वतिविषावचासौवर्चलाभयाः ॥ ८९ ॥
छर्द्यर्शोग्रन्थिशूलेषु पिबेदुष्णेन वारिणा ।
पथ्यासौवर्चलाजाजीचूर्णं मरिचसंयुतम् ॥ १०० ॥
अभया पिप्पलीमूलं वचां कटुकरोहिणीम् ।
पाठा वत्सकबीजानि चित्रकं विश्वभेषजम् ॥ १०१ ॥

पिबेन्निष्क्वाथ्य चूर्णानि कृत्वा कोष्णेन वारिणा।
पित्तश्लेष्माभिभूतायां ग्रहण्यां शूलनुद्धितम्॥ १०२॥
साम्ले सातिविषाव्योषलवणक्षारहिङ्गुवत्।
निःक्वाथ्य पाययेच्चूर्णं कृत्वा वा कोष्णवारिणा॥ १०३॥
पिप्पलीं नागरं पाठां शारिवां बृहतीद्वयम्।
चित्रकं कौटजं बीजं लवणान्यथ पञ्च च॥ १०४॥
तच्चूर्णं सयवक्षारं दध्युष्णाम्बुसुरादिभिः।
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं नरः॥ १०५॥
मरिचः कुञ्चिकाम्बष्ठाहृयाम्लाः कुडवाः पृथक्।
पलानि दश चाम्लस्य वेतसस्य पलार्द्धिकम्॥ १०६॥
सौवर्चलं विड़ं पाक्यं यवक्षारः ससैन्धवः।
शटीपुष्करमूलानि हिङ्गु हिङ्गुशिराटिका॥ १०७॥
तत् सर्वमेकतः सूक्ष्मं चूर्णं कृत्वा प्रयोजयेत्।
हितं वाताभिभूतायां ग्रहण्यामरुचौ तथा॥ १०८॥
।　　　　इति मरिचाद्यं चूर्णम्।
चतुर्णां प्रस्थमम्लानां त्र्यूषणाच्च पलत्रयम्।
लवणानाञ्च चत्वारि शर्करायाः पलाष्टकम्॥१०९॥
संचूर्ण्य शाकसूपान्नरागादिष्ववचारयेत्।
कासाजीर्णारुचिश्वासहृत्पाण्ड्वामयगुल्मनुत्॥११०॥
चव्यत्वक्पिप्पलीमूलधातकीव्योषचित्रकम्।
कपित्थं बिल्वमम्बष्ठां शाल्मलं हस्तिपिप्पलीम्॥१११॥
मिलोद्भेदं तथाजाजीं पिष्ट्वा बदरमात्रिकम्।
परिभर्ज्य घृते दध्ना यवागूं साधयेद्भिषक्॥११२॥
रसैः कपित्थचुक्रिका वृक्षाम्लैर्दाडिमस्य च।
सर्वातिसारमन्दाग्निगुल्मार्शःप्लीहनाशिनी॥११३॥
इति पञ्चप्रकारयवागूः।

पञ्चकोलकयूषश्च मूलकानाञ्च सोपणः।
स्निग्धो दाड़िमतक्राढ्यो जाङ्गलः संस्कृतो रसः ॥११४
क्रव्यादस्वरसः शस्तो भोजनार्थं सदीपनः।
तक्रारनालमद्यानि पानार्थेऽरिष्ट एव च ॥११५॥
तक्रन्तु ग्रहणीदोषे दीपनग्राहि लाघवात्।
श्रेष्ठं मधुरपाकित्वान्न च पित्तं प्रकोपयेत् ॥११६॥
कषायोष्णविकासित्वाद्रौक्ष्याच्चैव कफे मतम्।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत् ॥११७॥
तस्मात् तक्रप्रयोगा ये जठराणां तथार्शसाम्।
विहिता ग्रहणीदोषे सर्वशस्तान् प्रयोजयेत् ॥११८॥
यमान्यामलके पथ्या मरिचं त्रिपलांशिकम्।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् ॥११९॥
तक्रकं सासुतं जातं तक्रारिष्टं पिबेन्नरः।
दीपनं शोथगुल्मार्शः क्रिमिमेहोदरापहम् ॥१२०॥

इति तक्रारिष्टः।

स्वस्थानगतमुत्क्लिष्टमग्निनिर्वापकं भिषक्।
पित्तं ज्ञात्वा विरेकेण निर्हरेद्वमनेन वा ॥१२१॥
अविदाहिभिरन्नैश्च लघुभिस्तिक्तसंयुतैः।
जाङ्गलानां रसैर्यूषैर्मुद्गादीनां खडैरपि ॥१२२॥
दाड़िमाम्लैःससर्पिष्कैर्दीपनग्राहिसंयुतैः।
तस्याग्निं दीपयेच्चूर्णैः सर्पिर्भिर्वा सतिक्तकैः ॥१२३॥
चन्दनं पद्मकोशीरं पाठां मूर्वां कुटन्नटम्।
षड्ग्रन्थाशारिवास्फोतासप्तपर्णाटरूषकान् ॥१२४॥
पटोलोदुम्बराश्वत्थवटप्लक्षकपीतनान्।
कटुकरोहिणीं मुस्तं निम्बञ्च द्विपलांशिकम् ॥१२५॥
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात् पचेत्।

किराततिक्तेन्द्रयववीरामागधिकोत्पलैः ॥१२६॥
कल्कैरक्षसमैः पेयं सत् पित्तग्रहणीगदे।
तिक्तकं यद् घृतञ्चोक्तं कौष्ठिके तच्च दापयेत् ॥१२७॥
इति चन्दनाद्यं घृतम्।

नागरातिविषे मुस्तं धातकीं सरसाञ्जनम्।
वत्सकत्वक्फलं विल्वं पाठां कटुकरोहिणीम् ॥१२८॥
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥१२९॥
अर्शांसि च गुदे शूलं जयेच्चैव प्रवाहिकाम्।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥१३०॥
इति नागराद्यं चूर्णम्।

भूनिम्बं कटुकं व्योषं मुस्तमिन्द्रयवान् समान्।
द्वौ चित्रकाद्वत्सकत्वग् भागान् षोडश चूर्णयेत् ॥१३१॥
गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत्।
कामलाज्वरपाण्डुत्वमेहारुच्यतिसारनुत् ॥१३२॥
इति भूनिम्बाद्यं चूर्णम्।

वचामतिविषां पाठा सप्तपर्णरसाञ्जनम्।
श्योणाकोदीच्यकटुङ्गवत्सकत्वग् दुरालभाः ॥१३३॥
दार्वीं पर्पटकं मूर्वां यमानीं मधु शियुकम्।
पटोलपत्रं सिद्धार्थान् यूथिकां जातिपल्लवान् ॥१३४॥
जम्ब्वाम्रविल्वमध्यानि निम्बशाकफलानि च।
तद्रोगध्यममन्विच्छन् भूनिम्बाद्येन योजयेत् ॥१३५॥
किराततिक्तं षड्ग्रन्था त्रायमाणा कटुत्रिकम्।
चन्दन पद्मकोशीरं दार्वी त्वक् कटुरोहिणी ॥१३६॥
कुटजत्वक्फलं मुस्तं यमानी देवदारु च।
पटोलनिम्बपत्रैलासौराष्ट्रातिविषात्वचः ॥१३७॥

मधु शिग्रोश्च बीजानि मूर्वा पर्पटकांस्तथा।
तच्चूर्णं मधुना लेह्यं पेयं मद्यैर्जलेन वा ॥१३८॥
हृत्पाण्डुग्रहणीरोगगुल्मशूलारुचिज्वरान्।
कामलां सन्निपातञ्च मुखरोगांश्च नाशयेत् ॥१३९॥
इति किराताद्यं चूर्णम्।

ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि।
कट्वम्ललवणक्षारैस्तिक्तैश्चाग्निं विवर्द्धयेत् ॥१४०॥
पलाशं चित्रकं चव्यं मातुलुङ्गं हरीतकीम्।
पिप्पलीं पिप्पलीमूलं पाठां नागरधान्यकम् ॥१४१॥
कार्षिकाण्युदकप्रस्थे पक्त्वा पादावशेषितम्।
पानीयार्थं प्रयुञ्जीत यवागूं तेन साधिताम् ॥१४२॥
शुष्कमूलकयूषेण कौलत्थेनाथवा पुनः।
कट्वम्लक्षारपटुना लघून्यन्नानि भोजयेत् ॥१४३॥
अम्लस्यानुपिबेत् तक्रं तक्रारिष्टमथापि वा।
मदिरां मध्वरिष्टान् वा निगदं शीधुमेव वा ॥१४४॥
द्रोणं मधूकपुष्पाणां विडङ्गानां ततोऽर्द्धतः।
चित्रकस्य ततोऽर्द्धं स्यात् तथा भल्लातकाढ़कम् ॥१४५॥
मञ्जिष्ठाष्टपलञ्चैव त्रिद्रोणेऽपां विपाचयेत्।
द्रोणशेषे तु तच्छीतं मध्वर्द्धाढ़कसंयुतम् ॥१४६॥
एलामृणालागुरुभिश्चन्दनेन च रूषिते।
कुम्भे मासस्थितं जातमासवं तं प्रयोजयेत् ॥१४७॥
ग्रहणीं दीपयत्येष बृंहणः कफपित्तजित्।
शोथं कुष्ठं किलासञ्च प्रमेहांश्च प्रणाशयेत् ॥१४८॥
इति मध्वासवः।

मधूकपुष्पस्वरसं शृतमर्द्धावशेषितम्।
क्षौद्रपादयुतं शीतं पूर्ववत् सन्निधापयेत्।

तं पिबन् ग्रहणीदोषान् जयेत् सर्वान् हिताशनः ॥१४८॥

इति आसवः।

तद्वद्द्राक्षेक्षुखर्जूरस्वरसानासुतान् पिबेत् ॥१५०॥

इति द्वितीयासवः।

प्रस्थो दुरालभाया द्वौ प्रस्थमामलकस्य च।
पष्ठी चित्रकदन्त्योर्द्वे प्रत्यग्रञ्चाभयाशतम् ॥१५१॥
चतुर्द्रोणेऽम्भसः पक्त्वा शीतं द्रोणावशेषितम्।
सगुडञ्चिशतं पूतं मधुनः कुडवायुतम् ॥ १५२ ॥
तद्वत् प्रियङ्गोः पिप्पल्या विडङ्गानाञ्च चूर्णितैः।
कुडवैर्घृतकुम्भस्थं पक्षाज्जातं ततः पिबेत् ॥ १५३ ॥
ग्रहणीपाण्डुरोगार्शःकुष्ठवीसर्पमेहनुत्।
स्वरवर्णकरश्चैष रक्तपित्तकफापहः ॥ १५४ ॥

इति दुरालभासवः।

हरिद्रा पञ्चमूले द्वे वीरकर्षभजीवकम्।
एषां पञ्च पलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥ १५५ ॥
द्रोणशेषे रसे पूते गुडस्य द्विशतं भिषक्।
चूर्णितान् कुडवांशान् प्रक्षिपेच्च समाक्षिकान् ॥ १५६ ॥
प्रियङ्गुमुस्तमञ्जिष्ठाविडङ्गमधुकप्लवान्।
लोध्रं शावरकञ्चैव मासार्द्धं स्थापयेत् ततः ॥ १५७ ॥
एष मूलासवः सिद्धो दीपनो रक्तपित्तजित्।
श्वासाढ्यकफहृद्रोगपाण्डुरोगाङ्गसादनुत् ॥ १५८ ॥

इति मूलासवः।

माक्षिकं पिप्पलीं पिष्ट्वा गुडं मध्यं विभीतकात्।
उदकप्रस्थसंयुक्तं यवपल्ले निधापयेत् ॥ १५९ ॥
तस्मात् पलं सुजातात् तु सलिलाञ्जलिसंयुतम्।
पिबेत् पिण्डासवो ह्येष रोगानीकविनाशनः ॥ १६० ॥

स्वस्थोऽप्येनं पिबेन्मासं नरः सिद्धं रसायनम्।
दृष्टस्तेषामनुत्पत्तिं रोगाणां ये प्रकीर्त्तिताः ॥ १६१ ॥
इति पिण्डासवः।

नवे पिप्पलीमध्वाक्ते कलसेऽगुरुधूपिते।
मध्वाढ़कं जलसमं चूर्णानीमानि दापयेत् ॥ १६२ ॥
कुडवार्द्धं विड़ङ्गानां पिप्पल्याः कुड़वं तथा।
चतुर्थकांशान् त्वक्चीर्य्याः केशरं मरिचानि च ॥ १६३ ॥
त्वगेलापत्रकशटीक्रमुकातिविषाघनम्।
हरिद्रेणुकतेजोह्वापिप्पलीमूलचित्रकान् ॥ १६४ ॥
कार्षिकांस्तान् स्थितं मासमत ऊर्द्धं प्रयोजयेत्।
मन्दं सन्दीपयत्यग्निं करोति विषमं समम् ॥ १६५ ॥
हृत्पाण्डुग्रहणीरोगकुष्ठार्शःश्वयथुज्वरान्।
वातश्लेष्मामयांश्चान्यान् मध्वरिष्टो व्यपोहति ॥ १६६ ॥
इति मध्वरिष्टः।

समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च।
मातुलुङ्गाभयारास्नाशटीमरिचनागरम् ॥ १६७ ॥
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना।
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम् ॥ १६८ ॥
एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते।
गौल्मिके षट्पलं प्रोक्तं भल्लातकघृतञ्च यत् ॥ १६९ ॥
विड़ कालोत्थलवण सर्जिकायवशूकजम्।
सप्तला कण्टकारी च चित्रकश्चेति दापयेत् ॥ १७० ॥
ससरुतः स्नुतस्यास्य क्षारस्य ह्याढ़केन तु।
पादकं सर्पिषः पक्वा पिबेदग्निविवर्द्धनम् ॥ १७१ ॥
इति क्षारघृतम्।

समूलां पिप्पलीं पाठां चव्येन्द्रयवनागरम्।

चित्रकातिविषे हिङ्गु स्वदंष्ट्रां कटुरोहिणीम् ॥ १७२ ॥
वचाञ्च कार्षिकं पञ्चलवणानां पलानि च।
दध्नः प्रस्थद्वये तैलसर्पिषोः कुड़वद्वये ॥ १७३ ॥
चूर्णीकृतानि निष्क्वाथ्य शनैरन्तर्गते रसे।
अन्तर्धूमं ततो दग्ध्वा चूर्णं कृत्वा घृताप्लुतम् ॥ १७४ ॥
पिबेत् पाणितलं तस्मिन् जीर्णे स्यान्मधुराशनः।
वातश्लेष्मामयान् सर्वान् हन्याद्विषगरांश्च सः ॥ १७५ ॥
भल्लातकं त्रिकटुकं त्रिफलां लवणत्रिकम्।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥ १७६ ॥
स क्षारः सर्पिषा पीतो भोज्यो वाप्यवचूर्णितः।
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्त्तशूलनुत् ॥ १७७ ॥
दुरालभां करञ्जौ द्वौ सप्तपर्णं सवत्सकम्।
षड्ग्रन्थां मदनं मूर्वां पाठामारग्वधं तथा ॥ १७८ ॥
गोमूत्रेण समांशानि कृत्वा चूर्णानि दाहयेत्।
दग्ध्वा च तं पिबेत् क्षारं ग्रहणीबलवर्द्धनम् ॥ १७९ ॥

इति क्षारः।

भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम्।
दहेन्माहिषमूत्रेण क्षार एषोऽग्निवर्द्धनः ॥ १८० ॥

इति द्वितीयक्षारः।

द्वे हरिद्रे वचा कुष्ठं चित्रकः कटुरोहिणी।
मुस्तञ्च बस्तमूत्रेण सिद्धः क्षारोऽग्निवर्द्धनः ॥ १८१ ॥

इति तृतीयक्षारः।

चतुष्पलं सुधाकाण्डात् त्रिपलं लवणत्रयात्।
वार्त्ताकीकुड़वश्चार्कादष्टौ द्वे चित्रकात् पले ॥ १८२ ॥
दग्धानि वार्त्ताकुरसे गुलिका भोजनोत्तराः।
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः।

विसूचिकाप्रतिश्यायहृद्रोगशमनाय ताः ॥ १८३ ॥

इति क्षारगुड़िका।

वत्सकातिविषे पाठां दुःस्पर्शं हिङ्गु चित्रकम्।
चूर्णीकृत्य पलाशानां क्षारे मूत्रस्रुते पचेत् ॥१८४॥
आयसे भाजने सान्द्राद् तस्मात् कोलं सुखाम्बुना।
मद्यैर्वा ग्रहणीदोषे शोथार्शःपाण्डुमान् पिबेत् ॥१८५॥

इति चतुर्थक्षारः।

त्रिफलां कटभीं चव्यं विल्वमध्यमयोरजः।
रोहिणीं कटुकां मुस्तं कुष्ठं पाठाञ्च हिङ्गु च ॥१८६॥
मधुकं मुष्ककयवक्षारौ त्रिकटुकं वचाम्।
विड़ङ्गं पिप्पलीमूलं स्वर्जिकां निम्बचित्रकौ ॥१८७॥
मूर्वाजमोदेन्द्रयवान् गुडूचीं देवदारु च।
कार्षिकं लवणानाञ्च पञ्चानां पलिकान् पृथक् ॥१८८॥
भागान् दध्नि त्रिकुड़वे घृततैलेन मूर्च्छितान्।
अन्तर्धूमं शनैर्दग्ध्वा तस्मात् पाणितलं पिबेत्।
सर्पिषा कफवातार्शो ग्रहणीपाण्डुरोगवान् ॥१८९॥
प्लीहमूत्रग्रहश्वासहिक्काकासक्रिमिज्वरान्।
शोषातिसारौ श्वयथुं प्रमेहानाहहृद्ग्रहान् ॥१९०॥
हन्यात् सर्वविषश्चैव क्षारोऽग्निजननो वरः।
जीर्णे रसैर्वा मधुरैश्च स्यात् पयसापि वा ॥१९१॥

इति पञ्चमक्षारः।

त्रिदोषे विधिवद्वैद्यः पञ्च कर्माणि कारयेत्।
घृतक्षारासवारिष्टान् दद्याच्चाग्निविवर्द्धनान् ॥१९२॥
क्रिया या चानिलादीनां निर्दिष्टा ग्रहणीं प्रति।
व्यत्यासात् तां समस्ताञ्च कुर्याद्दोषविशेषवित् ॥१९३॥
[छेदनं] स्वेदनं शुद्धिर्लङ्घनं दीपनञ्च यत्।

चूर्णानि लवणक्षारमध्वरिष्टसुरासवाः ॥१८४॥
विविधास्तक्रयोगाश्च दीपनानाञ्च सर्पिषाम्।
ग्रहणीरोगिभिः सेव्याः क्रियाश्चावस्थिकीं शृणु ॥१८५॥
ष्ठीवनं श्लैष्मिके रूक्षं दीपनं तिक्तसंयुतम्।
सकटूष्णं सकतृस्निग्धं क्षामे वहुकफे हितम् ॥१८६॥
परीक्ष्यामं शरीरस्य दीपनं स्नेहसंयुतम्।
दीपनं वहुपित्तस्य तिक्तं मधुरसंयुतम् ॥१८७॥
वहुवातस्य तु स्नेहलवणाम्लयुतं हितम्।
सन्धुक्षति यदा वह्निः परैरपां विधिनेन्धनैः ॥१८८॥
स्नेहमेव परं विद्यात् दुर्व्वलानलदीपनम्।
नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्व्वपि ॥१८९॥
मन्दाग्निरपि यक्त्वतु पुरीषं योऽतिसार्य्यते।
दीपनीयौषधैर्युक्तां घृतमात्रां पिवेत् तु सः ॥२००॥
तया समानः पवनः प्रसन्नो मार्गमाश्रितः।
अग्नेः समीपचारित्वादाशु प्रकुरुते वलम् ॥२०१॥
काठिन्याद् यः पुरीषन्तु कृच्छ्रान्मुञ्चति मानवः।
सघृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिवेत् ॥२०२॥
रौक्ष्यान् मन्दे पिवेत् सर्पिस्तैलं वा दीपनैर्युतम्।
अतिस्नेहात् तु मन्देऽग्नौ चूर्णारिष्टासवा हिताः ॥२०३॥
भिन्ने गुदेऽवलेहास्तु विड्तैलसुरासवाः।
उदावर्त्तात् तु मन्देऽग्नौ निरूहाः स्नेहवस्तयः ॥२०४॥
दोषहृद्या तु मन्देऽग्नौ शुद्धो दोषविधिं चरेत्।
व्याधियुक्तस्य मन्दे तु सर्पिरेवाग्निदीपनम् ॥२०५॥
उपवासाश्च मन्देऽग्नौ यवागूभिः पिवेद् घृतम्।
अन्नावपीड़ितं चाल्पं दीपनं वृंहणञ्च तत् ॥ २०६ ॥
दीर्घकालप्रसङ्गात् तु क्षामक्षीणकृशान् नरान्।

प्रसन्नानां रसैः साम्लैः भोजयेत् पिशिताशिनाम् ॥ २०७॥
लघुतीक्ष्णोष्णशोधित्वाद्दीपयन्त्याशु तेऽनलम्।
मांसोपचितमांसत्वात् तथाशुतरबृंहणाः ॥ २०८ ॥
नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात्।
यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः ॥ २०९ ॥
स्नेहान्नविधिभिश्चित्रैश्चूर्णारिष्टसुरासवैः।
प्रयुक्तैर्भिषजा सम्यग्बलमग्नेः प्रवर्धते ॥ २१० ॥
यथा हि सारदार्वग्निः स्थिरः सन्तिष्ठते चिरम्।
स्नेहान्नविधिभिस्तद्वदन्तरग्निर्भवेत् स्थिरः ॥ २११ ॥
हितं जीर्णे मितञ्चाश्नंश्चिरमारोग्यमश्नुते।
अवैषम्येण धातूनामग्निवृद्धौ यतेत वा ॥ २१२ ॥
समैर्दोषैः समो मध्ये देहस्योष्माग्निसंस्थितः।
पचत्यन्नं तदारोग्यपुष्ट्यायुर्बलवृद्धये ॥ २१३ ॥
दोषैर्मन्दोऽतिवृद्धो वा विषमैर्जनयेद्गदान्।
पाच्यं मन्दस्य तत्रोक्तमतिवृद्धस्य वक्ष्यते ॥ २१४ ॥

भस्मकचिकित्सामाह।

नरे क्षीणकफे पित्तं कुपितं मारुतानुगम्।
स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति ॥२१५॥
तथा लब्धबलो देहे विरूक्षे सानिलोऽनलः।
परिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥२१६॥
पक्त्वान्नं सततं धातून् शोणितादीन् पचत्यपि।
ततो दौर्बल्यमातङ्कान् मृत्युञ्चोपनयेन्नरम् ॥ २१७ ॥
भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति।
तृट्श्वासदाहमूर्च्छाद्या व्याधयोऽत्यग्निसम्भवाः ॥२१८॥
तमत्यग्निं गुरुस्निग्धशीतैर्मधुरविज्जलैः।
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः ॥ २१९ ॥

मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत्।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत्॥ २२० ॥
पायसं कृशरां स्निग्धं पैष्टिकं गुड़वैकृतम्।
अश्नात् तथौदकानूपपिशितानि भृतानि च ॥ २२१ ॥
मत्स्यान् विशेषतः श्लक्ष्णान् स्थिरतोयचरांस्तथा।
आविकं सुभृतं मांसमद्यादत्यग्निनाशनम्॥ २२२ ॥
यवागूं समधूच्छिष्टां घृतं वा क्षुधितः पिबेत्।
गोधूमचूर्णमन्थं वा व्यधयित्वा शिरां पिबेत्॥ २२३ ॥
पयो वा शर्करां सर्पिर्जीवनीयौषधैः शृतम्।
फलानां तैलयोनीनामुत्कुचाश्च सशर्कराः॥ २२४ ॥
मार्दवं जनयन्त्यग्नेः स्निग्धान् मांसरसांस्तथा।
पिबेच्छीताम्बुना सर्पिर्मधूच्छिष्टेन वा युतम्॥ २२५ ॥
गोधूमचूर्णं पयसा ससर्पिष्कं पिबेन्नरः।
आनूपरससिद्धान् वा व्रीन् स्नेहांस्तैलवर्जितान्॥२२६॥
गोधूमचूर्णमन्थं वा व्यधयित्वा शिरां पिबेत्।
पयसा सन्धिताञ्चापि घनां त्रिस्नेहसंयुताम्॥ २२७ ॥
नारीस्तन्येन संयुक्तां पिबेदौदुम्बरीत्वचम्।
ताभ्यां वा पायसं सिद्धमद्यादत्यग्निशान्तये॥ २२८ ॥
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम्।
असकृत् पित्तशान्त्यर्थं पायसप्रतिभोजनम्।
प्रसमीक्ष्य भिषक् प्राज्ञस्तच्च दद्याद् विधानवित्॥ २२९ ॥
यत् किञ्चिन्मधुरं मेध्यं श्लेष्मलं गुरुभोजनम्।
तदत्यग्निहितं सर्वं भुक्त्वा प्रस्वपनं दिवा॥ २३० ॥
मेध्यान्यन्नानि योऽत्यग्नावप्रशान्तः समश्नुते।
न तन्निमित्तं व्यसनं लभते पुष्टिमेव च॥ २३१ ॥
कफे लुप्ते जिते पित्ते मारुते चानलः समः।

समधातोः पचत्यन्नं पुष्ट्यायुर्बलवृद्धये ॥ इति ॥ २३२ ॥

भवन्ति चात्र ।

पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतम् ।
विषमं बहु वाल्पं वाप्यप्राप्तातीतकालयोः ॥ २३३ ॥
भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतम् ।
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा ॥२३४
प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति ।
दिवा प्रबुध्यतेऽर्केण हृदयं पुण्डरीकवत् ॥ २३५ ॥
तस्मिन् विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः ।
व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः ॥ २३६ ॥
उत्क्लेदमपगच्छन्ति दिवा तेनास्य धातवः ।
अक्लिन्नेष्वन्नमासिक्तमन्यत् तेषु न दुष्यति ॥ २३७ ॥
अविदग्ध इव क्षीरे क्षीरमन्यद्विमिश्रितम् ।
रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च ॥ २३८ ॥
यान्ति कोष्ठे च विक्लेदं संवृते देहधातवः ।
क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति ।
विदग्धेषु पयःस्वन्यत् पयस्तेष्विवार्पितम् ॥ २३९ ॥
नैशेष्वाहारजातेषु नाविपक्वेषु बुद्धिमान् ।
तस्मादन्यत् समश्नीयात् पालयिष्यन् बलायुषी ॥ २४० ॥

तत्र श्लोकाः ।

अन्तरग्नि गुणा देहं यथा धारयते च सः ।
यथान्नं पच्यते यांश्च यथाहारः करोत्यपि ॥ २४१ ॥
येऽग्नयो यांश्च पुष्यन्ति यावन्तो ये पचन्ति यान् ।
रसादीनां क्रमोत्पत्तिर्मलानां तेभ्य एव च ॥ २४२ ॥
दृष्यानामाशयहेतुर्धातुकालोद्भवक्रमः ।
रोगैकदेशकृद्धेतुरन्तरग्निर्व्याधिकः ॥ २४३ ॥

सन्दुष्यति यथा दुष्टो यान् रोगान् जनयत्यपि।
ग्रहण्या यथावच्च ग्रहणीदोषलक्षणम्॥ २४४॥
पूर्वरूपं पृथक् चैव व्यञ्जनं सचिकित्सितम्।
चतुर्विधस्य निर्दिष्टं तथा चावस्थिकी क्रिया॥ २४५॥
जायते च यथात्यग्निर्यच्च तस्य चिकित्सितम्।
उक्तवानिह तत् सर्वं ग्रहणीदोषके मुनिः॥ २४६॥

---

## विंशोऽध्यायः।

### पाण्डुरोगचिकित्सितम्।

पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः।
चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः॥ १॥
दोषाः पित्तप्रधानास्तु यस्य कुप्यन्ति धातुषु।
शैथिल्यं तस्य धातूनां गौरवञ्चोपजायते॥ २॥
ततो वर्णबलस्नेहा ये चान्येऽप्योजसो गुणाः।
व्रजन्ति क्षयमत्यर्थं दोषदूष्यप्रदूषणात्॥ ३॥
सोऽल्परक्तोऽल्पमेदस्को निःसारः शिथिलेन्द्रियः।
वैवर्ण्यं भजते तस्य हेतुं शृणु सलक्षणम्॥ ४॥
क्षाराम्ललवणात्युष्णविरुद्धासात्म्यभोजनात्।
निष्पावमाषपिण्याकतिलतैलनिषेवणात्॥ ५॥
विदग्धेऽन्ने दिवास्वप्नाद्व्यायामान्मैथुनात् तथा।
प्रतिकर्मर्त्तुवैषम्यात् वेगानाञ्च विधारणात्॥ ६॥
कामचिन्ताभयक्रोधशोकोपहतचेतसः।
समुदीर्णं यदा पित्तं हृदये समवस्थितम्॥ ७॥
वायुना बलिना क्षिप्तं स्रोतोभिर्दशभिः स्तृतम्।
प्रपन्नं केवलं देहं त्वङ्मांसान्तरमाश्रितम्॥ ८॥

प्रदूष्य कफवातासृक्त्वङ्मांसानि करोति तत् ।
वर्णान् हरितहारिद्रान् पाण्डून् बहुविधांस्त्वचि ॥ ९ ॥
स पाण्डुरोग इत्युक्तः तस्य लिङ्गं भविष्यतः ।
हृदयस्पन्दनं रौक्ष्यं स्वेदाभावः श्रमस्तथा ॥ १० ॥
सम्भूतेऽस्मिन् भवेत् सर्वः कर्णक्ष्वेडी हतानलः ।
दुर्बलः सदनोऽन्नद्विट् श्रमभ्रमनिपीड़ितः ॥ ११ ॥
गात्रशूलज्वरश्वासगौरवारुचिमान् नरः ।
मृदितैरिव गात्रैश्च पीड़ितोन्मथितैरिव ॥ १२ ॥
शूनाक्षिकूटो हरितः शीर्णलोमा हतप्रभः ।
कोपनः शिशिरद्वेषी निद्रालुः ष्ठीवनोऽल्पवाक् ॥ १३ ॥
पिण्डिकोद्वेष्टकट्यूरुपादरुक्सदनानि च ।
भवन्त्यारोहणायासैर्विशेषश्चास्य वक्ष्यते ॥ १४ ॥
आहारैरुपचारैश्च वातलैः कुपितोऽनिलः ।
जनयेत् कृष्णपाण्डुत्वं तथा रूक्षारुणाङ्गताम् ॥ १५ ॥
अङ्गमर्दं रुजं तोदं कम्पं पार्श्वशिरोरुजम् ।
वर्चःशोषास्यवैरस्यशोफानाहबलक्षयान् ॥ १६ ॥
पित्तलस्याचितं पित्तं यथोक्तैः स्वैः प्रकोपनैः ।
दूषयित्वा तु रक्तादीन् पाण्डुरोगाय कल्पते ॥ १७ ॥
स पीतो हरिताभो वा ज्वरदाहसमन्वितः ।
तृष्णामूर्च्छापरीतश्च पीतमूत्रशकृन्नरः ॥ १८ ॥
स्वेदनः शीतकामश्च न चान्नमभिनन्दति ।
कटुकास्यो न चास्योष्णमुपशेतेऽम्लमेव वा ॥ १९ ॥
उद्गारोऽम्लो विदाहश्च विदग्धेऽन्नेऽस्य जायते ।
दौर्गन्ध्यं भिन्नवर्चस्त्वं दौर्बल्यं तम एव च ॥ २० ॥
विवृद्धैः श्लेष्मलैः श्लेष्मा पाण्डुरोगं स पूर्ववत् ।
करोति गौरवं तन्द्रां छर्दिं श्वेतावभासताम् ॥ २१ ॥

प्रसेकं लोमहर्षञ्च सादं मूर्च्छां भ्रमं क्लमम्।
श्वासकासौ तथालस्यमरुचिं वाक्स्वरग्रहम्॥ २२॥
शुक्लमूत्राक्षिवर्चस्त्वं कटुरूक्षोष्णकामता।
श्वयथुर्मधुरास्यत्वमिति पाण्ड्वामयः कफात्॥ २३॥
सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम्।
त्रिदोषलिङ्गं कुर्वन्ति पाण्डुरोगं सुदुःसहम्॥ २४॥
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः।
कषाया मारुतं पित्तमूषरा मधुरा कफम्॥ २५॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तं विरूक्षयेत्।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्धि च॥ २६॥
इन्द्रियाणां बलं तेज ओजो वीर्य्यं निहत्य च।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम्॥ २७॥
शूनगण्डाक्षिकूटभ्रूनाभिपादाग्रमेहनः।
क्रिमिकोष्ठोऽतिसार्य्येत मलं सासृक् कफान्वितम्॥ २८॥
पाण्डुरोगचिरोत्पन्नः खरीभूतो न सिध्यति।
कालप्रकर्षाच्छूनो ना यश्च पीतानि पश्यति॥ २९॥
बद्धाल्पविट्कं सकफं हरितं योऽतिसार्य्यते।
दीनः श्वेतातिदिग्धाङ्गश्छर्दिमूर्च्छातृषार्दितः॥ ३०॥
स नास्त्यसृक्क्षयाद्यश्च पाण्डुः श्वेतत्वमाप्नुयात्।
इति पञ्चविधस्योक्तं पाण्डुरोगस्य लक्षणम्॥ ३१॥
पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते।
तस्य पित्तमसृक् मांसं दग्ध्वा रोगाय कल्पते॥ ३२॥
हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः।
रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः॥ ३३॥
दाहाविपाकदौर्बल्यसदनारुचिकर्षितः।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता॥ ३४॥

कालान्तरात् खरीभूताऽऽत् कृच्छ्रा स्यात् कुम्भकामला।
कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः ॥३५॥
सरक्ताक्षिमुखच्छर्दिर्विण्मूत्रो यश्च ताम्यति।
दाहारुचितृषानाहतन्द्रामोहसमन्वितः ॥३६॥
प्रनष्टाग्निर्विसंज्ञश्च निर्यात्याशु स कामली।
साध्यानामितरेषान्तु भेषजं सम्प्रवक्ष्यते ॥३७॥
तत्र पाण्ड्वामयी स्निग्धस्तीक्ष्णैरूर्ध्वानुलोमिकैः।
संशोध्यो मृदुभिस्तिक्तैः कामली तु विरेचनैः ॥३८॥
ताभ्यां संशुद्धकोष्ठाभ्यां पथ्यान्यन्नानि दापयेत्।
शालयो यवगोधूमाः पुराणा यूषसंस्कृताः ॥३९॥
मुद्गाढकमसूरैश्च जाङ्गलैश्च रसैर्हिताः।
यथादोषं विशिष्टञ्च तयोर्भैषज्यमाचरेत् ॥४०॥
पञ्चगव्यं महातिक्तं कल्याणकमथापि वा।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे ॥४१॥
दाडिमात् कुडवो धान्यात् कुडवार्द्धं पलं पलम्।
चित्रकाच्छृङ्गवेराच्च पिप्पल्यष्टमिका तथा ॥४२॥
तैः कल्कैर्विंशतिपलं घृतस्य सलिलाढके।
सिद्धं हृत्पाण्डुरोगार्शःप्लीहवातकफार्त्तिनुत् ॥४३॥
दीपनं श्वासकासघ्नं मूढवाते च शस्यते।
दुःखप्रसविनीनाञ्च वन्ध्यानाञ्चैव गर्भदम् ॥४४॥

इति घृतम्।

कटुका रोहिणी मुस्तं हरिद्रे वत्सकात् फलम्।
पटोलं चन्दनं मूर्वा त्रायमाणा दुरालभा ॥४५॥
कृष्णा पर्पटको निम्बो भूनिम्बो देवदारु च।
तैः कार्षिकैर्घृतप्रस्थः सिद्धः क्षीरचतुर्गुणः ॥४६॥
रक्तपित्तं ज्वरं दाहं श्वयथुं सभगन्दरम्।

चर्शांस्यसृग्दरञ्चैव हन्ति विस्फोटकांस्तथा ॥४७॥

इति कटुकाद्यं घृतम्।

पथ्यागतरसे पथ्याहन्ताद्धैगतकल्कवान्।
प्रस्थः सिद्धो घृतात् पेयः सपाण्ड्वामयगुल्मनुत् ॥४८॥

इति पथ्याघृतम्।

दन्त्यायतुष्यलरसे पिष्टैर्दन्तीगलाटुभिः।
तद्वत् प्रस्थो घृतात् सिद्धः प्लीहपाण्डुर्त्तिशोफजित् ॥४९॥

इति दन्तीघृतम्।

पुराणसर्पिषः प्रस्थो द्राक्षार्धप्रस्थसाधितः।
कामलागुल्मपाण्डुर्त्तिज्वरमेहोदरापहः ॥५०॥

इति द्राक्षाघृतम्।

हरिद्रात्रिफलानिम्बबलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥५१॥

इति हरिद्रादिघृतम्।

गोमूत्रे द्विगुणे दार्व्याः कल्काचद्वयसाधितम्।
दार्व्याः पञ्चपलक्काथे कल्के कालीयकं परः ॥५२॥
माहिषात् सर्पिषः प्रस्थः पूर्वः पूर्वं परे परः।
स्नेहैरेभिरुपक्रम्य स्निग्धं मत्वा विरेचयेत् ॥५३॥
पयसा मूत्रयुक्तेन बहुशः केवलेन वा।
दन्तीफलरसे कोष्णे काश्मर्याञ्जलिना शृतम् ॥५४॥
द्राक्षाञ्जलिं मृदित्वा वा दद्यात् पाण्ड्वामयापहम्।
द्विगर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिकः पिवेत् ॥५५॥
कफपाण्डुस्तु गोमूत्रत्रियुता हरीतकीम्।
आरग्वधं रसेनेक्षोर्विदार्य्यामलकस्य च ॥५६॥
सव्योषं बिल्वपत्रं पिवेवा कामलापहम्।
दन्त्यर्द्धपलकल्कं वा द्विगुडं शीतवारिणा ॥५७॥

कामली त्रिवृतां वापि त्रिफलाया रसैः पिबेत् ।
विशालात्रिफलामुस्तकुष्ठदारुकलिङ्गकान् ॥५८॥
कार्षिकानर्द्धकर्षांशान् कुर्य्यादतिविषां तथा ।
कर्षौ मधुरसाया द्वौ सर्वमेतत् सुखाम्बुना ॥५९॥
मर्दितं तं रसं पूतं पीत्वा लिह्यात्त्र मध्वनु ।
कासं श्वासं ज्वरं दाहं पाण्डुरोगमरोचकम् ॥६०॥
गुल्मानाहामवातांश्च रक्तपित्तञ्च नाशयेत् ।
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम् ॥६१॥
शीतं मधुयुतं प्रातः कामलार्त्तः पिबेन्नरः ।
क्षीरमूत्रं पिबेत् पश्चं गव्यं माहिषमेव वा ॥६२॥
पाण्डुरोगी मूत्रसिद्धं वा मत्स्याक्षं त्रिफलारसम् ।
सकृत्तान् ज्वलितान् मूत्रे निर्वाप्यास्मय चाङ्कुरान् ॥६३॥
मातुलुङ्गस्य तत् पूतं पाण्डुशोथहरं पिबेत् ।
स्वर्णक्षीरीं त्रिवृत् श्यामे भद्रदारु सनागरम् ॥६४॥
गोमूत्राञ्जलिना पिष्टं मूत्रे वा क्वथितं पिबेत् ।
क्षीरमेभिः शृतं वापि पिबेद्दोषानुलोमनम् ॥६५॥
हरीतकीं प्रयोगेण गोमूत्रेणाथवा पिबेत् ।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥६६॥
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा पाययेत् भिषक् ॥६७॥
त्र्यूषणं त्रिफला मुस्तं विडङ्गं चित्रकाः समाः ।
नवायोरजसो भागास्तच्चूर्णं क्षौद्रसर्पिषा ॥६८॥
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ।
नवायसमिदं चूर्णं कृष्णात्रेयेण भाषितम् ॥६९॥

इति नवायसचूर्णम् ।

गुड़नागरमण्डूरतिलांशान् मानतः समान् ।

पिप्पलीद्विगुणां कुर्य्यात् गुटिकां पाण्डुरोगिणे ॥७०॥
त्रिफला त्र्यूषणं मुस्तं विडङ्गं चव्यचित्रकौ।
दार्व्वी त्वङ्माक्षिको धातुर्ग्रन्थिको देवदारु च ॥ ७१ ॥
एतान् द्विपलिकान् भागांश्चूर्णान् कुर्य्यात् पृथक् पृथक्।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥ ७२ ॥
गोमूत्रेऽष्टगुणे पक्त्वा तस्मिंस्तत् प्रक्षिपेत् ततः।
उदुम्बरसमान् कृत्वा वटकांस्तान् यथाग्निना ॥ ७३ ॥
उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम्।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥ ७४ ॥
कुष्ठान्यजीर्णकं शोथमूरुस्तम्भं कफामयान्।
अर्शांसि कामलां मेहं प्लीहानं शमयन्ति च ॥ ७५ ॥
इति मण्डूरवटकाः।
ताप्याद्रिजतुरूप्यायोमलाः पञ्च पलाः पृथक्।
चित्रकत्रिफलाव्योमविडङ्गैः पालिकैः सह ॥ ७६ ॥
शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुनाप्लुताः।
अभ्यस्यास्वक्षमात्रा हि जीर्णे नियमिताशिना ॥ ७७ ॥
कुलत्थकाकमाच्यादिकपोतपरिहारिणा।
त्रिफलायास्त्रयोभागास्त्रयस्त्रिकटुकस्य च ॥ ७८ ॥
भागश्चित्रकमूलस्य विडङ्गानां तथैव च।
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ॥ ७९ ॥
माक्षिकस्य च शुद्धस्य लौहस्य रजसस्तथा।
अष्टौ भागाः सितायाश्च तत् सर्वं सूक्ष्मचूर्णितम् ॥ ८० ॥
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे।
उदुम्बरसमां मात्रां ततः खादेद्यथाग्निना ॥ ८१ ॥
दिने दिने प्रयुञ्जीत जीर्णे भोज्यं यथेप्सितम्।
वर्जयित्वा कुलत्थानि काकमाचीकपोतकम् ॥ ८२ ॥

दार्वीत्वक्‌त्रिफलाव्योषं विडङ्गमयसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ ८४ ॥
तुल्या अयोरजःपथ्याहरिद्राः क्षौद्रसर्पिषा।
चूर्णिताः कामली लिह्यात् गुडक्षौद्रेण वाभयाः ॥ ८५ ॥
त्रिफला द्वे हरिद्रे च कटुरोहिण्ययोरजः।
चूर्णितं क्षौद्रसर्पिर्भ्यां स लेहः कामलापहः ॥ ८६ ॥
द्विपलांशां तुगाक्षीरीं नागरं मधुयष्टिकाम्।
प्रास्थिकीं पिप्पलीं द्राक्षां शर्करार्धतुलां शुभाम् ॥ ८७ ॥
धात्रीफलरसद्रोणे सुपिष्टं लेहवत् पचेत्।
शीतां मधुप्रस्थयुतां लिह्यात् पाणितलं ततः।
हन्त्येव कामलां पित्तं पाण्डुं कासं हलीमकम् ॥ ८८ ॥
इति धात्र्यवलेहः।

त्र्यूषणं त्रिफला चव्यं चित्रको देवदारु च।
विडङ्गानि समांशानि चित्रकश्चेति चूर्णयेत् ॥ ८९ ॥
मण्डूरतुल्यं तच्चूर्णं गोमूत्रेऽष्टगुणे पचेत्।
शनैः सिद्धास्तथा शीताः कार्याः कर्षसमा गुडाः ॥१००॥
यथाग्नि भक्षणीयास्ते प्लीहपाण्ड्वामयापहाः।
अर्शस्यर्शोनुदश्चैव तक्रवाद्याग्निनः स्मृताः ॥ १०१ ॥
इति मण्डूरवटकाः।

मञ्जिष्ठा रजनी द्राक्षा वला मूलान्ययोरजः।
लोध्रश्चैतेषु गौडः स्यादरिष्टः पाण्डुरोगिणाम् ॥१०२॥
इति गौड़ोऽरिष्टः।

बीजकात् षोडशपलं त्रिफलायाश्च विंशतिः।
द्राक्षायाः पञ्च लाक्षायाः सप्त द्रोणे जलस्य तत् ॥१०३॥
साध्य पादावशेषे तु पूतशेषे समावपेत्।
शर्करायास्तुलां प्रस्थं माक्षिकस्य च कार्षिकम् ॥ १०४ ॥

व्योषं व्याघ्रनखोशीरं क्रमुकं सैलवालुकम् ।
मधूकं कुष्ठमित्येतच्चूर्णितं घृतभाजने ।
यवेषु दशरात्रं तद्ग्रीष्मे द्विःशिशिरे स्थितम् ॥ १०५ ॥
पिबेत् तद्ग्रहणीपाण्डुरोगार्शःशोथगुल्मनुत् ।
मूत्रकृच्छ्राश्मरीमेहकामलासन्निपातनुत् ।
बीजकारिष्ट एवैष आत्रेयेण प्रकीर्त्तितः ॥१०६॥
इति बीजकारिष्टः ।
धात्रीफलसहस्रे द्वे पीडयित्वा रसन्तु तम् ।
क्षौद्राष्टांशेन संयुक्तं कृष्णार्द्धकुडवेन च ॥१०७॥
शर्करार्द्धतुलोन्मिश्रं पक्षं स्निग्धघटे स्थितम् ।
प्रपिबेन्मात्रया प्रातर्जीर्णे मितहिताशनः ॥१०८॥
कामलापाण्डुहृद्रोगवातासृग्विषमज्वरान् ।
कासहिक्कारुचिश्वासांश्चैषोऽरिष्टः प्रणाशयेत् ॥१०९॥
इति धात्र्यरिष्टः ।
स्थिरादिभिः शृतं तोयं पानाहारे प्रशस्यते ।
पाण्डूनां कामलार्त्तानां मृद्वीकामलकीरसः ॥११०॥
पाण्डुरोगप्रशान्त्यर्थमिति प्रोक्तं महर्षिणा ।
विकल्पमितद्भिषजा पृथग्दोषबलं प्रति ॥१११॥
वातिके स्नेहभूयिष्ठं पैत्तिके तिक्तशीतलम् ।
श्लैष्मिके कटुतिक्तोष्णं विमिश्रं सान्निपातिके ॥११२॥
निष्पातयेच्छरीरात् तु मृत्तिकां भक्षितां भिषक् ।
युक्तिज्ञः शोधनैस्तीक्ष्णैः प्रसमीक्ष्य बलाबलम् ॥११३॥
गुदकायस्य सर्पींषि बलाधानानि योजयेत् ॥११४॥
व्योषं बिल्वं हरिद्रे द्वे त्रिफला द्वे पुनर्नवे ।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ।
वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतैर्घृतम् ॥११५॥
साधयित्वा पिबेद्युक्त्या नरो मृद्दोषपीडितः ।

तद्वत् केशरयष्ट्याह्वपिप्पलीमूलबालकैः ॥११६॥
मृद्भक्षणादातुरस्य लोभादविनिवर्त्तिनः।
द्वेषार्थं भाविता कामं दद्यात् तद्दोपनाशनैः ॥११७॥
विड़ङ्गैलातिविषया निम्बपत्रेण पाठया।
वार्त्ताकैः कटुरोहिण्या कौटजैर्मूर्वयापि वा ॥११८॥
यथादोषं प्रकुर्वीत भेषज्यं पाण्डुरोगिणाम्।
क्रियाविशेष एषोऽस्य मत्तो हेतुविशेषतः ॥११९॥
तिलपिष्टनिभं यस्तु वर्चः सृजति कामली।
श्लेष्मणा रुद्धमार्गं तत् पित्तं कफहरैर्जयेत् ॥१२०॥
रूक्षशीतगुरुस्वादुव्यायामैर्वेगनिग्रहैः।
कफसंमूर्च्छितो वायुः स्थानात् पित्तं क्षिपेत् बली ॥१२१॥
हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः।
भवेत् साटोपविष्टम्भो गुरुणा हृदयेन च ॥१२२॥
दौर्बल्याल्पाग्निपार्श्वार्त्तिहिक्काश्वासारुचिज्वरैः।
क्रमेणाल्पेन सज्येत पित्ते शाखासमाश्रिते ॥१२३॥
बर्हितित्तिरिदक्षाणां रूक्षाम्लैः कटुकैः रसैः।
शुष्कमूलककौलत्थैर्यूषैश्चान्नानि भोजयेत् ॥१२४॥
मातुलुङ्गरसं क्षौद्रं पिप्पलीमरिचान्वितम्।
सनागरं पिबेत् पित्तं तथास्यैति स्वमाशयम् ॥१२५॥
व्यपाम्लैः कटुरूक्षोष्णैर्लवणैश्चाप्युपक्रमः।
आ पित्तरोगाच्च कुतो वायोश्च प्रशमाद्भवेत् ॥१२६॥
स्वस्थानमागते पित्ते पुरीषे पित्तरञ्जिते।
निवृत्तोपद्रवस्यास्य पूर्वः कामलिको विधिः ॥१२७॥
यदा तु पाण्डोर्वर्णः स्यात्हरितश्यावपीतकः।
बलोत्साहक्षयस्तन्द्राम्न्दाग्नित्व मृदुज्वरः ॥१२८॥
स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासतृष्णारुचिभ्रमः।

क्लीबकं तदा तस्य विद्यादनिलपित्ततः ॥१२९॥
गुडूचीस्वरसक्षीरसाधितं माहिषं घृतम्।
स पिबेत् विद्वतां स्निग्धरसेनामलकस्य तु ॥१३०॥
विरिक्तो मधुरप्रायं भजेत् पित्तानिलापहम्।
द्राक्षालेहं च पूर्वोक्तं सर्पींषि मधुराणि च ॥१३१॥
यापनान् क्षीरवस्तींश्च शीलयेत् सानुवासनान्।
मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याग्निवृद्धये ॥ १३२ ॥
कासिकञ्चाभयालेहं पिप्पलीं मधुकं बलाम्।
पयसा च प्रयुञ्जीत यथादोषं यथाबलम् ॥१३३॥

तत्र श्लोकौ।

पाण्डोः पञ्चविधस्योक्तं हेतुलक्षणभेषजम्।
कामला द्विविधा चैव साध्यासाध्यत्वमेव च ॥ १३४ ॥
तेषां विकल्पो यश्चान्यो महाव्याधिर्हलीमकः।
तस्य चोक्तं समासेन व्यञ्जनं सचिकित्सितम् ॥१३५॥

---

## एकाधिकविंशोऽध्यायः।

### हिक्काश्वासचिकित्सितम्।

वेदज्ञोऽर्ध्यतत्त्वज्ञमात्रेयमृषिसत्तमम्।
अपृच्छत् संशयं धीमानग्निवेशः कृताञ्जलिः ॥१॥
य इमे द्विविधाः प्रोक्तास्त्रिदोषास्त्रिप्रकोपणाः।
रोगा नानात्मकास्तेषां कस्को भवति दुर्जयः ॥२॥
अग्निवेशस्य तद्वाक्यं श्रुत्वा मतिमतां वरः।
उवाच परमप्रीतः परमार्थविनिश्चयम् ॥३॥
काम प्राणहरा रोगा बहवो न तु ते तथा।
यथा श्वासश्च हिक्का च प्राणानाशु निकृन्ततः ॥४॥

अन्यैरप्युपसृष्टस्य रोगैर्जन्तोः पृथग्विधैः।
अन्ते सञ्जायते हिक्का श्वासो वा तीव्रवेदनः ॥५॥
कफवातात्मकावेतौ पित्तस्थानसमुद्भवौ।
हृदयस्य रसादीनां धातूनाञ्चोपशोषणौ ॥६॥
तस्मात् साधारणावेतौ मतौ समसुदुर्जयौ।
मिथ्योपचरितौ क्रुद्धौ हताशाय्वीयियाविव ॥७॥
पृथक् पञ्चविधावेतौ निर्दिष्टौ रोगसंग्रहे।
तयोः शृणु समुत्थानं लिङ्गञ्च सभिषग्जितम् ॥८॥
रजसा धूमवाताभ्यां शीतस्थानाम्बुसेवनात्।
व्यायामाद्ग्राम्यधर्माध्वरूक्षान्नविषमाशनात् ॥९॥
आमप्रदोषादानाहाद्रौक्ष्यादत्यपतर्पणात्।
दौर्बल्यान्मर्मणो घातात् द्वन्द्वात् शुद्ध्यतियोगतः ॥१०॥
अतीसारज्वरच्छर्दिप्रतिश्यायक्षतक्षयात्।
रक्तपित्तादुदावर्त्ताद्विसूच्यलसकादपि ॥११॥
पाण्डुरोगाद्विषाच्चैव प्रवर्त्तेते गदाविमौ।
निष्पावमाषपिण्याकतिलतैलनिषेवणात् ॥१२॥
पिष्टशालूकपिष्टम्भिविदाहिगुरुभोजनात्।
जलजानूपपिशितदध्यामक्षीरसेवनात्॥१३॥
अभिष्यन्द्युपचाराच्च श्लेष्मलानाञ्च सेवनात्।
कण्ठोरसोः प्रतीघाताद्विबन्धैश्च पृथग्विधैः ॥ १४ ॥
मारुतः प्राणवाहीनि स्रोतांस्याविश्य कुप्यति।
उरस्थः कफमुद्धूय हिक्काश्वासान् करोति सः ॥१५॥
घोरान् प्राणोपरोधाय प्राणिनां पञ्च पञ्च च।
उभयोः पूर्वरूपाणि शृणु वक्ष्यत्यतः परम्।
कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता ॥१६॥
हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च।

आनाहः पार्श्वशूलञ्च पीड़नं हृदयस्य च ॥१७॥
प्राणस्य च विलोमत्वं श्वासानां पूर्वलक्षणम् ।
प्राणोदकान्नवाहीनि स्रोतांसि सकफोऽनिलः ॥१८॥
हिक्काः करोति संरुध्य तासां लिङ्गं पृथक् शृणु ।
क्षीणमांसबलप्राणतेजसः सकफोऽनिलः ॥१९॥
गृहीत्वा सहसा कण्ठमुच्चैर्घोषवतीं भृशम् ।
करोति सततं हिक्कामेकद्वित्रिगुणां तथा ॥२०॥
प्राणः स्रोतांसि मर्माणि संरुध्योपाणमेव च ।
संज्ञां मुष्णाति गात्रे च स्तम्भं सञ्जनयत्यपि ॥२१॥
मार्गञ्चैवान्नपानानां रुणद्ध्युपहतस्मृतेः ।
साश्रुविप्लुतनेत्रस्य स्तब्धशङ्खच्युतभ्रुवः ॥२२॥
सक्तजल्पप्रलापस्य निर्वृतिं नाधिगच्छतः ।
महावेगा महावेगा महाशब्दा महाबला ।
महाहिक्केति सा गृणां सद्यः प्राणहरा मता ॥२३॥
इति महाहिक्का ।

हिक्कते यः प्रवृद्धस्तु क्लान्तो दीनमना नरः ।
जर्जरेणोरसा कृच्छ्रं गम्भीरमनुनादयन् ॥२४॥
संजृम्भन् संक्षिपंश्चैव तथाङ्गानि प्रसारयन् ।
पार्श्वे चोभे समायम्य कूजन् स्तम्भरुगर्दितः ॥२५॥
नाभेः पक्वाशयाद्वापि हिक्का चास्योपजायते ।
क्षोभयन्ती भृशं देहं नामयन्तीव ताम्यतः ॥२६॥
रुणद्ध्युच्छ्वासमार्गन्तु प्रनष्टबलचेतसः ।
गम्भीरनामा सा तस्य हिक्का प्राणान्तिकी मता ॥२७॥
इति गम्भीरा हिक्का ।

व्यपेता जायते हिक्का यान्नपाने चतुर्विधे ।
आहारपरिणामान्ते भूयश्च लभते बलम् ॥२८॥
प्रलापवम्यतीसारतृष्णार्त्तस्य विचेतसः ।

सजृम्भस्य सुतापस्य शुष्कास्यस्य विनामिनः ॥२९॥
पर्य्याध्मातस्य हिक्का या जत्रुमूलादसन्तता ।
सा व्यपेतेति विज्ञेया हिक्का प्राणोपरोधिनी ॥३०॥

इति व्यपेता वा यमिका हिक्का ।

क्षुद्रवातो यदा कोष्ठाद्वायामपरिघट्टितः ।
कण्ठे प्रपद्यते हिक्कां तदा क्षुद्रां करोति सः ॥३१॥
अतिदुःखा न सा घोरःशिरोमर्म्मप्रबाधिनी ।
न चोच्छ्रासान्नपानानां मार्गमावृत्य तिष्ठति ॥३२॥
वृद्धिमायस्यतो याति भुक्तमात्रे च मार्दवम् ।
यतः प्रवर्त्तते पूर्वं तत एव निवर्त्तते ॥३३॥
हृदयं क्लोम कण्ठञ्च तालुकञ्च समाश्रिता ।
मृद्वी सा क्षुद्रहिक्केति नृणां साध्या प्रकीर्त्तिता ॥३४॥

इति क्षुद्रहिक्का ।

सहसात्यभ्यवहृतैः पानान्नैः पीडितोऽनिलः ।
ऊर्द्ध्वं प्रपद्यते कोष्ठान् मद्यैर्वातिमदप्रदैः ॥ ३५ ॥
तथातिरोषभाष्याध्वभारातिपरिवर्त्तनैः ।
वायुः कोष्ठगतो धावन् पानभोज्यप्रपीड़ितः ॥३६॥
उरःस्रोतः समाविश्य कुर्य्याद्धिक्कां ततोऽन्नजाम् ।
तया शनैरसम्बद्धं क्षुवंश्चापि स हिक्कते ॥३७॥
न मर्म्मबाधाजननी नेन्द्रियाणां प्रबाधिनी ।
हिक्का पीते तथा भुक्ते शमं याति च सान्नजा ॥३८॥

इति अन्नजा हिक्का ।

अतिसञ्चितदोषस्य भक्तच्छेदक्षयस्य च ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥३९॥
आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम् ।
यमिका च प्रलापार्त्तितृष्णामोहसमन्विता ॥४०॥

आनाहः पार्श्वशूलञ्च पीड़नं हृदयस्य च ॥१७॥
प्राणस्य च विलोमत्वं श्वासानां पूर्वलक्षणम्।
प्राणोदकान्नवाहीनि स्रोतांसि सकफोऽनिलः ॥१८॥
हिक्काः करोति संरुध्य तासां लिङ्गं पृथक् शृणु।
क्षीणमांसबलप्राणतेजसः सकफोऽनिलः ॥१९॥
गलोत्था सहसा वाऽप्युत्क्षेपवती भृशम्।
करोति सततं हिक्कामेकद्वित्रिगुणां तथा ॥२०॥
प्राणः स्रोतांसि मर्माणि सन्धीनप्याणसैव च।
संज्ञां मुष्णाति गात्रे च स्तम्भं सन्नमयत्यपि ॥२१॥
मार्गश्चैवान्नपानानां कण्ठापहतस्मृतेः।
साश्रुविप्लुतनेत्रस्य स्तब्धशङ्खच्युतभ्रुवः ॥२२॥
सक्तजल्पप्रलापस्य निर्वृतिं नाधिगच्छतः।
महातेजा महावेगा महाशब्दा महाबला।
महाहिक्केति सा नॄणां सद्यः प्राणहरा मता ॥२३॥
इति महाहिक्का।
हिक्कते यः प्रहृदस्तु क्षयी दीनमना नरः।
जर्जरेणोरसा कृच्छ्रं गम्भीरमनुनादयन् ॥२४॥
सञ्जृम्भन् संक्षिपंश्चैव तथाङ्गानि प्रसारयन्।
पार्श्वे चोभे समायम्य कूजन् स्तम्भरुगर्दितः ॥२५॥
नाभेः पक्वाशयाद्वापि हिक्का चास्योपजायते।
क्षोभयन्ती भृशं देहं नामयन्तीव ताम्यतः ॥२६॥
रुणद्धुच्छ्वासमार्गन्तु प्रनष्टबलचेतसः।
गम्भीरनामा सा तस्य हिक्का प्राणान्तिकी मता ॥२७॥
इति गम्भीरा हिक्का।
व्यपेता जायते हिक्का याऽन्नपाने चतुर्विधे।
आहारपरिणामान्ते भूयश्च लभते बलम् ॥२८॥
प्रलापवम्यतीसारतृष्णार्त्तस्य विचेतसः।

सजृम्भस्य सुताचस्य शुष्कास्यस्य विनामिनः ॥२८॥
पर्य्याध्मातस्य हिक्का या जत्रुमूलादसन्तता।
सा व्यपेतेति विज्ञेया हिक्का प्राणोपरोधिनी ॥३०॥
इति व्यपेता वा यमिका हिक्का।
क्षुद्रवातो यदा कोष्ठाद्व्यायामपरिघट्टितः।
कण्ठे प्रपद्यते हिक्कां तदा क्षुद्रां करोति सः ॥३१॥
अतिदुःखा न सा चोरःशिरोमर्म्मप्रबाधिनी।
न चोच्छासान्नपानानां मार्ग्ममावृत्य तिष्ठति ॥३२॥
वृद्धिमायम्यतो याति भुक्तमात्रे च मार्दवम्।
यतः प्रवर्त्तते पूर्वं तत एव निवर्त्तते ॥३३॥
हृदय क्लोम कण्ठञ्च तालुकञ्च समाश्रिता।
मृद्वी सा क्षुद्रहिक्केति नृणां साध्या प्रकीर्त्तिता ॥३४॥
इति क्षुद्रहिक्का।
सहसात्यम्बुवद्धैः पानान्नैः पीडितोऽनिलः।
ऊर्द्धं प्रपद्यते कोष्ठात् मद्यैर्वातिमदप्रदैः ॥ ३५ ॥
तथातिरोषभाष्याध्वभारातिपरिवर्त्तनैः।
वायुः कोष्ठगतो धावन् पानभोज्यप्रपीडितः ॥३६॥
उर:स्रोतः समाविश्य कुर्य्याद्धिक्का ततोऽन्नजाम्।
तया शनैरसम्बन्धं क्षुवंश्चापि स हिक्कते ॥३७॥
न मर्म्मबाधाजननी नेन्द्रियाणां प्रबाधिनी।
हिक्का पीते तथा भुक्ते शमं याति च सान्नजा ॥३८॥
इति अन्नजा हिक्का।
अतिसञ्चितदोषस्य भक्तच्छेदकृशस्य च।
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥३९॥
आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम्।
यमिका च प्रलापार्त्तितृष्णामोहसमन्विता ॥४०॥

अक्षीणस्याप्यदीनस्य स्थिरधात्विन्द्रियस्य यः ।
तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ॥४१॥
यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः ।
विष्वग्व्रजति संरुद्धस्तदा श्वासान् करोति सः ॥४२॥
उद्धूयमानवातो यः शब्दवद्दुःखितो नरः ।
उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम् ॥४३॥
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः ।
विकृताक्ष्याननो बद्धमूत्रवर्चा विशीर्णवाक् ॥४४॥
दीनः प्रश्वसितञ्चास्य दूराद्विज्ञायते भृशम् ।
महाश्वासोपसृष्टः स क्षिप्रमेव प्रमद्यते ॥४५॥

इति महाश्वासः ।

दीर्घं श्वसिति यस्तूर्द्ध्वं न च प्रत्याहरत्यधः ।
श्लेष्मावृतमुखस्रोतः क्रुद्धगन्धवहार्दितः ॥४६॥
ऊर्द्ध्वदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्ततः ।
प्रमुह्यन् वेदनार्त्तश्च शुष्कास्योऽरतिपीड़ितः ॥४७॥
ऊर्द्ध्वश्वासे प्रकुपिते ह्यधःश्वासनिरोधनात् ।
मुह्यतस्ताम्यतश्चोर्द्ध्वं श्वासस्तस्यैव हन्त्यसून् ॥४८॥

इति ऊर्द्ध्वश्वासः ।

यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीड़ितः ।
न वा श्वसिति दुःखार्त्तो मर्मच्छेदरुगर्दितः ॥४९॥
आनाहस्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना ।
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः ॥५०॥
विचेताः परिशुष्कास्यो विवर्णः प्रलपन् नरः ।
छिन्नश्वासेन संछिन्नः स शीघ्रं प्रजहात्यसून् ॥५१॥

इति छिन्नश्वासः ।

प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते ।

ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य्य च ॥५२॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा।
अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीडकम् ॥५३॥
प्रताम्यत्यतिवेगाच्च कासते सन्निरुध्यते।
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥५४॥
श्लेष्मण्यमुच्यमाने च भृशं भवति दुःखितः।
तस्यैव च विमोक्षान्ते मुहूर्त्तं लभते सुखम् ॥५५॥
अथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम्।
न चापि निद्रां लभते शयानः श्वासपीड़ितः ॥५६॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः।
आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति ॥५७॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्त्तिमान्।
विशुष्कास्यो मुहुःश्वासो मुहुश्चैवावधम्यते ॥५८॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्चाभिवर्द्धते।
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥५९॥

इति तमकश्वासः।

ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकन्तु तम्।
उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधजः ॥६०॥
तमसा वर्द्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति।
मज्जतस्तमसी वास्य विद्यात् सन्तमकन्तु तम् ॥ ६१ ॥

इति प्रतमकसन्तमकश्वासौ।

रूक्षायासोद्भवः कोष्ठे क्षुद्रवात उदीरयन्।
क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥६२॥
निहन्ति न स गात्राणि न च दुःखो यथेतरे।
न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥६३॥
नेन्द्रियाणां व्यथां नापि काञ्चिदुत्पादयेद्रुजम्।

स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः ॥६४॥
इति श्वासाः समुद्दिष्टाः हिक्काश्चैव सलक्षणैः ।
एषां प्राणहरा वर्ज्या घोरास्ते ह्याशुकारिणः ॥६५॥
भेषजैः साध्ययाप्यांस्तु क्षिप्रं भिषगुपाचरेत् ।
उपेक्षिता दहेयुर्हि शुष्कं कक्षमिवानलाः ॥६६॥
कारणस्थानमूलैक्यादेकमेव चिकित्सितम् ।
द्वयोरपि यथादृष्टमृषिभिस्तन्निबोधत ॥६७॥
हिक्काश्वासार्दितं स्निग्धैरादौ स्वेदैरुपाचरेत् ।
आक्तं लवणतैलेन नाडीप्रस्तरसङ्करैः ॥६८॥
तैरस्य ग्रथितः श्लेष्मा स्रोतःस्वभिविलीयते ।
खानि मार्दवमायान्ति ततो वातानुलोमता ॥६९॥
यथाद्रिकुञ्जेष्वर्कांशुतप्तं विष्यन्दते हिमम् ।
श्लेष्मा स्थिरः शरीरस्थः स्वेदैर्विष्यन्दते तथा ॥७०॥
स्विन्नं ज्ञात्वा ततस्तूर्णं भोजयेत् स्निग्धमोदनम् ।
मत्स्यानां शूकराणां वा रसैर्दध्युत्तरेण वा ॥७१॥
ततः श्लेष्मणि संवृद्धे वमनं पाययेत् तु तम् ।
पिप्पलीसैन्धवक्षौद्रैर्युक्तं वाताविरोधि यत् ॥७२॥
निर्हृते सुखमाप्नोति सकफे दुष्टविग्रहे ।
स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ॥७३॥
लीनदोषेोपशेषः स्यात् धूमैस्तं निर्हरेद्बुधः ।
हरिद्रापत्रमैरण्डमूलं लाक्षां मनःशिलाम् ॥७४॥
मांसीं सदेवदार्वेलां पिष्ट्वा वर्त्तिं प्रकल्पयेत् ।
ता घृताक्तां पिबेद्धूमं यवैर्वा घृतसंयुतैः ॥७५॥
मधूच्छिष्टं सर्जरसं घृतं मल्लकसंपुटे ।
कृत्वा धूमं पिबेच्छृङ्गं वालं वा स्नायु वा गवाम् ॥७६॥
श्योणाकवर्द्धमानानां नाडीं शुष्कां कुशस्य वा ।

पद्मकं गुग्गुलं लोध्रं शल्लकीं वा घृताप्लुताम् ॥७७॥
स्वरक्षीणातिसारासृक्पित्तदाहानुबन्धजान् ।
मधुरस्निग्धशीताद्यैर्हिक्काश्वासानुपाचरेत् ॥७८॥
न स्वेद्याः पित्तदाहार्त्ता रक्तस्वेदातिवर्त्तिनः ।
क्षीणधातुबला रूक्षा गर्भिण्यश्चापि पित्तलाः ॥७९॥
कोष्णैः कामसुराकण्ठं स्निग्धसेकैः सशर्करैः ।
उत्कारिकोपनाहैश्च स्वेदयेन्मृदुभिः क्षणम् ॥८०॥
तिलोमामाषगोधूमचूर्णैर्वातहरैः सह ।
स्नेहैरोत्कारिका साम्लैः सक्षीरैर्वा शृता हिता ॥८१॥
नवज्वरामदोषेषु रूक्षस्वेदं विलङ्घनम् ।
समोष्णोल्लेखनं वापि कारयेल्लवणाम्बुना ॥८२॥
अतियोगोद्धतं वातं दृष्ट्वा वातहरैर्भिषक् ।
रसाद्यैर्नातिशीतोष्णैरभ्यङ्गैश्च शमं नयेत् ॥८३॥
उदावर्त्ते तथाध्माने मातुलुङ्गाम्लवेतसैः ।
हिङ्गुपीलुविडैश्चान्नं युक्तं स्यादनुलोमनम् ॥८४॥
हिक्काश्वासामयी ह्येको बलवान् दुर्बलोऽपरः ।
कफाधिकस्तथैवैको रूक्षबह्वनिलोऽपरः ॥८५॥
कफाधिके बलस्थे च वमनं सविरेचनम् ।
कुर्यात् पथ्याशिने धूमलेहादिशमनं ततः ॥८६॥
वातिकान् दुर्बलान् बालान् वृद्धांश्चानिलसूदनैः ।
तर्पयेदेव शमनैः स्नेहयूषरसादिभिः ॥८७॥
असंक्लिष्टकफास्विन्नदुर्बलानां विशोधनात् ।
वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् ॥८८॥
दृढान् बहुकफांस्तस्मादूर्ध्वाधोनैरानूपवारिजैः ।
दृप्तान् विशोधयेत् स्निग्धान् बृंहयेदितरान् भिषक् ॥८९॥
बर्हितित्तिरिदक्षाय जाङ्गलाय मृगद्विजाः ।

दशमूलीरसे सिद्धाः कौलत्थे वा रसे हिताः ॥८०॥
निदिग्धिकां बिल्वमध्यं कर्कटाख्यां दुरालभाम्।
विदार्यादिं गुडूचीञ्च कुलत्थांश्च सचित्रकान् ॥८१॥
जले पक्त्वा रसः पूतो पिप्पलीघृतभर्जितः।
सनागरः सलवणश्चेष्टः स्याद् यूषो भोजने हितः ॥८२॥
रास्नां बलां पञ्चमूलं ह्रस्वं मुद्गान् सचित्रकान्।
पक्त्वाम्भसि रसे तस्मिन् यूषः साध्यश्च पूर्ववत् ॥८३॥
पल्लवान् मातुलुङ्गस्य निम्बस्य कुलकस्य च।
पक्त्वा मुद्गांश्च सव्योषान् क्षारयूषान् विपाचयेत् ॥८४॥
दत्त्वा सलवणं क्षारं त्रियूषणि मरिचानि च।
युक्त्या संसाधितो यूषो हिक्काश्वासविकारनुत् ॥८५॥
कासमर्दकपत्राणां यूषः शोभाञ्जनस्य च।
शुष्कमूलकयूषश्च हिक्काश्वासनिवारणः ॥८६॥
सदधिव्योषसर्पिष्को यूषो वार्त्ताकजो हितः।
शालिषष्टिकगोधूमयवावान्यनवानि च ॥८७॥
हिङ्गुसौवर्चलाजाजीविड़पौष्करचित्रकैः।
सकर्कटाह्वयैः सिद्धा यवागूः श्वासहिक्किनाम् ॥८८॥
दशमूलीशटीरास्नापिप्पलीमूलपौष्करैः।
शृङ्गी तामलकी भार्गी गुडूची नागराम्बुभिः ॥८९॥
यवागूं विधिना सिद्धां कषायं वा पिबेन्नरः।
कासहृद्ग्रहपार्श्वार्त्तिहिक्काश्वासप्रशान्तये ॥१००॥
पुष्कराह्वशटीव्योषमातुलुङ्गाम्लवेतसैः।
योजयेदन्नपानानि ससर्पिर्विड़हिङ्गुभिः ॥१०१॥
दशमूलस्य वा क्वाथमथवा देवदारुणः।
तृषितो मदिरां वापि हिक्काश्वासी पिबेन्नरः ॥१०२॥
पाठा मधुरसां रास्नां सरलं देवदारु च।

प्रक्षाल्य जर्जरीकृत्य सुरामण्डे निधापयेत् ॥१०३॥
तं मन्दलवणं कृत्वा भिषक् प्रसृतसम्मितम्।
पाययेत् तु ततो हिक्का श्वासश्चैवोपशाम्यति ॥१०४॥
हिङ्गु सौवर्चलं कोलं समङ्गां पिप्पलीं बलाम्।
मातुलुङ्गरसे पिष्टमारनालेन वा पिबेत् ॥१०५॥
सौवर्चलं नागरञ्च भार्गीं द्विशर्करायुतम्।
उष्णाम्बुना पिबेदेतद्धिक्काश्वासविकारनुत् ॥१०६॥
भार्गीनागरयोः कल्कं मरिचक्षारयोस्तथा।
पीतद्रुचित्रकास्फोतामूर्वाणां चाम्बुना पिबेत् ॥१०७॥
मधूलिका तुगाक्षीरी नागरं पिप्पली तथा।
उत्कारिका घृते सिद्धा श्वासे पित्तानुबन्धजे ॥१०८॥
श्वाविधः शशमांसञ्च शल्लकस्य च शोणितम्।
पिप्पलीघृतसिद्धानि श्वासे वातानुबन्धजे ॥१०९॥
सुवर्चलारसो दुग्धं घृतं त्रिकटुकायुतम्।
शाल्योदनस्यानुपानं वातपित्तानुगे हितम् ॥११०॥
शिरीषपुष्पस्वरसः सप्तपर्णस्य वा पुनः।
पिप्पलीमधुसंयुक्तः कफपित्तानुगे मतः ॥१११॥
मधुकं पिप्पलीमूलं गुडो गोऽश्वशकृद्रसः।
घृतं क्षौद्रं हिक्काकासश्वासाभिष्यन्दिनां शुभम् ॥११२॥
खराश्वोष्ट्रवराहाणां मेषस्य च गजस्य च।
शकृद्रसं मधुकफे चैकैकं मधुना पिबेत् ॥११३॥
क्षारञ्चाप्यश्वगन्धाया लेहयेत् क्षौद्रसर्पिषा।
मयूरपादं नालं वा त्र्यकालं शल्लकस्य वा ॥११४॥
श्वाविज्जाखण्डकचाषाणां रोमाणि क्षुरस्य वा।
शृङ्गैकशिफानां वा चर्मास्थीनि क्षुरांस्तथा ॥११५॥
सर्वाण्येकैकशो वापि दग्ध्वा क्षौद्रघृतान्वितान्।

चूर्णं लीढ्वा जयेत् कासं हिक्कां श्वासञ्च दारुणम् ॥११६॥
एते हि कफसंरुद्धगतिप्राणप्रकोपजाः।
तस्मात् तन्मार्गशुद्ध्यर्थं सेका लेह्या न निष्कफे ॥११७॥
कासिने च्छर्दनं दद्यात् स्वरभङ्गे च बुद्धिमान्।
वातश्लेष्महरैर्युक्तं तमके तु विरेचनम् ॥११८॥
उदीर्य्यते भृशतरं मार्गरोधाद्वहज्जलम्।
यथा तथानिलस्तस्य मार्गं नित्यं विशोधयेत् ॥११९॥
शटीचोरकजीवन्तीत्वङ्मुस्तं पुष्करादयम्।
सुरस तामलकीला पिप्पल्यगुरु नागरम् ॥१२०॥
वालकञ्च समं चूर्णं कृत्वाष्टगुणशर्करम्।
सर्वथा तमके श्वासे हिक्कायाञ्च प्रयोजयेत् ॥१२१॥
मुक्ताप्रवालवैदूर्य्यशङ्खस्फटिकमञ्जनम्।
ससारगन्धकाचार्कसूक्ष्मैला लवणद्वयम् ॥१२२॥
ताम्रायोरजसी रूप्यं ससीगन्धिकशैलकम्।
जातीफलं शणाबीजमपामार्गस्य तण्डुलाः ॥१२३॥
एषां माषितलं चूर्णं तुल्यानां क्षौद्रसर्पिषा।
हिक्कां श्वासञ्च कासञ्च लीढ़माशु नियच्छति ॥१२४॥
अञ्जनात् तिमिरं काच नीलिकं पुष्पकं तमः।
पैल्यं कण्डुमभिष्यन्दं मन्दञ्च तत् प्रसादयेत् ॥१२५॥
इति मुक्ताद्यचूर्णम्।

शटीपुष्करमूलानां चूर्णमामलकस्य च।
मधुना सयुतं लेह्यं चूर्णं वा काललोहजम् ॥१२६॥
मशर्करा तामलकीं द्राक्षां गोऽश्वशकृद्रसम्।
तुल्यं गुडं नागरञ्च प्राशयेत् नावयेत् तथा ॥१२७॥
लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा।
नावयेच्चन्दनं वापि नारीक्षीरेण संयुतम् ॥१२८॥

सुखोष्णं घृतमण्डं वा सैन्धवेनावचूर्णितम्।
नावयेन्मचिकाविष्ठामलक्तकरसेन वा ॥१२८॥
स्त्रियाः स्तन्येन सिद्धं वा सर्पिर्मधुरकैरपि।
पीतं नस्तो निषिक्तं वा सद्यो हिक्कां नियच्छति ॥१३०॥
सकृदुष्णं सकृच्छीतं व्यत्यासाद्धिक्किनां पयः।
पाने नस्तः क्रियायां वा शर्करामधुसंयुतम् ॥१३१॥
अधोभागे घृतं सिद्धं सद्यो हिक्कां नियच्छति।
पिप्पलीमधुयुक्तौ वा रसौ धात्रीकपित्थयोः ॥१३२॥
लाजालाक्षामधुद्राक्षापिप्पल्यश्वशकृद्रसान्।
लिह्यात् कोलं मधुद्राक्षापिप्पलीनागराणि वा ॥१३३॥
शीताम्बुसेकः सहसा त्रासो विस्मापनं भयम्।
क्रोधहर्षप्रियोद्वेगा हिक्काप्रच्यवना मताः ॥१३४॥
हिक्काश्वासविकाराणां निदानं यत् प्रकीर्त्तितम्।
वर्ज्यमारोग्यकामैस्तद्धिक्काश्वासविकारिभिः ॥१३५॥
हिक्काश्वासातुरान्ये ये शुष्कोरःकण्ठतालुकाः।
प्रकृत्या रूक्षदेहाश्च सर्पिर्भिस्तानुपाचरेत् ॥१३६॥
दशमूलरसे सर्पिर्दधिमण्डे च साधयेत्।
शठ्यासौवर्चलक्षारवयःस्थाहिङ्गुचोरकैः।
कायस्थया च तत्सिद्धं हिक्काश्वासौ प्रणाशयेत् ॥१३७॥

इति दशमूलाद्यघृतम्।

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी।
भूतीकं पौष्करं मूलं पलाशश्चित्रकः शटी ॥१३८॥
सौवर्चलं तामलकी सैन्धवं बिल्वपेशिका।
तालीशपत्रं जीवन्ती वचा तैरक्षसम्मितैः ॥१३९॥
हिङ्गुपादैर्घृतप्रस्थं पचेत् तोये चतुर्गुणे।

एतद् यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः ।
शोषानिलार्शोग्रहणीहृत्पार्श्वरुज एव वा ॥१४०॥

इति तेजोवत्यादिघृतम् ।

मनःशिलासर्जरसलाक्षारजनिपद्मकैः ।
मञ्जिष्ठैलैश्च कर्षांशैः प्रस्थः सिद्धो घृतादितः ॥१४१॥

इति मनःशिलादिघृतम् ।

जीवनीयोपसिद्धं वा सक्षौद्रं लेहयेद् घृतम् ।
त्र्यूषणं दाधिकं वापि पिबेद् वासाघृतं तथा ॥१४२॥
यत् किञ्चित् कफवातघ्नमुष्णं वातानुलोमनम् ।
भेषजं पानमन्नं वा तद्धितं श्वासहिक्किने ॥१४३॥
वातकृद्वा कफहरं कफकृद्वानिलापहम् ।
कार्यं नैकान्तिकं ताभ्यां प्रायःश्रेयोऽनिलापहम् ॥१४४॥
सर्वेषां बृंहणैर्ह्यल्पः शक्यश्च प्रायशो भवेत् ।
नात्यर्थं शमनोपायो भृशोऽशक्यश्च कर्शने ॥१४५॥
तस्माच्छुद्धानशुद्धांश्च शमनैर्बृंहणैरपि ।
हिक्काश्वासार्दितान् जन्तून् प्रायशः समुपाचरेत् ॥१४६॥

तत्र श्लोकः ।

दुर्जयत्वे समुत्पत्तौ क्रियैकत्वे च कारणम् ।
लिङ्गं पथ्यञ्च हिक्कानां श्वासानाञ्चेह दर्शितम् ॥१४७॥

---

## द्वाविंशोऽध्यायः ।

### कासचिकित्सितम् ।

तपसा यशसा धृत्या धिया च परयान्वितः ।
आत्रेयः कासशान्त्यर्थं सिद्धं प्राह चिकित्सितम् ॥१॥
वातादिभ्यस्त्रयो ये च क्षतजः क्षयजस्तथा ।
पञ्चैते स्युर्नृणां कासा वर्द्धमानाः क्षयप्रदाः ॥२॥

पूर्वरूपं भवेत् तेषां शूकपूर्णगलास्यता।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥३॥
अधःप्रतिहतो वायुरूर्द्धस्रोतःसमाश्रितः।
उदानभावमापन्नः कण्ठे सक्तस्तथोरसि ॥४॥
आविश्य शिरसः खानि सर्वाणि प्रतिपूरयन्।
आभञ्जन्नाक्षिपन् देहं हनुमन्ये तथाक्षिणी ॥५॥
नेत्रे पृष्ठमुरःपार्श्वे निर्भुज्य स्तम्भयंस्ततः।
शुष्को वा सकफो वापि कसनात् कास उच्यते ॥६॥
प्रतिघातविशेषेण तस्य वायोः सरंहसः।
वेदनाशब्दवैषम्यं कासानामुपजायते ॥७॥
रूक्षशीतकषायाल्पप्रमितानशनं स्त्रियः।
वेगधारणमायासो वातकासप्रवर्त्तकाः ॥८॥
हृत्पार्श्वोरःशिरःशूलस्वरभेदकरो भृशम्।
शुष्कोरःकण्ठवक्त्रस्य हृष्टलोम्नः प्रताम्यतः ॥९॥
निर्घोषदैन्यश्वासस्य दौर्बल्यक्षयमोहकृत्।
शुष्ककासः कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत् ॥१०॥
स्निग्धाम्ललवणोष्णैश्च भुक्तमात्रे प्रशाम्यति।
ऊर्द्धवातस्य जीर्णेऽन्ने वेगवान् मारुतो भवेत् ॥११॥
कटुकोष्णविदाह्यम्लक्षाराणामतिसेवनम्।
पित्तकासकरं क्रोधः सन्तापश्चाग्निसूर्यजः ॥१२॥
पीतनिष्ठीवनाक्षित्वं तिक्तास्यत्वं स्वरामयः।
उरोधूमायनं तृष्णा दाहो मोहोऽरुचिर्भ्रमः ॥१३॥
प्रततं कासमानश्च ज्योतींषीव च पश्यति।
श्लेष्माणं पित्तसंसृष्टं निष्ठीवति च पैत्तिके ॥१४॥
गुर्वभिष्यन्दिमधुरस्निग्धस्वप्नाविचेष्टनैः।
वृद्धः श्लेष्मानिलं रुद्ध्वा कफकासं करोति हि ॥१५॥

मन्दाग्नित्वारुचिच्छर्दिपीनसोत्क्लेशगौरवैः ।
लोमहर्षास्यमाधुर्यक्लेदसंसदनैर्युतम् ॥१६॥
बहुलं मधुरं स्निग्धं निष्ठीवति घनं कफम् ।
कासमानोऽतिरुग्वक्षः सम्पूर्णमिव मन्यते ॥१७॥
अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः ।
रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत् ॥१८॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम् ।
रुजमानेन कण्ठेन विरुग्णेनैव चोरसा ॥१९॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥२०॥
पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः ।
पारावत इवाकूजन् कासवेगात् क्षतोद्भवात् ॥२१॥
विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ॥२२॥
कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ।
दुर्गन्धं हरितं रक्तं ष्ठीवेत् पूयोपमं कफम् ॥२३॥
स्थानादुत्कासमानश्च हृदयं मन्यते च्युतम् ।
अकस्मादुष्णशीतार्त्तो बह्वाशी दुर्बलः कृशः ॥२४॥
स्निग्धाच्छमुखवर्णत्वक् श्रीमद्दर्शनलोचनः ।
पाणिपादतलैः श्लक्ष्णैः सततासूयको घृणी ॥२५॥
ज्वरो मिश्राकृतिस्तस्य पार्श्वरुक् पीनसोऽरुचिः ।
भिन्नसङ्घातवर्चस्त्वं स्वरभेदोऽनिमित्ततः ॥२६॥
इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।
याप्यो बलवतां वा स्याद् याप्यस्त्वेवं क्षतोत्थितः ॥२७॥
कदाचिदपि सिध्येतामेतौ पादगुणान्वितौ ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्तितः ॥२८॥

त्रीन् साध्यान् साधयेत् पूर्वान् पथ्यैर्याप्यांश्च यापयेत् ।
चिकित्सामत ऊर्द्धन्तु शृणु कासनिवर्हिणीम् ॥२६॥
रूचस्यानिलजं कासमादौ स्नेहैरुपाचरेत् ।
सर्पिर्भिर्वस्तिभिः पेया यूषचीररसादिभिः ॥३०॥
वातघ्नसिद्धैः स्नेहाद्यैर्धूमैर्लेहैश्च युक्तितः ।
अभ्यङ्गैः परिषेकैश्च स्निग्धैः स्वेदैश्च बुद्धिमान् ॥३१॥
वस्तिभिर्बद्धविड्वातं शुष्कोर्द्धं चोर्द्धभक्तिकैः ।
घृतैः सपित्तं सकफं जयेत् स्नेहविरेचनैः ॥३२॥
कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे ।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥३३॥
इति कण्टकारीघृतम् ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
धान्यपाठावचारास्नायष्ट्याह्वक्षारहिङ्गुभिः ॥३४॥
कोलमात्रैर्घृतप्रस्थाद्दशमूलीरसाढके ।
सिद्धं चतुर्थिकां पीत्वा पेयामण्डं पिबेदनु ॥३५॥
तच्छ्वासकासहृत्पार्श्वग्रहणीदोषगुल्मनुत् ।
पिप्पल्याद्यं घृतञ्चैतदात्रेयेण प्रकीर्त्तितम् ॥३६॥
इति पिप्पल्यादिघृतम् ।
तूपर्णं त्रिफलां द्राक्षां काश्मर्याणि परूषकम् ।
द्वे पाठे देवदार्व्वृद्धिं स्वगुप्तां चित्रकं शटीम् ॥३७॥
ब्राह्मीं तामलकीं मेदां काकनासां शतावरीम् ।
त्रिकण्टका विदारीञ्च पिष्ट्वा कर्षसमं घृतात् ॥३८॥
प्रस्थं चतुर्गुणक्षीरं सिद्धं कासहरं पिबेत् ।
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत् ॥३९॥
कामलार्शोऽनिलाष्ठीलाक्षतशोषक्षयापहम् ।
तूपर्णं नाम विख्यातमेतदग्र्यतमनुत्तमम् ॥४०॥
इति तूपर्णाद्यं घृतम् ।

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम् ।
पलिकान् माषिकांश्चैव कुलत्थान् बदरान् यवान् ॥४१॥
तुलार्धस्याजमांसस्य पादशेषेण तेन च ।
घृताढकं समक्षीरं जीवनीयैः पलोन्मितैः ॥४२॥
सिद्धं तद्दशभिः कल्कैर्नस्यपानानुवासनैः ।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत् ॥४३॥
पञ्च कासान् शिरःकम्पं शूलं वङ्क्षणयोनिजम् ।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलान् जयेत् ॥४४॥
इति रास्नाघृतम् ।

विडङ्गं नागरं रास्नां पिप्पलीहिङ्गुसैन्धवैः ।
भार्गीक्षारश्च तच्चूर्णं पिबेद्वा घृतमात्रया ॥४५॥
सकफेऽनिलजे कासे श्वासहिक्काहताग्निषु ।
द्वे चाद्यौ पञ्च कोलानि पञ्चैव लवणानि च ॥४६॥
शटीनागरकोदीच्यकल्कं वा वस्त्रगालितम् ।
पाययेत घृतोन्मिश्रं वातकासनिबर्हणम् ॥४७॥
दुरालभां शटीं द्राक्षां शृङ्गवेरं सितोपलाम् ।
लिह्यात् कर्कटशृङ्गीं च कासे तैलेन वातजे ॥४८॥
दुःस्पर्शां पिप्पलीं मुस्तं भार्गीं कर्कटकीं शटीम् ।
पुराणगुडतैलाभ्यां चूर्णितं वापि लेहयेत् ॥४९॥
विडङ्गं सैन्धवं कुष्ठं व्योषं हिङ्गु मनःशिलाम् ।
मधुसर्पिर्युतं कासहिक्काश्वासं जयेल्लिहन् ॥५०॥
चित्रकं पिप्पलीमूलं व्योषं हिङ्गु दुरालभाम् ।
शटीं पुष्करमूलञ्च श्वेतां सुरसां वचाम् ॥५१॥
भार्गीं छिन्नरुहां रास्नां शृङ्गीं द्राक्षां च कार्षिकान् ।
कल्कानर्धतुलाक्वाथे निदिग्धायाः पचेद्विंशतिम् ॥५२॥
दत्त्वा मस्त्वाढकं चाथ घृतात् कुडवं पचेत् ।

सिद्धं शीतं पृथक् क्षौद्रपिप्पलीकुड़वान्वितम् ॥५३॥
चतुष्पलं तुगाक्षीर्य्याश्चूर्णितं तत्र दापयेत्।
लेहयेत् कासहृद्रोगश्वासगुल्मनिवारणम् ॥५४॥
इति चित्रकादिलेहः।
दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम्।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥५५॥
भार्गीं पुष्करमूलञ्च द्विपलांशं यवाढ़कम्।
हरीतकीशतञ्चैकं जलपञ्चाढ़के पचेत् ॥५६॥
यवे स्विन्ने कषायं तं पूतं तच्चाभयाशतम्।
पचेत् गुड़तुलां दत्त्वा कुड़वञ्च पृथक् घृतात् ॥५७॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
लिह्याद्द्वे चाभये नित्यमतः खादेद्रसायनात् ॥५८॥
तद्वलीपलितं हन्ति वर्णायुर्बलवर्द्धनम्।
पञ्च कासान् क्षयं कासं हिक्कां सविषमज्वराम् ॥५९॥
हन्यात् तथार्शोग्रहणीहृद्रोगारुचिपीनसान्।
अगस्त्यविहितं श्रेष्ठं रसायनमिदं शुभम् ॥६०॥
इति अगस्त्यहरीतकी।
सैन्धवं पिप्पलीं भार्गीं शृङ्गवेरं दुरालभाम्।
दाड़िमाम्लेन कोष्णेन भार्गीनागरमम्बुना ॥६१॥
पिबेत् खदिरसारं वा मदिरादधिमस्तुभिः।
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम् ॥६२॥
शिरसः सदने स्रावे नासाया हृदि ताम्यति।
कासप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥६३॥
दशाङ्गुलोन्मितां नाड़ीं अथवाष्टाङ्गुलोन्मिताम्।
शरावसंपुटच्छिद्रे कृत्वा जिह्मां विचक्षणः ॥६४॥
वैरेचनं सुखेनैव कासवान् धूममापिबेत्।
तमुरः केवलं प्राप्तं सुखेनैवोद्वमेत् पुनः ॥६५॥

स ह्यस्य तैक्ष्ण्याद्विचिप्य श्लेष्माणमुरसि स्थितम्।
निष्कृष्य शमयेत् कासं वातश्लेष्मसमुद्भवम् ॥६६॥
मनःशिलालमधुकमांसीमुस्तेङ्गुदैः पिबेत्।
धूमं तस्यानु च क्षीरं सुखोष्णं सगुड़ं पिबेत् ॥६७॥
एष कासान् पृथग्दोषसन्निपातोद्भवान् जयेत्।
प्रसह्य परिसंसिद्धानन्येर्योगशतैरपि ॥६८॥
प्रपौण्डरीकं मधुकं शार्ङ्गेष्टां समनःशिलाम्।
मरिचं पिप्पलीं द्राक्षामेलां सुरसमञ्जरीम् ॥६९॥
कृत्वा वर्त्तिं पिबेद्धूमं क्षौमचेलानुवर्त्तिताम्।
घृताक्तामनु च क्षीरं गुडोदकमथापि वा ॥७०॥
मनःशिलैलामरिचधाराञ्जनकुटन्नटैः।
वंशलोचनशैवालक्षौमलाक्षाकरीषिषैः ॥७१॥
पूर्वकल्पेन धूमोऽयं सानुपानो विधीयते।
ध्यामं मनःशिला तद्वत् पिप्पलीनागरैः सह ॥७२॥
त्वगेङ्गुदीहृद्यो द्वे तालमूलं मनःशिला।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः ॥७३॥
ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान्।
रसैर्माषात्मगुप्तानां यूषैर्वा दापयेद्धितान् ॥७४॥
यमानीपिप्पलीविल्वमध्यनागरचित्रकैः।
रास्नाजाजीपृथक्पर्णीपलाशशटिपौष्करैः ॥७५॥
स्निग्धाम्ललवणां सिद्धां पेयामनिलजे पिबेत्।
कटीहृत्पार्श्वकोष्ठार्त्तिश्वासहिक्काप्रणाशनीम् ॥७६॥
दशमूलरसे तद्वत् पञ्चकोलगुडान्विताम्।
सिद्धां समतिलां दद्यात् क्षीरे वापि ससैन्धवाम् ॥७७॥
मत्स्यकुक्कुटवाराहैरामिषैर्वा घृतान्वितैः।
सिद्धां ससैन्धवां पेयां वातकासी पिबेन्नरः ॥७८॥

वास्तुकं वायसीशाकं मूलकं सुनिषण्णकम्।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौड़िकाः ॥७८॥
दध्यारनालाम्लफलप्रसन्नापानमेव च।
शस्यते वातकासे तु स्वाद्वम्ललवणानि च।८०॥

इति वातकासचिकित्सा।

पैत्तिके सकफे कासे वमनं सर्पिषा हितम्।
तथा मदनकाश्मर्य्यमधूकक्कथितैर्जलैः ॥८१॥
यष्ट्याह्वफलकल्कैर्वा विदारीक्षुरसायुतैः।
हृतदोषस्ततः शीतं मधुरञ्च क्रमं भजेत् ॥८२॥
पैत्ते तनुकफे कासे त्रिवृतां मधुरैर्युताम्।
दद्याद्घनकफे तिक्तैर्विरेकार्थे युतां भिषक् ॥८३॥
स्निग्धशीतस्तनुकफे रूक्षशीतः कफे घने।
क्रमः कार्य्यः परं भोज्यैः स्नेहैर्लेहैश्च शस्यते ॥८४॥
शृङ्गाटकं पद्मबीजं नीलीसारारिणि पिप्पली।
पिप्पलीमुस्तयष्ट्याह्वद्राक्षामूर्वा महौषधम् ॥८५॥
लाजामृतफला द्राक्षा त्वक् क्षीरी पिप्पली सिता।
पिप्पली पद्मको द्राक्षा बृहत्याश्च फलाद्रसः ॥८६॥
खर्ज्जूरं पिप्पली वांशी श्वदंष्ट्रा चेति पञ्च ते।
घृतक्षौद्रयुता लेहाः श्लोकार्द्धैः पित्तकासिनाम् ॥८७॥
शर्कराचन्दनद्राक्षामधुधात्रीफलोत्पलैः।
पैत्ते समुस्तमरिचः सकफे सघृतोऽनिले ॥८८॥
मृद्वीकार्द्धशतं त्रिंशत् पिप्पली शर्करापलम्।
लेहयेन्मधुना गोर्वा क्षीरपस्य शकृद्रसम् ॥८९॥
त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः।
लाजामुस्तशटीरास्नाधात्रीफलविभीतकैः ॥९०॥
शर्कराक्षौद्रसर्पिर्भिर्लेहः कासविनाशनः।

श्वासं हिक्कां क्षयश्चैव हृद्रोगञ्च प्रणाशयेत् ॥८१॥
पिप्पल्यामलकं द्राक्षां लाक्षां लाजान् सितोपलाम्।
पिबेद्वा मधुसंयुक्तं पित्तकासहरं परम् ॥८२॥
विदारीक्षुमृणालानां रसान् क्षीरे सितोपलम्।
पिबेत् वा मधुसंयुक्तं पित्तकासहरं परम् ॥८३॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥८४॥
घनश्लेष्मणि लेहास्तु तिक्तका मधुसंयुताः।
शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः ॥८५॥
शर्कराम्भोऽनुपानार्थे द्राक्षेक्षूणां रसान् पयः।
सर्वञ्च मधुरं शीतमविदाहि प्रशस्यते ॥८६॥
काकोली वृहती मेदा युग्मैः सवृषनागरैः।
पित्तकासे रसान् क्षीरं यूषांश्चाप्युपकल्पयेत् ॥८७॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम् ॥८८॥
स्थिरासितापृश्निपर्णीश्रावणीवृहतीयुगैः।
जीवकर्षभकाकोलीतामलकीद्विजीरकैः ॥८९॥
शृतं पयः पिबेत् कासी ज्वरी दाही क्षतक्षयी।
तज्ज वा साधयेत् सर्पिः सक्षीरेक्षुरसं भिषक् ॥१००॥
जीवकाद्यैर्मधुरकैः फलैश्चाभिषुकादिभिः।
कल्कैश्चिकार्षिकैः सिद्धे पूतशीते प्रदापयेत् ॥१०१॥
शर्करा पिप्पलीचूर्णंस्त्वक्क्षीर्य्या मरिचस्य च।
शृङ्गाटकस्य चावाप्य चौद्रगर्भान् पलोन्मितान् ॥१०२॥
गुडान् गोधूमचूर्णेन कृत्वा खादेद्धिताशनः।
शुक्राश्मदोषयोर्येषु कासे क्षीणक्षतेषु च ॥१०३॥
शर्करानागरोदीच्यं कण्टकारीं शटीं समाम्।

पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्च्छितम् ॥१०४॥
मञ्जिष्ठजाविगोचोरधात्रीफलरसैः समैः ।
सर्पिः सिद्धं पिबेद्युक्त्या पित्तकासनिवर्हणम् ॥१०५॥
इति पित्तकासचिकित्सा ।

बलिनं वमनैरादौ शोधयेत् कफकासिनम् ।
यवान्नैः कटुरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥१०६॥
पिप्पलीक्षारिकैर्यूषैः कौलत्थैर्मूलकस्य च ।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः ॥१०७॥
धान्वबैल्वरसैः स्नेहैः तिलसर्षपबिल्वजैः ।
मध्वम्लोष्णाम्बुतक्रं वा मद्यं वा निगदं पिबेत् ॥१०८॥
पौष्करारग्वधं मूलं पटोलान्तं निशाश्रितम् ।
जलं मधुयुतं पेयं कालेष्वन्नस्य वा त्रिषु ॥१०९॥
कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाभया ।
शुण्ठी पर्पटकः शृङ्गी सुराह्वश्च शृतं जले ॥११०॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे मुखे शूले श्वासहिक्काज्वरेषु च ॥१११॥
पाठां शुण्ठीं शटीं मूर्वां गवाक्षीं मुस्तपिप्पलीम् ।
पिष्ट्वा घर्माम्बुना हिङ्गुसैन्धवाभ्यां युतां पिबेत् ॥११२॥
नागरातिविषामुस्तशृङ्गीकर्कटकस्य च ।
हरीतकीं शटीञ्चैव तेनैव विधिना पिबेत् ॥११३॥
तैलभृष्टञ्च पिप्पल्याः कल्कार्धं ससितोपलम् ।
पिबेद्वा श्लेष्मकासघ्नं कुलत्थरससंयुतम् ॥११४॥
कासमर्दाश्वविट्‌भृङ्गराजो वार्त्ताकजा रसाः ।
सक्षौद्राः कफकासघ्नाः सुरसस्यासितस्य च ॥११५॥
देवदारु शटी रास्ना कर्कटाख्या दुरालभा ।
पिप्पली नागरं मुस्तं पथ्याधात्रीसितोपलाः ॥११६॥

मधुतैलयुतावेतौ लेह्यौ वातानुगे कफे।
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥११
पथ्या तामलकी धात्री भद्रमुस्तानि पिप्पली।
देवदार्वभया मुस्तं पिप्पली विश्वभेषजम् ॥११८॥
विशाला पिप्पली मुस्तं त्रिवृता चेति लेहयेत्।
चतुरो मधुना लेहान् कफकासहरान् भिषक् ॥११९॥
सौवर्चलाभयाधात्रीपिप्पलीक्षारनागरम्।
चूर्णितं सर्पिषा वातकफकासहरं पिबेत् ॥१२०॥
दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराह्वशटीबिल्वसुरसैर्व्योषहिङ्गुभिः ॥१२१॥
पेयं पेयानुपानं तत् कासे वातकफात्मके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥१२२॥
इति दशमूलादिघृतम्।
समूलफलपत्रायाः कण्टकार्या रसाढके।
घृतप्रस्थं बलाव्योषविडङ्गशटिचित्रकैः ॥१२३॥
सौवर्चलयवक्षारपिप्पलीमूलपौष्करैः।
वृश्चीवबृहतीपथ्यायमानीदाडिमर्द्धिभिः ॥१२४॥
द्राक्षापुनर्नवाचव्यदुरालभाम्लवेतसैः।
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ॥१२५॥
कल्कैस्तत् सर्वकासेषु हिक्काश्वासेषु शस्यते।
कण्टकारीघृतं ह्येतत् कफव्याधिनिसूदनम् ॥१२६॥
इति कण्टकारीघृतम्।
कुलत्थरसयुक्तं वा पञ्चकोलशृतं घृतम्।
पाययेत् कफजे कासे हिक्काश्वासे च शस्यते ॥१२७॥
इति कुलत्थादिघृतम्
धूमांस्तानेव दद्याच्च ये प्रोक्ता वातकासिनाम्।

कोशातकीफलान्मध्वं पिबेद्वा समनःशिलम् ॥१२८॥
तमकः कफकासे तु स्याच्चेत् पित्तानुबन्धजे ।
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥१२९॥
वाते कफानुबन्धे तु कुर्य्यात् कफहरीं क्रियाम् ।
पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ॥१३०॥
आर्द्रे विरूक्षणं शुष्के स्निग्धं वातकफात्मके ।
कासेऽन्नपानं कफजे सपित्ते तिक्तसंयुतम् ॥१३१॥

इति कफजकासचिकित्सा

कासमात्ययिकं मत्वा क्षतजं त्वरया जयेत् ।
मधुरैर्जीवनीयैश्च बलमांसविवर्द्धनैः ॥१३२॥
पिप्पलीमधुकं पिष्टं कार्षिकं ससितोपलम् ।
प्रास्थिकं गव्यमाजञ्च क्षीरमिक्षुरसस्तथा ॥१३३॥
यवगोधूममृद्वीकाचूर्णमामलकीरसः ।
तैलञ्च प्रसृतांशानि तत् सर्वं मृदुनाग्निना ॥१३४॥
पचेल्लेहं घृतक्षौद्रयुक्तः स क्षतकासनुत् ।
श्वासहृद्रोगकासेषु हितो वृद्धाल्परेतसि ॥१३५॥
क्षतकासाभिभूतानां वृत्तिः स्यात् पित्तकासिकी ।
क्षीरसर्पिर्मधुप्राया संसर्गे तु विशेषणम् ॥१३६॥
वातपित्तार्दितेऽभ्यङ्गो गात्रभेदे घृतैर्हितः ।
तैलैर्मारुतरोगघ्नैः पीड्यमाने च वायुना ॥१३७॥
~~हृत्पार्श्वार्त्तिषु पाने स्याज्जीवनीयस्य सर्पिषः ।~~
सदाहं कासिनो रक्तं ष्ठीवतः सबलेऽनले ॥१३८॥
मांसोचितेभ्यः कासिभ्यो लावादीनां रसा हिताः ।
तृष्णार्त्तानां पयश्छागं शरमूलादिभिः शृतम् ॥१३९॥
रक्ते स्रोतोभ्य आस्याद्वाप्यागते क्षीरजं घृतम् ।
नस्यं पानं यवागूर्वा श्रान्ते क्षामे क्षतानले ॥१४०॥

स्तम्भायासेषु महतीं मात्रां वा सर्पिषः पिवेत्।
कुर्य्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ॥१४१॥
निवृत्ते चतदोषे तु कफे हृद उरःचते।
दाल्यते कासिनो यस्य स धूमान् ना पिवेदिमान् ॥१४२॥
द्वे मेदे मधुकं द्वे च बले तैः चौमलक्तकैः।
वर्त्तितैर्धूममापीय जीवनीयघृतं पिवेत् ॥१४३॥
मनःशिलापलाशाजगन्धात्वक्चीरिनागरैः।
भावयित्वा पिवेत् चौमं शर्करेक्षुगुड़ोदकम् ॥१४४॥
पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया।
ससर्पिष्कं पिवेद्धूमं तित्तिरिप्रतिभोजनम् ॥१४५॥
भावितं जीवनीयैर्वा कुलिङ्गाण्डरसायुतैः।
चौमं धूमं पिवेत् चीरं शृतञ्चायोगुड़ैरनु ॥१४६॥

इति चतजकासचिकित्सा।

सम्पूर्णरूपं चयजं दुर्ब्बलस्य विवर्ज्जयेत्।
नवोत्थितं बलवतः प्रत्याख्यायाचरेत् क्रियाम् ॥१४७॥
तस्मै बृंहणमेवादौ कुर्य्यादग्नेश्च वर्द्धनम्।
बहुदोषाय सस्नेहं मृदु दद्यात् विरेचनम् ॥१४८॥
शम्पाकेन त्रिवृतया मृद्वीकारसयुक्तया।
तिल्वकस्य कषायेण विदारीस्वरसेन च ॥१४९॥
सर्पिः सिद्धं पिवेद् युक्त्या चीणदेहो विशोधनम्।
हितं तद्देहबलयोरस्य संरक्षणं मतम् ॥१५०॥
पित्ते कफे च संचीणे परिचीणेषु धातुषु।
घृतं कर्कटकोचीरद्विबलासाधितं पिवेत् ॥१५१॥
विदारीभिः कदम्बैर्वा तालसस्यैस्तथा शृतम्।
घृतं पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ॥१५२॥
शूने सवेदने मेढ्रे पायौ सश्रोणिवंक्षणे।

घृतमण्डेन मधुना अनुवास्यो मिश्रकेण वा ॥१५३॥
जाङ्गलैः प्रतिभुक्तस्य वर्त्तकाद्या बिलेशयाः।
क्रमशः प्रसहाश्चैव प्रयोज्याः पिशिताशिनः ॥१५४॥
औष्ण्यात् प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते।
कफैः शुद्धैश्च तैः पुष्टिं कुर्य्यात् सम्यग्वहन् रसः ॥१५५॥
चविका त्रिफला भार्गी दशमूलैः सचित्रकैः।
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ॥१५६॥
शृतैर्नागरदुःस्पर्शापिप्पलीशटिपौष्करैः।
कल्कैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ॥१५७॥
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्च लवणानि च।
दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः ॥१५८॥

इति द्विपञ्चमूलादिघृतम्।

गुडूचीं पिप्पलीं मूर्वां हरिद्रां श्रेयसीं वचाम्।
निदिग्धिकां कासमर्दं पाठां चित्रकनागरम् ॥१५९॥
जले चतुर्गुणे पक्त्वा पादशेषेण तत् समम्।
सिद्धं सर्पिः पिबेद्गुल्मश्वासार्तिक्षयकासनुत् ॥१६०॥

इति गुडूच्यादिघृतम्।

कासमर्दाभयामुस्तपाठाकट्फलनागरैः।
पिप्पल्या कटुकाद्राक्षाकाश्मर्य्यैः सुरसेन च ॥१६१॥
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके।
पचेच्छोषज्वरप्लीहसर्वकासहरं शिवम् ॥१६२॥
धात्रीफलैः क्षीरसिद्धैः सर्पिर्वाप्यवचूर्णितम्।
द्विगुणे दाडिमरसे विपक्वं व्योषसंयुतम् ॥१६३॥
पिबेदुपरि भक्तस्य यवक्षारघृतं नरः।
पिप्पलीगुडसिद्धं वा च्छागक्षीरयुतं घृतम् ॥१६४॥
एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनाम्।

स्युर्दोषवत्स्वकोष्ठोरःस्रोतसाञ्च विशुद्धये ॥१६५॥
हरीतकीर्यवक्वाथद्व्याढके विंशतिं पचेत् ।
स्विन्ना मृदित्वा तास्तस्मिन् पुराणं गुडषट्पलम् ॥१६६॥
दद्यात्पुनःसिद्धाकृतं कर्षांशञ्च रसाञ्जनात् ।
गुडवाच्च पिप्पल्याः स लेहः श्वासकासनुत् ॥१६७॥

इति हरीतकीलेहः ।

श्वाविधः सूचयो दग्धाः सघृतक्षौद्रशर्कराः ।
श्वासकासहरा बर्हिःपादौ वा क्षौद्रसर्पिषा ॥१६८॥
एरण्डपत्रक्षारं वा व्योषतैलं गुडान्वितम् ।
लिह्यादेतेन विधिना सुरसैरण्डपत्रजम् ॥१६९॥
द्राक्षापद्मकवार्त्ताकपिप्पलीः क्षौद्रसर्पिषा ।
लिह्यात् त्र्यूषणचूर्णं वा पुराणं गुडसर्पिषा ॥१७०॥
चित्रकं त्रिफलाजाजी कर्कटाख्यं कटुत्रिकम् ।
द्राक्षाञ्च क्षौद्रसर्पिर्भ्यां लिह्याद्दद्याद्गुडेन वा ॥१७१॥
पद्मकं त्रिफलां व्योषं विडङ्गं सुरदारु च ।
बलां रास्नाञ्च तुल्यानि सूक्ष्मं चूर्णानि कारयेत् ॥१७२॥
सर्वैरेभिः समं चूर्णं पृथक्क्षौद्रघृतं सिताम् ।
विमथ्य लेहयेत्सेहं सर्वकासहरं शिवम् ॥१७३॥

इति पद्मकादिलेहः ।

जीवन्तीं मधुकं पाठां त्वक्क्षीरीं त्रिफलां शटीम् ।
मुस्तैले पद्मकं द्राक्षां द्वे बृहत्यौ वितुन्नकम् ॥१७४॥
शारिवां पौष्करं मूलं कर्कटाख्यं रसाञ्जनम् ।
पुनर्नवां लोहरजस्त्रायमाणां यमानिकाम् ॥१७५॥
भार्गीं तामलकीमृद्धिं विडङ्गं धन्वयासकम् ।
क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥१७६॥
चूर्णीकृत्य समांशानि लेहयेत् क्षौद्रसर्पिषा ।

चूर्णात् पाणितलं पश्च कासानेष व्यपोहति ॥१७७॥
लिह्यान्मरिचचूर्णं वा सघृतक्षौद्रशर्करम्।
सर्वकासहरं श्रेष्ठं लेहं कासार्दितो नरः ॥१७८॥
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम्।
स्वरभेदे च कासे च लेहमेतत् प्रयोजयेत् ॥१७९॥
पत्रकल्कं घृतैर्भृष्टं तिल्वकस्य सशर्करम्।
पेया चोत्कारिका च्छर्दितृट्कासामातिसारनुत् ॥१८०॥
गौरसर्षपगण्डीरविड़ङ्गव्योषचित्रकान्।
सामयान् साधयेत् तोये यवागूं तेन चाम्भसा ॥१८१॥
ससर्पिर्लवणां कासे हिक्काश्वासे सपीनसे।
पाण्डुामये क्षये शोथे कर्णशूले च शस्यते ॥१८२॥
काण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः।
सगौरामलकः साम्लः सर्वकासभिषक्जितम् ॥१८३॥
वातघ्नौषधनिष्क्वाथं क्षीरं यूषान् रसानपि।
वैष्किरप्रतुददौनां दापयेत् क्षयकासिने ॥१८४॥
क्षतकासे च ये धूमाः सानुपाना निदर्शिताः।
क्षयकासेऽपि तानेव यथावस्थं प्रयोजयेत् ॥१८५॥
दीपनं बृंहणञ्चैव स्रोतसाञ्च विशोधनम्।
व्यत्यासात् क्षयकासिभ्यो बल्यं सर्वं मितं हितम् ॥१८६॥
सन्निपातभवोऽप्येष क्षयकासः सुदारुणः।
सन्निपातहितं तस्मात् सदा कार्य्यं भिषग्जितम् ॥१८७॥
दोषानुबलयोगाच्च हरेद्रोगबलाबलम्।
कासेष्वेषु गरीयांसं जानीयादुत्तरोत्तरम् ॥१८८॥

तत्र श्लोकौ।

भोज्यं पानानि सर्पींषि लेहाः पाचनकानि च।
क्षीरं सर्पिगुड़ा धूमाः कासभैषज्यसंग्रहः ॥१८९॥

संख्या निमित्तं रूपाणि साध्यसाध्यत्वमेव च ।
कासानां भेषजं प्रोक्तं गरीयस्त्वञ्च कासिनः ॥१८०॥

---

## त्रयोविंशोऽध्यायः ।

### छर्दिचिकित्सितम् ।

यशस्विनं व्रह्मतपोद्युतिभ्यां ज्वलन्तमग्न्यर्कसमप्रभावम् ।
पुनर्वसुं भूतहिते निविष्टं पप्रच्छ शिष्योऽग्निजमग्निवेशः ॥१
याश्छर्दयः पञ्च पुरा त्वयोक्ता रोगाधिकारे भिषजांवरिष्ठ !
तासां चिकित्सां सनिदानलिङ्गां यथावदाचक्ष्व नृणां हितार्थं
तदग्निवेशस्य वचो निशम्य प्रीतो भिषक्‌श्रेष्ठ इदं जगाद ।
याश्छर्दयः पञ्च पुरा मयोक्ता स्ता विस्तरेण ब्रुवतो निबोध
दोषैः पृथक्‌त्रिप्रभवाश्चतस्रो द्विष्टार्थयोगादपि पञ्चमी स्यात्
तासां हृदुत्क्लेशकफप्रसेकोद्वेगोऽयनेचैव हि पूर्वरूपम् ॥४॥
व्यायामतीक्ष्णौषधशोकरोगभयोपवासाद्यतिकर्षितस्य ।
क्रुद्धो महास्रोतसि मातरिश्वा दोषान्समुत्क्षिप्यतदूर्द्ध्वमस्य
आमाशयोत्क्लेशकृताश्च मर्मप्रपीड़यन् छर्दिमुदीरयेच्च ।
हृत्पार्श्वपीड़ासुखशोषमूर्द्धनाभ्यर्त्तिकासस्वरभेदतोदैः ॥६॥
उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ।
कृच्छ्रेण चाल्पं महता च वेगेनार्त्तोऽनिलाच्छर्दयतीह दुःखम्
अजीर्णकट्वम्लविदाह्यशीतैरामाशये पित्तमुदीर्णवेगम् ।
रसायनीभिर्विसृतं प्रपीड्य मर्मोर्द्ध्वमागम्य वमिं करोति ॥८॥
मूर्च्छापिपासामुखशोषमूर्द्धताल्वक्षिसन्तापतमो भ्रमार्त्तः ।
पित्तं भृशोष्णं हरितं सतिक्तं धूम्रञ्च पित्तेन वमेत् सदाहम् ॥९
स्निग्धातिगुर्वामविदाहिभोज्यैः स्वप्नादिभिश्चैव कफोऽतिवृद्धः ।
उरःशिरो मर्मरसायनीश्च सर्वाः समावृत्य वमिं करोति ॥१०॥

तन्द्रास्यमाधुर्य्यकफप्रसेकसन्तोषनिद्रारुचिगौरवार्त्तः।
स्निग्धं घनं स्वादुकफं विशुद्धं सलोमहर्षोऽल्परुजं वमेत् तु ॥११
समश्नतः सर्व्वरसान् प्रसक्तमामप्रदोषर्त्तुविपर्य्ययैश्च।
सर्व्वे प्रकोपं युगपत् प्रपन्नाश्छर्द्दिं त्रिदोषां जनयन्ति दोषाः॥१२॥
शूलाविपाकारुचिदाहतृष्णाश्वासप्रमोहप्रबला प्रसक्तम्।
छर्द्दिस्त्रिदोषात् लवणाम्लनीलसान्द्रोष्णरक्तं वमतां नृणां स्यात्१३
विट्स्वेदमूत्राम्बुवहानि वायुः स्रोतांसि संरुध्य यदोर्द्ध्वमेति।
उत्सन्नदोषस्य तदाचितं तं दोषं समुद्धूय नरस्य कोष्ठात् ॥१४॥
विण्मूत्रयोस्तत् समवर्णगन्धं तृट्श्वासहिक्कार्त्तियुतं प्रसक्तम्।
प्रच्छर्दयेद्दुष्टमिहातिवेगात् भयार्दितयाशु विनाशमेति ॥१५॥
द्विष्टप्रतीपाशुचिपूत्यमेध्यबीभत्सगन्धाशनदर्शनैश्च।
यच्छर्द्दयेत् तप्तमना मनोघ्नैर्द्विष्टार्थसंयोगभवा मता सा ॥१६॥
क्षीणस्य या छर्द्दिरतिप्रवृद्धा सोपद्रवा शोणितपूययुक्ता।
सचन्द्रिकां तां प्रवदन्त्यसाध्यां साध्यां चिकित्सेदनुपद्रवाञ्च ॥१७॥
आमाशयोत्क्लेशभवा हि सर्व्वाश्छर्द्यो मता लङ्घनमेव तस्मात्।
प्राक्कारयेन्मारुतजां विमुच्य संशोधनं वा कफपित्तहारि ॥१८॥
चूर्णानि लिह्यान्मधुनाभयानां हृद्यानि वा यानि विरेचनानि।
मद्यैः पयोभिश्च युतानि युक्त्या नयन्त्यधो दोषमुदीर्णमूर्द्धम् ॥१९
वक्षोफलाद्यैर्वमनं पिबेद्वा यो दुर्ब्बलस्तं शमनैश्चिकित्सेत्।
रसैर्मनोज्ञैर्लघुभिर्विशुष्कैर्भक्ष्यैः सकी ...र्विविधैश्च पानैः ॥२०॥
सुसंस्कृतास्त्रित्तिरिवर्हिलावरसा व्यपोहन्त्यनिलप्रवृत्ताम्।
छर्द्दिं तथा कोलकुलत्थधान्यबिल्वादिमूलाम्लयवैश्च यूषः ॥२१॥
वातात्मके हृद्रदकासयुक्तो नरः पिबेत् सैन्धववद् घृतन्तु।
सिद्धं तथा धान्यकनागराभ्यां दध्ना च तोयेन च दाड़िमस्य॥२२
व्योषेण युक्तां लवणैस्त्रिभिश्च घृतस्य मात्रामथवा विदध्यात्।
स्निग्धानि हृद्यानि च भोजनानि रसैः सयूषैर्दधिदाड़िमाम्लैः२३

पित्तान्विकायामनुलोमनार्थं द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात् ।
कफाशयस्थन्त्वतिमात्रवृद्धं पित्तं हरेत् स्वादुभिरूर्द्ध्वमेव ॥२४॥
शुद्धाय काले मधुशर्कराभ्यां लाजैश्च मन्थं यदि वापि पेयाम् ।
प्रदापयेन्मुद्गरसेन वापि शाल्योदनं जाङ्गलजै रसैर्वा ॥२५॥
सितोपलामाक्षिकपिप्पलीभिः कुल्माषलाजायवशक्तुभल्लान् ।
खर्जूरमांसान्यथ नारिकेलं द्राक्षामथो वा बदराणि लिह्यात् २६
शीतोजलाजोत्पलकोलमज्जचूर्णानि लिह्यान्मधुनाभयाश्च ।
कोलास्थिमज्जाञ्जनमक्षिकाविट्लाजासितामागधिकाकणा वा२७
द्राक्षारसं वापि पिबेत् सुशीतं मृद्भृष्टलोष्टप्रभवं जलं वा ।
जम्ब्वाम्रयोः पल्लवजं कषायं पिबेत् सुशीतं मधुसंयुतम् वा ॥२८
निशि स्थितं वारि ससुक्ष्मकृष्णं सोशीरधान्यं चणकोदकं वा ।
गवेधुका मूलजलं गुडूच्या जलं पिबेदिक्षुरसं पयो वा ॥२९॥
सैव्यं पिबेल्लाञ्जनगैरिकं वा सवालकं तण्डुलधावनेन ।
धात्रीरसेनोत्तमचन्दनं वा लाक्षावमिघ्नानि समाक्षिकाणि ॥३०
कल्कं तथा चन्दनचव्यमांसीद्राक्षोत्तमावालकगैरिकाणाम् ।
शीताम्बुना गैरिकशालिचूर्णं मूर्वां तथा तण्डुलधावनेन ॥३१॥
कफान्विकायां वमनं प्रशस्तं सपिप्पलीसर्षपनिम्बतोयैः ।
पिण्डीतकैः सैन्धवसम्प्रयुक्तैर्वम्यां कफामाशयशोधनार्थम् ॥३२॥
गोधूमशालीन् सयवान् पुराणान् यूषैः पटोलामृतचित्रकाणाम् ।
व्योषस्य निम्बस्य च तक्रसिद्धैर्यूषैः फलाम्लैः कटुभिस्तथाद्यात्३३
रसांश्च शूल्यानि च जाङ्गलानां मांसानिजीर्णान्मधुशीध्वरिष्टान्
रागांस्तथा षाडवपानकानि द्राक्षाकपित्थैः फलपूरकैश्च ॥३४॥
मुद्गान् मसूरांश्चणकान् कलायान् भृष्टान् युतान् नागरमाक्षिकाभ्याम्
लिह्यात् तथैव त्रिफलाविडङ्गचूर्णं विडङ्गप्लवयोरसं वा ॥३५॥
मज्जाम्बवं वा बदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम् ।
दुरालभां वा मधुसम्प्रयुक्तां लिह्यात्कफच्छर्दिविनिग्रहार्थम् ॥३६॥

न शिलाया: फलपूरकस्य रसैः कपित्थस्य च पिप्पलीनाम् ।
ौद्रेण चूर्णं मरिचैश्च युक्तं लिहन्जयेच्छर्दिमुदीर्णवेगाम् ॥३७॥
ा प्रथक्त्वेन मया क्रियोक्ता तां सन्निपातेऽपि समीक्ष्य बुद्धा ।
ोषर्त्तुरोगाग्निबलान्यवेक्ष्य प्रयोजयेच्छास्त्रविदप्रमत्तः ॥३८॥
नोऽभिघाते तु मनोऽनुकूला वाचः समाश्वासनहर्षणानि ।
लोकप्रसिद्धाः श्रुतयो वयस्याः शृङ्गारिकाश्चैव हिताविहाराः॥३९
गन्धा विचित्रा मनसोऽनुकूला मृत्पुष्पशुक्ताम्लफलादिकानाम् ।
शाकानि भोज्यान्यथ पानकानि सुसंस्कृताः षाडवरागलेहाः॥४०
यूषा रसाः काम्बलिका खड़ाश्च मांसानि धाना विविधाश्च भक्ष्याः ।
फलानि मूलानि च गन्धवर्णे रसैरुपेतानि वमिं जयन्ति ॥४१॥
गन्धं रसं स्पर्शमथापि शब्दं रूपञ्च यद्यत् प्रियमप्यसात्म्यम् ।
तदेव कुर्य्यात् प्रशमाय तस्यास्तज्जोहिरोगःसुखमेव जेतुम् ॥४२॥
छर्द्युत्थितानाञ्च चिकित्सितात् स्वाच्चिकित्सितं कार्य्यमुपद्रवाणाम्
यतिप्रवृत्तासु विरेचनस्य कर्मातियोगैर्विहितं विधेयम् ॥४३॥
वमिप्रसङ्गात् पवनोऽप्यवश्यं धातुक्षयाद्वृद्धिमुपैति तस्मात् ।
चिरप्रवृत्तास्वनिलापहानि कार्य्याण्युपस्तम्भनबृंहणानि ॥४४॥
सर्पिर्गुड़ाः क्षीरविधिर्घृतानि कल्याणकत्र्यूषणजीवनानि ।
लेह्यास्तथा मांसरसाःसलेहाश्चिरप्रसक्तां च वमिं जयन्ति इति॥४५,

तत्र श्लोकः ।

संख्यां हेतुं लक्षणमुपद्रवान् साध्यतांच योगांच ।
*छर्दीनां प्रशमार्थं प्राह चिकित्सित मुनिवर्यः ॥४६॥*

---

## चतुर्विंशोऽध्यायः ।

### तृष्णाचिकित्सितम् ।

ज्ञानप्रशमतपोभिः ख्यातोऽत्रिसुतो जगद्धितेऽभिरतः ।
तृष्णानां प्रशमार्थं चिकित्सितं प्राह पञ्चानाम् ॥ १ ॥

क्षोभाद्भयाच्छ्रमादपि शोकात् क्रोधाद्विलङ्घनान्मद्यात्।
क्षाराम्ललवणकटुकोष्णरूक्षशुष्कान्नसेवाभिः ॥२॥
धातुक्षयगदकर्षणवमनाद्यतियोगसूर्य्यसन्तापैः।
पित्तानिलौ प्रवृद्धौ सौम्यान् धातूंश्च शोषयतः ॥३॥
रसवाहिनीश्च नालीर्जिह्वामूलगलतालुक्लोम्नः।
संशोष्य नृणां देहे कुरुतस्तृष्णां महाबलावेतौ ॥४॥
पीतं पीतं हि जलं शोषयतस्तावतो न यान्ति शमम्।
घोरव्याधिक्षयाणां प्रभवत्युपसर्गभूता सा ॥५॥
प्राग्रूपं मुखशोषः स्वलक्षणं सर्वदाम्बुकामित्वम्।
तृष्णानां सर्वासां लिङ्गानां लाघवमपायः ॥६॥
मुखशोषस्वरभेदभ्रमसन्तापप्रलापसंस्तम्भान्।
ताल्वोष्ठकण्ठजिह्वाकर्कशतां चित्तनाशञ्च ॥७॥
जिह्वानिर्गममरुचिं बाधिर्य्यं मर्मदूयनं सादम्।
तृष्णोद्भूता कुरुते पञ्चविधा लिङ्गतः शृणु ताम् ॥८॥
अब्धातुं देहस्य कुपितः पवनो यदा विशोषयति।
तस्मिन् शुष्के शुष्यत्यबलस्तृष्यत्यथ विशुष्यन् ॥९॥
निद्रानाशः शिरसो भ्रमस्तथा शुष्कविरसमुखता च।
स्रोतोऽवरोध इति च स्याल्लिङ्गं वाततृष्णायाः ॥१०॥
पित्तं मतं कुपितमाग्नेयं कुपितं तापयत्यपां धातुम्।
सन्तप्तः स हि जनयेत् तृष्णां दाहोल्बणां नृणाम् ॥११॥
तिक्तास्यत्वं शिरसो दाहः शीताभिनन्दता मूर्च्छा।
पीताक्षिमूत्रवर्चस्त्वमाकृतिः पित्ततृष्णायाः ॥१२॥
तृष्णा याऽऽमप्रभवा साप्याग्नेयामपित्तजनितत्वात्।
लिङ्गं तस्यास्त्वरुचिराध्मानकफप्रसेकौ च ॥१३॥
देहो रसजोऽम्बुभवो रसश्च तस्य क्षयाच्च तृष्येत् तु।
दीनस्वरः प्रताम्यन् सशुष्कहृदयगलतालुः ॥१४॥

भवति खलु सोपसर्गात् तृष्णा सा शोषिणी कष्टा।
ज्वरमेहक्षयशोषश्वासाद्युपसृष्टदेहानाम् ॥१५॥
सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम्।
घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः ॥१६॥
नाग्निं विना हि तर्षः पवनाद्वातौ हि शोषणे हेतू।
अब्धातोरतिवृद्धावपां चये तृष्यते नरो हि ॥१७॥
गुर्वम्लपयःस्नेहैः संमूर्च्छन्निर्विदाहकाले च।
यस्तृष्येद्धृतमार्गे तत्राप्यग्निलानलौ हेतू ॥१८॥
तीक्ष्णोष्णरूक्षभावान्मद्यं पित्तानिलौ प्रकोपयति।
शोषयतोऽपां धातुं तावेव मद्यशीलानाम् ॥१९॥
तप्तास्विव सिकतासु हि तोयमाशुष्यति क्षिप्तम्।
तेषां सन्तप्तानां हिमजलपानाद्भवति शर्म ॥२०॥
शिशिरस्नातस्योष्मा रुद्धः कोष्ठं प्रपद्य तर्षयति।
तस्मात्तोष्णः क्लान्तो भजेत सहसा जलं शीतम् ॥२१॥
लिङ्गं सर्वास्वेतास्वनिलचयात् पित्तज भवत्यत्र तु।
पृथगागमाच्चिकित्सितमतः प्रवक्ष्यामि तृष्णानाम् ॥२२॥
अपां क्षयाद्धि तृष्णा संशोष्य नरं प्रणाशयेदाशु।
तस्मादैन्द्रं तोयं समधु पिबेत्तद्गुणं वान्यत् ॥२३॥
किञ्चित्तुवरानुरसं तत्र लघुशीतलम् सुगन्धिसुरसम्।
अनभिष्यन्दि च यत्तत् क्षितिगतमप्यैन्द्रवज्ज्ञेयम् ॥२४॥
शृतं शीतं समितोपलमथवा शरपूर्वपञ्चमूलेन।
लाजा शक्तून् सिताढ्यान् मधुयुतसैन्द्रेणवा मन्यम् ॥२५॥
वाट्यं वासयवानां शीतं मधुशर्करायुतं दद्यात्।
पेयां वा शालीनां दद्याद्वा कोरदूषाणाम् ॥२६॥
पयसा शृतेन भोजनमथवा मधुशर्करायुतं भोज्यम्।
पारावतादिकरसैर्घृतभृष्टैर्वाप्यलवणाद्यैः ॥२७॥

तृणपञ्चमूलमुस्तातकैः पियालेश्च जाङ्गलाः सुकृताः ।
यस्मा रसाः पयो वातैः सिद्धं शर्करा मधुमत् ॥२८॥
शतधौतघृतेनाक्तः पयः पिबेत् शीततोयमवगाह्य ।
मुद्गमसूरचणकजा रसास्तु भृष्टा घृते देया ॥२९॥
मधुरैःसजीवनीयैःशीतैश्च सतिक्तकैः शृतं क्षीरम् ।
पानाभ्यञ्जनसेकेष्विष्टं मधुशर्करायुक्तम् ॥ ३० ॥
तज्जं वा घृतमिष्टं पानाभ्यङ्गेषु नस्यमपि च स्यात् ।
नारीपयः सशर्करमुष्ट्रा अपि नस्यमिक्षुरसः ॥३१॥
क्षीरेक्षुरसगुडोदकसितोपलाद्यैः क्षौद्रशीधुमाध्वीकैः ।
वृक्षाम्लमातुलुङ्गैर्गण्डूषास्तालुशोषघ्नाः ॥३२॥
जम्ब्वाम्रातकबदरीवेतसपञ्चपल्लवैराम्लाः ।
मूर्ध्नि शिरःप्रलेपाः सघृता मूर्च्छाभ्रमतृष्णाघ्नाः ॥३३॥
दाडिमदधित्थलोध्रैः सविदारीबीजपूरकैः शिरसः ।
प्रलेपो गौरामलकैर्घृतारनालायुतैश्च हितः ॥३४॥
शैवलपङ्कजलजैः साम्लैः सघृतैश्च शक्तुभिर्लेपाः ।
मस्त्वारनालार्द्रवसनकमलमणिहारसंस्पर्शाः ॥३५॥
शिशिराम्बुचन्दनार्द्रस्तनतटपाणितलसंस्पर्शाः ।
क्षौमार्द्रवसनानां वराङ्गनानां प्रियायाश्च ॥३६॥
हिमवद्दरीवनसरित्सरोऽम्बुजपवनेन्दुपादशिशिरायाम् ।
रम्यशिशिरोदकानां स्मरणञ्च कथाश्च तृष्णाघ्नाः ॥३७॥
वातघ्नमन्नपानं मृदु लघु शीतञ्च वाततृष्णायाः ।
क्षतकासनुत् घृतक्षीरमूर्ध्वं वाततृष्णाघ्नम् ॥३८॥
स्याज्जीवनीयसिद्धं क्षीरघृतं वातपित्तजे तर्षे ।
पैत्ते द्राक्षाचन्दनखर्जूरोशीरमधुयुतं तोयम् ॥३९॥
लाङ्गलिकशालितण्डुलाखर्जूरपरूषकोत्पलद्राक्षाः ।
मधुपक्वलोष्टमेव च जले शृतं शीतलं पेयम् ॥४०॥

लोहितशालितण्डुलप्रस्थः सलोध्रमधुकाञ्जनोत्पलः ।
पक्वामलोष्टमधुजलसमायुतो मृन्मये पेयः ॥४१॥
वटमातुलुङ्गवेतसपल्लवकुशकाशमूलयष्ट्याह्वैः ।
सिद्धेऽम्भस्यग्निनिभाः कृष्णमृदः कृष्णसिकता वा ॥४२॥
तप्तानि नरकपालान्यथवा निर्वाप्य पाययेताच्छम् ।
अल्पपक्वशर्करामृतवसुदकं वा तृषं हन्ति ॥४३॥
क्षीरवतां मधुराणां शीतानां शर्करा मधुविमिश्राः ।
शीतकषाया मृद्भृष्टसंयुताः पित्ततृष्णाघ्नाः ॥४४॥
व्योषवचाभल्लातकतिक्तकषायास्तथामतृष्णायाम् ।
यच्चोक्तं कफजायां वम्यां तच्चैव कार्यं स्यात् ॥४५॥
स्तम्भारुच्यविपाकालस्यच्छर्दिषु कफानुगां तृष्णाम् ।
ज्ञात्वा दधिमधुतर्पणलवणोष्णजलैर्वमनमिष्टम् ॥४६॥
दाडिममदनफलं वाप्यन्यतमकषायमथ लेहम् ।
पेयमथवा हरिद्राम्बुशर्कराक्षौद्रसंयुक्तम् ॥४७॥
क्षयकासेन तु तुल्या क्षयतृष्णा गरीयसी या नृणाम् ।
क्षीणक्षतशोषहितैस्तस्मात् तां भेषजैः शमयेत् ॥४८॥
पानतृष्णार्त्तः पानञ्चार्द्धोदकमम्ललवणगन्धाढ्यम् ।
शिशिरस्नातः पानं मृद्वाम्बु गुडाम्बु वा तृषितः ॥४९॥
भक्तोपरोधतृषितः स्नेहतृषार्त्तोऽथवा तनुयवागूम् ।
प्रपिबेद् गुरुणा तृषितो भुक्तेनोद्धरेद्भुक्तम् ॥५०॥
मद्याम्बुवाम्बुचोष्णं बलवांस्तृषितः समुल्लिखेत्पीत्वा ।
मागधिकाविशदमुखः सशर्करं वा पिबेन्मन्थम् ॥५१॥
बलवांस्तु तालुशोषे पिबेद्घृतं प्रथममनुमद्यम् ।
सर्पिर्भृष्टं क्षीरं मांसरसांश्चाबलः स्निग्धान् ॥५२॥
अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः ।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥५३॥

स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात् तां गुडाम्बुना शमयेत्।
तर्षे मूर्च्छाभिहतस्य रक्तपित्तापहैर्हन्यात् ॥५४॥
शीतमुष्णञ्च जलं कुत्र देयं वर्ज्यं वा कुत्रेत्याह।
छर्द्यम्लदाहमूर्च्छातमः क्लममदात्ययास्रविषपित्ते।
शस्तं सभावशीतं शृतशीतं सन्निपातेऽम्भः ॥५५॥
हिक्काश्वासनवज्वरपीनसघृतपीतपार्श्वगलरोगे।
कफवातकृते स्थाने सद्यः शुद्धे हितमुष्णम् ॥५६॥
पाण्डूदरपीनसमेहगुल्ममन्दानिलातिसारेषु।
प्लीह्नि च तोयं हितं काममशक्ते पिबेदल्पम् ॥५७॥
पूर्वामयातुरः सदीनस्तृष्णार्दितो जलं काङ्क्षन्।
न लभेत स चेन्मरणमाशेवाप्नुयाद्दीर्घरोगं वा ॥५८॥
तस्मादन्यास्तु पिबेत् तृष्यन् रोगी सशर्कराक्षौद्रम्।
यद्वा तस्यान्यत् स्यात् सात्म्यं रोगस्य तच्चेष्टम् ॥५९॥
तस्यां विनिहतायां तज्जन्योपद्रवः सुखं जेतुम्।
तस्मात् तृष्णां पूर्वं जयेत् बहुभ्योऽपि रोगेभ्यः ॥६०॥
तत्र श्लोकः।
हेतुर्यथाग्निपवनौ कुरुतः सोपद्रवञ्च पञ्चानाम्।
तृष्णानां पृथगाकृतिरसाध्यतासाध्यता साधनञ्चोक्तम् ॥६१॥

---

## त्रयोविंशोऽध्यायः।

### विषचिकित्सितम्।

प्रागुत्पत्तिं गुणान् योनिं वेगान् लिङ्गान्युपक्रमान्।
विषस्य ब्रुवतः सम्यगग्निवेश निबोध मे ॥१॥
अमृतार्थं समुद्रे तु मथ्यमाने सुरासुरैः।
जज्ञे प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥२॥

दीप्ततेजाश्चतुर्दंष्ट्रो हरित्केशोऽनलेक्षणः ।
जगत् विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥३॥
जङ्गमस्थावरायां तद्‌योनौ ब्रह्मा न्ययोजयत् ।
तदम्बुसम्भवं तस्माद्‌द्विविधं पावकोपमम् ॥४॥
अष्टवेगं दशगुणं चतुर्विंशत्युपक्रमम् ।
तदपांस्वम्बुयोनित्वात् सक्लेदं गुडवद्‌गतम् ॥५॥
सर्पत्यम्बुधरापाये तदगस्त्यो हिनस्ति च ।
प्रयाति मन्दवीर्यत्वं विषं तस्माद्‌घनात्यये ॥६॥
सर्पाः कीटोन्दुरा लूता वृश्चिका गृहगोधिकाः ।
जलौका मत्स्यमण्डूकाः शलभाः सकृकण्टकाः ॥७॥
श्वसिंहव्याघ्रगोमायुतरक्षुनकुलादयः ।
दंष्ट्रिणोऽमी विषं तेषां दंष्ट्रोत्थं जङ्गमं मतम् ॥८॥
मुस्तकं पौष्करं क्रौञ्चं वत्सनाभं बलाहकम् ।
कर्कटं कालकूटेन्द्रकरवीरकसंज्ञकम् ॥९॥
गालवेन्द्रायुधं तैलं मेघकं कुशपुष्पकम् ।
रोहिषं पुण्डरीकाख्यं लाङ्गलक्यञ्जनाभकम् ॥१०॥
सङ्कोचं मर्कटं शृङ्गीविषं हालाहलं तथा ।
एवमादीनि चान्यानि मूलजानि स्थिराणि च ॥११॥
गरं संयोगजञ्चान्यद् गरसंज्ञं गदप्रदम् ।
कालान्तरविपाकित्वान्न तदाशु हरत्यसून् ॥१२॥
निद्रां तन्द्रां क्लमं दाहं सपाकं लोमहर्षणम् ।
शोफं चैवातिसारञ्च जनयेज्जङ्गमं विषम् ॥१३॥
स्थावरं तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ।
फेनवम्यरुचिश्वासमूर्च्छाश्च जनयेद्विषम् ॥१४॥
जङ्गमं स्यादधोभागमूर्ध्वभागं तु मूलजम् ।
तस्माद्दंष्ट्रविषं मौलं हन्ति मौलं च दंष्ट्रजम् ॥१५॥

तृष्णामोहदन्तहर्षप्रसेकवमथु क्लमा भवन्त्यादौ।
वेगे रसप्रदोषादसृक् प्रदोषात् द्वितीये च ॥१६॥
वैवर्ण्यं भ्रमवेपथु मूर्च्छा जृम्भाङ्गचिमिचिमातमकाः।
दुष्टपिशितात्तृतीये मण्डलकण्डूश्वयथुकोठाः ॥१७॥
वातादिजाश्चतुर्थे छर्दिर्दाहाङ्गशूलमूर्च्छाद्याः।
नीलादीनां तमसश्च दर्शनं पञ्चमवेगे च ॥१८॥
षष्ठे हिक्का भङ्गः स्कन्धे स्यात्तु सप्तमेऽष्टमे मरणं नृणाम्।
चतुष्पादादीनां स्याच्चतुर्विधः पक्षिणां त्रिविधः ॥१९॥
सीदत्याद्ये भ्रमति च चतुष्पादो वेपते ततः शून्यः।
मन्दाहारश्च ततो म्रियते श्वासेन हि चतुर्थे ॥२०॥
ध्यायति विहगः प्रथमे वेगे प्रभ्राम्यति द्वितीये तु।
स्रस्ताङ्गश्च तृतीये विषवेगे याति पञ्चत्वम् ॥२१॥
लघुरूक्षमाशुविशदं व्यवायि तीक्ष्णं विकाषि सूक्ष्मञ्च।
उष्णमनिर्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः ॥२२॥
रौक्ष्याद्वातमशैत्यात् पित्तं सौक्ष्म्यादसृक् प्रकोपयति।
कफमव्यक्तरसत्वादन्नरसांश्चानुवर्त्तते शीघ्रम् ॥२३॥
शीघ्रं व्यवायिभावादाशु व्याप्नोति केवलं देहम्।
तीक्ष्णत्वात् मर्मघ्नं प्राणघ्नं तद्विकाषित्वात् ॥२४॥
दुरुपक्रमं लघुत्वाद्वैशद्यात् स्यादसक्तगतिदोषम्।
दोषस्थानप्रकृतीः प्राप्यान्यतमं ह्युदीरयति ॥२५॥
स्याद्वातिकस्य वातस्थाने कफपित्तलिङ्गमीषत्तु।
तृण्मूर्च्छारुचिमोहगलग्रहच्छर्दिफेनादि ॥२६॥
पित्ताशयस्थितं पैत्तिकस्य कफवातयोर्विषं तद्वत्।
तृट्कासज्वरवमथुक्लमदाहतमोऽतिसारादि ॥२७॥
कफदेशगतश्च कफस्य दर्शयेद्वातपित्तयोर्यैश्च्।
लिङ्गं श्वासगलग्रहकण्डूलालावमथ्वादि ॥२८॥

दूर्पोविषं तु शोणितदुष्टिकिटिभकोठादिरक्तलिङ्गञ्च।
विषमेकैकं दोषं सन्दूष्य हरत्यसूनेवम् ॥२९॥
ध्वरति विषतेजसास्टक् तत् खानि निरुध्य मारयति जन्तुम्।
पीतं म्टतस्य हृदि तिष्ठति दष्टविद्धयोर्दंशदेशे स्यात् ॥३०॥
नीलौष्ठदन्तशैथिल्यकेशपतनाङ्गभङ्गविक्षेपाः।
शिशिरैर्न लोमहर्षो नाभिहते दण्डराजी च ॥३१॥
क्षतजं क्षताच्च नायात्युक्तान्येतानि मरणलिङ्गानि।
एभ्योऽन्यथा चिकित्सा तेषाञ्चोपक्रमान् शृणु मे ॥३२॥
मन्त्रारिष्टोत्कर्त्तननिष्पीड़नचूषणाग्निपरिषेकाः।
अवगाहनरक्तमोक्षणवमनविरेकोपधानानि ॥३३॥
हृदयावरणाञ्जननस्यधूमलेहौषधप्रशमनानि।
प्रतिसारणं प्रतिविषं संज्ञासंस्थापनं लेपः ॥३४॥
म्टतसञ्जीवनमेव च विंशतिरेते चतुर्भिरधिकाः।
स्युरुपक्रमा यथा यत्र योज्याः शृणु तथा तान् ॥३५॥
दंशात् तु विषं दष्टस्य विसृतं वेणिकां भिषक् बद्धा।
निष्पीड़येदृभ्यं दंशमुद्धरेन्मर्मवर्ज्जं वा ॥३६॥
तं दंशं वा चूषेन्मुखेन यवचूर्णपांशुपूर्णेन।
प्रच्छन् वेधजलौकाःशृङ्गैः स्राव्यं ततो रक्तम् ॥३७॥
रक्ते विषप्रदुष्टे दुष्येत् प्रकृतिं ततस्त्यजेत् प्राणान्।
तस्मात् प्रधर्षणैरस्टग् वर्त्तमानं प्रवर्त्त्यं स्यात् ॥३८॥
विकटुगृहधूमरजनीपञ्चलवणाः सवार्त्ताकाः।
घर्षणमतिप्रवृत्ते वटादिभिः शीतलैर्लेपः ॥३९॥
रक्तं हि विषाधानं वायुरिवाग्नेः प्रदेहसेकैस्तत्।
शीतैः स्कन्दति तस्मिन् स्कन्ने व्यथं याति विषवेगः ॥४०॥
विषवेगान्मदमूर्च्छाविषादहृदयद्रवाः प्रवर्त्तन्ते।
शीतैर्निवर्त्तयेत् तान् न वीज्येत लोमहर्षः स्यात् ॥४१॥

तरुरिव मूलच्छेदाद्दंशच्छेदान्न वृद्धिमुपयाति विषम्।
आचूषणमानयनं जलस्य सेतुर्यथा तथारिष्टाः ॥४२॥
त्वङ्मांसगतो दाहो दहति विषं स्रावणं हरति रक्तात्।
पीतं वमनैः सद्यो हरेद्विरेकैर्द्वितीये तु ॥४३॥
आदौ हृदयं रक्ष्यं तस्यावरणं पिबेद्‌ यथालाभम्।
मज्जानं मधुघृतगैरिकमथ गोमयरसं वा ॥४४॥
दद्यात् सुपक्वमथवा कार्कं निष्पीड्य तद्रसं बलम्।
छागादीनां वास्तकभस्मसृदं वा पिबेदाशु ॥४५॥
चारोऽगदस्तृतीये शोफहरैर्लेखनं समध्वस्तु।
गोमयरसश्चतुर्थे वेगे सकपित्थमधुसर्पिर्भिः ॥४६॥
काकाण्डशिरीषाभ्यां स्वरसेनाश्वीतनमञ्जने नस्यम्।
स्यात् पञ्चमेऽथ षष्ठे संज्ञायाः स्थापनं कार्यम् ॥४७॥
गोपित्तयुता रजनी मञ्जिष्ठा मरिचपिप्पलीपानम्।
विषपानं दष्टानां विषपीते दंशनश्चान्ते ॥४८॥
शिखिपित्ताढ्ययुतं स्यात् पलाशबीजमगदो क्षतेषु मतः।
वार्त्ताकुफाणितागारधूमगोपित्तनिम्बं वा ॥४९॥
गोपित्तयुतैर्गुलिकाः सुरसाग्रन्थिहरिद्रजनीमधुकक्रुष्ठैः।
शस्ता क्षतेन तु शिरीषपुष्पकाकाण्डकरसैर्वा ॥५०॥
काकाण्डसुरसनवासीपुनर्नवावायसीशिरीषफलैः।
उद्दंशविषजनस्रुते लेपौषधनस्यपानानि ॥५१॥
एकाप्लवस्थौणेयककाचीशैलेयरोचनास्तगरम्।
ध्यामककुङ्कुममांसीसुरसाग्रैलालकुष्ठघ्नः ॥५२॥
वृहती शिरीषपुष्पं श्रीवेष्टकपद्मचारटिविशालाः।
सुरदारुपद्मकेशरसावरकमनःशिलाकौन्त्यः ॥५३॥
जात्यर्कपुष्परसरजनीद्वयहिङ्गुपिप्पलीलाचाः।
जलमुद्गपर्णिचन्दनमधुकमदनसिन्धुवाराख्य ॥५४॥

गन्धाकलोध्रमयूरकगन्धफलीनाकुलीविड़ङ्गाश्च।
पुष्ये संहृत्य समं पिष्टा गुलिका विधेयाः स्युः ॥५५॥
सर्वविषघ्नो जयकृद्विषमृतसञ्जीवनो ज्वरनिहन्ता।
घ्रेयविलेपनधारणधूमग्रहणैर्गृहस्थश्च ॥५६॥
भूतविषजन्त्वलक्ष्मीकार्मणमन्त्राग्न्यशन्यरीन् हन्यात्।
दुःस्वप्नस्त्रीदोषानकालमरणाम्बु चौरभयम् ॥५७॥
धनधान्यकार्य्यसिद्धिः श्रीपुष्ट्यायुर्विवर्द्धनो धन्यः।
मृतसञ्जीवन एष प्रागमृतार्थं ब्रह्मणा विहितः ॥५८॥
इति मृतसञ्जीवनी।

मन्त्रैर्धमनीवन्धोऽप्यामार्जनं कार्य्यमात्मरक्षा च।
दोषस्य विषं यस्य स्थाने स्यात् तं जयेत् पूर्वम् ॥५९॥
वातस्थाने स्वेदो दध्ना नतकुष्ठकल्कपानञ्च।
घृतमधुपयोऽम्बुपानावगाहसेकाश्च पित्तस्थे ॥६०॥
क्षारागदः कफस्थानगते स्वेदस्तथा शिराव्यधनम्।
दूषीविषेऽथ रक्तस्थिते शिराकर्म पञ्चविधम् ॥६१॥
भेषजमेवं कल्प्यं भिषग्विदा सर्वदा लक्ष्यं सर्वम्।
स्थानं जयेत् च पूर्वं स्थानस्थस्याविरुद्धञ्च ॥६२॥
विषदूषितकफमार्गः स्रोतःसंरोधरुद्धवायुश्च।
मृत इव श्वसेन्मर्त्यः स्यादसाध्यलिङ्गैर्विहीनश्च ॥६३॥
चर्मकषायाः कल्कं बिल्वसमं मूर्द्ध्नि काकपदमस्य।
कृत्वा कुर्य्यात् कटभी कटुकट्फलप्रधमनञ्च ॥६४॥
छागगव्यमाहिषाविककौक्कुटाजमांसम्।
दद्यात् काकपदोपरि मत्ते विषेणैव सहसा ॥६५॥
घ्राणाक्षिकर्णजिह्वाकण्ठनिरोधेषु कार्म नस्तः स्यात्।
वार्त्ताकुवीजपूरकज्योतिष्मत्यादिभिः पिष्टैः ॥६६॥
अञ्जनमक्षुपरोधे कर्त्तव्यं वस्तमूत्रपिष्टैस्तु।

दारुव्योषहरिद्राकरवीरकरञ्जसुरसैस्तु ॥६७॥
श्वेता वचाश्वगन्धा हिङ्गमृता कुष्ठसैन्धवे लशुनम्।
सर्षपकपित्थमध्यं टुण्टुककरञ्जबीजानि ॥६८॥
व्योष शिरीषपुष्पं हिरजनी वंशलोचनञ्च समम्।
पिष्टा ह्यजस्य मूत्रेण गोऽश्वपित्तेन सप्तकृत्वः ॥६९॥
व्यत्यासभावितोऽयं निहन्ति शिरसि स्थितं विषं चिरम्।
सर्वज्वरभूतग्रहविसूचिकाजीर्णमूर्च्छार्त्तिं ॥७०॥
उन्मादापस्मारौ काचपटलनीलिकाशिरोदोषान्।
शुष्काक्षिपाकपिल्लार्बुदार्मकण्डूतमोदोषान् ॥७१॥
क्षयदौर्बल्यमदात्ययपाण्डुगदांश्चाञ्जनात् तथा मोहात्।
लेपाद्दिग्धक्षतलीढदष्टविषपीतविषघाती ॥७२॥
अर्शःस्वाकण्डेषु च गुदलेपो योनिलेपन स्त्रीणाम्।
मूढे गर्भे दुष्टे ललाटलेपः प्रतिश्याये ॥७३॥
दद्रुकण्डूकिटिभे कुष्ठे श्वित्रेषु च विचर्चिकादिषु लेपः।
गज इव तरून् निगदान् निहन्त्यगदगन्धहस्त्येषः ॥७४॥

इति गन्धनामा अगदहस्ती।

पत्रागुरुमुस्तैलानिर्यासः पद्मचन्दन तथा पृक्का।
त्वङ्नलदोत्पलवालकहरेणुकोशीरव्याघ्रनखाः ॥७५॥
सुरदारुकनककुङ्कुमध्यामककुष्ठप्रियङ्गवस्तगरम्।
पञ्चाङ्गानि शिरीषाद्दीपेलामनःशिलाजाल्यः ॥७६॥
श्वेतकटभीकरञ्जौ रक्षोघ्नौ सिन्धुवारिका रजनी।
सुरसाञ्जनगैरिकमञ्जिष्ठानिम्बनिर्यासाः ॥७७॥
वंशलगाश्वगन्धा हिङ्गुदधित्थाश्ववेतसं लाक्षा।
मधुमधूकसोमराजीवचारुहारोचनातगरान् ॥७८॥
अगदोऽयं वै श्रवणाख्यातम्नाम्नैव पद्मकः।
अप्रतिहतप्रभावः ख्यातो महागन्धहस्तीति ॥७९॥

पित्तेन गवां पेष्या गुलिकाः कार्य्यास्तु पुष्ययोगेन।
पानाञ्जनप्रलेपैः प्रसाधयेत् सर्वकर्माणि ॥८०॥
पैल्लं कण्डूं तिमिरं रात्यन्ध्यं काचमर्बुदं पटलम्।
घ्नन्ति सततं प्रयोगाद्विलमितपथ्याशिनां पुंसाम् ॥८१॥
विषमज्वरानजीर्णान् दद्रुं कण्डूविसूचिकाश्चोपघ्नन्ति नृणाम्।
विषं मूषिकलूतानां सर्वेषां पन्नगानाञ्च।
स्थाग्रं विषं नाशयति समूलजमथ कन्दजं सर्वम् ॥८२॥
एतेन लिप्तगात्रः सर्पान् स्पृशति भक्षयेच्च विषम्।
कालपरीतोऽपि नरो जीवति नित्यं निरातङ्कः ॥८३॥
भानहे गुदलेपो योनिलेपश्च मूढगर्भाणाम्।
मूर्च्छार्त्तिषु च ललाटे प्रलेपनमाहुः प्रधानतमम् ॥८४॥
भेरीमृदङ्गपटहाश्छत्रा्ण्यनुना तथा ध्वजपताकाः।
लिप्ताश्चिविषनिरस्ते प्रध्वनयेद्दर्शयेत् मतिमान् ॥८५॥
यत्र च सन्निहितोऽयं न तत्र बालग्रहा न रक्षांसि।
न च कार्मणवेताला वहन्ति नाथर्वणा मन्त्राः ॥८६॥
सर्वग्रहा न तत्र प्रभवन्ति न चाग्निशस्त्रचौराः।
लक्ष्मीश्च तत्र भजते यत्र महागन्धहस्त्यस्ति ॥८७।
पिष्यमाण इमञ्चात्र सिद्धं मन्त्रमुदीरयेत्।
मम माता जया नाम विजयो नाम मे पिता ॥८८॥
सोऽहं जयो जयापुत्रो विजयोऽथ जयामि च।
नमः पुरुषसिंहाय विष्णवे विश्वकर्मणे ॥८९॥
सनातनाय कृष्णाय भवाय विभवाय च।
तेजो वृषाकपेः साक्षात् तेजो ब्रह्मेन्द्रयोर्यमे ॥९०॥
यथाहं नाभिजानामि वासुदेवपराजयम्।
मातुश्च पाणिग्रहणं समुद्रस्य च शोषणम् ॥९१॥
अनेन सत्यवाक्येन सिध्यतामगदो ह्ययम्।

हिलिमिलिसंसृष्टे रुच सर्वमेपचे तु मे ॥८२॥

इति महागन्धहस्ती नामागदः

ऋषभकजीवकभार्गीमधुकोत्पलधान्यकेशराजाज्यः।
समितगिरिकोलमध्याः पेयाः क्षामज्वरादिहराः ॥८३॥
हिङ्गु च तथायुक्तं कपित्थरसंमुद्गलवणाश्च।
समधुसितो पातव्यो ज्वरहिक्काश्वासकासघ्नी ॥८४॥
लेहः कोलास्थ्यञ्जनलाजोत्पलमधुघृतैर्वम्याम्।
बृहतीद्वयाढ्कीपत्रपूर्वर्त्तिस्तु हिक्काघ्नी ॥८५॥
शिखिबर्हिबलाकास्थीनि सर्पपाश्चन्दनं च घृतयुक्तम्।
धूमो गृहशयनासनवस्त्रादिषु शस्यते विषनुत् ।८६॥
घृतयुक्तो नतकुष्ठं भुजगपतिशिरः शिरीषपुष्पञ्च।
धूमागदः स्मृतोऽयं सर्वविषघ्नः क्षयथुघ्नश्च ॥८७॥
जतुसेव्यपत्रगुग्गुलुभल्लातककाकुभपुष्पसर्जरसाः।
श्वेता धूमा उरगाखुकीटवस्त्रजमिहराः स्युः ॥८८॥
तरुणपलाशयवासुत पञ्चचूर्णितैः सह समांशैः।
लोहितसद्रजनीद्वयशल्लसुरसमञ्जरीमधुकैः ॥८९॥
लाचासैन्धवमांसीहरेणुहिङ्गुप्रियारिवाकुष्ठैः।
सद्योधैर्नाड्डीकैर्द्दर्वी लेपेन वह्वेदयावत् ॥१००॥
सर्वविषशोथगुल्मत्वग्दोषार्शोभगन्दरप्लीह्नः।
शोषापस्मारक्रिमिभूतस्वरभेदकण्डूपाण्डुगदान् ॥१०१॥
मन्दाग्नित्वं कासं सोन्मादं नाशयेत्तृणामाशु।
गुलिका श्लायागुप्फकोलसमास्ताः समुधयुक्ताः ॥१०२॥

इति चारागदः।

विषपीतदष्टविद्धेष्वेतद्दिग्धे च वाच्यमुद्दिष्टम्।
सामान्यतः प्रयत्नात् निर्देशमतः शृणु यथावत् ॥१०३॥
रिपुयुक्तेभ्यो नृभ्यः स्वेभ्यः स्त्रीभ्योऽथवा भयं नृपतेः।

आहारविहारगतस्तस्मात् प्रेष्यान् परीक्षेत ॥१०४॥
अत्यर्थमुद्विग्नः स्यात् बहुवामथवाल्पवाग्विगतलक्ष्मीः।
प्रायः प्रकृतिविकारं विषप्रदाता नरो ज्ञेयः ॥१०५॥
दृष्ट्वैवं न तु सहसा भोज्यं नस्येत् तदग्रमग्नौ तु।
सविषं हि प्राप्यार्त्तं बहून् विकारान् भजत्यग्निः ॥१०६॥
शिखिवर्हविचित्रार्च्चिस्तीक्ष्णाल्परूक्षकुणपधूमश्च।
स्फुटति च सशब्दमग्रध्दमेकावर्त्ता विहितार्चिरपि स्यात्॥१०७॥
गात्रस्पृक् विवर्णं भोज्यं स्यान्मक्षिकाश्च मारयति।
क्षामस्वरांश्च काकान् कुर्य्याद्विरजेचकोरांश्च ॥१०८॥
पाने नीला राजी वैवर्ण्यं स्याच्च नेक्षते च्छायाम्।
विकृतामथवा पश्यति लवणाभे फेनमाला स्यात् ॥१०९॥
पानान्नयोः सविषयोः विरसो गन्धेन रुक् हृदि च।
मूर्च्छास्यपाणिशोषः सुत्यङ्गुलिदाहतोदनखभेदाः ॥११०॥
मुखताल्वोष्ठचिमिचिमा जिह्वा शूलवती जड़ा विवर्णा स्यात्।
द्विजहर्षहनुस्तम्भास्यदाहलालागलविकाराः ॥१११॥
आमाशयं प्रविष्टे वैवर्ण्यं स्वेदसदनमुत्क्लेदः।
दृष्टिर्हृदयोपरोधो विन्दुयतैश्चीयते चाङ्गम् ॥११२॥
पक्वाशयन्तु याते मूर्च्छामदमोहदाहबलनाशाः।
तन्द्रा कार्श्यञ्च विषे पाण्डुत्वञ्चोदरश्च स्यात् ॥११३॥
दन्तपवनस्य कूर्च्चो विशीर्य्यते दन्तोष्ठमांसशोफश्च।
केशच्युतिः शिरोरुक्पयश्च सविषे शिरोऽभ्यङ्गे ॥११४॥
दुष्टेऽञ्जनेऽक्षिदाहः स्रावाश्रुपदेहशोफरागाश्च।
आयैरादौ कोष्ठः स्पर्शस्त्वगदूष्यते दुष्टैः ॥११५॥
स्नानाभ्यङ्गोत्सादनवस्त्राजड़ारकैर्दुष्टैः।
कण्ड्वार्त्तिलोमहर्षाः कोठपिडकाचिमिचिमाःशोथाः ॥११६॥
एते करचरणदाहतोदक्लमाङ्गविपाकाश्च।

भूपादुकाखगजचर्मकेतुशयनासनैर्दुष्टैः ॥११७॥
माल्यमगन्धं ध्यायति शिरसो रुजा लोमहर्षकरम्।
स्तम्भयति खानि दर्शनमुपहन्ति च नासिकां धूमः ॥११८॥
कूपतड़ागादि जलं दुर्गन्धं सकलुषं विवर्णञ्च।
पीतं श्वयथुं कोठान् पिड़कांश्च करोति मरणञ्च ॥११९॥
आद्यावामाशयगे वमनं त्वक्स्थे प्रदेहसेकादि।
कुर्य्याद्भिषक् चिकित्सां दोषबलञ्चैव हि समीक्ष्य ॥१२०॥
इति मूलविषविशेषाः प्रोक्ताः शृणु जङ्गमस्यातः।
सविशेषचिकित्सितमेवादौ तत्रोच्यते तु सर्पाणाम् ॥१२१॥
इह दर्वीकरः सर्पो मण्डली राजिमानिति।
त्रयो यथाक्रमं वातपित्तश्लेष्मप्रकोपणाः ॥१२२॥
दर्वीकरः फणी ज्ञेयो मण्डली मण्डलाः फणाः।
विन्दुलेखो विचित्राङ्गः पन्नगः स्यात् तु राजिमान् ॥१२३॥
विशेषाद्रूक्षकटुकमम्लोष्णं स्वादु शीतलम्।
विषं यथाक्रमं तेषां तस्माद्वातादिकोपनम् ॥१२४॥
दर्वीकरकृतो दंशः सूक्ष्मदंष्ट्रापदोषितः।
निम्नरक्तः कूर्माभो वातव्याधिकरो मतः ॥१२५॥
पृथ्वर्पितः सशोथश्च दंशो मण्डलिभिः कृतः।
पीताभः पीतरक्तश्च सर्वपित्तविकारकृत् ॥१२६॥
कृतो राजिमता दंशः पिच्छिलः स्थिरशोफकृत्।
स्निग्धः पाण्डुश्च सान्द्रासृक्श्लेष्मव्याधिसमीरणः ॥१२७॥
हत्तभोगी महाकायः श्वसपूर्द्धेक्षणः पुमान्।
स्थूलमूर्द्धा समाङ्गश्च स्त्रीलतः स्याद्विपर्य्ययात् ॥१२८॥
क्लीवः सस्ताल्पबोधदृष्टिः सरहीनः प्रकम्पते।
स्त्रिया दष्टो विपर्य्यस्तैरेतैः पुंसो नरो मतः ॥१२९॥
व्यामिश्रैर्लिङ्गैरेतैस्तु क्लीवदष्टं नरं वदेत्।
इत्येतदुक्तं सर्पाणां स्त्रीपुंक्लीवनिदर्शनम् ॥१३०॥

पाण्डुवक्त्रास्तु गर्भिण्या शूनोष्ठोऽप्यसितेक्षणः।
जृम्भाक्रोशोपजिह्वार्त्तः सूतया रक्तमूत्रवान् ॥१३१॥
सर्पो गौधेरको नाम गोधाख्यः स्याच्चतुष्पदः।
कृष्णसर्पेण तुल्यः स्यात्राना: स्युर्मिश्रजातयः ॥१३२॥
गूढ़सम्पादितं हृत्तं पीड़ितं लम्बितार्पितम्।
सर्पितञ्च भयावाधं दंशा येऽन्ये न ते भयाः ॥१३३॥
तक्षणाः कृष्णसर्पास्तु गोनसाः स्थविरास्तथा।
राजिमन्तो वयोमध्ये भवन्त्याशीविषोपमाः ॥१३४॥
सर्पदंष्ट्राश्चतस्रस्तु तासां वामाधराः सिताः।
पीता वामोत्तरा दंष्ट्रा रक्तश्यावाधरोत्तरा ॥१३५॥
यस्मात् पतते विन्दुर्गोबालात् सलिलोद्धृतात्।
वामाधरायां दंष्ट्रायां तस्मात् स्याद्द्विगुणं विषम् ॥१३६॥
एकद्वित्रिचतुर्वृद्धिविषभागोत्तरोत्तराः।
सवर्णास्तत् क्रमा दंष्ट्रा वक्तृत्वविषा भयाः ॥१३७॥
सर्पाणामेव विण्मूत्रात् कीटाः स्युः कीटसंमताः।
दूषीविषाः प्राणहरा इति संक्षेपतो मताः ॥१३८॥
गात्रं रक्तं सित कृष्णं श्यावं वा पिड़कान्वितम्।
सकण्डूदाहविसर्पपाकि स्यात् कुथितं तथा ॥१३९॥
कीटैर्दूषीविषैर्दष्टे लिङ्गं प्राणहरं शृणु।
सर्पदष्टे तथा शोथे वर्द्धते सोग्रगन्ध्यसृक् ॥१४०॥
दंशोऽक्षिगौरवं मूर्च्छा सरुगार्त्तः श्वसित्यपि।
कृष्णादचिपरीतश्च भवेद्दूषीविषार्दितः ॥१४१॥
दंशस्य मध्ये यत् कृष्णं श्यावं वा जालकावृतम्।
दग्धाकृति भृशं पाकि क्लेदशोथज्वरान्वितम्॥१४२॥
दूषीविषाभिर्लूताभिस्तं दष्टमिति निर्दिशेत्।
सर्वासामेव ताषाञ्च दंशे लक्षणमुच्यते ॥१४३॥

शोफाः श्वेताः सिता रक्ताः पीता वा पिड़का ज्वरः ।
प्राणान्तिको भवेच्छ्वासो दाहहिक्काशिरोग्रहाः ॥१४४
श्रादंशाच्छोणितं पाण्डु मण्डलानि ज्वरोऽरुचिः ।
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते ॥१४५॥
मूर्च्छाङ्गशोथवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ।
शिरोगुरुत्वं लालास्त्रक्छर्दिश्चासाध्यमूषिकैः ॥१४६॥
श्यावत्वमथ कार्ष्ण्यं वा नानावर्णत्वमेव वा ।
मोहः पुरीषभेदो वा दष्टे स्यात् कृकलासकैः ॥१४७॥
दहत्यग्निरिवादौ तु भिनत्तीवोर्ध्वमाशु च ।
वृश्चिकस्य विषं याति दंशे पश्चात् तु तिष्ठति ॥१४८॥
दष्टोऽसाध्यस्तु हृद्घ्राणरसनोपहतो नरः ।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून् ॥१४९॥
विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा ।
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्य्यते ॥१५०॥
हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्त्तिमान् ।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ॥१५१॥
एकदंष्ट्रार्दितः शूनः सरुक् स्यात् पीतकः सदट् ।
छर्दिर्निद्रा च मण्डूकैः सविषैर्दष्टलक्षणम् ॥१५२॥
मत्स्यास्तु सविषाः कुर्युर्दाहं शोफरुजं तथा ।
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः ॥१५३॥
दाहतोदस्वेदशोथकरी तु गलगोड़िका ।
दंशे स्वेदं रुजं दाहं करोति च शतापदी ॥१५४॥
कण्डूमान् मशकैरेतच्छोथः स्यात् मन्दवेदनः ।
असाध्यकीटसदृशमसाध्यमशकक्षतम् ॥१५५॥
सद्यःप्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता ।
पीड़का मक्षिकादंशे तासान्तु स्थगिकासुहृत् ॥१५६॥

श्मशानचैत्यवल्मीकयज्ञाश्रमसुरालये।
पक्षसन्धिषु मध्याह्ने सार्द्धरात्रेऽष्टमीषु च ॥१५७॥
न सिद्ध्यन्ति नरा दष्टाः पाषण्डायतनेषु च,।
दृष्टिश्वासमलस्पर्शविषैराशीविषैस्तथा ॥१५८॥
विनश्यन्त्याशु सम्प्राप्ता दष्टाः सर्वेषु मर्मसु।
येन केनापि सर्पेण सम्भवः सर्व एव च ॥१५९॥
भीतमत्तावलीयाच्चतुर्थ्यार्त्ते वर्द्धते विषम्।
विषं प्रकृतिकालौ च तुल्यौ प्राप्याप्यमन्यथा ॥१६०॥
वारिविप्रहृताः क्षीणा भीता नकुलनिर्जिताः।
हृद्धा बालास्त्वचो मुक्ताः सर्पा मन्दविषाः स्मृताः ॥१६१॥
सर्वदेहान्वितं क्रोधाद्विषं सर्पो विमुञ्चति।
तदेवाहारहेतोर्वा भयाद्वा न प्रमुञ्चति ॥१६२॥
वातोल्वणविषाः प्राय उच्चिटिङ्गाः सवर्चिकाः।
वातपित्तोल्वणाः कीटाः श्लैष्मिकाः कणभादयः ॥१६३॥
यस्य यस्य हि दोषस्य लिङ्गाधिक्यानि लक्षयेत्।
तस्य तस्यौषधैः कुर्य्याद्विपरीतगुणैः क्रियाम् ॥१६४॥
हृत्पीडोर्द्ध्वानिलस्तम्भः शिरायासोऽस्थिपर्वरुक्।
घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ॥१६५॥
संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता।
दंशावदारणं शोथो रक्तपीतश्च पैत्तिके ॥१६६॥
वम्यरोचकहृल्लासप्रसेकोत्क्लेशगौरवैः।
सशैत्यमुखमाधुर्य्यैर्विद्यात् श्लेष्माधिकं विषम् ॥१६७॥
खण्डेन च व्रणालेपस्तैलाभ्यङ्गश्च वातिके।
स्वेदो नाडीपुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥१६८॥
सुशीतैः स्तम्भयेत् सेकैः प्रदेहैश्चापि पैत्तिकम्।
लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥१६९॥
विषेष्वपि च सर्पेषु सर्वस्थानगतेषु च।

श्वदंष्ट्रिकोच्चिटिङ्केषु प्रायः शीतो विधिर्हितः ॥१३०॥
वृश्चिके स्वेदमभ्यङ्गं घृतेन लवणेन च ।
सेकांश्चोष्णान् प्रयुञ्जीत भोज्यं पानञ्च सर्पिषः ॥१३१॥
एतदेवोच्चिटिङ्केऽपि प्रतिलोमञ्च पांशुभिः ।
उद्वर्त्तनं सुखाम्बुष्णैस्तथावच्छादनं घनैः ॥१३२॥
स्यात् त्रिदोषप्रकोपात् तु तथा धातुविपर्ययात् ।
शिरोऽभितापो लालास्रावश्चैवक्त्रस्तथा भवेत् ॥१३३॥
अन्येष्वेवंविधा व्यालाः कफवातप्रकोपणाः ।
छर्द्दिरोचकज्वरश्वासभक्तपानमूर्च्छाकरा मताः ॥१३४॥
कण्डूनिस्तोदवैवर्ण्य सुप्तिक्लेदोपशोषणम् ।
विदाहरागरुक्पाकाः शोफा ग्रन्थिनिकुञ्चनम् ॥१३५॥
दंशावदारणं स्फोटाः कर्णिका मण्डलानि च ।
ज्वरश्च सविषे लिङ्गं विपरीतन्तु निर्विषे ॥१३६॥
तत्र सर्वं यथावस्थं प्रयोज्याः स्युरुपक्रमाः ।
पूर्वोक्तं विधिमन्यञ्च यथावद् ब्रुवतः शृणु ॥१३७॥
छर्द्दिदाहे प्रसेके वा विरेकवमनं भृशम् ।
यथावस्थं प्रयोक्तव्यं शुद्धे संसर्जनक्रमः ॥१३८॥
शिरोगते विषे नस्तः कुर्य्यान्मूलानि बुद्धिमान् ।
बन्धुजीवस्य भार्ग्याश्च सुरसस्यासितस्य च ॥१३९॥
दर्व्वकाकमयूराणां मांसासृक् मस्तके चते ।
मूर्द्ध्नि देयमथो दष्टस्योर्द्दष्टस्य पादयोः ॥१४०॥
पिप्पलीमरिचक्षारवचासैन्धवशिग्रुकाः ।
पिष्टा रोहितपित्तेन प्रत्यक्चिगतमञ्जनात् ॥१४१॥
कपित्थमाम्रं ससितं क्षौद्रं कण्ठगते विषे ।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात् ॥१४२॥
विषे पक्वाशयप्राप्ते पिप्पली रजनीद्वयम् ।

मञ्जिष्ठा च समं पिष्ट्वा गोपित्तेन नरः पिबेत् ॥१८३॥
मांसं रक्तञ्च गोधायाः शुष्कं चूर्णीकृतं हितम्।
विषे रसगते पानं कापित्थरससंयुतम् ॥१८४॥
शेलुमूलत्वगग्राणि बादरौदुम्बराणि च।
कटभ्याश्च पिबेद्रक्तगते मांसगते पिबेत् ॥१८५॥
सक्षौद्रं खदिरारिष्टं कौटजं मूलमम्भसा।
सर्वेषु च बले द्वे तु मधूकं मधुकं नतम् ॥१८६॥
पिप्पलीं नागरं क्षारं नवनीतेन मूर्च्छितम्।
कफे भिषगुदीर्णे तु विदध्यात् प्रतिसारणम् ॥१८७॥
मांसीकुङ्कुमपत्रत्वक्रजनीनतचन्दनैः।
मनःशिलाव्याघ्रनखसुरसैरम्बुपेषितैः ॥१८८॥
पाननस्याञ्जनालेपाः सर्वशोथविषापहाः।
चन्दनं तगरं कुष्ठं हरिद्रे द्वे त्वगेव च ॥१८९॥
मनःशिला तमालश्च रसः कैशर एव च।
शार्दूलस्य नखश्चैव सुपिष्टं तण्डुलाम्बुना ॥१९०॥
हन्ति सर्वविषाण्येव वज्रिवज्रमिवासुरान्।
रसे शिरीषपुष्पस्य सप्ताहं मरिचं सितम् ॥१९१॥
भावितं सर्पदष्टानां नस्यपानाञ्जने हितम्।
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुष्पलम्।
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम् ॥१९२॥
सिन्धुवारस्य मूलञ्च श्वेता च गिरिकर्णिका।
पानं दर्वीकरैर्दष्टे नस्यं मधु सपाकलम् ॥१९३॥
मञ्जिष्ठा मधुयष्ट्याह्वा जीवकर्षभकौ सिता।
काश्मर्यं वटशुङ्गानि पानं मण्डलिनां विषे ॥१९४॥
व्योषं सातिविषं कुष्ठं गृहधूमो हरेणुका।
तगरं कटुका क्षौद्रं हन्ति राजीमतां विषम् ॥१९५॥

गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम् ।
अपि वासुकिना दष्टः पिबेद्दधिघृताप्लुतम् ॥१८६॥
क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ।
मुक्तालेपो वरः शोथदाहतोदज्वरापहः ॥१८७॥
चन्दनं पद्मकोशीरं पाटलिः सिन्धुवारिका ।
क्षीरशुक्लानतं कुष्ठं शिरीषोदीच्यशारिवाः ॥१८८॥
शेलुस्वरसपिष्टोऽयं लूतानां सार्वकार्मिकः ।
मधूकं मधुकं कुष्ठं शारिवोदीच्यपाटलैः ॥१९९॥
सनिम्बशारिवाक्षौद्रं पानं लूताविषापहम् ।
कुसुम्भपुष्पं गोदन्ताः स्वर्णक्षीरी कपोतविट् ।
दन्ती त्रिवृत् सैन्धवैलो कर्णिकापातनं तयोः ॥२००॥
कटभ्यर्जुनशैरीषशेलुक्षीरीद्रुमत्वचम् ।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥२०१॥
त्वचञ्च नागरञ्चैव समांशं श्लक्ष्णपेषितम् ।
पेयमुष्णाम्बुना सर्वं मूषिकाणां विषापहम् ॥२०२॥
कुटजस्य फलं पिष्टं तगरं जालमालिनी ।
तिक्तेक्ष्वाकुकयोगोऽयं पानप्रधमनादिभिः ॥२०३॥
वृश्चिकोन्दुरलूतानां सर्पाणाञ्च विषापहम् ।
समानमन्त्रेतेनेदं गराजीर्णञ्च नाशयेत् ॥२०४॥
सर्वे ऽगदा यथादोषं प्रयोज्याः स्युश्चिकपटके ।
कपोतविट् मातुलुङ्गं शिरीषकुसुमाद्रसः ॥२०५॥
शङ्खिन्यार्कं पयः शुण्ठी करञ्जमधुवार्षिके ।
शिरीषस्य फलं पिष्टं सुहीक्षीरेण दार्दुरे ॥२०६॥
मूलानि श्वेतभण्डीनां व्योषसर्पिष सत्यजे ।
कीटदष्टक्रियाः सर्वाः समानाः स्याज्जलौकसाम् ॥२०७॥
वातपित्तहरी प्रायः क्रिया प्रायः प्रशस्यते ।

मार्षिकस्योचिटिङ्गस्य कणभस्येन्दुरोऽगदः ॥२०८॥
वचां वंशत्वचं पाठां नतं सुरसमञ्जरीम्।
द्वे बले नाकुली कुष्ठं शिरीषं रजनीद्वयम् ॥२०९॥
गुह्वासतिगुहां श्वेतामजगन्धां शिलाजतु।
कत्तृणं कटभीं चारं गृहधूमं मनःशिलाम् ॥२१०॥
रोहीतकस्य पित्तेन पिष्टा तु परमोऽगदः।
नस्याञ्जनाद्यलेपेषु हितो विश्वम्भरादिषु ॥२११॥
स्वर्जिकाजमलक्षारः सुरसोऽथाचिपीडकः।
मदिरामण्डसंयुक्तो हितः शतपदीविषे ॥२१२॥
कपित्थमचिपीडोऽर्कबीजं त्रिकटुकं तथा।
करञ्जौ द्वे हरिद्रे च गलगोधा विषं जयेत् ॥२१३॥
काकाण्डरससंयुक्तो विषाणां तण्डुलीयकः।
सर्वेषां बर्हिपित्तेन तद्वद्वायसपीलुकः ॥२१४॥
शिरीषफलमूलत्वक्पुष्पपत्रैः समैर्घृतैः।
श्रेष्ठः पञ्चशिरीषोऽयं विषाणां प्रवरो वधे ॥२१५॥
चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तक्षतन्तु यत्।
शूयते पच्यते वापि स्रवति ज्वरयत्यपि ॥२१६॥
इति पञ्चशिरीषोऽगदः।
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपद्यपि।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥२१७॥
दुरन्धकारे दष्टस्य केनचिद्विषशङ्कया।
विषोद्वेगाज्ज्वरच्छर्दिर्मूर्च्छादाहोऽपि वा भवेत् ॥२१८॥
ग्लानिर्मोहोऽतिसारो वाप्येतच्छङ्काविषं मतम्।
चिकित्सितमिदं तस्य कुर्यादाश्वासनं बुधः ॥२१९॥
सितां विगन्धिकां द्राचां पयस्यां मधुकं मधु।
पानं समन्त्रपूताम्बु प्रोचणं सान्त्वहर्षणम् ॥२२०॥
शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः।

भोजनार्थे प्रशस्यन्ते लवणार्थे च सैन्धवम् ॥२२१॥
तण्डुलीयकजीवन्तीवार्त्ताकुसुनिषण्णकाः।
चुचुर्मण्डूकपर्णी च शाकश्च कुलकं हितम् ॥२२२॥
धात्री दाड़िमसम्बार्थे यूषा मुद्गहरेणुभिः।
रसार्थेशशिखिश्याविलावतैत्तिरिपार्षताः ॥२२३॥
विषघ्नौषधसंयुक्ता रसा यूषाश्च संस्कृताः।
अविदाहीनि चान्नानि विषार्त्तानां भिषग्जितम् ॥२२४॥
विरुद्धाध्यशनक्रोधक्षुद्भयायासमैथुनम्।
वर्जयेद्विषमुक्तोऽपि दिवास्वप्नं विशेषतः ॥२२५॥
मूर्च्छुर्मुहुः शिरोन्यासः शोथः सस्तोष्ठकर्णता।
ज्वरस्तब्धाङ्गिगात्रत्वं हनुकम्पोऽङ्गमर्दनम् ॥२२६॥
रोमापगमनं ग्लानिररतिर्वेपथुर्व्रणः।
चतुष्पादां भवत्येतद्दष्टानामिह लक्षणम् ॥२२७॥
देवदारु हरिद्रे द्वे सरलं चन्दनागुरु।
रास्ना गोरोचनाजाजी गुग्गुलिचुरसौ नतम् ॥२२८॥
चूर्णं ससैन्धवानन्तं गोपित्तमधुसंयुतम्।
चतुष्पादानां दष्टानामगदः सार्वकार्मिकः ॥२२९॥
सौभाग्यार्थं स्त्रियः स्वेदरजो नानाङ्गजान् मलान्।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥२३०॥
तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते।
मर्मप्रधमनाध्मानहस्तयोश्चोयलक्षणाः ॥२३१॥
जठरं ग्रहणीदोषे यक्ष्मा गुल्मः क्षयः ज्वरः।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥२३२॥
स्वप्ने मार्जारगोमायुव्यालान् सनकुलान् कपीन्।
प्रायः पश्यति नद्यादीन् शुष्कांश्च सवनस्पतीन् ॥२३३॥
कालश्च गौरमात्मानं स्वप्ने गौरश्च कालकम्।

विकर्णनासिकं वापि पश्येत् तद्विहतेन्द्रियः ॥२३४॥
तमवेक्ष्य भिषक् प्राज्ञः पृच्छेत् किं कैः कदा सह।
ज्ञात्वैवमित्यवगम्याशु प्रदद्याद्दमनं भिषक् ॥२३५॥
सूक्ष्मताम्ररजस्तस्मै सक्षौद्रं हृद्विशोधनम्।
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥२३६॥
हेम सर्वविषाण्याशु गरांश्च विनियच्छति।
हेमपस्य सजत्यङ्गे न हि पद्मेऽम्बुवद्विषम् ॥२३७॥
नागदन्तीविहङ्गन्तीद्रवन्तीसुकृपयःफलैः।
साधितं माहिषं सर्पिः सगोमूत्राढकं हितम् ॥२३८॥
सर्पकीटविषार्त्तानां गरार्त्तानाञ्च शान्तये।
शिरीषत्वक् त्रिकटुकं त्रिफला चन्दनोत्पले।
द्वे वले शारिवास्फोता सुरभीनिम्बपाटलाः ॥२३९॥
बन्धुजीवाढकीमूर्वावासाशुरसवत्सकान्।
पाठाद्वीठाम्बगन्धार्कमूलयष्ट्याह्वपद्मकान् ॥२४०॥
विशालां बृहतीं साधां कोविदारं शतावरीम्।
कटभीदन्त्यपामार्गान् पृश्निपर्णीं रसाञ्जनम् ॥२४१॥
श्वेतभण्डाश्वखुरकौ कुष्ठदारुप्रियङ्गुकान्।
विदारीं मधुकं सारं काञ्चनस्य फलं वचाम् ॥२४२॥
रजन्यौ लोध्रमर्धांशं पिष्ट्वा साध्यं घृताढकम्।
तुल्याम्बुच्छागगोमूत्राढके तत् तु विषापहम् ॥२४३॥
अपस्मारक्षयोन्मादभूतग्रहगरोदरम्।
पाण्डुरोगान् क्रिमीन् गुल्मान् प्लीहोरुस्तम्भकामलाः ॥२४४॥
हनुस्कन्धग्रहादींश्च पानाभ्यञ्जननावनैः।
हन्यात् सञ्जीवयेच्चापि विषोद्बन्धमृतान् नरान्।
नाम्नेदममृतं सर्वविषाणां स्याद् घृतोत्तमम् ॥२४५॥

इति अमृतघृतम्।

तत्र श्लोकाः ।

छत्री झर्झरपाणिश्च चरेत् रात्रौ तथा दिवा ।
तच्छायाशब्दवित्रस्ताः प्रणश्यन्त्याशु पन्नगाः ॥२४६॥
दष्टमात्रं दशेदाशु तं सर्पं लोष्टमेव वा ।
उपर्य्यरिष्टां बध्नीयाद्दंशं छिन्द्यात् दहेत् तथा ॥२४७॥
वज्रं मरकतं सारं पिचुको विषमूषिका ।
कर्कोटकमणिः सर्पाद्वैदूर्य्यगजमौक्तिकम् ॥२४८॥
धार्य्यं गरमणिर्यश्च वरौषध्यो विषापहाः ।
खगाश्च शारिकाक्रौञ्चशिखिहंसशुकादयः ॥२४९॥
इतीदमुक्तं द्विविधस्य विस्तरैर्बहुप्रकारं विषरोगभेषजम् ।
अधीत्य विज्ञाय तथा प्रयोजयेत् व्रजेद्विषाणामविषह्यतां बुधः॥२५॥

---

## षड्विंशोऽध्यायः ।

### त्रिमर्मीयचिकित्सितम् ।

सप्तोत्तरं मर्मशतं यदुक्तं शरीरसंख्यामधिकृत्य तेभ्यः ।
मर्माणि बस्तिं हृदयं शिरश्च प्रधानभूतानि वदन्ति तज्ज्ञाः ॥१॥
प्राणाश्रयान् तान् परिपीड़यन्ति वातादयोऽसूनपि पीड़यन्ति ।
तत्संश्रितानामनुपालनार्थं महागदानां शृणु सौम्य रक्षाम् ॥२॥
कषायतिक्तोषणरूक्षभोज्यैः सन्धारणाभोजनमैथुनैश्च ।
पक्वाशये कुप्यति चेदपानः स्रोतांस्यधोगानि बली स रुद्धा ॥३॥
करोति विण्मारुतमूत्रसङ्गं क्रमादुदावर्त्तमतः सुघोरम् ।
रुग्वस्तिहृत्कुक्ष्युदरेष्वभीक्ष्णं सपृष्ठपार्श्वेष्वतिदारुणा स्यात् ॥४॥
आध्मानहृल्लासविकर्त्तिकाश्च तोदोऽविपाकश्च सबस्तिशोथः ।
वर्चोऽप्रवृत्तिर्जठरे च गण्डान्यूर्द्ध्वश्च वायुर्विहतो गुदे स्यात् ॥५॥
कृच्छ्रेण शुष्कस्य चिरात् प्रवृत्तिः स्याद्वा तनुः स्यात् परुषश्चशीता

ततश्च रोगा ज्वरमूत्रकृच्छ्रप्रवाहिकाहृद्ग्रहणीप्रदोषाः ॥६॥
वम्यास्थ्यवाधिर्य्यशिरोऽभितापवातोदराष्ठीलमनोविकाराः।
तृष्णास्रपित्तारुचिगुल्मकासश्वासप्रतिश्यायर्दितपार्श्वरोगाः ॥७॥
अन्ये च रोगा बहवोऽनिलोत्था भवन्त्युदावर्त्तकृताः सुघोराः।
चिकित्सितञ्चास्य यथावदूर्द्ध्वं प्रवक्ष्यते तच्छृणु चाग्निवेश। ॥८॥
तं तैलशीतज्वरनाशनोक्तैः स्वेदैर्यथोक्तैः प्रविलीनदोषम्।
उपाचरेद्वर्त्तिनिरूहवस्तिस्नेहैर्विरेकैरनुलोमनान्नैः ॥९॥
श्यामात्रिवृन्मागधिकाग्निचूर्णं गोमूत्रपिष्टं दशभागमाषम्।
सनीलिकां द्विलवणां गुडेन वर्त्तिं कराङ्गुष्ठनिभां विदध्यात् ॥१०॥
पिण्याकसौवर्च्चलहिङ्गुभिर्वा ससर्षपत्र्यूषणयावशूकैः।
क्षीरेक्षुकाम्पिल्लकयष्टिनीभिः सुधार्कजक्षीरगुडैर्युताभिः ॥११॥
स्यात् पिप्पली सर्षपराठवेश्मधूमैः सगोमूत्रगुडैश्च वर्त्तिः।
श्यामाफलेक्ष्वाकुसपिप्पलीकं नाड्याथवा तत् प्रधमेत् तु चूर्णम्॥१२॥
रक्षोघ्नतुम्बीकरहाटकृष्णाचूर्णं सजीमूतकसैन्धवं वा।
स्निग्धे गुदे तान्यनुलोमयन्ति नरस्य वर्चोऽनिलमूत्रसङ्गम् ॥१३॥
तेषां विघाते तु भिषग्विदध्यात् स्वभ्यक्तसुस्विन्नतनोर्निरूहम्।
ऊर्द्ध्वानुलोमौषधमूत्रतैलक्षाराम्लवातघ्नयुतं सुतीक्ष्णम् ॥१४॥
वातेऽधिकेऽम्लं लवणं सतैलं क्षीरेण पित्ते तु कफे समूत्रम्।
समूत्रवर्चोऽनिलसङ्गमाशु गुदं शिराश्च प्रगुणीकरोति ॥१५॥
त्रिवृत्सुधापत्रतिलादि शाकं ग्राम्यौदकानूपरसैर्यवान्नम्।
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात् प्रसन्ना गुडशीधुपायी ॥१६॥
भूयोऽनुबन्धे तु भवेद्विरेच्यो मूत्रप्रसन्नादधिमण्डयुक्तैः।
स्वस्थन्तु पश्चादनुवासयेत्तं रौक्ष्यात् विसङ्गोऽनिलवर्च्चसोश्चेत् ॥१७
द्विरुत्तरं हिङ्गुवचाग्निकुष्ठ सुवर्च्चिका चैव विडङ्गचूर्णम्।
सुखाम्बुनानाहविसूचिकार्त्तिहृद्रोगगुल्मोर्द्ध्वसमीरणघ्नम् ॥१८॥
वचाभयाचित्रकयावशूकान् सपिप्पलीकातिविषान् सकुष्ठान्।

मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ॥३१
तीव्रा हि रुग्वङ्क्षणवस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात्।
पीतं सरक्तं सरुजं सदाहं कृच्छ्रान्मुहुर्मूत्रयतीह पित्तात् ॥३२॥
वस्तेः सलिङ्गस्य गुरुत्वशोथौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे।
सर्वाणि रूपाणि तु सन्निपातात् भवन्ति तत् कृच्छ्रतमन्तु कृच्छ्रम्३३
इति मूत्रकृच्छ्रनिदानम्।

( अश्मरीनिदानम्। )

विशोषयेद्वस्तिगतन्तु शुक्रं मूत्रं सपित्तं पवनः कफं वा।
यदा तदाश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः ॥३४॥
कदम्बपुष्पाकृतिरश्मतुल्या श्लक्ष्णा त्रिपुख्यप्यथवापि मृद्वी।
मूत्रस्य चेन्मार्गमुपैति रुद्धा मूत्रं रुजं तस्य करोति वस्तौ ॥३५॥
ससेवनीमेहनवस्तिशूलं विशीर्णधारञ्च करोति मूत्रम्।
मृद्नाति मेढ्रं स तु वेदनार्त्तो मुहुः शकृन्मुञ्चति मेहते च॥३६॥
क्षोभात् क्षते मूत्रयतीह सासृक् तस्याः सुखं मेहति च व्यपायात्
एषाश्मरी मारुतभिन्नमूर्त्तिः स्याच्छर्करा मूत्रपथात् क्षरन्ती३७
रेतोऽभिघाताभिहतस्य पुंसः प्रवर्त्तयेत्तस्य तु मूत्रकृच्छ्रम्।
स्यात् वेदनावङ्क्षणवस्तिमेढ्रे तस्यातिशूले श्वयथातिवृत्ते ॥३८॥
शुक्रेण संरुद्धगतिः प्रवाहो मूत्रं स कृच्छ्रेण विसृज्यतीह।
तमप्ययोः स्तम्भमिति ब्रुवन्ति रेतोऽभिघातेप्रवदन्ति कृच्छ्रम्३९
शुक्रं मलाश्चैव पृथक् पृथग्वा मूत्राशयस्थाः प्रतिवारयन्ति।
तद्राघतं मेहनवस्तिशूलं मूत्रं सशुक्रं हि करोति वद्धम् ॥४०॥
स्तब्धश्च शूनो भृशवेदनश्च तुद्येत वस्तिर्वृषणौ च तस्य।
क्षताभिघातात् क्षतजं क्षयाद्वा प्रकोपितं वस्तिगतंविवद्धम्॥४१
तीव्रार्त्तिमूलेण सहाश्मरीत्वमायाति तस्मिन्नतिसञ्चिते च।
आध्मातता विन्दति गौरवञ्च वस्तेर्लघुत्वञ्च विनिःसृतेऽस्मिन्॥४२
इति अश्मरीनिदानम्।

( अथ मूत्रकृच्छ्राश्मरीचिकित्सा । )

अभ्यञ्जनस्नेहनिरूहवस्तिस्नेहोपनाहोत्तरवस्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धान् युञ्ज्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥
पुनर्नवैरण्डशतावरीभिः पत्तूरवृश्चीरबलाश्मभिद्भिः ।
द्विपञ्चमूलेन कुलत्थकोलं यवैश्च तोयोत्क्वथिते कषाये ॥४४॥
तैलं वराहर्क्षवसाघृतञ्च तैरेव कल्कैर्लवणैश्च साध्यम् ।
तन्मात्रयाशु प्रतिहन्ति पीतं शूलान्वितं मारुतमूत्रकृच्छ्रम् ॥
एतानि चान्यानि वरौषधानि सर्वाणि शस्तान्यपि चोपनाहे
स्युर्लोभतस्तैलफलानि चैव स्नेहाम्लयुक्तानि सुखोष्णवन्ति ॥४
सेकावगाहाःशिशिराःप्रदेहा ग्रैष्मोविधिर्वस्तिपयोविरेकाः ।
द्राक्षाविदारीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः ॥४७॥
शतावरीकाशकुशश्वदंष्ट्राविदारिशालीक्षुकशेरुकाणाम् ।
क्वाथं सुशीतं मधुशर्कराभ्यां युक्तं पिबेत् पैत्तिकमूत्रकृच्छ्री ॥
पिबेत् कषायं कमलोत्पलानां शृङ्गाटकानामथवा विदार्य्याः
दण्डोत्पलानामथवापि मूलं पूर्वेण कल्पेन तथा सुशीतम् ॥४
एर्वारुबीजं त्रपुषात् कुसुम्भात् सकुङ्कुमः स्याद् वृषकश्च पेयः ।
द्राक्षारसेनाश्मरिशर्करासु सर्वेषु कृच्छ्रेषु प्रशस्त एषः ॥५०॥
एर्वारुबीजं मधुकं सदार्वि पैत्ते पिबेत् तण्डुलधावनेन ।
दार्वीं तथैवामलकीरसेन समाक्षिकां पित्तकृते तु कृच्छ्रे ॥५१॥
क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहाः ।
तक्रं सतिक्तौषधसिद्धतैलमभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥५२॥
व्योषं श्वदंष्ट्रा त्रुटिसारसास्थि कोलप्रमाणं मधु मूत्रयुक्तम् ।
पिबेत् त्रुटिं क्षौद्रयुतां कदल्या रसेन कैटर्य्यरसेन वापि ॥५३॥
तक्रेण युक्तं शितिमारकस्य बीजं पिबेत् कृच्छ्रविनाशहेतोः ।
पिबेत् तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥५४॥
सप्तच्छदारग्वधकेबुकैला धवं करञ्जं कुटजं गुडूचीम् ।

पक्त्वा जले तेन पिबेद् यवागूं सिद्धं कषायं मधुसंयुतं वा ॥५५॥
सर्वं त्रिदोषप्रभवे तु वायोःस्थानानुपूर्व्या प्रसमीक्ष्य कार्यम्।
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात् पित्ते विरेकःपवने तु बस्तिः॥५६
इति मूत्रकृच्छ्रचिकित्सा।

( अथाश्मरी चिकित्सा। )

क्रिया हिताऽत्वश्मरिशर्कराभ्यां कृच्छ्रे यथैवेह कफानिलाभ्याम्।
कार्याश्मरीभेदनपातनाय विशेषयुक्तं शृणु कर्म सिद्धम् ॥५७॥
पाषाणभेदं वृषकं श्वदंष्ट्रा पाठाभयाव्योषशटीनिकुम्भाः।
हिंस्राखराश्वाशितिमारकाणामेर्वारुकाणां त्रपुषस्य बीजम् ॥५८॥
उत्कुञ्चिका हिङ्गु सवेतसाम्लं स्याद्द्वे बृहत्यौ हपुषा वचा च।
चूर्णं पिबेदश्मरिभेदपक्वं सर्पिश्च गोमूत्रचतुर्गुणं तैः ॥५९॥
मूलं श्वदंष्ट्रेक्षुरकोरुबूकात् क्षीरेण पिष्टं बृहतीद्वयाच्च।
आलोड्य दध्ना मधुरेण पेयं दिनानि सप्ताश्मरिभेदनाय ॥६०॥
पुनर्नवायोरजनीश्वदंष्ट्राफल्गुप्रवालाश्च सदर्भपुष्पाः।
क्षीराम्बुमद्येक्षुरसैः सुपिष्टं पेयं भवेदश्मरिशर्करासु ॥६१॥
त्रुटिं सुराह्वं लवणानि पञ्च यवाग्रजं कुन्दुरुकाश्मभेदौ।
काम्पिल्लकं गोक्षुरकस्य बीजमेर्वारुबीजं त्रपुषस्य बीजम् ॥६२॥
चूर्णीकृतं चित्रकहिङ्गुमांसीयमानितुल्यं त्रिफलाद्विभागम्।
मद्यैः सयुक्तैः रसमद्ययूषैः पेयं हि गुल्माश्मरिभेदनार्थम् ॥६३॥
शिग्रोस्तु यूषो मृदुमूलकल्काद्बिल्वप्रमाणो घृततैलभृष्टः।
शीतोऽश्मभित् स्याद्दधिमण्डयुक्तः पेयः प्रकामं लवणेन युक्तः॥६४
जलेन शोभाञ्जनमूलकल्कः शीतो हितश्चाश्मरिशर्कराभ्याम्।
सितोपला वा समयावशूकाः कृच्छ्रेषु सर्वेष्वपि भेषजं स्यात्॥६५
पीत्वा च मद्यं निगदं रथेन हयेन वा शीघ्रजवेन यायात्।
तैः शर्करा प्रच्यवतेऽश्मरी तु शाम्येन्नचेच्छस्त्रविदुद्धरेत्ताम् ॥६६॥
रेतोविघातप्रभवे तु कृच्छ्रे समीक्ष्य दोषं प्रतिकर्म कुर्यात्।

कार्पासमूलं वृषकाश्मभेदौ बलास्थिरादीनि गवेधुका च ॥६७॥
इक्षीर ऐन्द्री च पुनर्नवा च शतावरी मध्वगनाखुपर्ण्यौ।
तत् क्वाथसिद्धं पवने नरस्य पित्तेऽधिके क्षीरमथापि सर्पिः॥६८॥
कफे च यूषादिकमन्नपानं संसर्गजे सर्वहितः क्रमः स्यात्।
एवं न चेच्छाम्यति तस्य युञ्ज्यात् सुरां पुराणां मधुकासवं वा॥६९॥
विहङ्गमांसानि च बृंहणाय वस्तीय शुक्राशयशोधनार्थम्।
शुद्धस्य वृष्यस्य च वृष्ययोगैः प्रियानुकूलाः प्रमदा विधेयाः॥७०॥
रक्तोद्भवे तूत्पलनालतालकाशेक्षुबालेक्षुकशेरुकाणि।
पिबेत् सिताक्षौद्रयुतानि खादेदिक्षुं विदारीं त्रपुषाणि चैव॥७१॥
घृतं श्वदंष्ट्रास्वरसेन सिद्धं क्षीरेण चैवाष्टगुणेन पेयम्।
स्थिरादिकानां कतकादिकानामेकैकशो वा विधिनैव तेन॥७२॥
क्षीरेण वस्तिर्मधुरौषधैः स्याच्छैलेन वा स्वादुफलोत्थितेन।
यन्मूत्रकृच्छ्रे विहितन्तु पैत्ते कार्यन्तु तच्छोणितमूत्रकृच्छ्रे॥७३॥
व्यायामसन्धारणशुष्कभक्ष्यपिष्टान्नवातार्ककरव्यवायान्।
खर्जूरशालूककपित्थजम्बूविषं कषायञ्च रसं भजेन्ना॥७४॥
इति अश्मरीचिकित्सा।

( अथ हृद्रोगचिकित्सा। )

व्यायामतीक्ष्णातिविरेकवस्तिचिन्ताभयत्रासगदातिचाराः।
छर्घामसन्धारणकर्षणानि हृद्रोगकर्तॄणि तथाभिघातः॥७५॥
वैवर्ण्यमूर्च्छाज्वरकासहिक्काश्वासास्यवैरस्यतृषाः प्रमोहाः।
छर्दिः कफोत्क्लेशरुजोऽरुचिश्च हृद्रोगजाः स्युर्विविधास्तथान्ये॥७६॥
हृच्छून्यभावद्रवशोषभेदस्तम्भाः समोहाः पवनाद्विशेषः।
पित्तात्तमोदूयनदाहमोहाः सन्त्रासतापज्वरपीतभावाः॥७७॥
स्तब्धं गुरु स्यात् स्तिमितञ्च मर्म कफात् प्रसेकज्वरकासतन्द्राः।
विद्यात् त्रिदोषन्त्वपि सर्वलिङ्गं तीव्रार्त्तितोदं कृमिजं सकण्डूम्॥७८॥
तैलंससौवीरकमस्तु तक्रं वाते प्रपेयं लवणं सुखोष्णम्।

मुस्ताम्बुसिद्धं लवणैश्च तैलमानाहगुल्मार्त्तिहृदामयघ्नम् ॥७८॥
पुनर्नवां दारु सपञ्चमूले रास्नां यवान् विल्वकुलत्थकोलम्।
पक्त्वा जले तेन विपाच्य तैलमभ्यङ्गपानेऽनिलहृद्गदोऽयम् ॥८०॥
हरीतकीनागरपुष्कराह्वैर्वयःकायस्थालवणैश्च कल्कैः।
सहिङ्गुभिः साधितमग्रसर्पिर्गुल्मे सहृत्पार्श्वगदेऽनिलोत्थे ॥८१॥
सपुष्कराह्वं फलपूरमूलं महौषधं शव्यभया च कल्काः।
क्षाराम्बुसर्पिर्लवणैर्विमिश्राः स्युर्वातहृद्रोगविकर्त्तिकाघ्नाः ॥८२॥
क्वाथः कृतः पौष्करमातुलुङ्गपलाशभूतीकशटीसुराह्वैः।
सशुण्ठ्यजाजी द्विवचा यमानी सक्षार उष्णो लवणश्च पेयः ॥८३
पथ्याशटीपुष्करपञ्चकोलात् समातुलुङ्गाद्यमकेन कल्कः।
गुड़प्रसन्नालवणैश्च भृष्टो हृत्पार्श्वगुल्मोदरयोनिशूले ॥८४॥
स्यात् त्र्यूषणं द्वे त्रिफले सपाठे निदिग्धिका गोक्षुरकौ बले द्वे।
ऋद्धिस्त्रुटिस्तामलकी स्वगुप्ता मेदे मधूकं मधुकं स्थिरा च ॥८५॥
शतावरीजीवकपृश्निपर्ण्यौ द्रव्यैरिमैश्चसमैः सुपिष्टैः।
सर्पं घृतस्यैव पचेद्विधिज्ञः प्रस्थेन दद्यास्त्वथ माहिषस्य ॥८६॥
मात्रां पलचार्द्धपलं पिचुं वा प्रयोजयेन्माक्षिकसंप्रयुक्तम्।
श्वासे सकासे त्वथ पाण्डुरोगे हलीमके हृद्ग्रहणीप्रदोषे ॥८७॥
इति त्र्यूषणाद्यघृतम्।
शीताः प्रदेहाः परिषेचनञ्च तथा विरेको हृदि पित्तदुष्टे।
द्राक्षासिताक्षौद्रपरूषकैः स्याच्छुद्धे तु पित्तापहमन्नपानम् ॥८८
यष्ट्याह्विकातिक्तकरोहिणीभ्यां कल्कं पिबेच्चापि सिताजलेन।
घृतेषु सर्पींषि हितानि सर्पिर्गुडाश्च ये तान् प्रसमीक्ष्य सम्यक् ८९
दद्यात् भिषक् धन्वरसांश्च गव्यक्षीराग्निना पित्तहृदामयेषु।
तैरेव सर्वं प्रशमं प्रयान्ति पित्तामयाः शोणितसंश्रया ये ॥९०॥
द्राक्षाबलाश्रेयसिशर्कराभिः खर्जूरवीरर्षभकोत्पलैश्च।
काकोलिमेदायुगजीवकैश्च क्षीरे च सिद्धं महिषीघृतं स्यात् ॥९१॥

कशेरुकाशृङ्गवेरप्रपौण्डरीकं मधुकं बिसञ्च।
ग्रन्थिश्च सर्पिः पयसा पचेत्तैः क्षौद्रान्वितं पित्तहृदामयघ्नम् ॥८२॥
स्थिरादिकल्कैः पयसा च सिद्धं द्राक्षारसेनेक्षुरसेन वापि।
सर्पिर्हितं स्वादुफलेक्षुजाश्च रसाः सुशीता हृदि पित्तदुष्टे ॥८३॥
स्निग्धस्य वान्तस्य विलङ्घितस्य क्रिया कफघ्नी कफमर्मरोगे।
कौलत्थधान्यैश्च रसैर्यवान्नैः पानानि तीक्ष्णानि च शर्कराणि॥८४
मूत्रे श्रुताः कट्फलशृङ्गवेरपीतद्रुपथ्यातिविषाः प्रदेयाः।
रास्नाशटीपुष्करमूलरास्नावचाभयानागरचूर्णकञ्च ॥ ८५ ॥
उदुम्बराश्वत्थवटार्जुनाख्ये पलाशरोहीतकखादिरे च।
क्वाथे विहत्त्वूषणचूर्णसिद्धो लेहः कफघ्नोऽग्निशिराम्बुयुक्तः॥८६॥
शिलाह्वयं वा भिषगप्रमत्तः प्रयोजयेत् कल्पविधानदृष्टम्।
प्राश्या तथागस्त्यहरीतकीच रसायनं ब्राह्ममथामलक्याः ॥८७॥
त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्वत्र हितं विधेयम्।
हीनातिमध्यत्वमवेक्ष्य चैव कार्य्यं त्रयाणामपि कर्म शस्तम्॥८८॥
भुक्तेऽधिकञ्जीर्य्यति शूलमल्पं जीर्णे स्थितं चेत् सुरदारुकुष्ठम्।
सतिल्वकं द्वे लवणे विडङ्गमुष्णाम्बुना मातिविषं पिबेत्सः॥८९॥
जीर्णेऽधिके स्नेहविरेचनं स्यात् फलैर्विरेच्यो यदि जीर्य्यमाणे।
त्रिष्वेव कालेष्वधिके तु शूले तीक्ष्णं हितं मूलविरेचनं स्यात्॥१००
प्रायोऽनिलो रुद्धगतिः प्रकुप्यत्यामाशये शोधनमेव तस्मात्।
कार्य्यं तथा लङ्घनपाचनञ्च सर्वं क्रिमिघ्नं कृमिहृद्गदे च ॥१०१॥

इति हृद्रोगचिकित्सा।

( अथ पीनस-नामारोगनिदानम्। )

मन्धारणाजीर्णरजोऽतिभाष्यक्रोधर्त्तुवैषम्यशिरोऽभितापैः।
प्रजागरातिस्वपनाम्बुशीतैरवश्यया मैथुनवाष्पधूमैः ॥१०२॥
सस्त्यानदोषे शिरसि प्रवृद्धो वायुः प्रतिश्यायमुदीरयेत्तु।
घ्राणार्त्तितोदः क्षवथुर्जलाभःस्रावोऽनिलात् स्वरमूर्द्धरोगः ॥१०३

नासाग्रपाकज्वरवक्त्रशोषतृष्णोष्णपीतस्रवणानि पित्तात्।
कासारुचिस्रावघनप्रसेकाः कफाद्गुरुःस्रोतसि चापि कण्डूः १०४
सर्वाणि रूपाणि तु सन्निपातात् स्युःपीनसे तीव्ररुजेऽतिदुःखे।
सर्वोऽतिवृद्धोऽहितभोजनात्तु दुष्टप्रतिश्याय उपेक्षितः स्यात्१०५
ततश्च रोगाः क्षवथुः सनासाशोषः प्रतीनाहपरिस्रवौ च।
घ्राणास्यपूतित्वमपीनसश्च सपाकशोथार्बुदपूयरक्ताः ॥१०६॥
अरूंषि मूर्धश्रवणाचिरोगखालित्यहर्यर्जुनलोमभावाः।
तृट्श्वासकासज्वररक्तपित्तवैस्वर्यशोषाश्च ततो भवन्ति ॥१०७॥
रोषाभिघातस्रवशोषपाकैर्घ्राणं श्रुतं यस्य न वेत्ति गन्धम्।
दुर्गन्धि चास्यं बहुशः प्रकोपि दुष्टप्रतिश्यायमुदाहरेत् तम् १०८
संसृज्य मर्मास्वनिलस्तु मूर्ध्नि विश्वक्पथस्थः क्षवथुं करोति।
क्रुद्धः स संशोष्य कफन्तु नासा शृङ्गाटकाघ्राणविशोषणश्च ॥१०९
उच्छ्वासमार्गन्तु कफः सवातो रुन्ध्यात् प्रतीनाहमुदाहरेत् तम्।
घ्राणाद्घनः पीतसितस्तनुर्वा दोषः स्रवेत् स्रावमुदाहरेत् तम्११०
यो मस्तुलुङ्गाद्घनपीतपक्वः कफः स्रवेद्गाढ़मपीनसः सः।
वैवर्ण्यदौर्गन्ध्यमुपेक्षया तु स्यात् पूतिनस्यं श्वयथुभ्रमश्च ॥१११॥
आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति यस्य नासा।
न वेत्ति यो गन्धरसांश्चजन्तुर्जुष्टं व्यवस्येत् तमपीनसेन ॥११२॥
सदाहरागः श्वयथुः सपाकःस्यात्घ्राणपाकोऽपि च रक्तपित्तात्।
घ्राणाश्रितास्त्वक्प्रभृतीन् प्रदूष्य कुर्वन्ति नासा श्वयथुं मलाश्च११३
घ्राणे तथोच्छ्वासगतिं निरुध्य मांसास्रदोषादपि चार्बुदानि।
घ्राणात् स्रवेद्वा श्रवणान्मुखाद्वा पित्तात्क्रमस्तन्त्वपि पूयरक्तम्११४
कुर्य्यात् सपित्तः पवनस्त्वगादीन् सन्दूष्य चारूंषि सपाकवन्ति।
नासाप्रदीप्तेव नरस्य यस्य दीप्तन्तु तं रोगमुदाहरन्ति ॥ ११५ ॥

इति पीनसनासारोगनिदानम्।

( अथ पीनसनासारोगचिकित्सा )।

वातात् सकासवैस्वर्य्ये सक्षारं पीनसे घृतम्।
पिबेद्रसं पयश्चोष्णं स्नैहिकं धूममेव वा ॥११६॥
शताह्वात्वग्बलामूलं स्योणाकैरण्डबिल्वकम्।
सारग्वधं पिबेद्वर्त्तिं मधूच्छिष्टवसाघृतैः ॥११७॥
अथवा सघृतान् सक्तून् कृत्वा मल्लकसम्पुटे।
नवप्रतिश्यायवतां धूमं वैद्यः प्रकल्पयेत् ॥११८॥
मद्धमूर्द्धललाटार्त्तौ पाणिस्वेदोपनाहनम्।
क्षभ्यक्षे चवथुस्रावरोधादौ सङ्करादयः ॥११९॥
श्रेयाश्च रोहिषाजाजीवचातर्कारिचोरकाः।
त्वक्पत्रमरिचैलानां चूर्णैर्वा सोपकुञ्चिकैः ॥१२०॥
स्रोतःशृङ्गाटनासाक्षिशोषे तैलं सनावनम्।
प्रभाव्याजे तिलान् क्षीरे तेन पिष्टांस्तदुष्णा ॥१२१॥
मन्दक्लिन्नान् सयष्ट्याह्वचूर्णांस्तेनैव पीडयेत्।
दशमूलस्य निष्क्वाथे रास्नामधुककल्कवत् ॥१२२॥
सिद्धं ससैन्धवं तैलं दशकृत्वो नु तत् स्मृतम्।
स्निग्धस्यास्थापनैर्दोषं निर्हरेद्वातपीनसे ॥१२३॥
स्निग्धाम्लोष्णैश्च लघ्वन्नं ग्राम्यादीनां रसैर्हितम्।
उष्णाम्बुना स्नानपाने निवातोष्णप्रतिश्रयः ॥१२४॥
चिन्ताव्यायामवाक्चेष्टाव्यवायविरतो भवेत्।
वातजे पीनसे धीमानिच्छन्नेवात्मनो हितम् ॥१२५॥
पैत्ते सर्पिः पिबेत् सिद्धं शृङ्गवेरशृतं पयः।
पाचनार्थं पिबेत् पक्वे कार्य्यं मूर्द्धविरेचनम् ॥१२६॥
पाठाद्विरजनीमूर्वा पिप्पलीजातिपल्लवैः।
दन्त्या च साधितं तैलं नस्यं सम्यक्कपीनसे ॥१२७॥
पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च।

शाकदाहाद्यरूचेषु शीता लेपाःससेचनाः ॥१२८॥
स्वेदनस्योपचाराश्च कषायाः स्वादुशीतलाः।
मन्दपित्ते प्रतिश्याये स्निग्धैः कुर्य्याद्विरेचनम् ॥१२९॥
हृतं क्षीरं यवाः शालिर्गोधूमा जाङ्गला रसाः।
शीताम्लास्तिक्तशाकानि यूषा मुद्गादिभिर्हिताः ॥१३०॥
गौरवारोचकैश्वादौ लङ्घनं कफपीनसे।
स्वेदाः सेकाश्च पाकार्थे स्निग्धे शिरसि सर्पिषा ॥१३१॥
लशुनं मुद्गचूर्णेन व्योषक्षारघृतैर्युतम्।
देयं कफघ्नं वमनमुत्क्लिष्टश्लेष्मणे हितम् ॥१३२॥
अपीनसे पूतिनस्ये घ्राणस्रावे सकण्डुके।
धूमः शस्तोऽवपीड़श्च कटुभिः कफपीनसे ॥१३३॥
मनःशिला वचा व्योषं विडङ्गं हिङ्गु गुग्गुलुः।
चूर्णैः प्रायः प्रधमनं कटुभिश्च फलैस्तथा ॥१३४॥
भार्गीमदनतर्कारीसुरसादिविपाचितम्।
तैलं सर्षपजं नस्यं कफपीनसशान्तये ॥१३५॥
श्वेतकालवचालं वा विडङ्गं कुष्ठपिप्पली।
कृत्वा कल्कं करञ्जश्च तैलं तैः सार्षपं पचेत् ॥१३६॥
पाकात् मुक्ते घने नस्यमेतच्चादोऽन्विते कफे।
स्निग्धस्य व्याहते वेगी छर्दनं कफपीनसे।
वमनीयश्रुतक्षीरतिलमाषयवाशुभिः ॥१३७॥
वार्त्ताकिकुलकव्योषकुलत्थाढ़कीसुद्गजाः।
यूषाः कफघ्नमद्यञ्च शस्तमुष्णाम्बुसेचनम् ॥१३८॥
सर्वजित् पीनसे दुष्टे कार्य्यं शोफे च शोफजित्।
क्षारोऽर्बुदाधिमांसेषु क्रिया सर्वत्ववेक्ष्य च ॥१३९॥

इति पीनसनासारोगचिकित्सा।

( अथ शिरोरोगनिदानम्। )

भ्रमार्त्तिशूलं स्फुरतीव वातात् पित्तात् सदाहार्त्तिकफाद् गुरुः स्यात्

सर्वैस्त्रिदोषं क्रिमिभिस्तु कण्डूदौर्गन्ध्यतोदार्त्तियुतं शिरः स्यात्॥

इति शिरोरोगनिदानम्।

( अथ शिरोरोगचिकित्सा। )

वातिके शिरसो रोगे स्नेहान् स्वेदान् सनावनान्।
पानान्नमुपनाहांश्च कुर्य्याद्वातामयापहान्॥१४१॥
तैलभृष्टैरगुर्वाद्यैः सुखोष्णैश्चोपनाहनम्।
जीवनीयैः सुमनसा मत्स्यैर्मांसैश्च शस्यते॥१४२॥
रास्नास्थिरादिभिः सिद्धं सक्षीरं नस्यमर्त्तिनुत्।
तैलं रास्नादिकाकोलीशर्कराभिरथापि वा॥१४३॥
बलामधूकयष्ट्याह्वविदारीचन्दनोत्पलैः।
जीवकर्षभकद्राक्षाशर्कराभिश्च साधितः॥१४४॥
प्रस्थस्तैलस्य सक्षीरो जाङ्गलार्द्धतुला रसे।
नस्यं सर्वाङ्गजत्रूर्ध्ववातपित्तामयापहम्॥१४५॥
दशमूलबलारास्नात्रिफलामधुकैः सह।
मयूरं पक्षपित्तान्त्रशकृत्तुण्डाङ्घ्रिवर्जितम्॥१४६॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम्॥१४७॥
कर्णाक्षिनासिकाजिह्वाताल्वास्यगलरोगनुत्।
मायूरमिति विख्यातमूर्द्ध्वजत्रुगदापहम्॥१४८॥

इति मायूरघृतम्।

एतेनैव कषायेण घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन दुग्धेन कल्कैरेभिश्च कार्षिकैः॥१४९॥
जीवन्तीत्रिफलामेदामधूकर्द्धिपरूषकैः।
समङ्गाचविकाभार्गीकाश्मरीसुरदारुभिः॥१५०॥
आत्मगुप्तामहामेदातालखर्जूरमस्तकैः।
मृणालबिसशालूकशृङ्गीजीवकपद्मकैः॥१५१॥

शतावरीविदारीक्षुबृहतीशारिवायुगैः ।
मूर्वाश्वदंष्ट्रर्षभकशृङ्गाटककशेरुकैः ॥१५२॥
रास्नास्थिरातामलकीसूक्ष्मैलाशटिपुष्करैः ।
पुनर्नवातुगाक्षीरीकाकोलीधन्वयासकैः ॥१५३॥
मधूकाक्षोटवातामसुञ्जाताभिषुकैरपि ।
द्रव्यैरेभिर्यथालाभं पूर्वकल्पेन साधितम् ॥१५४॥
तत् पक्वं नावनेऽभ्यङ्गे पाने वस्तौ प्रयोजयेत् ।
शिरोरोगेषु सर्वेषु कासे श्वासे च दारुणे ॥१५५॥
मन्यापृष्ठग्रहे शोषे स्वरभेदे तथार्दिते ।
योऽन्यस्त्वक्शुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ॥१५६॥
ऋतुस्नाता तथा नारी पीत्वा पुत्रं प्रसूयते ।
महामायूरमित्येतद्घृतमात्रेयपूजितम् ॥१५७॥

इति महामायूरघृतम्

घाखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान् ।
कल्पेनानेन विपचेत् सर्पिरूर्ध्वगदापहम् ॥१५८॥
पैत्ते घृतं पयःसेकाः शीता लेपाः सनावनाः ।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत् ॥१५९॥
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः ।
क्षीरपिष्टैः प्रदेहः स्यात्शृतैर्वा परिषेचनम् ॥१६०॥
त्वक्पत्रशर्कराकल्कः सुपिष्टस्तण्डुलाम्बुना ।
कार्योऽवपीडः सर्पिश्च नस्यं तत् स्यात् तु पैत्तिके ॥१६१॥
यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं शुभम् ।
नावनं शर्कराद्राक्षामधूकैर्वापि पित्तजे ॥१६२॥
कफजे स्वेदितं धूमनस्यप्रधमनादिभिः ।
शुद्धं प्रलेपपानाद्यैः कफघ्नैः समुपाचरेत् ॥१६३॥
पुराणसर्पिषः पानैस्तीक्ष्णैर्धस्तिभिरेव च ।

कफानिलोत्थिते दाहः शोफयोः रक्तमोक्षणम् ॥१६४॥
एरण्डनलदक्षौमगुग्गुल्वगुरुचन्दनैः ।
धूमवर्त्तिं पिबेद्गन्धैः सकुष्ठतगरैस्तथा ॥१६५॥
सन्निपातभवे कार्य्या सन्निपातहिता क्रिया ।
क्रिमिजे चैव कर्त्तव्यं तीक्ष्णं मूर्द्धविरेचनम् ॥१६६॥
त्वग्दन्ती व्याघ्रकरजविडङ्गं नवमालिका ।
अपामार्गफलं बीजं नक्तमालशिरीषयोः ।
अर्कोऽश्मन्तको बिल्वं हरिद्रा हिङ्गु यूथिका ॥१६७॥
फणिज्झकश्च तैस्तैलमविमूत्रे चतुर्गुणे ।
सिद्धं स्यान्नावनं चूर्णस्तेषां प्रधमनं हितम् ॥१६८॥
फलं शिग्रुकरञ्जाभ्यां सव्योषश्चावपीडकम् ।
कषायः स्वरसः क्षारचूर्णं कल्कोऽवपीडकः ।
शुक्ततिक्तकटुक्षौद्रकषायैः कवलग्रहः ॥१६९॥

इति शिरोरोगचिकित्सा ।

## ( अथ मुखरोगनिदानम् । )

मुखामये मारुतजे तु शोषकार्कश्यरौक्ष्याणि चला रुजश्च ।
कृष्णारुणं निष्पतनं सशीतं प्रसंसनस्पन्दनतोदभेदाः ॥१७०॥
तृष्णाज्वरस्फोटकतालुदाहा धूमायनं चाप्यवदीर्णता च ।
पित्तात् समूर्च्छा विविधा रुजश्च वर्णाश्च शुक्लारुणवर्णवर्ज्याः ॥१७१॥
कण्डूर्गुरुत्वं सितविज्जलत्वं स्नेहोऽरुचिर्जाड्यकफप्रसेकौ ।
उत्क्लेशमन्दानलता च तन्द्रा रुजश्च मन्दाः कफवक्त्ररोगे ॥१७२॥
सर्वाणि रूपाणि तु वक्त्ररोगे भवन्ति यस्मिन् स तु सर्वजः स्यात् ।
सङ्ख्यानरूपाकृतिनामभेदाश्चैते चतुःषष्टिविधा भवन्ति ॥१७३॥
शालाक्यतन्त्रे विहितानि तेषां निमित्तरूपाकृतिभेषजानि ।
यथाप्रदेशन्तु चतुर्विधस्य क्रियां प्रवक्ष्यामि मुखामयस्य ॥१७४॥

इति मुखरोगनिदानम् ।

( अथ मुखरोगचिकित्सा। )

धूमः प्रधमनं शुद्धिरधश्छर्दनलङ्घनम्।
भोज्यञ्च मुखरोगेषु यथास्वं दोषनुद्धितम् ॥१७५॥
पिप्पल्यगुरुदार्वीत्वग् यवक्षारो रसाञ्जनम्।
पाठां तेजोवतीं पथ्यां समभागं सुचूर्णितम् ॥ १७६ ॥
मुखरोगेषु सर्वेषु सक्षौद्रं तद्विधारयेत्।
सीधुमाध्वमाध्वीकैः श्रेष्ठोऽयं कवलग्रहः ॥ १७७ ॥
तेजोह्वामभयामेलां समङ्गां कटुकां घनम्।
पाठां ज्योतिष्मतीं लोध्रं दार्वीं कुष्ठञ्च चूर्णयेत् ॥१७८॥
दन्तानां घर्षणाद्रक्तस्रावकण्डूरुजापहम्।
पञ्चकोलकतालीशपत्रैलामरिचत्वचः ॥ १७९ ॥
पलाशमुष्ककक्षारयवक्षाराश्च चूर्णिताः।
गुडे पुराणे द्विगुणे क्वथिते गुडिकाः कृताः ॥१८०॥
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि।
कण्ठरोगेषु सर्वेषु धार्य्याः स्युरमृतोपमाः ॥ १८१ ॥
गृहधूमो यवक्षारपाठाव्योषं रसाञ्जनम्।
तेजोह्वा त्रिफला लोध्रं चित्रकश्चेति चूर्णितम् ॥ १८२ ॥
सक्षौद्रं धारयेदेतत् गलरोगविनाशनम्।
कालकं नाम तच्चूर्णं दन्तास्यगलरोगनुत् ॥ १८३ ॥

इति कालकचूर्णम्।

मनःशिला यवक्षारो हरितालं ससैन्धवम्।
दार्वीं त्वक् चेति तच्चूर्णं माक्षिकेण समायुतम् ॥१८४॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत्।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तितम् ॥१८५॥

इति पीतकचूर्णम्।

मृद्वीका कटुका व्योषं दार्वीं त्वक् त्रिफला घनम्।

ततस्तु गुलिकाः कार्याः शुष्काश्चास्येन धारयेत्॥ १९८॥
तैलश्चानेन कल्केन कषायेण च साधयेत्।
दन्तानां चलनं भ्रंशं शोषिर्यक्रिमिरोगनुत्॥ १९९॥
मुखपाकास्यदौर्गन्ध्यजाड्यारोचकनाशनम्।
स्रावोपलेपपैच्छिल्यवैस्वर्यगलरोगनुत्।
दन्तास्यगलरोगेषु सर्वेषां तत् परायणम्॥ २००॥

इति खदिरादिगुटिका तैलञ्च।

वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनगन्धरूपैः।
अरोचकाः स्युः परिहृष्टदन्तकषायवक्त्रश्च मतोऽनिलेन॥२०१॥
कट्वम्लमुष्णं विरसञ्च पूति पित्तेन विद्याल्लवणञ्च वक्त्रम्।
माधुर्यपैच्छिल्यगुरुत्वशैत्यविबन्धसंबन्धयुतं कफेन॥ २०२॥
अरोचके शोकभयातिलोभक्रोधाद्यहृद्याशनगन्धजे स्यात्।
स्वाभाविकञ्चास्यरसोऽरुचिश्च त्रिदोषजं नैकरसं भवेत् तु॥२०३॥

इत्यरोचकनिदानम्।

( अथ अरोचकचिकित्सा। )

अरुचौ कवलग्राहा धूमाः समुखधावनाः।
मनोज्ञमन्नपानञ्च हर्षणाश्वासनानि च॥ २०४॥
कुष्ठसौवर्चलाजाजीशर्करा मरिचं विड्म्।
धात्र्येलापद्मकोशीरपिप्पल्युत्पलचन्दनम्॥ २०५॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम्।
आर्द्रादाड़िमनिर्यासाश्चाजाजीशर्करायुताः॥ २०६॥
सतैलमाक्षिकास्त्वेते चत्वारः कवलग्रहाः।
चतुरोऽरोचकान् हन्युर्वाताद्येकजसर्वजान्॥ २०७॥
कारवी मरिचाजाजी द्राक्षावृक्षाम्लदाड़िमम्।
सौवर्चलं गुड़ं क्षौद्रं सर्वारोचकनाशनम्॥ २०८॥
वस्तिः समीरणे पित्ते विरेको वमनं कफे।

कुर्य्याद्धृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥२०८॥

इत्यरोचकचिकित्सा।

( अथ कर्णरोगनिदानम्। )

नादोऽतिरुक्कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणञ्च वातात्।
शोफः सरागोदरणं विदाहः सपीतपूतिश्रवणञ्च पित्तात्॥२१०
वैश्रुत्यकण्डूस्थिरशोफशुक्लस्निग्धास्रुतिः श्लेष्मभवेऽल्परुक् च।
सर्वाणि रूपाणि तु सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः॥२११

इति कर्णरोगनिदानम्

( अथ कर्णरोगचिकित्सा। )

कर्णशूले तु वातघ्नी हिता पीनसवत् क्रिया।
प्रदेहाः पूरणं नस्यं पाकस्रावे व्रणक्रियाः ॥२१२॥
भोज्यानि च यथादोषं कुर्य्यात् स्नेहांश्च पूरणान्।
हिङ्गुतुम्बुरुशुण्ठीभिस्तैलं च सार्षपं पचेत्।
एतद्धि पूरणं श्रेष्ठं कर्णशूलनिवारणम् ॥२१३॥
देवदारुवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः।
तैलं सिद्धं वस्तमूत्रे कर्णशूलनिवारणम् ॥२१४॥
वराटकान् समाहृत्य दहेत् मृद्भाजने नवे।
तद्भस्म यवेतयेत् तेन गन्धतैलं विपाचयेत् ॥२१५॥
रसाञ्जनस्य शुण्ठ्याश्च कल्काभ्यां कर्णशूलनुत्।
शुष्कमूलकशुण्ठीनां क्षारो हिङ्गु महौषधम् ॥२१६॥
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम्।
सौवर्चलयवक्षारस्वर्जिकोद्भिदसैन्धवम् ॥२१७॥
भूर्जग्रन्थि विडं मुस्तं मधुशुक्तं चतुर्गुणम्।
मातुलुङ्गरसश्चैव कदल्या रस एव च ॥२१८॥
सर्वैरेतैर्यथोद्दिष्टैः क्षारतैलं विपाचयेत्।
बाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणः ॥२१९॥

क्रिमयः कर्णशूलञ्च पूरणादस्य नश्यति ।
मुखकर्णाक्षिरोगेषु यथोक्तं पीनसे विधिम् ।
कुर्य्याद्भिषक् समीक्ष्यादौ दोषकालबलाबलम् ॥२२०॥
इति कर्णरोगचिकित्सा ।

( अथ नेत्ररोगनिदानम् । )

अल्पाश्रुरागाऽनुपदेहता च प्रसन्दतोदातिरुजश्च वातात् ।
पित्तात्तु दाहार्त्तिरुजोऽतिरागाः पीतोपदेहः सुभृशोष्णमश्रु२२१
शुक्लोपदेहो बहुपिच्छिलाश्रु नेत्रस्य खेटात् गुरुता सकण्डूः ।
सर्वाणि रूपाणि तु सन्निपातात् नेत्रामयाः षण्णवतिस्तु भेदात्२२२
तेषामभिव्यक्तिरभिप्रदिष्टा शालाक्यतन्त्रेषु चिकित्सितञ्च ।
पराधिकारे तु न विस्तरोक्तिः शस्तेति तेनात्र न नः प्रयासः॥२२३
इति नेत्ररोगनिदानम् ।

(अथ नेत्ररोगचिकित्सा । )

नेत्ररोगे समुत्पन्ने तरुणे तु विड़ालकः ।
कार्य्यो दाहोपदेहाश्रुशोफरागनिवारणः ॥२२४॥
नागरं सैन्धवं सर्पिर्मण्डेन च रसक्रिया ।
निष्टष्टं वातिके तद्वन्मुस्तसैन्धवगैरिकम् ॥२२५॥
तथा शावरकं लोध्रं घृतभृष्टं विड़ालकः ।
कार्य्या हरीतकी तद्वत् घृतभृष्टा रुजापहा ॥२२६॥
पैत्तिके चन्दनानन्तामञ्जिष्ठाभिर्विड़ालकः ।
कार्य्यः पद्मकयष्ट्याह्वमांसीकालीयकैस्तथा ॥२२७॥
गैरिकं सैन्धवं मुस्तं रोचना च रसक्रिया ।
कफे कार्य्यस्तथा चौद्रप्रियङ्गुः समनःशिलः ॥ २२८ ॥
सन्निपाते तु सर्वैः स्यादक्ष्णोः प्रलेपनम् ।
पक्ष्मपक्ष्मस्खलता कार्य्यं सम्पाके लङ्घनं त्र्यहात् ॥ २२८ ॥
आयोतनं मारुतजे कार्य्यो बिल्वादिभिः शुभः ।

कोष्णः सैरण्डतर्कारीबृहतीमधुशिग्रुभिः ॥२३०॥
द्राक्षा दार्वी समञ्जिष्ठा लाक्षा हिमधुकोत्पलैः ।
कषायः सशर्करः शीतः पूरणं रक्तपित्तनुत् ॥२३१॥
नागरं त्रिफलामुस्तनिम्बवासारसः कफे ।
कोष्णमाश्वशीतनं मिश्रैरौषधैः सन्निपातके ॥२३२॥
बृहत्येरण्डमूलत्वक् शिग्रोः पुष्पं ससैन्धवम् ।
अजाक्षीरेण पिष्टं स्यादर्त्तिर्वाताक्षिरोगनुत् ॥२३३॥
सुमनःक्षारकाः शङ्खास्त्रिफला मधुकं बला ।
पित्तरक्तापहा वर्त्तिः पिष्टा दिव्येन वारिणा ॥२३४॥
सैन्धवं त्रिफला व्योषं शङ्खनाभिः ससुद्रजः ।
फेनः शैलेयकं सर्जो वर्त्तिः श्लेष्माक्षिरोगनुत् ॥२३५॥
प्रपौण्डरीकं यष्ट्याह्वं दार्वीञ्चाष्टपलांशिकाम् ।
जले पक्त्वा रसे पूते पुनः पक्वे रसे घने ॥२३६॥
कर्षश्च श्वेतमरिचा द्रोणीपुष्पा नवोत्पलम् ।
चूर्णं चित्रा कृता वर्त्तिः सर्वघ्नी दृक्प्रसादनी ॥२३७॥
अमृता मधुकं निम्बपटोलं छागलं शकृत् ।
वासा प्रपौण्डरीकञ्च दार्वी कालानुसारिणी ॥२३८॥
एषामष्टपलान् भागान् सुधौतान् जर्जरीकृतान् ।
तोये पक्त्वा रसे पूते भूयः पक्वे घने रसे ॥२३९॥
सितामरिचयोः कर्षं जातिपुष्पात् नवोत्पलम् ।
चूर्णं कृत्वा कृता वर्त्तिः सर्वघ्नी दृक्प्रसादनी ॥२४०॥
शङ्खप्रवालवैदूर्यलोहताम्रप्लवास्थिभिः ।
स्रोतोऽजश्वेतमरिचैर्वर्त्तिः सर्वाक्षिरोगनुत् ॥२४१॥
माणार्द्धं मरिचाद्द्वौ च पिप्पल्यर्णवफेनयोः ।
माणार्द्धं सैन्धवाच्छाष्टौ नवसौवीरकाञ्जनात् ॥२४२॥
पिष्ट सुसूक्ष्मं चित्रायां चूर्णाञ्जनमिदं शुभम् ।

कण्डूका च कफार्त्तानां मलानाञ्च विशोधनम् ॥२४३॥
वस्तमूत्रे त्र्यहं स्थाप्यमेलाचूर्णं सुभावितम्।
चूर्णाञ्जनञ्च तैमिर्य्यक्रिमिपैल्लमलापहम् ॥ २४४ ॥
सौवीरमञ्जनं तुत्थं ताप्यो धातुर्मनःशिला।
चक्षुष्यं मधुकं लौहमण्यः पौष्यमञ्जनम् ॥२४५॥
सैन्धवं शौकरी दंष्ट्रा कतकञ्चाञ्जनं शुभम्।
तिमिरादिषु चूर्णं वा वर्त्तिर्वैयमनुत्तमा ॥२४६॥
कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं सिता।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ॥२४७॥
कुक्कुटाण्डकपालञ्च वर्त्तिरेषा व्यपोहति।
तिमिरं पटलं काचं मलञ्चाशु सुखावती ॥२४८॥
त्रिफला कुक्कुटाण्डत्वक् कासीसमयसो रजः।
नीलोत्पलं विडङ्गानि फेनञ्च सरितां पतेः ॥२४९॥
आजेन पयसा पिष्ट्वा भावयेत् ताम्रभाजने।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत्।
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः ॥२५०॥

इति दृष्टिप्रदा वर्त्तिः।

वदने कृष्णसर्पस्य निहितं मासमञ्जनम्।
ततस्तस्मात् समुद्धृत्य सर्प्याक्तं चूर्णयेत् बुधः ॥२५१॥
सुमनःक्षारकैः शुष्कैरंशार्द्धैः सैन्धवेन च।
एतन्नित्याञ्जनं कार्य्यं तिमिरघ्नमनुत्तमम् ॥२५२॥
पिप्पल्यः किंशुकरसो वसा सर्पस्य सैन्धवम्।
जीर्णं घृतञ्च सर्वाक्षिरोगघ्नी स्यादुपक्रिया ॥२५३॥
कृष्णसर्पवसा क्षौद्रं रसो धात्र्या रसक्रिया।
शस्ता सर्वाक्षिरोगेषु काचार्बुदमलेषु च ॥२५४॥
धात्रीरसाञ्जनक्षौद्रसर्पिर्भिस्तु रसक्रिया।

पित्तरक्ताक्षिरोगघ्नौ तैमिर्यपटलापहौ ॥२५५॥
धात्रीसैन्धवपिप्पल्यः सुरत्नमरिचाः समाः ।
क्षौद्रयुक्ता निहन्त्याश्वं पटलञ्च रसक्रिया ॥२५६॥
इति नेत्ररोगचिकित्सा ।

( अथ खालित्यरोगनिदानम् । )

तेजोऽनिलाद्यैः सह केशभूमिं दग्ध्वाशु कुर्य्यात् खलितं नरस्य ।
किञ्चित्तु दग्ध्वा पलितानि कुर्य्याद्धरित्प्रभत्वञ्च शिरोरुहाणाम्॥२५७
इति खालित्यनिदानम् ।

( अथ खालित्यचिकित्सा । )

इत्यूर्द्ध्वजत्रूत्थगदैकदेशः प्रोक्तश्चिकित्सान्तु परां निबोध ।
विस्तारतः संग्रहतश्च सम्यग् यथाक्रमं सौम्य ! मयोच्यमानाम्॥२५८
खालित्ये पलिते वल्यां हरिलोम्नि च शोधितम् ।
नस्यैस्तैलैः शिरोवक्त्रप्रलेपैश्चाप्युपाचरेत् ॥२५८॥
सिद्धं विदारीगन्धाद्यैर्जीवनीयैरथापि च ।
नस्यं स्यादनुतैलं वा खालित्यपलितापहम् ॥२६०॥
नस्यं स्यात् भिषजा सम्यक् योजितं पलितापहम् ।
क्षीरात् सहचरात् भृङ्गराजाच्च सुरसात् रसात् ॥२६१॥
प्रस्थैस्तु कुडवस्तैलात् यष्ट्याह्वपलकल्कितः ।
सिद्धः शैलासने भाण्डे मेषशृङ्गे च संस्थितः ॥२६२॥
भिषजात् क्षीरपिष्टौ वा दुग्धिकाकरवीरकौ ।
उत्पाट्य पलितं देयौ तावुभौ पलितापहौ ॥२६३॥
मार्कवस्वरसात् क्षीराद्विप्रस्थं मधुकात् पलम् ।
तैः पचेत् कुडवं तैलात् तन्नस्यं पलितापहम् ॥२६४॥
आदित्यवल्ल्या मूलानि कृष्णशैरेयकस्य च ।
सुरसस्य च पत्राणि फलं कृष्णायसस्य च ॥२६५॥
मार्कवं काक्षमाचो च मधूकं देवदारु च ।

पृथग्दशपलांशानि पिप्पल्यस्त्रिफलाञ्जनम् ॥२६६॥
प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम् ।
आम्रास्थि कर्दमः कृष्णो मृणाली रक्तचन्दनम् ॥२६७॥
नीलीभल्लातकास्थीनि कासीसमदयन्तिकाः ।
सोमराज्यसनः शस्त्रं कृष्णौ पिण्डीतचित्रकौ ॥२६८॥
पुष्कराह्वार्जुनकाश्मर्य्याम्रजम्बूफलानि च ।
पृथक् पञ्च पलांशानि तैः पिष्टैराढकं पचेत् ॥२६९॥
वैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ।
कुर्य्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः ॥२७०॥
लोहपात्रे ततः पूतं संशुद्धमुपयोजयेत् ।
पाने नस्तःक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च ॥२७१॥
एतच्चक्षुष्यमायुष्यं शिरसः सर्वरोगनुत् ।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम् ॥२७२॥
इति महानीलतैलम् ।

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुडवो द्विगुणामलकीरसः ॥ २७३ ॥
सिद्धः सप्रतिमर्शः स्यात् सर्वमूर्द्धगदापहः ।
क्षीरं पियालयष्ट्याह्वे जीवकाद्यो गणस्तिलाः ॥२७४॥
कृष्णा वक्त्रे प्रलेपः स्याद्धरिल्लोमनिवारणः ।
यष्ट्याह्वतिलकिञ्जल्कक्षौद्रामलकानि च ॥२७५॥
वर्धयेद्दृढयेच्चैतत् केशान् मूर्द्धप्रलेपनम् ।
पचेत् सैन्धवशुक्ताम्लैरयश्चूर्णं सतण्डुलम् ॥२७६॥
तेनालिप्तं शिरः शुद्धमस्निग्धमुषितं निशि ।
तत्प्रातस्त्रिफलाधौतं स्यात् कृष्णमृदुमूर्द्धजम् ।
अतश्चूर्णोऽम्लपिष्टश्च रागः सत्रिफलो वरः ॥२७७॥
इति खालित्यचिकित्सा ।

( अथ स्वरभेदचिकित्सा )।

सर्पींष्युपरिभक्तानि स्वरभेदेऽनिलात्मके ।
तैलैश्चतुष्प्रयोगैश्च बलारास्नामृतान्वयै ॥२७८॥
बर्हितित्तिरिदक्षाणां पञ्चमूलश्रुतान् रसान् ।
मायूरं चीरसर्पिर्वा पिबेत् त्र्यूषणमेव वा ॥२७९॥
पैत्तिके तु विरेकः स्यात् पयश्च मधुरैः शृतम् ।
सर्पिर्गुडा जीवनीयं वासासिद्धं घृतं तथा ॥ २८० ॥
कफजे स्वरभेदे तु तीक्ष्णं मूर्द्धविरेचनम् ।
विरेको वमनं धूमो यवान्नकटुसेवनम् ॥२८१॥
चव्यभार्ग्यभयाव्योषचारमाचिकचित्रकान् ।
लिह्यादा पिप्पलीपथ्ये तीक्ष्णं मद्यं पिबेच्च सः ॥२८२॥
रक्तजे स्वरभेदे तु सघृता जाङ्गला रसाः ।
द्राक्षाविदारीक्षुरसाः सघृतक्षौद्रशर्कराः ॥२८३॥
यच्चोक्तं क्षयकासघ्नं तच्च सर्वं चिकित्सितम् ।
पित्तजस्वरभेदघ्नं शिरावेधश्च रक्तजे ॥२८४॥
सन्निपाते हिताः सर्वाः क्रिया न तु शिराविधिः ।
कुर्य्याच्छेषेषु रोगेषु क्रियां स्वां स्वां चिकित्सिताम् ॥२८५॥
शेषेष्वादौ च निर्दिष्टा सिद्धौ चान्या प्रवक्ष्यते ॥२८६॥

इति स्वरभेदचिकित्सा।

भवन्ति चात्र।

वातपित्तकफा नृणां वस्तिहृन्मूर्द्धसंश्रयाः ।
तस्मात् तु स्थानसामीप्याद्धर्त्तव्या वमनादिभिः ॥२८७॥
मध्यात्मनोक्षे वाताद्यैर्जीवो वातरवीन्दुभिः ।
पीड्यते धार्य्यते चैव विक्षताविक्षतैस्तथा ॥२८८॥
विरुद्धैरपि नत्वेते गुणैर्घ्नन्ति परस्परम् ।
दोषाः सहजसात्म्यत्वादिदं घोरमहीनिव ॥२८९॥

त्रिमर्मजानां रोगाणां निदानाकृतिभेषजम्।
विस्तरेण पृथग्दिष्टं त्रिमर्मीये चिकित्सिते ॥२८०॥

---

## सप्तविंशोऽध्यायः।

### ऊरुस्तम्भचिकित्सितम्।

श्रिया परमया ब्राह्म्या परया च तपःश्रिया।
युक्तं चन्द्रसूर्य्याभ्यां सुमेरुमिव पर्वतम् ॥१॥
धीधृतिस्मृतिविज्ञानज्ञानकीर्त्तिक्षमालयम्।
अग्निवेशो गुरुं काले संशयं परिपृष्टवान् ॥२॥
भगवन्! पञ्च कर्माणि समस्तानि पृथक् तथा।
निर्दिष्टान्यामयानान्तु सर्वेषामेव भेषजम् ॥३॥
दोषजोऽस्त्यामयः कश्चिद् यस्यैतानि भिषग्वर!।
न स्युः शक्ता निशमने साध्यस्य क्रियया ततः ॥४॥
अस्त्यूरुस्तम्भ इत्युक्ते गुरुणा तस्य कारणम्।
सलिङ्गभेषजं भूयः पृष्टस्तेनाब्रवीद्गुरुः ॥५॥
स्निग्धोष्णलघुशीतानि जीर्णाजीर्णे समश्नतः।
द्रवशुष्कदधिक्षीरग्राम्यानूपौदकामिषैः ॥६॥
पिष्टव्यापन्नमद्यातिदिवास्वप्नप्रजागरैः।
लङ्घनाध्यशनायासभयवेगविधारणैः ॥७॥
स्नेहाद्यामं चितं कोष्ठे वातादीन् मेदसा सह।
रुद्धाग्य गौरवादूरू यात्यधोगैः सिरादिभिः ॥८॥
पूरयेत् सक्थिजङ्घोरू दोषो मेदो बलोत्कटः।
अविधेयं परिस्पन्दं जनयत्यल्पविक्रमम् ॥९॥
महासरसि गम्भीरे पूर्णेऽम्बु स्तिमितं यथा।
तिष्ठति स्थिरमक्षोभ्यं तद्वदूरुगतः कफः ॥१०॥

गौरवायाससङ्कोचदाहरुक्सुप्तिकम्पनैः।
भेदस्फुरणतोदैश्च युक्तो देहं निहन्त्यसून् ॥११॥
ऊरू श्लेष्मा समेदस्को दोषौ द्वावभिभूय तु।
स्तम्भयेत् स्थैर्यशैत्याभ्यामूरुस्तम्भस्ततस्तु सः ॥१२॥
प्राग्रूपं ध्याननिद्रातिस्तैमित्यारोचकज्वराः।
लोमहर्षश्च छर्दिश्च जङ्घोर्वोः सदनं तथा ॥१३॥
वातशङ्किभिरज्ञानात् तस्य स्यात् स्नेहनात् पुनः।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥१४॥
जङ्घोरुग्लानिरत्यर्थं शश्वच्चादाहवेदना।
पदञ्च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥१५॥
संस्थाने पीडने गत्यां चलने चाप्यनीश्वरः।
अन्यनेयो हि संभग्नावूरुपादौ च मन्यते ॥१६॥
यदा दाहार्त्तितोदार्त्तो वेपनः पुरुषो भवेत्।
ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम् ॥१७॥
तस्य न स्नेहनं कार्य्यं न वस्तिर्न विरेचनम्।
न चैव वमनं यस्मात् तन्निबोधत कारणम् ॥१८॥
हृदये श्लेष्मणो नित्यं स्नेहनं बस्तिकर्म च।
तस्मात्स्योदरणे चैव न समर्थं विशोधनम् ॥१९॥
कर्षं कफस्थानगतं पित्तञ्च वमनात् सुखम्।
कर्तुमामाशयस्थौ च संशमनात् तावुभावपि ॥२०॥
पक्वाशयस्थाः सर्वे च वस्तिभिर्मूलनिर्जयात्।
पवरा न स्वासम्भदोभ्यां स्नुत्वा ऊरुरिद्दर्थसिस्तः ॥२१॥
वातस्थाने हिते शैत्याद्यौः स्तम्भाय तद्गताः।
न मराः मुखमूद्धर्तुं ऊर्न निःसारितुं स्वल्पाम् ॥२२॥
तस्य संशमनं नित्यं क्षपणं शोषणं तथा।
युक्त्यपेक्षी भिषक् कुर्य्यादधिकारात् कफामयोः ॥२३॥

सदा रूक्षोपचाराय यवश्यामाककोद्रवान्।
शाकैरलवणैरद्याज्जलतैलोपसाधितैः ॥२४॥
सुनिषण्णकनिम्बार्कवेत्राग्रवधपल्लवैः।
वायसीवास्तुकैरन्यैस्तिक्तैश्च कुलकादिभिः ॥ २५ ॥
क्षारारिष्टप्रयोगाच्च हरीतक्यास्तथैव च।
मधूदकस्य पिप्पल्या ऊरुस्तम्भविनाशनाः ॥ २६ ॥
समङ्गां शाल्मलीं बिल्वं मधुना सह वा पिबेत्।
तथा श्रीवेष्टकोदीच्यदेवदारुनतान्यपि।
चन्दनं धातकीं कुष्ठं तालीशं नलदं तथा ॥ २७ ॥
मुस्तं हरीतकीं लोध्रं पद्मकं तिक्तरोहिणीम्।
देवदारु हरिद्रे द्वे वचां कटुकरोहिणीम् ॥ २८ ॥
पिप्पलीं पिप्पलीमूलं सरलं देवदारु च।
चव्यं चित्रकमूलानि देवदारु हरीतकीम् ॥ २९ ॥
भल्लातकं समूलाच्च पिप्पलीं पञ्च तान् पिबेत्।
सक्षौद्रानर्धश्लोकोक्तान् कल्कानूरुग्रहापहान् ॥ ३० ॥
शार्ङ्गेष्टा मदनं दन्तीं वत्सकस्य फलं वचाम्।
मूर्वामारग्वधं पाठां करञ्जं कुलकं तथा ॥ ३१ ॥
पिबेन्मधुयुतं तुल्यं चूर्णं वा वारिणाप्लुतम्।
सक्षौद्रं दधिमण्डं वाप्यूरुस्तम्भविनाशनम् ॥ ३२ ॥
मूर्वामतिविषां कुष्ठं चित्रकं कटुरोहिणीम्।
पूर्ववद्वा पिबेत् तोये रात्रिस्थितमथापि वा ॥ ३३ ॥
स्वर्णक्षीरीमतिविषां मुस्तं तेजोवतीं वचाम्।
सुराह्वं चित्रकं कुष्ठं पाठां कटुकरोहिणीम् ॥ ३४ ॥
लेहयेत् मधुना चूर्णं सक्षौद्रं वा जलान्वितम्।
फञ्जीं व्याघ्रनखं हेम पिबेद्वा मधुसंयुतम् ॥ ३५ ॥
त्रिफलां पिप्पलीं मुस्तं चव्यं कटुकरोहिणीम्।

लिह्याद्वा मधुना चूर्णमूरुस्तम्भार्दितो नरः ॥ ३६ ॥
अपतर्पणजयेत् स्याद्दोषः सन्तर्पयेदिति तम्।
युक्त्या जाङ्गलजैर्मांसैः पुराणैश्चैव शालिभिः ॥ ३७ ॥
रूक्षणात् वातकोपश्चेन्निद्रानाशार्त्तिपूर्वकः।
स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः ॥ ३८ ॥
पीलुपर्णी पयस्या च रास्ना गोक्षुरको वचा।
सरलागुरुपाठाश्च तैलमेभिर्विपाचयेत् ॥ ३९ ॥
सक्षौद्रात् प्रसृतं तस्मादञ्जलिं वापि ना पिबेत्।
कुष्ठं श्रीवेष्टकोदीच्य सरलं दारुकेशरम्।
अजगन्धाश्वगन्धा च तैलं तैः सार्षपं पचेत् ॥ ४० ॥
सक्षौद्रं मात्रया तस्माप्यूरुस्तम्भार्दितः पिबेत्।
दीर्घान्मुक्त ऊरुस्तम्भात् ततश्च स विमुच्यते ॥ ४१ ॥
द्वे पले सैन्धवात् पञ्च शुण्ठ्या ग्रन्थिकचित्रकात्।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढ़के ॥ ४२ ॥
आरनालात् पचेत् प्रस्थं तैलस्यैतैरपत्यदम्।
ऊरुस्तम्भग्रहार्योऽर्त्ति सर्ववातविकारनुत् ॥ ४३ ॥
पलाभ्यां पिप्पलीमूलनागरादष्टकट्वरः।
तैलप्रस्थः समो दध्ना गृध्रसूरुग्रहापहः ॥ ४४ ॥

इत्यष्टकट्वरतैलम्।

इत्याभ्यन्तरमुद्दिष्टमूरुस्तम्भस्य भेषजम्।
शेषमः चपणं त्वन्यद्वाह्यं शृणु चिकित्सितम् ॥ ४५ ॥
वल्मीकमृत्तिकामूलं करञ्जस्य फलं त्वचम्।
इष्टकानां ततश्चूर्णैः कुर्य्यादुत्सादनं भृशम् ॥ ४६ ॥
मलैर्वाप्यश्वगन्धाया मूलैरर्कस्य वा भिषक्।
पिचुमर्दस्य वा मूलैरथवा देवदारुणः ॥ ४७ ॥
क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतैर्भिषक्।

गाढ़मुत्सादनं कुर्य्यादूरुस्तम्भे प्रलेपनम् ॥४८॥
दन्तीद्रवन्तीसुरसासर्षपैश्चापि बुद्धिमान् ।
तर्कारीशिग्रुसुरसबिल्ववत्सकनिम्बजैः ॥४९॥
पत्रमूलफलैस्तोयं शृतसुष्णञ्च सेचनम् ।
पिष्ट्वा सर्षपं मूत्रेऽभ्युषितं स्यात् प्रलेपनम् ॥५०॥
वत्सकः सुरसं कुष्ठ गन्धासुम्बुरुशिग्रुकौ ।
हिंस्रार्कमूलवल्मीकमृत्तिकाः सकुठेरकाः ॥ ५१ ॥
दधिसैन्धवसंयुक्तं कार्य्यमेतैः प्रलेपनम् ।
ऊरुस्तम्भविनाशाय भिषजा जानता क्रमम् ॥ ५२ ॥
श्योणाक खदिरं बिल्वे हृहत्यौ सरलासनौ ।
शोभाञ्जनकतर्कारीश्वदंष्ट्रासुरसार्ज्जकान् ॥५३॥
अग्निमन्थकरञ्जौ च जलेनोत्क्राथ्य सेचयेत् ।
प्रलेपो मूत्रपिष्टैर्वाप्यूरुस्तम्भनिवारणः ॥५४॥
कफक्षयार्थं सद्योषु व्यायामेष्वनुयोजयेत् ।
स्थलान्याक्रामयेत् काले शर्कराः सिकतास्तथा ॥५५॥
प्रतारयेत् प्रतिस्रोतां नदीं शीतजलां शिवाम् ।
सरश्च विमलं शीतं स्थिरतोयं पुनःपुनः ॥५६॥
तथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत् ।
श्लेष्मणः क्षपणं यत् स्यान्न च मारुतमावहेत् ॥ ५७ ॥
तत् सर्वं सर्वदा कार्य्यमूरुस्तम्भस्य भेषजम् ।
शरीरं बलमग्निञ्च कार्य्यणा रक्षता क्रिया ॥५८॥

तत्र श्लोकः ।

हेतुः प्राग्रूपलिङ्गानि कर्म्मायोग्यत्वमेव च ।
द्विविधं भेषजञ्चोक्तमूरुस्तम्भचिकित्सिते ॥५९॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सित-
स्थाने ऊरुस्तम्भचिकित्सितं नाम
सप्तविंशोऽध्यायः ।

## षट्‌विंशोऽध्यायः ।

### वातव्याधिचिकित्सितम् ।

वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम् ।
वायुर्विश्वमिदं सर्वं प्रभुर्वायुश्च कीर्त्तितः ॥१॥
अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः ।
वायुः स्यात् सोऽधिकं जीवेत् वीतरोगः समाः शतम् ॥२॥
प्राणोदानसमानाख्यव्यानापानैः स पञ्चधा ।
देहं तन्त्रयते सम्यक् स्थानेष्वव्याहतश्चरन् ॥३॥
स्थानं प्राणस्य शीर्षोरःकर्णजिह्वास्यनासिकाः ।
ष्ठीवनक्षवथूद्गारश्वासाहारादि कर्म च ॥४॥
उदानस्य पुनः स्थानं नाभ्युरः कण्ठ एव च ।
वाक्प्रवृत्तिः प्रयत्नौजो बलवर्णादि कर्म च ॥५॥
स्वेददोषाम्बुवाहानि स्रोतांसि समधिष्ठितः ।
अन्तरग्नेश्च पार्श्वस्थः समानोऽग्निबलप्रदः ॥६॥
देहं व्याप्नोति सर्वन्तु व्यानः शीघ्रगतिर्नृणाम् ।
गतिप्रसरणाक्षेपनिमेषादिक्रिया सदा ॥७॥
वृषणौ बस्ति मेढ्रञ्च नाभ्यूरू वंक्षणौ गुदम् ।
अपानस्थानमन्त्रस्थः शुक्रमूत्रशकृन्ति सः ॥८॥
सृजत्यार्त्तवगर्भौ च युक्ताः स्थानस्थिताश्च वै ।
स्वकर्म कुर्वते देहो धार्य्यते तैरनामयः ॥९॥
विमार्गस्था ह्ययुक्ता वा रोगैः स्वस्थानकर्मजैः ।
शरीरं पीडयन्त्येते प्राणानाशु हरन्ति वा ॥१०॥
सङ्ख्यामप्यतिवृत्तानां तज्जानां हि प्रधानतः ।
अशीतिर्नखभेदाद्या रोगाः सूत्रे निदर्शिताः ॥११॥
तानुच्यमानान् पर्य्यायैः सहेतूपक्रमान् शृणु ।
केवलं वायुमुद्दिश्य स्थानभेदात् तथाहृतम् ॥१२॥

रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः।
विषमादुपचाराच्च दोषासृक्स्रवणादति ॥१३॥
लङ्घनप्लवनात्यध्वव्यायामातिविचेष्टितैः।
धातूनां संचयाच्चिन्ताशोकरोगातिकर्षणात् ॥१४॥
दुःखशय्यासनात् क्रोधात् दिवास्वप्नात् भयादपि।
वेगसन्धारणादामादभिघातादभोजनात्।
मर्माघाताद्गजोष्ट्राश्वशीघ्रयानापतंसनात् ॥१५॥
देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली।
करोति विविधान् व्याधीन् सर्वाङ्गैकाङ्गसंश्रितान् ॥१६॥
अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम्।
आत्मरूपन्तु तत् व्यक्तमपायो लघुता पुनः ॥१७॥
सङ्कोचः पर्वणां स्तम्भो भेदोऽस्थिपर्वणामपि।
लोमहर्षः प्रलापश्च पाणिपृष्ठशिरोग्रहः ॥१८॥
खाञ्जपाङ्गुल्यकुब्जत्वं शोषोऽङ्गानामनिद्रता।
गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ॥१९॥
शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि हुण्डनम्।
भेदस्तोदार्त्तिराक्षेपो मोहश्चायास एव च ॥२०॥
एवंविधानि रूपाणि करोति कुपितोऽनिलः।
हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥२१॥
तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः।
ब्रध्नहृद्रोगगुल्मार्शः पार्श्वशूलञ्च मारुते ॥२२॥
सर्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जनम्।
वेदनाभिः परीतश्च स्फुटन्तीवास्य सन्धयः ॥२३॥
ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः।
जङ्घोरुत्रिकपात् पृष्ठरोगशोषा गुदे स्थिते ॥२४॥
हृन्नाभिपार्श्वोदररुक्तृष्णोद्गारविसूचिकाः।

कासः कण्ठास्यशोषश्च श्वासश्चामाशयस्थिते ॥२५॥
पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च।
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ।
श्रोत्रादिष्विन्द्रियवधं कुर्य्याद्दुष्टसमीरणः ॥२६॥
त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते।
आतन्यते सरागा च पर्वरुक् त्वक्स्थितेऽनिले ॥२७॥
रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशताऽरुचिः।
गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥२८॥
गुर्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं यथा।
सरुक् श्रमितमत्यर्थं मांसमेदोगतेऽनिले ॥२९॥
भेदोऽस्थिपर्वणां सन्धिशूलं मांसबलक्षयः।
अस्वप्नः सन्तता रुक् च मज्जास्थिकुपितेऽनिले ॥३०॥
क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा।
विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ॥३१॥
सर्वाङ्गैकाङ्गरोगांश्च कुर्य्यात् स्नायुगतोऽनिलः।
बाह्याभ्यन्तरमायामं खल्लिं कुब्जत्वमेव च ॥३२॥
शरीरं मन्दरुक् शोफं शुष्यति स्पन्दतेऽपि वा।
सुप्तास्तन्वो महत्यो वा शिरा वाते शिरागते ॥३३॥
वातपूर्णदृतिस्पर्शः शोथः सन्धिगतेऽनिले।
प्रसारणाकुञ्चनयोरप्रवृत्तिः सवेदना ॥३४॥
अतिवृद्धः शरीरार्द्धमेकं वायुः प्रपद्यते।
यदा तदोपशोष्यासृक् बाहुं पादञ्च जानु च ॥३५॥
तस्मिन् सङ्कोचयत्यर्द्धं मुखं जिह्मं करोति च।
वक्रीकरोति नासाभ्रूललाटाक्षिहनूस्तथा ॥३६॥
ततो वक्रं व्रजत्यास्यं भोजनं वक्रनासिकम्।
स्तब्धं नेत्रं कथयतः क्षवथुश्च निगृह्यते ॥३७॥

दीना जिह्वा समुत्क्षिप्ताऽवला सज्जति चास्य वाक्।
दन्ताश्चलन्ति बाध्येते श्रवणौ भिद्यते स्वरः ॥३८॥
पादहस्ताक्षिजङ्घोरुशङ्खश्रवणगण्डरुक्।
अर्द्धे तस्मिन् मुखार्द्धे वा केवले स्यात् तदर्दितम् ॥३९॥
मन्ये संश्रित्य वातोऽन्तर्यदा नाडीः प्रपद्यते।
मन्यास्तम्भं तदा कुर्य्यादन्तरायामसंज्ञितम् ॥४०॥
अन्तरायम्यते ग्रीवा मन्या च स्तभ्यते भृशम्।
दन्तानां दंशनं लाला पृष्ठाक्षेपः शिरोग्रहः ॥४१॥
जृम्भा वदनसङ्गश्चाप्यन्तरायामलक्षणम्।
इत्युक्तस्त्वन्तरायामो बहिरायाम उच्यते ॥ ४२ ॥
पृष्ठमन्याश्रिता बाह्याः शोषयित्वा शिरावलीः।
श्रितः कुर्य्यादनुस्तम्भं बहिरायामसंज्ञकम् ॥४३॥
चापवन्नाम्यमानस्य पृष्ठतो नीयते शिरः।
उरः उत्क्षिप्यते मन्या स्तब्धा ग्रीवा च सृज्यते ॥४४॥
दन्तानां दंशनं जृम्भा लालास्रावश्च वाग्ग्रहः।
जातवेगो निहन्त्येष वैकल्यं वा प्रयच्छति ॥४५॥
हनुमूले स्थिते वम्भात् संसयत्यनिलो हनुम्।
विवृतास्यत्वमथवा कुर्य्यात् संवृतमाननम् ॥४६॥
हनुग्रहश्च संस्तभ्य हनुसंवृतवक्त्रताम्।
हनुमूले स्थितो वायुः करोति बहुकष्टदम् ॥४७॥
मुहुराक्षिपति क्रुद्धो गात्राण्याक्षेपकोऽनिलः।
पाणिपादञ्च संशोष्य शिराः सस्नायुकण्डराः ॥४८॥
पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति मारुतः।
दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः ॥४९॥
स्वस्थः स्यादर्दितायामां मुहुर्वेगागमे गते।
पीड्यते पीड़नैस्तैस्तैर्भिषग्गतान् विवर्जयेत् ॥५०॥

हत्वैकं मारुतः पक्षं दक्षिणं वाममेव वा।
कुर्य्याच्चेष्टानिवृत्तिं हि रुजं वाक्स्तम्भमेव च ॥५१॥
गृहीत्वा वा शरीरार्द्धं शिराः स्नायुं विशोष्य च।
पादं सङ्कोचयत्येकं हस्तं वा तोदशूलकृत् ॥५२॥
एकाङ्गरोगं तं विद्यात् सर्वाङ्गं सर्वदेहजम्।
स्फिक् पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात् ॥५३॥
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः।
वाताद्वातकफात् तन्द्रा गौरवारोचकान्विता ॥५४॥
खल्ली तु पादजङ्घोरुकरमूलावमोटनी।
स्थानानामनुरूपैश्च लिङ्गैः शेषान् विनिर्दिशेत् ॥५५॥
सर्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत्।
वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च ॥५६॥
वातपित्तकफा देहे सर्वस्रोतोऽनुसारिणः।
वायुरेव हि सूक्ष्मत्वाद्द्वयोस्तत्राप्युदीरणः ॥५७॥
कुपितस्तौ समुद्धूय तत्र तत्राक्षिपन् गदान्।
करोत्यावृतमार्गत्वात् रसादींश्चोपशोषयन् ॥५८॥
लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमः क्लमः।
कट्वम्ललवणोष्णैश्च विदाहः शीतकामिता ॥५९॥
शीतगौरवशूलानि कट्वाद्युपशयोऽधिकम्।
लङ्घनायासरूक्षोष्णकामिता च कफावृते ॥६०॥
रक्तावृते सदाहार्त्तिस्त्वङ्मांसान्तरजो भृशम्।
भवेत् सरागः श्वयथुर्जायन्ते मण्डलानि च ॥६१॥
कठिनाश्च विवर्णाश्च पिडकाः श्वयथुस्तथा।
हर्षः पिपीलिकानाञ्च सञ्चार इव मांसगे ॥६२॥
चलः स्निग्धो मृदुः शीतः शोफोऽङ्गेष्वरुचिस्तथा।
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसा वृतः ॥६३॥

स्पर्शमस्थ्यावृते तूष्णं पीडनञ्चाभिनन्दति।
संभज्यते सीदति च सूचीभिरिव तुद्यते ॥६४॥
मज्जावृते विनामः स्याज्जृम्भणं परिवेष्टनम्।
शूलन्तु पीड्यमाने च पाणिभ्यां लभते सुखम् ॥६५॥
शुक्रावेगोऽतिवेगो वा निष्फलत्वञ्च शुक्रगे।
भुक्ते कुक्षौ च रुग्जीर्णे शाम्यत्यन्नावृतेऽनिले ॥६६॥
मूत्राप्रवृत्तिराध्मानं वस्तौ मूत्रावृतेऽनिले।
वर्चोवृते विबन्धोऽधः स्वे स्थाने परिकृन्तति ॥६७॥
व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः।
चिरात् पीडितमन्नेन दुःखं शुष्कं शकृत् सृजेत् ॥६८॥
श्रोणीवंक्षणपृष्ठेषु रुग्विलोमश्च मारुतः।
अस्वस्थं हृदयञ्चैव स च वर्चोवृतोऽनिलः ॥६९॥
सन्धिच्युतिर्हनुस्तम्भः कुञ्चनं कुब्जतार्दितम्।
पक्षाघातोऽङ्गसंशोषः पङ्गुत्वं खुड़वातता ॥७०॥
स्तम्भनञ्चाढ्यवातश्च रोगा मज्जास्थिगाश्च ये।
एते स्थानस्य गाम्भीर्याद् यत्नात् सिध्यन्ति वा नवा ॥७१॥
नवान् बलवतान्स्त्वेतान् साधयेन्निरुपद्रवान्।
क्रियामतः सिद्धतमां वातरोगापहां शृणु ॥७२॥
केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत्।
वायुं सर्पिर्वसातैलमज्जपानैर्नरं ततः ॥७३॥
स्नेहक्लान्तं समाश्वास्य पयोभिः स्नेहयेत् पुनः।
यूषैर्ग्राम्याम्बुजानूपै रसैर्वा स्नेहसंयुतैः ॥७४॥
पायसैः कृशरैरम्ललवणैः सानुवासनैः।
नावनैस्तर्पणैश्चान्नैः सुस्निग्धं स्वेदयेत् ततः ॥७५॥
स्वभ्यक्तं स्नेहसंयुक्तैर्नाडीप्रस्तरसङ्करैः।
तथान्यैर्विविधैः स्वेदैर्यथायोगमुपाचरेत् ॥७६॥

स्वेदार्द्रं स्विन्नमङ्गं तु वक्रं स्तब्धमथापि वा ।
शनैर्नमयितुं शक्यं यथेष्टं शुष्कदारुवत् ॥७७॥
हर्षतोदरुगायासशोथस्तम्भग्रहादयः ।
स्विन्नस्याशु प्रशाम्यन्ति मार्दवञ्चोपजायते ॥७८॥
स्नेहश्च धातून् संशुष्कान् पुष्णात्याशु प्रयोजितः ।
बलमग्निबलं पुष्टिं प्राणांश्चाप्यभिवर्द्धयेत् ॥७९॥
असकृत् तं पुनः स्नेहैः स्वेदैश्चाप्युपपादयेत् ।
तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ॥८०॥
यद्यनेन सदोषत्वात् कर्मणा न प्रशाम्यति ।
मृदुभिः स्नेहसंयुक्तैरौषधैस्तं विशोधयेत् ॥८१॥
घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ।
पयसैरण्डतैलं वा पिबेद्दोषहरं शिवम् ॥८२॥
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ।
स्रोतो बद्ध्वाऽनिलं रुन्ध्यात् तस्मात् तमनुलोमयेत् ॥८३॥
दुर्बलो यो विरेच्यः स्यात् तं निरूहैरुपाचरेत् ।
पाचनैर्दीपनीयैर्वा भोज्यैर्वातयुतं नरम् ॥८४॥
शुद्धस्य चोत्थिते चाग्नौ स्नेहस्वेदौ पुनर्हितौ ।
स्वाद्वम्ललवणस्निग्धैराहारैः सततं पुनः ॥८५॥
नावनैर्धूमपानैश्च सर्वानेवोपपादयेत् ।
इति सामान्यतः प्रोक्तं वातरोगचिकित्सितम् ।
विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ॥८६॥
पाचनैर्दीपनीयैस्तैरम्लैर्वा पाचयेन्नरान् ।
गुदपक्वाशयस्थे तु कर्मोदावर्त्तनुदितम् ॥८७॥
आमाशयस्थे शुद्धस्य यथा दोषहराः क्रियाः ।
सर्वाङ्गकुपितेऽभ्यङ्गो बस्तयः सानुवासनाः ॥८८॥
स्वेदाभ्यङ्गा निवातानि हृद्यञ्चान्नं त्वगाश्रिते ।

शीताः प्रदेहा रक्तस्थे विरेको रक्तमोचणम् ॥८९॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च।
कोष्ठाभ्यन्तरतः स्वेदैरस्थिमज्जगतं जयेत् ॥९०॥
हर्षोऽश्मयानं शुक्रस्थे बलशुक्रकरं हितम्।
विबद्धमार्गं दृष्ट्वा वा शुक्रं दद्याद्विरेचनम् ॥९१॥
विरिक्तप्रतिभुक्तस्य पूर्वोक्तां कारयेत् क्रियाम्।
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ॥९२॥
सिताकाश्मर्य्यमधुकैर्हितमुत्थापने पयः।
हृदि प्रकुपिते सिद्धमंशुमत्या पयो हितम् ॥९३॥
मत्स्यान् नाभिप्रदेशस्थे सिद्धान् विल्वशलाटुभिः।
वायुना वेष्ट्यमाने तु गात्रे स्यादुपनाहनम् ॥९४॥
तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम्।
बाहुशीर्षगते नस्यं पानञ्चौत्तरभक्तिकम् ॥९५॥
वस्तिकर्म त्वधो नाभेः शस्यते चावपीड़कः।
अर्दिते नावनं मूर्द्धि तैलं तर्पणमेव च।
नाड़ीस्वेदोपनाहाश्चाप्यनूपपिशितैर्हिताः ॥९६॥
स्वेदनं स्नेहसंयुक्तं पक्षाघाते विरेचनम्।
अन्तरा कण्डराङ्गुल्योः शिरावस्त्यग्निकर्म च ॥९७॥
गृध्रसीषु प्रयुञ्जीत खल्लयान्तूष्णोपनाहनम्।
पायसैः कृशरैश्चैव शस्तं तैलघृतान्वितैः ॥९८॥
आत्तानने हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च।
प्रदेशिनीभ्याञ्चोन्नाम्य चिवुकोन्नामनं हितम् ॥९९॥
प्रस्तां सङ्गमयेत् स्थानं स्तब्धां स्विन्नां विनामयेत्।
प्रत्येकं स्थानदूष्यादिक्रियावैशेष्यमाचरेत् ॥१००॥
सर्पिस्तैलवसामज्जसेकाभ्यञ्जनवस्तयः।
स्निग्धाः स्वेदा निवातञ्च स्थानं प्रावरणानि च ॥१०१॥

रसा. पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
बृंहणं यच्च तत्सर्वं प्रशस्तं वातरोगिणाम् ॥१०२॥
वस्तायाः पञ्चमूलस्य दशमूलस्य वा रसे ।
अजशीर्षाम्बुजानूपमांसादपिशितैः पृथक् ॥१०३॥
साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतान् ।
भोजयेद्वातरोगार्त्तं तैर्व्यक्तलवणैर्नरम् ॥१०४॥
एतैरेवोपनाहांश्च पिशितैः संप्रकल्पयेत् ।
घृततैलयुतैः साम्लैः सुखस्विन्नैरनस्थिभिः ॥१०५॥
पत्रोत्क्वाथः पयस्तैलद्रोण्यः सुरवगाहने ।
स्वभ्यक्तानां प्रशस्यन्ते सेकाश्चानिलरोगिणाम् ॥१०६॥
आनूपौदकमांसानि दशमूलं शतावरीम् ।
कुलत्थान् बदरान् माषांस्तिलान् रास्नां यवान् बलाम् ।
वसादध्यारनालाम्लैः सह कुम्भ्यां विपाचयेत् ॥१०७॥
नाडीस्वेदं प्रयुञ्जीत पिष्टैश्चैवोपनाहनम् ।
तैश्च सिद्धं घृतं तैलमभ्यङ्गः पानमेव च ॥१०८॥
सुस्तं किण्वं तिलाः कुष्ठ सुराह्वं लवणं नतम् ।
दधि क्षीरचतुःस्नेहैः सिद्धं स्यादुपनाहनम् ॥१०९॥
उत्कारिकावेशवारक्षीरमाषतिलौदनैः ।
एरण्डबीजगोधूमयवकोलस्थिरादिभिः ॥११०॥
सस्नेहैः सस्तं गात्रमालिप्य बहुलं भिषक् ।
एरण्डपत्रैः प्रच्छाद्य रात्रौ काल्ये विमोचयेत् ॥१११॥
क्षीराम्बुना ततः सिक्तं पुनर्यैवोपनाहितम् ।
मुञ्चेद्रात्रौ दिवाबद्धं चर्मभिश्च सलोमभिः ॥११२॥
फलानां तैलयोनीनामम्लपिष्टान् सुशीतलान् ।
प्रदेहानुपनाहांश्च गन्धैर्वातहरैरपि ।
मायसैः क्षारैश्चैव कारयेत् स्नेहसंयुतैः ॥११३॥

कुम्भगुद्यानिलार्त्तानामतः स्नेहान् प्रवक्ष्यते।
विविधान् विविधव्याधिप्रशमायामृतोपमान् ॥११४॥
द्रोणेऽम्भसः पचेद्भागान् दशमूलाच्चतुष्पलान्।
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह ॥११५॥
पादशेषे रसे पिष्टैर्जीवनीयैः सशर्करैः।
तथा खर्जूरकाश्मर्य्यद्राक्षावदरफल्गुभिः ॥११६॥
सक्षीरैः सर्पिषः प्रस्थः सिद्धः केवलवातनुत्।
निरत्ययः प्रयोक्तव्यः पानाभ्यञ्जनवस्तिषु ॥११७॥
चित्रकं नागरं रास्नां पौष्करं पिप्पली शटीम्।
पिष्ट्वा विपाचयेत् सर्पिर्वातरोगहरं परम् ॥ ११८॥
बलाबिल्वश्रृते क्षीरे घृतमण्डं विपाचयेत्।
तस्य शुक्तिः प्रकुञ्चोवा नस्यं मूर्द्धगतेऽनिले ॥११९॥
ग्राम्यानूपौदकानान्तु भित्वास्थीनि पचेज्जले।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥१२०॥
जीवकर्षभकास्फोता विदारीकपिकच्छुभि.।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥१२१॥
तत् सिद्धं नावनाभ्यङ्गात् तथापानानुवासनात्।
शिरापर्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥१२२॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये।
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम् ॥१२३॥
तद्वत् सिद्धा वसानक्रमत्स्यकूर्मचुलुकजाः।
प्रत्यग्रा विधिनानेन नस्यपानेषु शस्यते ॥१२४॥
प्रस्थः स्यात् त्रिफलायास्तु कुलत्थकुडवद्वयम्।
कृष्णगन्धात्वगाढ़क्योः पृथक् पञ्चपलं भवेत् ॥१२५॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम्।
जलद्रोणे पचेत् पादशेषे प्रस्थोन्मितं पृथक् ॥१२६॥

सुरारनालदध्यम्लसौवीरकतुषोदकम् ।
कोलदाडिमवृक्षाम्लरसं तैलं वसां घृतम् ॥१२७॥
मज्जानञ्च पयश्चैव जीवनीयपलानि षट् ।
कल्के दत्त्वा मह्त्स्नेहं सम्यगेन विपाचयेत् ॥१२८॥
शिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु ।
वेपनाक्षेपशूलेषु तदभ्यङ्गे प्रयोजयेत् ॥१२९॥
निर्गुण्ड्या मूलपत्राभ्यां गृहीत्वा स्वरसं ततः ।
तेन सिद्धं समं तैलं नाडीकुष्ठानिलार्त्तिषु ॥१३०॥
हितं पामापचीनाञ्च पानाभ्यञ्जनपूरणम् ।
कार्पासास्थिकुलत्थानां रसे सिद्धञ्च वातनुत् ॥१३१॥
मूलकस्वरसे क्षीरसमे स्थाप्य त्र्यहं दधि ।
तस्याम्लस्य त्रिभिः प्रस्थैस्तैलप्रस्थं विपाचयेत् ॥१३२॥
यष्ट्याह्वशर्करारास्नालवणार्द्रकनागरैः ।
सुपिष्टैः पलिकैः पानात् तदभ्यङ्गाच्च वातनुत् ॥१३३॥
पञ्चमूलकषायेण पिण्याकं बहुवार्षिकम् ।
पक्त्वा तस्य रसं पूत्वा तैलप्रस्थं विपाचयेत् ॥१३४॥
पयसाष्टगुणेनैतत् सर्ववातविकारनुत् ।
ससृष्टे श्लेष्मणा चैतद्वाते शस्तं विशेषतः ॥१३५॥
यवकोलकुलत्थानां श्रेयस्याः शुष्कमूलकात् ।
बिल्वाच्चाञ्जलिमेकैकं द्रवैरम्लैर्विपाचयेत् ॥१३६॥
तेन तैलं कषायेण फलाम्लैः कटुभिस्तथा ।
पिष्टैः सिद्धं महावातैरार्त्तः शीते प्रयोजयेत् ॥१३७॥
सर्ववातविकाराणां तैलान्यन्यान्यतः शृणु ।
चतुष्प्रयोगाण्यायुष्यबलवर्णकराणि च ॥ १३८॥
रजः शुक्रप्रदोषघ्नान्यपत्यजननानि च ।
निरत्ययानि सिद्धानि सर्वदोषहराणि च ॥१३९॥

सहाचरतुलायाश्च रसे तैलाढ़कं पचेत्।
मूलकल्काद्दशपलं पक्वा क्षीरे चतुर्गुणम् ॥१४०॥
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं भिषक्।
विनीय दापयेत्तद्वातव्याधिषु योजयेत् ॥१४१॥
श्वदंष्ट्रास्वरसप्रस्थौ द्वौ समौ पयसा सह।
षट्पलं शृङ्गवेरस्य गुड़स्याष्टपलं तथा ॥ १४२॥
तैलप्रस्थं विपक्वं तैर्दद्यात् सर्वानिलार्त्तिषु।
जीर्णे तैले च दुग्धेन पेयाकल्पः प्रशस्यते ॥१४३॥
बलाशतं गुडूच्याश्च पादं रास्नाष्टभागिकम्।
जलाढ़कशते पक्वा दशभागस्थिते रसे ॥ १४४ ॥
दधिमस्त्विक्षुनिर्य्यासशुक्तैस्तैलाढ़कं समैः।
पचेत् साजपयोऽर्द्धांशैः कल्कैरेभिः पलोन्मितैः ॥१४५॥
शटीसरलदार्व्वेलामञ्जिष्ठागुरुचन्दनैः।
पद्मकातिविषामुस्तसूर्पपर्णीहरेणुभिः ॥१४६॥
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः।
पलाशरसकस्तूरीनलिकाजातिकोषकैः ॥१४७॥
स्पृक्काकुङ्कुमशैलेयजातीकटुफलाम्बुभिः।
त्वक्कुन्दुरुककर्पूरतुरुष्कश्रीनिवासकैः ॥१४८॥
लवङ्गनखकक्कोलकुष्ठमांसीप्रियङ्गुभिः।
स्थौणेयतगरध्यामवचामदनपल्लवैः ॥१४९॥
सनागकेशरैः सिद्धे क्षिपेच्चात्रावतारिते।
पत्रकल्कं ततः पूतं विधिना तत् प्रयोजयेत् ॥१५०॥
श्वासं कासं ज्वरं हिक्कां छर्द्दिं गुल्मान् क्षतं क्षयम्।
प्लीहशोषावपस्मारमलक्ष्मीञ्च प्रणाशयेत् ॥१५१॥
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम्।
अग्निवेशाय गुरुणा कृष्णात्रेयेण भाषितम् ॥ १५२ ॥
इति बलातैलम्।

तुलाः पञ्च गुडूच्यास्तु द्रोणेष्वष्टस्वपां पचेत् ।
पादशेषे समं क्षीरं तैलस्य द्राढ़कं पचेत् ॥१५३॥
एलामांसीनतोशीरसारिवाकुष्ठचन्दनैः ।
बलातामलकीमेदाशतपुष्पर्द्धिजीवकैः ॥१५४॥
काकोलीक्षीरकाकोलीश्वावगन्धातिबलानखैः ।
महाश्रावणिजीवन्तीविदारीकपिकच्छुभिः १५५॥
शतावरीमहामेदाकर्कटाख्याहरेणुभिः ।
वचागोक्षुरकैरण्डरास्नाकालासहाचरैः ॥१५६॥
वीराव्रणकिसुस्त्वक्पत्रर्षभकवालकैः ।
मञ्जिलाकुङ्कुमस्पृक्काविदग्धाहैश्च कार्षिकैः ॥१५७॥
मञ्जिष्ठायाश्चिकर्षेण मधूकाष्टपलेन च ।
कल्कैस्तत् क्षीणवीर्याग्निबलसंमूढ़चेतसः ॥१५८॥
उन्मादारत्यपस्मारैरार्त्तांश्च प्रकृतिं नयेत् ।
वातव्याधिहरं श्रेष्ठं तैलाग्र्यममृताह्वयम् ।
आत्रेयेण गुरुणा भाषितं वैद्यपूजितम् ॥ १५९ ॥

इति अमृताद्यं तैलम् ।

रास्ना सहस्रनिर्य्यूहे तैलद्रोणं विपाचयेत् ।
गन्धैर्हैमवतैः पिष्टैरेलाद्यैश्चानिलार्त्तिनुत् ॥१६०॥

इति रास्नातैलम् ।

एष कल्पस्तु बलयोः प्रसारण्यश्वगन्धयोः ।
कल्पोऽयमष्टगन्धायां प्रसारण्यां बलाद्वये ।
क्वाथकल्कपयोभिर्वा बलादीनां पचेत् पृथक् ॥१६१॥

* इति बला-नागबला-प्रसारणी-अश्वगन्धातैलानि । *

मूलकस्वरसं क्षीरं तैलं दध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः ॥१६२॥
पिप्पल्यतिविषारास्नाचविकागुरुशिग्रुकैः ।

भल्लातकवचाकुष्ठश्वदंष्ट्राविश्वभेषजैः ॥१६३॥
पुष्कराह्वशटीविल्वशताह्वानतदारुभिः।
तत् सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥१६४॥

इति मूलकाद्यतैलम्।

ह्यमूलगुडूच्योश्च हिमतस्य शतस्य च।
अश्वगन्धाचित्रकयोः क्वाथे तैलाढ़कं पचेत् ॥१६५॥
सक्षीरं वायुना भग्ने दद्याज्जर्जरिते तथा।
प्राक् तैलाद्यापसिद्धस्य स्यादेतद्द्विगुणोत्तरम् ॥१६६॥

इति ह्यमूलादि सकल्कह्यमूलादि च तैलम्।

रास्नाशिरीषयष्ट्याह्वशठीसह्वचरासनाः।
स्योणाकदारुसम्पाका ह्यगन्धात्रिकण्टकाः ॥१६७॥
एषां दशपलान् भागान् कषायमुपकल्पयेत्।
ततस्तेन कषायेण सर्वगन्धैश्च कार्षिकैः ॥१६८॥
दध्यारनालमाषाम्बुमूलकेक्षुरसैः शुभैः।
पृथक् प्रस्थोन्मितैः साद्धं तैलप्रस्थं विपाचयेत् ॥१६९॥
शीघ्रमूत्रपुरीषासकासमारुतरोगनुत्।
एतन्मूलकतैलाख्यं वर्णायुर्बलवर्द्धनम् ॥१७०॥

इति रास्नातैलम्।

यवकोलकुलत्थानां मत्स्यानां शिग्रुविल्वयोः।
रसेन मूलकानाञ्च तैलं दधि पयोऽन्वितम् ॥१७१॥
साधयित्वा भिषग्दद्यात् सर्ववातामयापहम्।
लशुनस्वरसे सिद्धं तैलमेभिश्च वातनुत् ॥१७२॥
तैलान्येतान्यृतुस्नातामङ्गनां पाययेत च।
पीत्वान्यतममेषां हि वन्ध्यापि जनयेत् सुतम् ॥१७३॥
यच्च शीतज्वरे तैलमगुर्वाद्यमुदाहृतम्।
अनेकशतशस्तच्च सिद्धं स्याद्वातरोगनुत् ॥१७४॥

वक्ष्यन्ते यानि तैलानि वातशोणितकेऽपि च।
तानि चानिलशान्त्यर्थं सिद्धिकामः प्रयोजयेत् ॥१७५॥
नास्ति तैलात् परं किञ्चिदौषधं मारुतापहम्।
व्यवाय्युष्णगुरुस्नेहात् संस्कारात् बलवत्तरम् ॥१७६॥
गणैर्वातहरैस्तस्माच्छतशोऽथ सहस्रशः।
सिद्धं क्षिप्रतरं हन्ति सूक्ष्ममार्गस्थितान् गदान् ॥१७७॥
क्रिया साधारणी सर्वा संसृष्टे चापि शस्यते।
वातपित्तादिभिः स्रोतःस्वावृतेषु विशेषतः ॥१७८॥
पित्तावृते विशेषेण शीतामुष्णां तथा क्रियाम्।
व्यत्यासात् कारयेत् सर्पिर्जीवनीयञ्च शस्यते ॥१७९॥
धन्वमांसं यवाः शालिर्यापनाः क्षीरवस्तयः।
विरेकः क्षीरपानञ्च पञ्चमूलीबलान्वितम् ॥१८०॥
मधुयष्टिबलातैलघृतक्षीरैश्च सेचनम्।
पञ्चमूलकषायेण कुर्य्याद्वा शीतवारिणा ॥१८१॥
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः।
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥१८२॥
जीर्णं सर्पिस्तथा तैलं तिलसर्षपजं शुभम्।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥१८३॥
आमाशयगतं मत्वा कफं वमनमाचरेत्।
पक्वाशये विरेकन्तु पित्ते सर्वगते तथा ॥१८४॥
स्वेदैर्विष्यन्दितः श्लेष्मा यदा पक्वाशयाश्रितः।
पित्तं वा दर्शयेल्लिङ्गं वस्तिभिस्तौ विनिर्हरेत् ॥१८५॥
श्लेष्मणाऽनुगतं वातमुष्णैर्गोमूत्रसंयुतैः।
निरूहैः पित्तसंसृष्टं निर्हरेत् क्षीरसंयुतैः ॥१८६॥
मधुरौषधसिद्धैश्च तैलैस्तमनुवासयेत्।
शिरोगते तु सकफे धूमनस्यादि कारयेत् ॥१८७॥

द्रुते पित्ते कफे यः स्यादुरःस्रोतोऽनुगोऽनिलः।
स शेषः स्यात् क्रिया तत्र कार्य्या केवलवातिकी ॥१८८॥
शोणितेनावृते कुर्य्याद्वातशोणितकीं क्रियाम्।
प्रमेहवातमेदोघ्नीमामवाते प्रयोजयेत् ॥१८९॥
स्वेदाभ्यङ्गा रसाः क्षीरं स्नेहा मांसावृते मताः।
मज्जास्नेहोऽस्थिमज्जस्थे पूर्ववद्रेतसावृते ॥१९०॥
अन्नावृते तु वमनं पाचनं दीपनं लघु।
मूत्रलानि तु मूत्रस्थे स्वेदाः सोत्तरवस्तयः ॥१९१॥
एरण्डतैलं वर्चःस्थे स्निग्धोदावर्त्तवत् क्रिया।
स्वस्थानस्थो बली दोषः प्रोक्तैः स्वैरौषधैर्जयेत् ॥१९२॥
वमनैर्वा विरेकैर्वा वस्तिभिः शमनेन वा।
इत्युक्तमावृते वाते पित्तादिभिर्यथायथम्।
मारुतानां हि पञ्चानामन्योन्यावरणे शृणु ॥१९३॥
लिङ्गं व्याससमासाभ्यामुच्यमानं मयाऽनघ।
प्राणो ह्यपोत्व्यपानादीन् प्राणं घ्नन्ति तेऽपि च।
उदानाद्यास्तथान्योऽन्यं सर्व एव यथाक्रमम् ॥१९४॥
विंशतिर्वरणान्येतान्युल्वणानां परस्परम्।
मारुतानां हि पञ्चानां तानि सम्यक् प्रतर्कयेत् ॥१९५॥
सर्वेन्द्रियाणां शून्यत्वं ज्ञात्वा स्मृतिबलक्षयम्।
व्याने प्राणावृते लिङ्गं कर्म तत्रोर्ध्वजत्रुकम् ॥१९६॥
स्वेदोऽत्यर्थं लोमहर्षस्त्वग्दोषः सुप्तगात्रता।
प्राणे व्यानावृते तत्र स्नेहयुक्तं विरेचनम् ॥१९७॥
प्राणावृते समाने स्युर्जडगद्गदमूकताः।
चतुष्प्रयोगाः शस्यन्ते स्नेहास्तत्र सयापनाः ॥१९८॥
समानेनावृतेऽपाने ग्रहणीपार्श्ववेदना।
शूले चामाशये तत्र दीपनं सर्पिरिष्यते ॥१९९॥

शिरोग्रहः प्रतिश्यायो निश्वासोच्छ्वाससंग्रहः।
हृद्रोगो मुखशोषश्चाप्युदाने प्राणसंवृते ॥२००॥
ततोर्द्ध्वभागिकं कर्म्म कार्य्यमाश्वासनं तथा।
कर्म्मौजोबलवर्णानां नाशो मृत्युरथापि वा।
उदानेनावृते प्राणे तं शनैः शीतवारिणा ॥२०१॥
सिञ्चेदाश्वासयेच्चैव सुखच्चैवोपपादयेत्।
ऊर्द्धगेनावृतेऽपाने च्छर्द्दिश्वासादयो गदाः।
स्युर्वाते तत्र वस्त्यादिभोज्यच्चैवानुलोमनम् ॥२०२॥
मोहोऽल्पोऽग्निरतीसार ऊर्द्धगेऽपानसंवृते।
वाते स्यात् वमनं तत्र दीपनं ग्राहि चाशनम् ॥२०३॥
वम्याध्मानमुदावर्त्तगुल्मार्त्तिपरिकर्त्तिकाः।
लिङ्गं व्यानावृतेऽपाने तं स्निग्धैरनुलोमयेत् ॥२०४॥
अपानेनावृते व्याने भवेद्विण्मूत्ररेतसाम्।
अतिप्रवृत्तिस्तत्रापि सर्वं संग्रहणं मतम् ॥२०५॥
मूर्च्छा तन्द्रा प्रलापोऽङ्गसादोऽग्न्योजोबलक्षयः।
समानेनावृते व्याने व्यायामो लघुभोजनम् ॥२०६॥
स्तब्धताल्पाग्निताखेदचेष्टाहानिर्निमीलनम्।
उदानेनावृते व्याने तत्र पथ्यं मितं लघु ॥२०७॥
पञ्चान्योन्यावृतानेवं वातान् बुध्येत लक्षणैः।
एषां स्वकर्म्मणां हानिर्वृद्धिर्वावरणे मता ॥२०८॥
यथास्थूलं समुद्दिष्टमेतदावरणं पृथक्।
सलिङ्गभेषजं सम्यग् शृणु त्वं बुद्धिवर्द्धये ॥२०९॥
स्थानान्यवेक्ष्य वातानां वृद्धिं हानिञ्च कर्म्मणाम्।
द्वादशावरणान्यन्यान्यभिलक्ष्य भिषग्जितम् ॥२१०॥
कुर्य्यादभ्यञ्जनस्नेहपानवस्त्यादि सर्वशः।
क्रममुष्णमनुष्णं वा व्यत्यासादवचारयेत् ॥२११॥

उदाने योजयेदूर्द्ध्वमपानञ्चानुलोमयेत्।
समानं शमयेच्चैव त्रिधा व्यानन्तु योजयेत् ॥२१२॥
प्राणो रक्ष्यश्चतुर्भ्योऽपि स्थाने ह्यस्य स्थितिर्ध्रुवा।
स्वं स्थानं गमयेदेवं वृतानेतान् विमार्गगान् ॥२१३॥
मूर्च्छा दाहो भ्रमः शूलं विदाहः शीतकामिता।
छर्दनञ्च विदग्धस्य प्राणे पित्तसमावृते ॥२१४॥
ष्ठीवनं क्षवथूद्गारनिश्वासोच्छ्वाससंग्रहः।
प्राणे कफावृते रूपाण्यरुचिश्छर्दिरेव च ॥२१५॥
मूर्च्छाद्यानि च रूपाणि दाहो नाभ्युरसोः क्लमः।
ओजोभ्रंशश्च सादश्चाप्युदाने पित्तसंवृते ॥२१६॥
आवृते श्लेष्मणोदाने वैवर्ण्यं वाक्स्वरग्रहः।
दौर्बल्यं गुरुगात्रत्वमरुचिश्चोपजायते ॥२१७॥
अतिस्वेदस्तृषा दाहो मूर्च्छा चारुचिरेव च।
पित्तावृते समाने स्यादुपघातस्तथोष्मणः ॥२१८॥
अस्वेदो वह्निमान्द्यञ्च लोमहर्षस्तथैव च।
कफावृते समाने स्यात् गात्राणाञ्चातिशीतता ॥२१९॥
व्याने पित्तावृते तु स्याद्दाहः सर्वाङ्गगः क्लमः।
गात्रविक्षेपसङ्गश्च ससन्तापः सवेदनः ॥२२०॥
गुरुता सर्वगात्राणां सर्वसन्ध्यस्थिजा रुजाः।
व्याने कफावृते लिङ्गं गतिसङ्गस्तथाधिकः ॥२२१॥
हारिद्रमूत्रवर्चस्त्वं तापश्च गुदमेढ्रयोः।
लिङ्गं पित्तावृतेऽपाने रजसः संप्रवर्त्तनम् ॥२२२॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्त्तनम्।
श्लेष्मणा सवृतेऽपाने कफमेहस्य चागमः ॥२२३॥
लक्षणानान्तु मिश्रत्वं पित्तस्य च कफस्य च।
उपलक्ष्य भिषग्विद्वान् मिश्रमावरणं वदेत् ॥२२४॥

यद्यस्य वायोर्निर्दिष्टं स्थानं तत्रेतरौ स्मृतौ ।
दोषौ बहुविधान् व्याधीन् दर्शयेतां यथा निजान् ॥२२
आवृतं श्लेष्मपित्ताभ्यां प्राणञ्चोदानमेव च ।
गरीयस्त्वेन पश्यन्ति भिषजः शास्त्रचक्षुषः ॥२२६॥
विशेषाज्जीवितं प्राणे उदाने संश्रितं बलम् ।
स्यात् तयोः पीड़नाद्धानिरायुषश्च बलस्य च ॥२२७॥
सर्वेऽप्येते परिज्ञेयाः परिसंवत्सरास्तथा ।
उपेक्षणादसाध्याः स्युरथवा दुरुपक्रमाः ॥२२८॥
हृद्रोगो विद्रधिः प्लीहा गुल्मातीसार एव च ।
भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात् ॥२२९॥
तस्मादावरणं वैद्यः पवनस्योपलक्षयेत् ।
पञ्चात्मकस्य वातेन पित्तेन श्लेष्मणापि वा ॥२३०॥
भिषग्जितैरतः सम्यगुपलभ्य समाचरेत् ।
अनभिष्यन्दिभिः स्निग्धैः स्रोतसां शुद्धिकारिभिः ॥२३१॥
कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ।
सर्वस्थानावृतेऽप्याशु तत् कार्यं मारुते शुभम् ॥२३२॥
यापना वस्तयः प्रायो मधुराः सानुवासनाः ।
प्रसमीक्ष्य बलाधिक्यं मृदु वा स्रंसनं हितम् ॥२३३॥
रसायनानां सर्वेषामुपयोगः प्रशस्यते ।
शैलस्य जतुनोऽत्यर्थं पयसा गुग्गुलोस्तथा ॥२३४॥
लेहं वा भार्गवप्रोक्तमभ्यस्येत् क्षीरभुक् नरः ।
अभयामलकीयोक्तानेकादश मिताशनः ॥२३५॥
अपानेनावृते सर्वं दीपनं ग्राहि भेषजम् ।
वातानुलोमनं यच्च पक्वाशयविशोधनम् ॥२३६॥
इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितम् ।
प्राणादीनां भिषक् कुर्याद्वितर्क्य स्वयमेव तत् ॥२३७॥

पित्तावृते तु पित्तघ्नैर्मारुतस्याविरोधिभिः।
कफावृते कफघ्नैस्तु मारुतस्यानुलोमनैः ॥२३८॥
लोके वाय्वर्कसोमानां दुर्विज्ञेया यथा गतिः।
तथा शरीरे वातस्य पित्तस्य च कफस्य च ॥२३९॥
चयं वृद्धिं समत्वञ्च तथैवावरणं भिषक्।
विज्ञाय पवनादीनां न प्रमुह्यति कर्मसु ॥२४०॥

तत्र श्लोकौ।

प्राणात्मनः स्थानवशाच्छरीरे स्थानानि कर्माणि च देहधातोः
प्रकोपहेतुः कुपितश्च रोगान् स्थानेषु चान्येषु वृतोऽवृतश्च ॥२४१॥
प्राणेश्वरः प्राणभृतां करोति क्रिया च तेषामखिला निरुक्ता
तान् देशसात्म्यर्त्तुबलान्यवेक्ष्य प्रयोजयेच्छास्त्रमतानुसारी॥२४२॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते
चिकित्सितस्थाने वातव्याधिचिकित्सित
नामाष्टाविंशोऽध्यायः।

---

## एकोनत्रिंशोऽध्यायः।

### वातशोणितचिकित्सितम्।

हुताग्निहोत्रमासीनमृषिमध्ये पुनर्वसुम्।
पृष्टवान् गुरुमेकाग्रमग्निवेशोऽग्निवर्चसम् ॥१॥
अग्निमारुततुल्यस्य संसर्गस्यानिलास्रजोः।
हेतुलक्षणभैषज्यान्यथार्थं गुरुरब्रवीत् ॥२॥
लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥३॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥४॥

विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ॥५॥
अचंक्रमणशीलानां कुप्यते वातशोणितम् ।
अभिघातादशुद्ध्या च प्रदुष्टे शोणिते नृणाम् ॥६॥
कषायकटुतिक्ताल्परूक्षाहारादभोजनात् ।
हयोष्ट्रखरयानाम्बुक्रीडाप्लवनलङ्घनात् ॥७॥
उष्णे चात्यध्वगमनाद्व्यवायाद्वेगनिग्रहात् ।
वायुर्विवृद्धो वृद्धेन रक्तेनावारितः पथि ॥८॥
कृत्स्नं संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम् ।
खुडं वातबलासाख्यमाढ्यवातञ्च नामभिः ॥९॥
तस्य स्थानं करौ पादावङ्गुल्यः सर्वसन्धयः ।
कृत्वादौ हस्तपादेषु मूलं देहे विधावति ॥१०॥
सौक्ष्म्यात् सर्वसरत्वाच्च देहं गच्छन् शिरायनैः ।
पर्वस्वभिहतं क्षुब्धं वक्रत्वादवतिष्ठते ॥११॥
स्थितं पित्तादिसंसृष्टं तास्ताः सृजति वेदनाः ।
करोति दुःखं तेष्वेव तस्मात् प्रायेण सन्धिषु ।
भवन्ति वेदनास्तास्ता अत्यर्थं दुःसहा नृणाम् ॥१२॥
स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् ।
सन्धिशैथिल्यमालस्यं सदनं पिडकोद्गमः ॥१३॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥१४॥
कण्डूः सन्धिषु रुग् भूत्वा भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम् ॥१५॥
उत्तानमथ गम्भीरं द्विविधं तत् प्रचक्षते ।
त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम् ॥१६॥
कण्ड्वादिसंयुतोत्ताने त्वक् ताम्रा श्यावलोहिता ।

अन्विता श्यावरक्ता त्वग् बाह्ये ताम्रा तथेष्यते ॥१७॥
गम्भीरे श्वयथुः स्तब्धः कठिनोऽन्तर्भृशार्त्तिमान्।
श्यावस्ताम्रोऽथवा दाहतोदस्फुरणपाकवान् ॥१८॥
रुग्विदाहान्वितोऽभीक्ष्णं वायुः सन्ध्यस्थिमज्जसु।
छिन्दन्निव चरत्यन्तर्वक्रीकुर्वंश्च वेगवान् ॥१९॥
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन्।
सर्वैर्लिङ्गैश्च विज्ञेयं वातासृगुभयाश्रयम् ॥२०॥
तत्र वातेऽधिके वा स्याद्रक्ते पित्ते कफेऽपि वा।
संसृष्टेषु समस्तेषु यच्च तच्छृणु लक्षणम् ॥२१॥
विशेषतः शिरायामशूलस्फुरणतोदनम्।
शोथस्य कार्ष्ण्यं रौक्ष्यञ्च श्यावता वृद्धिहानयः ॥२२॥
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक्।
कुञ्चनस्तम्भने शीतप्रद्वेषश्चानिलेऽधिके ॥२३॥
श्वयथुर्भृशरुक् तोदस्ताम्रश्चिमिचिमायते।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदान्वितोऽसृजि ॥२४॥
विदाहो वेदना मूर्च्छा स्वेदस्तृष्णा मदो भ्रमः।
रागः पाकश्च भेदश्च शोषो चाङ्गानि पैत्तिके ॥२५॥
स्तैमित्यं गौरवं स्नेहः सुप्तिर्मन्दाऽरुचिः कफे।
हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वं त्रिदोषजम् ॥२६॥
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम्।
त्रिदोषजमसाध्यं स्याद् यस्य च स्युरुपद्रवाः ॥२७॥
अस्वप्नारोचकाश्वासमांसकोथशिरोग्रहाः।
मूर्च्छा च मदरुक्तृष्णा ज्वरमोहप्रवेपकाः ॥२८॥
हिक्कापाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः।
अङ्गुलीवक्रतास्फोटा दाहमर्मग्रहार्बुदाः ॥२९॥
एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वापि यत्।

संप्रस्रावि विवर्णञ्च स्तब्धमर्वुदकञ्च यत् ॥३०॥
वर्जयेच्चैव सङ्कोचकरमिन्द्रियतापनम्।
अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् ॥३१॥
रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः।
निविश्यान्योन्यमावार्य्य वेदनाभिर्हरेदसून् ॥३२॥
तत्र मुञ्चेदसृक् शृङ्ग जलौकःसूच्यलावुभिः।
प्रच्छनैर्वा शिराभिर्वा यथादोषं यथाबलम् ॥३३॥
रुग्दाहशूलतोदार्त्तादसृक् स्राव्यं जलौकसा।
शृङ्गैस्तु वै हरेत् सुप्तिकण्डूचिमिचिमायनात् ॥३४॥
देशाद्देशं व्रजत् स्राव्यं शिराभिः प्रच्छनेन वा।
अङ्गग्लानौ न तु स्राव्यं रूक्षे वातोत्तरश्च यत् ॥३५॥
गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायुशिरामयान्।
ग्लानिञ्चापि समङ्कोचां कुर्य्याद्वायुरसृक्क्षयात् ॥३६॥
खाञ्जादीन् वातरोगांश्च मृत्युं वात्यपसेचनात्।
कुर्य्यात् तस्मात् प्रमाणेन स्निग्धादस्रं विनिर्हरेत् ॥३७॥
विरेच्यः स्नेहयित्वादौ स्नेहयुक्तैर्विरेचनैः।
रूक्षैर्वा मृदुभिः शस्तं असकृद्वस्तिकर्म च ॥३८॥
सेकाभ्यङ्गप्रदेहान्नस्नेहाः प्रायोऽविदाहिनः।
वातरक्ते प्रशस्यन्ते विशेषन्तु निबोध मे ॥३९॥
वाह्यमालेपनाभ्यङ्गपरिषेकोपनाहनैः।
विरेकास्थापनस्नेहपानैर्गम्भीरमाचरेत् ॥४०॥
सर्पिस्तैलवसामज्जापानाभ्यञ्जनवस्तिभिः।
सुखोष्णैरुपनाहैश्च वातोत्तरमुपाचरेत् ॥४१॥
विरेचनैर्घृतक्षीरपानैः सेकैः सवस्तिभिः।
शीतैर्निर्वापणैश्चापि रक्तपित्तोत्तरं जयेत् ॥४२॥
वमनं मृदुनाऽल्पशः स्नेहसेकादिम् लङ्घन।

क्षौमलेपाय शस्यन्ते वातरक्ते कफोत्तरे ॥४३॥
कफवातोत्तरे शीतैः प्रलिप्ते वातशोणिते ।
विदाहः शोथरुक् कण्डुविवृद्धिः स्तम्भनाद्भवेत् ॥४४॥
वातपित्तोत्तरे दाहः क्लेदोऽवदारणं भवेत् ।
उष्णैस्तस्माद्विपर्य्योपबलं बुद्धाचरेत् क्रियाम् ॥४५॥
दिवास्वप्नं ससन्तापं व्यायामं मैथुनं तथा ।
कट्वुष्णं गुर्वभिष्यन्दि लवणाम्लञ्च वर्जयेत् ॥४६॥
पुराणयवगोधूमनीवाराः शालिषष्टिकाः ।
भोजनार्थे रसार्थे वा विष्किरप्रतुदा हिताः ॥४७॥
आढक्यश्चणका मुद्गा मसूराः समुकुष्ठकाः ।
यूषार्थे बहुसर्पिष्काः प्रशस्ता वातशोणिते ॥४८॥
सुनिषण्णकवेत्राग्रकाकमाचीशतावरीः ।
वास्तुकोपोदिकाशाकं शाकं सौवर्चलं तथा ॥४९॥
घृतमांसरसे भृष्टं शाकसात्म्याय दापयेत् ।
व्यञ्जनार्थं तथा गव्यं माहिषाजं पयो हितम् ॥५०॥
इति संक्षेपतः प्रोक्तं वातरक्तचिकित्सितम् ।
एतदेव पुनः सर्वं व्यासतः संप्रवक्ष्यते ॥५१॥
श्रावणीक्षीरकाकोलीजीवकर्षभकैः समैः ।
सिद्धं समधुकैः सर्पिः सक्षीरं वातरक्तनुत् ॥५२॥
बलामतिबलां मेदामात्मगुप्तां शतावरीम् ।
काकोलीं क्षीरकाकोलीं रास्नामृद्धिञ्च पेषयेत् ॥५३॥
घृतं चतुर्गुणक्षीरं तैः सिद्धं वातरक्तनुत् ।
हृत्पाण्डुरोगवीसर्पकामलाज्वरनाशनम् ॥५४॥
तामलक्या द्विकाकोल्याः पिप्पलीवायमाणयोः ।
कशेरुकाकपावेण कल्कैरेभिः पचेद्घृतम् ॥५५॥
दत्त्वा परूषकद्राक्षाकाश्मर्य्येक्षुरसान् समान् ।

पृथग्विदार्य्याश्च रसं तथा क्षीरं चतुर्गुणम् ॥५६॥
एतत् प्रायोगिकं सर्पिः पारूषकमिति स्मृतम्।
वातरक्ते क्षते क्षीणे वीसर्पे पैत्तिके ज्वरे ॥५७॥

इति पारूषकं घृतम्।

द्वे पञ्चमूले वर्षाभूमेरण्डं सपुनर्नवम्।
मुद्गपर्णीं अश्वगन्धां माषपर्णीं शतावरीम् ॥५८॥
शङ्खपुष्पीमवाक्पुष्पीं रास्नामतिबलां बलाम्।
पृथग्द्विपलिकं कृत्वा जलद्रोणे विपाचयेत् ॥५९॥
पादशेषे समं क्षीरं धात्रीक्षुच्छागलान् रसान्।
घृताढ़केन संयोज्य शनैर्मृद्वग्निना पचेत् ॥६०॥
कल्कानावाप्य मेदे द्वे काश्मर्य्यं फलमुत्पलम्।
त्वक्क्षीरीं पिप्पलीं द्राक्षां पद्मबीजं पुनर्नवाम् ॥६१॥
नागरं क्षीरकाकोली समङ्गां बृहतीद्वयम्।
मौरां शृङ्गाटकं भव्यमुद्गमालं निकोचकम् ॥६२॥
बदराक्षोटवातामसुञ्जाताभिषुकांस्तथा।
एतैर्घृताढ़के सिद्धे क्षौद्रं शीते प्रदापयेत् ॥६३॥
सम्यक् सिद्धञ्च विज्ञाय सुगुप्तं सन्निधापयेत्।
क्षतरक्षाविधिं तत्र प्राशयेदवस्थितम् ॥६४॥
पाण्डुरोगं ज्वरं हिक्कां स्वरभेदं भगन्दरम्।
पार्श्वशूलं क्षयं कासं प्लीहानं वातशोणितम् ॥६५॥
क्षतशोषमपस्मारमश्मरीं शर्करास्तथा।
सर्वाङ्गैकाङ्गरोगांश्च मूत्रसङ्गञ्च नाशयेत् ॥६६॥
बलवर्णकरं धन्यं वलीपलितनाशनम्।
जीवनीयमिदं सर्पिर्वृष्यं वन्ध्यासुतप्रदम्।
अग्निवेशाय गुरुणा कृष्णात्रेयेण भाषितम् ॥६७॥

इति द्विपञ्चमूलादिघृतम्।

द्राक्षामधुकतोयाभ्यां सिद्धं वा ससितोपलम् ॥६८॥

इति द्राक्षादिघृतम्।

पिबेद्घृतं तथा क्षीरं गुडूचीस्वरसे शृतम् ॥६९॥

इति गुडूच्यादिघृतम्।

जीवकर्षभकौ मेदामृष्यप्रोक्तां शतावरीम्।
मधुकं मधुपर्णीञ्च काकोलीद्वयमेव च ॥७०॥
मुद्गमाषाख्यपर्णिन्यौ दशमूलं पुनर्नवाम्।
बलामृताविदार्य्यश्च साश्वगन्धाश्मभेदकाः ॥७१॥
एषां कषायकल्काभ्यां सर्पिस्तैलञ्च साधयेत्।
लाभतश्च वसामज्जधन्वप्रतुदवैष्किरान् ॥७२॥
चतुर्गुणेन पयसा तत् सिद्धं वातशोणितम्।
सर्व्वदेहाश्रितं हन्ति व्याधीन् घोरांश्च वातजान् ॥७३॥
स्थिराश्वदंष्ट्रा बृहती शारिवा सशतावरी।
काश्मर्य्याश्चात्मगुप्ता च दृश्चीरं द्वे बले तथा ॥७४॥
एषां क्वाथे चतुःक्षीरे पृथक् तैलं पृथक् घृतम्।
मेदाशतावरीयष्टिजीवन्तीजीवकर्षभैः ॥७५॥
पक्वा मात्रा ततः क्षीरत्रिगुणा त्वर्द्धशर्करा।
खजेन मथिता पेया वातरक्ते त्रिदोषजे ॥७६॥
तैलं पयः शर्कराञ्च पाययेद्वा सुमूर्च्छिताम्।
सर्पिस्तैलसिताक्षौद्रैर्मिश्रं वापि पिबेत् पयः ७७॥
अंशुमत्या शृतः प्रस्थः पयसः ससितोपलः।
पाने प्रशस्यते तद्वत् पिप्पलीनागरैः शृतः ॥७८॥
बलाशतावरीरास्नादशमूलैः सपीलुभिः।
श्यामैरण्डस्थिराभिश्च वातार्त्तिघ्नं शृतं पयः ॥७९॥
धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम्।
पिबेद्वा सत्रिवृच्चूर्णं पित्तरक्तावृतानिलः ॥८०॥

क्षीरेणैरण्डतैलं वा प्रयोगेण पिबेन्नरः।
बहुदोषो विरेकार्थं जीर्णे क्षीरौदनाशनः ॥८१॥
कषायमभयानां वा घृतभृष्टं पिबेन्नरः।
क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा ॥८२॥
काश्मर्य्यं त्रिवृतां द्राक्षां चूर्णं द्राक्षारसेन वा।
काश्मर्य्यं त्रिवृतां द्राक्षां त्रिफलां सपरूषकाम् ॥८३॥
शृतां पिबेद्विरेकाय लवणक्षौद्रसंयुताम्।
त्रिफलायाः कषायं वा पिबेत् क्षौद्रेण संयुतम् ॥८४॥
धात्रीहरिद्रमुस्तानां कषायं वा कफाधिके।
योगैश्च कल्पविहितैरसकृत् तं विरेचयेत् ॥८५॥
मृदुभिः स्नेहसंयुक्तैर्ज्ञात्वा वातं मलावृतम्।
निर्हरेद्वा मलं तस्य सघृतैः क्षीरवस्तिभिः ॥८६॥
न हि वस्तिसमं किञ्चिद्वातरक्तचिकित्सितम्।
वस्तिवंक्षणपार्श्वोरुपर्वास्थिजठरार्त्तिषु ॥८७॥
उदावर्त्ते च शस्यन्ते निरूहाः सानुवासनाः।
दद्यात् तैलानि चेमानि वस्तिकर्मणि बुद्धिमान् ॥८८॥
नस्याभ्यञ्जनसेके च दाहशूलोपशान्तये।
मधुयष्ट्यास्तुलायास्तु कषाये पादशेषिते ॥८९॥
तैलाढकं समक्षीरं पचेत् कल्कैः पलोन्मितैः।
शतपुष्पावरीमूर्वापयस्यागुरुचन्दनैः ॥९०॥
स्थिराहंसपदीमांसीद्विमेदामधुपर्णिभिः।
काकोलीक्षीरकाकोलीतामलक्यृद्धिपद्मकैः।
जीवकर्षभजीवन्तीत्वक्पत्रनखवालकैः ॥९१॥
प्रपौण्डरीकमञ्जिष्ठासारिवेन्द्रीवितुन्नकैः।
चतुःप्रयोगात् तद्धन्ति तैलं मारुतशोणितम् ॥९२॥
सोपद्रवं साङ्गशूलं सर्वगात्रानुगं तथा।

वातासृक्पित्तदाहार्त्तिज्वरघ्नं बलवर्द्धनम् ॥८३॥
मधुकस्य शतं द्राक्षा खर्ज्जराणि परूषकम्।
मधुकौदनपाकौ च प्रस्थं मुञ्जातकस्य च ॥८४॥
काश्मर्य्याढ़कमित्येतच्चतुर्द्रोणे पचेदपाम्।
शेषेऽष्टभागे पूते च तस्मिन् तैलाढ़कं पचेत् ॥८५॥
तथामलककाश्मर्य्यविदारीक्षुरसैः समैः।
चतुर्द्रोणेन पयसा कल्कं दत्त्वा पलोन्मितम् ॥८६॥
कदम्बामलकाक्षोटपद्मबीजकशेरुकम्।
शृङ्गाटकं शृङ्गवेरं लवणं पिप्पलीं सिताम् ॥८७॥
जीवनीयैश्च संसिद्धं चौद्रप्रस्थेन संसृजेत्।
नस्याभ्यञ्जनपानेषु वस्तौ चापि नियोजयेत् ॥८८॥
वातव्याधिषु सर्व्वेषु मन्यास्तम्भे हनुग्रहे।
सर्व्वाङ्गैकाङ्गवाते च चतक्षीणे चतज्वरे ॥८९॥
सुकुमारकमित्येतत् वातासामयनाशनम्।
स्थिरवर्णकरं तैलमारोग्यबलपुष्टिदम् ॥१००॥

इति सुकुमारकतैलम्।

गुडूचीं मधुकं कुष्ठं पञ्चमूलं पुनर्नवाम्।
रास्नामेरण्डमूलञ्च जीवनीयानि लाभतः ॥१०१॥
पलानां शतकैर्भागैर्बलापञ्चशतं तथा।
कोलविल्वं यवान् माषान् कुलत्थांश्चाढकोन्मितान् ॥१०२॥
काश्मर्य्याणां सुशुष्काणां द्रोणं द्रोणशतेऽम्भसि।
साधयेज्जर्जरं धौतं चतुर्द्रोणञ्च शेषयेत् ॥१०३॥
तैलद्रोणं पचेत् तेन दत्त्वा पञ्चगुणं पयः।
पिष्ट्वा त्रिपलिकञ्चैवं चन्दनोशीरकेशरान् ॥१०४॥
पत्रैलागुरुकुष्ठानि तगरं मधुयष्टिकाम्।
मञ्जिष्ठाष्टपलञ्चैव तत्सिद्धं सार्व्वयौगिकम् ॥१०५॥

वातरक्ते क्षते क्षीणे भारार्त्ते क्षीणरेतसि।
वेपनाक्षिप्तभग्नानां सर्वाङ्गैकाङ्गरोगिणाम् ॥१०६॥
योनिदोषमपस्मारमुन्मादं खञ्जपङ्गुताम्।
हन्यात् पुंसवनं चैतत् तैलाग्र्यममृताह्वयम् ॥१०७॥

इति अमृताद्यं तैलम्।

पद्मवेतसयष्ट्याह्वफेनिलापद्मकोत्पलैः।
पृथक्पञ्चपलैर्दर्भबलाचन्दनकिंशुकैः ॥१०८॥
जले शृतैः पचेत् तैलप्रस्थं सौवीरसम्मितम्।
लोध्रकालीयकोशीरजीवकर्षभकैः समैः ॥१०९॥
मदयन्तीलतापत्रपद्मकेशरपद्मकैः।
प्रपौण्डरीककाश्मर्यमांसीमेदाप्रियङ्गुभिः ॥११०॥
कुङ्कुमस्य पलार्द्धेन मञ्जिष्ठायाः पलेन च।
महापद्ममिदं तैलं वातासृग्ज्वरनाशनम् ॥१११॥

इति महापद्मं तैलम्।

पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम्।
स्यात् पिष्टैः सर्जमञ्जिष्ठावीराकाकोलिचन्दनैः ॥११२॥
खुड्डाकपद्मकमिदं तैलं वातास्रदाहनुत्।
आत्रेयेणाग्निवेशाय भाषितं हितकाम्यया ॥११३॥

इति खुड्डाकपद्मतैलम्।

शतेन यष्टिमधुकात् साध्यं दशगुणं पयः।
तस्मिन् तैले चतुर्द्रोणे मधुकस्य पलेन तु।
सिद्धं मधुककाश्मर्यरसेर्वा वातरक्तनुत् ॥११४॥
मधुपर्ण्याः पलं पिष्ट्वा तैलप्रस्थं चतुर्गुणे।
क्षीरे साध्यं शतकृत्वस्तदेव मधुकाच्छृतैः ॥११५॥
सिद्धं देयं त्रिदोषे स्यात् वातास्रश्वासकासनुत्।
क्षतपाण्डुरोगवीसर्पकामलादाहनाशनम् ॥११६॥

इति शतपाकमधुपर्णीतैलम्।

बलाकषायकल्काभ्यां तैलं चीरसमं तथा।
सहस्रशतपाकं वा वातासृग्वातरोगनुत् ॥११७॥
रसायन श्रेष्ठतममिन्द्रियाणां प्रसादनम्।
जीवनं वृंहणं स्वर्य्यं शुक्रासृग्दोषनाशनम् ॥११८॥
इति सहस्रपाकं वा शतपाकं तैलम्।
गुडूचीरसदुग्धाभ्यां तैलं द्राचारसेन वा।
सिद्धं मधुककाश्मर्य्यैरसैर्वा वातरक्तनुत् ॥११९॥
आरनालाढ़के तैलं पादं सर्जरसं घृतम्।
प्रभूते मथितं तोये ज्वरदाहार्त्तिनुत् परम् ॥१२०॥
समधूच्छिष्टमाञ्जिष्ठं ससर्जरससारिवम्।
पिण्डतैल तदभ्यङ्गाद्वातरक्तरुजापहम् ॥१२१॥
इति पिण्डतैलम्।
दशमूलशृतं चीरं सद्यः शूलनिवारणम्।
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥१२२॥
स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत्।
स्तम्भाक्षेपकशूलार्त्तं कोष्णैर्दाहे तु शीतलैः ॥१२३॥
तद्वद्गव्याविकच्छागैः चीरैस्तैलविमिश्रितैः।
नि.क्वाथैर्जीवनीयानां पञ्चमूलस्य वा भिषक् ॥१२४॥
द्राक्षेचुरसमद्यादि दधिमस्त्वम्लकाञ्जिकम्।
सेकार्थं तण्डुलक्षौद्रशर्कराम्बु च शस्यते ॥१२५॥
कुमुदोत्पलपद्माद्यैर्मणिहारैः सचन्दनैः।
शीततोयानुगैर्दाहे प्रोक्षणं स्पर्शनं हितम् ॥१२६॥
चन्द्रपादाम्बुसंसिक्ते क्षौमपद्मदलच्छदे।
शयने पुलिनस्पर्शे शीतमारुतवीजिते ॥१२७॥
चन्दनार्द्रस्तनकराः प्रिया नार्य्यः प्रियंवदाः।
स्पर्शशीता. सुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥१२८॥

सरागे सरुजे दाहे रक्तं मुक्त्वा प्रलेपयेत् ।
मधुकाम्रत्वग्लश्लांसौवीरोदुम्बरशाद्वलैः ॥१२९॥
जलजैर्यवचूर्णैर्वा सयष्ट्याह्वपयोघृतैः ।
सर्पिषा जीवनीयैर्वा पिष्टैर्लेपोऽर्त्तिदाहनुत् ॥१३०॥
पत्राः पियालं मधुकं विसं मूलञ्च वेतसात् ।
आजेन पयसा पिष्ट्वा प्रलेपो दाहरागनुत् ॥१३१॥
प्रपौण्डरीकमञ्जिष्ठादार्व्वीमधुकचन्दनैः ।
सितोपलैरकासक्तुमसूरोशीरपद्मकैः ॥१३२॥
लेपो रुग्दाहवीसर्परक् शोफविनिवारणः ।
पित्तरक्तोत्तरे त्वेते लेपान् वातोत्तरे शृणु ॥१३३ ॥
वातघ्नैः साधितः स्निग्धः सक्षीरमुद्गपायसैः ।
तिलसर्षपपिण्डैर्वाप्युपनाहरुजापहाः ॥१३४॥
क्षौदकप्रसहानूपवेशवाराः सुसंस्कृताः ।
जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहने ॥१३५॥
स्तम्भतोदरुगायासशोथाङ्गग्रहनाशनाः ।
जीवनीयौषधैः स्नेहः सपयस्को रसोऽपि वा ॥१३६॥
घृतं सहचराम्लं जीवन्तीच्छागलं पयः ।
लेपाः पिष्टास्तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥१३७॥
क्षीरपिष्टमुमालेपमेरण्डस्य फलानि च ।
कुर्य्याच्छूलनिवृत्त्यर्थं शताह्नं वानिलेऽधिके ॥१३८॥
समूलाग्रच्छदैरण्डक्वाथे हिमस्थिर्क्षं पृथक् ।
घृतं तैलं वसा मज्जा चानूपमृगपक्षिणाम् ॥१३९॥
कल्कार्थे जीवनीयानि गव्यं क्षीरमथाजकम् ।
हरिद्रोत्पलकुष्ठैलानागताह्वाग्रहनच्छदान् ॥१४०॥
बिल्वमात्रं पृथक् पुष्पं काकुभञ्चापि साधयेत् ।
मधूच्छिष्टपलान्यष्टौ दद्यात् गोतेऽवतारिते ॥१४१॥

शूलेनैवार्द्दिताङ्गानां लेपः सम्भिगतेऽनिले।
वातरक्ते स्रुते भग्ने खञ्जे कुब्जे च शस्यते ॥१४२॥
शोफगौरवकण्ड्वाद्यैर्युक्ते त्वस्मिन् कफोत्तरे।
मूत्रक्षारसुरापक्वघृतमभ्यञ्जने हितम् ॥१४३॥
पद्मकं त्वक् समधुकं शारिवा चेति तैर्घृतम्।
सिद्धं समधु शस्तं स्यात् सेकाभ्यङ्गः कफोत्तरे ॥१४४॥
क्षीरं तैलं गवां मूत्रं जलञ्च कटुकैः शृतम्।
परिषेकाः प्रशस्यन्ते वातरक्ते कफोत्तरे ॥१४५॥
लेपः सर्षपनिम्बार्कहिंस्राक्षीरतिलैर्हितः।
स्नेहः सिद्धः कपित्थत्वग्घृतक्षीरैः समन्नुभिः ॥१४६॥
द्वे हरिद्रे वचागौरधूमकुष्ठशताह्विकाः।
प्रलेपः शूलनुद्वातरक्ते वातकफोत्तरे ॥१४७॥
तगरं त्वक् शताह्वैला कुष्ठं मुस्तं हरेणुका।
दारु व्याघ्रनखं चाम्लपिष्टं वातकफार्त्तिनुत् ॥१४८॥
मधु शिग्रोश्चितं तद्वीजं धान्याम्लसंयुतम्।
मुहूर्त्तं लिप्तमक्षैव सिञ्चेद्वातकफोत्तरे ॥१४९॥
त्रिफलाव्योषपत्रैलात्वक् क्षीरं चित्रकं वचाम्।
विडङ्गं पिप्पलीमूलं लोमशं वृषकत्वचम् ॥१५०॥
ऋद्धिं तामलकीं चव्यं समभागानि पेषयेत्।
कल्कं लिप्तमयस्पात्रे मध्याह्ने भक्षयेत् ततः ॥१५१॥
वर्जयेद्दधिशुक्तानि क्षारं वैरोधकानि च।
वातास्रे सर्वदोषेऽपि हितं शूलार्दिते परम् ॥१५२॥
बुद्धा स्थानविशेषांश्च दोषाणाञ्च बलाबलम्।
चिकित्सितमिदं कुर्यादूहापोहविकल्पवित् ॥१५३॥
कुपिते मार्गसंरोधात् मेदसो वा कफस्य वा।
अतिवृद्धोऽनिलेनादौ शस्तं स्नेहनवृंहणम् ॥१५४॥

व्यायामशोधनारिष्टमूत्रपानैर्विरेचनैः ।
तक्राभयाप्रयोगैश्च क्षपयेत् कफमेदसी ॥१५५॥
बोधिवृक्षकषायन्तु पिबेत् तं मधुना सह ।
वातरक्तं जयत्याशु त्रिदोषमपि दारुणम् ॥१५६॥
पुराणयवगोधूमसीध्वरिष्टासवैस्तथा ।
शिलाजतुप्रयोगैश्च गुग्गुलोर्माक्षिकस्य च ॥१५७॥
यथाहाते क्रियां कुर्य्यात् वातरक्तप्रसादनीम् ।
गम्भीरे रक्तमाक्रान्तं स्याच्चेत् वा तत् विवर्जयेत् ॥१५८॥
रक्तपित्तातिबहुत्वात् तु पाकमाशु नियच्छति ।
भिन्नं स्रवति वा रक्तं विदग्धं पूयमेव वा ॥१५९॥
तयोः क्रिया विधातव्या व्रणशोधनरोपणैः ।
कुर्य्यादुपद्रवाणाञ्च क्रियां स्वात् स्वात् चिकित्सितात् ॥१६

तत्र श्लोकाः ।

हेतुस्थानानि मूलञ्च यस्मात् प्रायश्च सन्धिषु ।
कुप्यति प्राक् च तद्रूपं द्विविधस्य च लक्षणम् ॥१६१॥
पृथग्भिन्नस्य लिङ्गञ्च दोषाधिक्यमुपद्रवाः ।
साध्यं याप्यमसाध्यञ्च क्रिया साध्यस्य चाखिला ॥१६२॥
वातरक्तस्य निर्दिष्टाः समासव्यासतस्तथा ।
महर्षिणाग्निवेशाय तथैवावस्थिकी क्रिया ॥१६३॥

---

## त्रिंशोऽध्यायः ।

### योनिव्यापच्चिकित्सितम् ।

द्विव्यौषधिजलस्वादुधातुचित्रशिलावति ।
पुण्ये हिमवतः पार्श्वे सुरसिद्धर्षिसेविते ॥१॥
विहरन्तं तपोयोगात् तत्त्वज्ञानार्थदर्शिनम् ।
आत्रेयं जितात्मानमग्निवेशोऽथ पृष्टवान् ॥२॥

भगवन्! यदपत्यानां मूलं नार्य्यः परं नृणाम्।
तद्विघातो गदैश्चासां क्रियते योनिमाश्रितैः ॥३॥
तस्मात् तेषां समुत्पत्तिमुत्पन्नानाञ्च लक्षणम्।
औषधं श्रोतुमिच्छामि प्रजानुग्रहकाम्यया ॥४॥
इति शिष्येण पृष्टस्तु प्रोवाचर्षिवरोऽत्रिजः।
विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे ॥५॥
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च।
जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ॥६॥
वातलाहारचेष्टाया वातलायाः समीरणः।
विवृद्धो योनिमाश्रित्य योनेस्तोदं सवेदनम् ॥७॥
स्तम्भं पिपीलिकासृप्तिमिव कर्कशतां तथा।
करोति सुप्तिमायासं वातजांश्चापरान् गदान् ॥८॥
सा स्यात् सशब्दरुक्फेनतनुरूक्षार्त्तवानिलात्।
व्यापत् तथाम्ललवणक्षाराद्यैः पित्तजा भवेत् ॥९॥
दाहपाकज्वरोष्णार्त्ता नीलपीतसितार्त्तवा।
भृशोष्णकुणपस्रावा योनिः स्यात् पित्तदूषिता ॥१०॥
कफोऽभिष्यन्दिभिर्वृद्धो योनिञ्चेत् दूषयेत् स्त्रियाः।
स शीतां पिच्छिलां कुर्य्यात् कण्डुग्रस्तात्पवेदनाम् ॥११॥
पाण्डुवर्णां तथा पाण्डुपिच्छिलार्त्तववाहिनीम्।
समश्नत्या रसान् सर्वान् दूषयित्वा त्रयो मलाः ॥१२॥
योनिगर्भाशयस्थाः स्वैर्योनिं युञ्जन्ति लक्षणैः।
सा भवेद्दाहशूलार्त्ता श्वेतपिच्छिलवाहिनी ॥१३॥
रक्तपित्तकरैर्नार्य्या रक्तं पित्तेन दूषितम्।
अतिप्रवर्त्तते योन्यां लब्धे बीजेऽपि सा प्रजा ॥१४॥
योनिगर्भाशयस्थं चेत् पित्तं संदूषयेदसृक्।
सारजस्का मता कार्श्यवैवर्ण्यजननी भृशम् ॥१५॥

योन्यामधावनात् कण्डूं जाताः कुर्वन्ति जन्तवः ।
सा स्यादचरणा कण्ड्वा तयातिनरकाङ्क्षिणी ॥१६॥
पवनोऽतिव्यवायेन शोफसुप्तिरुजः स्त्रियाः ।
करोति कुपितो योनौ सा चातिचरणा मता ॥१७॥
मैथुनादतिबालायाः पृष्ठजङ्घोरुवंक्षणम् ।
रुजयन् दूषयेद् योनिं वायुः प्राक्चरणा हि सा ॥१८॥
गर्भिण्याः श्लेष्मलाभ्यासाच्छर्दिश्वासविनिग्रहात् ।
वायुः क्रुद्धः कफं योनिमुपनीय प्रदूषयेत् ॥१९॥
पाण्डुं सतोदमास्रावं श्वेतं स्रवति वा कफम् ।
कफवातामयव्याप्ता सा स्याद्योनिरुपप्लुता ॥२०॥
पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।
पित्तसंमूर्च्छितो वायुर्योनिं दूषयति स्त्रियाः ॥२१॥
शूना स्पर्शाक्षमा सार्त्तिर्नीलपीतमसृक् स्रवेत् ।
श्रोणिवंक्षणपृष्ठार्त्तिज्वरार्त्तायाः परिप्लुता ॥२२॥
वेगोदावर्त्तनाद् योनिमुदावर्त्तयतेऽनिलः ।
सा रुगार्त्ता रजः कृच्छ्रेणोदावृत्तं विमुञ्चति ॥२३॥
आर्त्तवे सा विमुक्ते तु तत्क्षणं लभते सुखम् ।
रजसो गमनादूर्ध्वं ज्ञेयोदावर्त्तिनी बुधैः ॥२४॥
अकाले वाहमानाया गर्भेण पिहितोऽनिलः ।
कर्णिकां जनयेद् योनौ श्लेष्मरक्तेन मूर्च्छितः ॥२५॥
रक्तमार्गावरोधिन्या सा तया कर्णिनी मता ।
रौक्ष्याद्वायुर्यदा गर्भं जातं जातं विनाशयेत् ॥२६॥
दुष्टशोणितजं नार्याः पुत्रघ्नी नाम सा मता ।
व्यवायमतिवृत्ताया भजन्त्यास्त्वव पीडितः ॥२७॥
वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थितः ।
वक्रयत्याननं योन्याः सास्थिमांसानिलार्त्तिभिः ॥२८॥

अथार्त्तिमैथुनासक्ता योनिरन्तर्मुखी मता ॥२९॥
गर्भस्थायाः स्त्रिया रौक्ष्याद्वायुर्योनिं प्रदूषयन् ।
मादोषादणुद्वारां कुर्य्यात् सूचीमुखीं तु सा ॥३०॥
व्यवायकाले रुन्धन्त्या वेगान् प्रकुपितोऽनिलः ।
कुर्य्याद्विण्मूत्रसङ्गार्त्तिं शोषं योनिमुखस्य च ॥३१॥
षड्वात् सरक्ताद्वा शुक्रं गर्भाशयं गतम् ।
सरुजं नोरुजं वापि या स्रवेत् सा च वामिनी ॥३२॥
बीजदोषात् तु गर्भस्था मारुतोपहताशया ।
नृद्वेषिण्यस्तनी चैव षण्ढी स्यादनुपक्रमा ॥३३॥
विषमात् दुःखशय्यायां मैथुनात् कुपितोऽनिलः ।
गर्भाशयस्य योन्याश्च मुखं विष्टम्भयेत् स्त्रियाः ॥३४॥
असंवृतमुखी सार्त्ता रूक्षफेनास्रवाहिनी ।
मांसोत्सन्ना महायोनिः पर्ववंक्षणशूलिनी ॥३५॥
इत्येतैर्लक्षणैः प्रोक्ता विंशतिर्योनिजा गदाः ।
न शुक्रं धारयत्येभिर्दोषैर्योनिरुपद्रुता ॥३६॥
तस्माद्गर्भं न गृह्णाति स्त्री गच्छत्यामयान् बहून् ।
गुल्मार्शःप्रदरादींश्च वाताद्यैश्चातिपीड़नम् ॥३७॥
आसां षोड़श यास्तासामाद्ये द्वे पित्तदोषजे ।
परिप्लुता वामिनी च वातपित्तात्मिके मते ॥३८॥
कर्णिन्युपप्लुते वातकफाच्छेषास्तु वातजाः ।
देहे वाताद्यस्तासां तैर्लिङ्गैः पीड़यन्ति हि ॥३९॥
स्नेहनस्वेदवस्त्यादि वातलास्वनिलापहम् ।
कारयेद्रक्तपित्तघ्नं शीतं पित्तकृतासु च ॥४०॥
श्लेष्मलासु च रूक्षोष्णं कर्म कुर्य्याद्विचक्षणः ।
सन्निपाते विमिश्रन्तु संसृष्टासु च कारयेत् ॥४१॥
स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत् पुनः ।

पाणिना नामयेज्जिह्मां संवृतां वर्द्धयेत् पुनः ॥४२॥
प्रवेशयेत् निःसृताञ्च विवृतां परिवर्त्तयेत् ।
योनिः स्थानापवृत्ता हि शल्यभूता स्त्रिया मता ॥४३॥
सर्वां व्यापन्नयोनिन्तु कर्म्मभिर्वमनादिभिः ।
मृदुभिः पञ्चभिर्नारीं स्निग्धस्विन्नामुपाचरेत् ॥४४॥
सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते ।
वातव्याधिहरं कर्म वातार्त्तानां सदा हितम् ॥४५॥
औदकानूपजैर्मांसैः क्षीरैः सतिलतण्डुलैः ।
सवातघ्नौषधैर्नाडीकुम्भीस्वेदैरुपाचरेत् ॥४६॥
युक्त्या लवणतैलेन साश्मप्रस्तरसङ्करैः ।
स्विन्नां कोष्णाम्बुसिक्ताङ्गीं वातघ्नैर्भोजयेद्रसैः ॥४७॥
बलाद्रोणद्वयक्वाथे घृततैलाढकं पचेत् ।
स्थिरापयस्याजीवन्तीवीरर्षभकजीवकैः ॥४८॥
श्रावणीपिप्पलीमूलपीलुमाषाख्यपर्णिभिः ।
शर्कराक्षीरकाकोलीकाकनासाभिरेव च ॥४९॥
पिष्टैश्चतुर्गुणक्षीरसिद्धं पेयं यथाबलम् ।
वातपित्तकृतान् रोगान् हत्वा गर्भं दधाति तत् ॥५०॥
काश्मर्य्यत्रिफलाद्राक्षाकासमर्दपरूषकैः ।
पुनर्नवाहरिद्राभ्यां काकनासासहाचरैः ॥५१॥
शतावर्य्या गुडूच्याश्च प्रस्थमक्षसमैर्घृतात् ।
साधितं योनिवातघ्नं गर्भदं परमं पिबेत् ॥५२॥
पिप्पल्यः कुञ्चिकाजाजी वृषकं सैन्धवं वचाम् ।
यवक्षाराजमोदे च शर्करां चित्रकं तथा ॥५३॥
पिष्ट्वा सर्पिषि भृष्टानि पययेत प्रसन्नया ।
योनिपार्श्वार्त्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥५४॥
वृषकं मातुलुङ्गस्य मूलानि मदयन्तिकाम् ।

पिवेत् सलवणैर्मद्यैः पिप्पलीकुञ्चिके तथा ॥५५॥
श्वदंष्ट्रा वृषकं रास्नां पिवेत् शूले पयः शृतम्।
गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचयेत् ॥५६॥
सैन्धवं तगरं कुष्ठं वृहती देवदारु च।
समांशैः साधितं कल्कैस्तैलं धार्य्यं रुजापहम् ॥५७॥
गुडूचीमालतीरास्नाबलामधुकचित्रकैः।
निदिग्धिकादेवदारुयुथिकाभिश्च कार्षिकैः ॥५८॥
तैलप्रस्थं गवां मूत्रे क्षीरे च द्विगुणे पचेत्।
वातार्त्तानाञ्च योनीनां सेकाभ्यङ्ग पिचुक्रियाः ॥५९॥
वातार्त्तायाः पिचुं दद्याद् योनौ च प्रणयेत् सदा।
हिंस्राकल्कन्तु वातार्त्ता कोष्णमभ्यज्य धारयेत् ॥६०॥
पञ्चवल्कस्य पित्तार्त्ता श्यामादीनां कफातुरा।
पित्तलानान्तु योनीनां सेकाभ्यङ्ग पिचुक्रियाः ॥६१॥
शीताः पित्तहराः कार्य्याः स्नेहनार्थे घृतानि च।
पित्तघ्नौषधसिद्धानि कार्य्याणि भिषजा तथा ॥६२॥
शतावरीमूलतुलाचतस्रः संप्रपीडयेत्।
रसेन क्षीरतुल्येन पचेत् तेन घृताढ़कम् ॥६३॥
जीवनीयैः शतावर्य्या मृद्वीकाभिः परूषकैः।
पियालैश्चाक्षकैः पिष्टैर्द्वियष्टिमधुकैः पचेत् ॥६४॥
सिद्धे शीते च मधुनः पिप्पल्याश्च पलाष्टकम्।
सिताद्यपलोन्मिश्रात्लिह्यात् पाणितलं ततः।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनञ्च तत् ॥६५॥
क्षतं चयं रक्तपित्तं कासं श्वासं हलीमकम्।
कामलां वातरक्तञ्च वीसर्पं हृच्छिरोग्रहम्।
उन्मादायासमश्वासं वातपित्तात्मकं जयेत् ॥६६॥
इति वृहच्छतावरीघृतम्।

एवमेव क्षीरसर्पिर्जीवनीयोपसाधितम् ।
गर्भदं पित्तलानाश्च योनीनां स्यात्रिमन्त्रितम् ॥ ६७ ॥
योन्याः श्लेष्मप्रदुष्टाया वर्त्तिः संशोधनी हिता ।
वाराहे बहुशः पित्ते भावितैर्नक्तकैः कृता ॥ ६८ ॥
भावितं पयसार्कस्य माषचूर्णं ससैन्धवम् ।
वर्त्तिः कृता मुहुर्धार्य्या ततः सेव्या सुखाम्बुना ॥ ६९ ॥
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधनी ॥ ७० ॥
उदुम्बरशलाटूनां द्रोणमर्द्धद्रोणसंयुतम् ।
सपत्रवल्ककुलकनिम्बमालतिपल्लवम् ॥ ७१ ॥
निशां स्थाप्यं जले तस्मिंस्तैलप्रस्थं विपाचयेत् ।
लाक्षाधवपलाशत्वङ् निर्यासैः शाल्मलेन च ॥ ७२ ॥
पिष्टैः सिद्धस्य तत् तैलं पिचु योनौ निधापयेत् ।
सशर्करैः कषायैश्च शीतैः कुर्वीत सेचनम् ॥ ७३ ॥
पिच्छिला विवृता कालदुष्टा योनिश्च दारुणा ।
सप्ताहाच्छुध्यति क्षिप्रमपत्यञ्चापि विन्दति ॥ ७४ ॥
उदुम्बरस्य दुग्धेन षट्कृत्वो भावितांस्तिलान् ।
तैलं क्वाथे च तस्यैव सिद्धं धार्य्यञ्च पूर्ववत् ॥ ७५ ॥
धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ।
जम्ब्वाम्रमध्यकासीसलोध्रकट्फलतिन्दुकैः ॥ ७६ ॥
सौराष्ट्रिकादाडिम्बत्वगुदुम्बरशलाटुभिः ।
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ॥ ७७ ॥
तैलप्रस्थं पिचुं तस्मात् योनौ च प्रणयेत् ततः ।
कटीपृष्ठत्रिकाभ्यङ्गं स्नेहवस्तिञ्च दापयेत् ॥ ७८ ॥
पिच्छिलस्राविणी योनिर्विप्लुतोपप्लुता तथा ।
उत्ताना चोन्नता शूना सिध्येत् सस्फोटशूलिनी ॥७९॥

करीरधवनिम्बार्कवेणुकोशाम्रजाम्बवैः।
जिङ्गिनीवृषमूलानां क्वाथैर्मार्द्वीकशीधुभिः ॥८०॥
सशुक्तैर्धावनं मिश्रैर्योन्यास्रावविनाशनम्।
कुर्य्यात् सतक्रगोमूत्रशुक्तैर्वा त्रिफलारसैः ॥८१॥
पिप्पल्ययोरजःपथ्याप्रयोगा मधुना हिताः।
श्लेष्मलायां कटुप्रायाः समूत्रा वस्तयो हिताः ॥८२॥
पित्ते समधुरक्षीरा वाते तैलाम्लसंयुताः।
सन्निपातसमुत्थायाः कर्म्म साधारणं मतम् ॥८३॥
रक्तयोन्यामसृग्वर्णैरनुबन्धं समीक्ष्य च।
ततः कुर्य्याद् यथादोषं रक्तस्थापनमौषधम् ॥८४॥
तिलचूर्णं दधिघृतं फाणितं शौकरी वसा।
क्षौद्रेण संयुतं पेयं वातासृग्दरनाशनम् ॥८५॥
वराहस्य रसो मेध्यः सकौलत्थोऽनिलाधिके।
शर्करातैलयष्ट्याह्वनागरैर्वा युतं दधि ॥ ८६ ॥
पयस्योत्पलशालूकविसकालीयकाम्बुजान्।
सपयः शर्करां क्षौद्रं पैत्तिकेऽसृग्दरे पिबेत् ॥८७॥
पाठाजम्ब्वाम्रयोर्मध्ये शिलोद्भेदं रसाञ्जनम्।
अम्बष्ठा शाल्मलीवेष्टं समङ्गा वत्सकत्वचम् ॥८८॥
बाह्लीकातिविषे बिल्वं मुस्तं लोध्रं सगैरिकम्।
कट्फलं मरिचं शुण्ठीं मृद्वीकां रक्तचन्दनम् ॥८९॥
कट्वङ्गवत्सकानन्तां धातकीं मधुकार्जुनम्।
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥९०॥
तानि क्षौद्रेण संयोज्य पिबेन्ना तण्डुलाम्बुना।
वर्चःसु चातिसारेषु रक्तं यच्चोपवेश्यते ॥९१॥
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत्।
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम् ॥९२॥

स्त्रीणां श्यावारुणं यच्च प्रसह्य विनिवर्त्तयेत् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥८३॥

इति पुष्यानुगचूर्णम् ।

तण्डुलीयकमूलञ्च सक्षौद्रं तण्डुलाम्बुना ।
रसाञ्जनञ्च लाक्षाञ्च छागेन पयसा पिबेत् ॥८४॥
पत्रकल्को घृते भृष्टो राजादनकपित्थयोः ।
पित्तानिलहरो पैत्ते सर्वथैवास्रपित्तजित् ॥८५॥
मधूकं त्रिफलां लोध्रं मुस्तं सौराष्ट्रिकां मधु ।
मद्यैर्निम्बगुडूच्यौ तु कफजेऽसृग्दरे पिबेत् ॥८६॥
विरेचनं महातिक्तं पित्तजेऽसृग्दरे पिबेत् ।
हितं गर्भपरिस्रावे यत् चोक्तं तच्च कारयेत् ॥८७॥
काश्मर्यकुटजक्वाथे सिद्धमुत्तरवस्तिना ।
रक्तयोन्यरजस्कानां पुत्रघ्न्याश्च हितं घृतम् ॥ ८८ ॥
मृगाजाविवराहासृग्दध्यम्लक्षौद्रसर्पिषा ।
अरजस्का पिबेत् सिद्धं जीवनीयैः पयोऽपि वा ॥८९॥
कर्णिन्यचरणाप्रस्रंसियोनिप्राक् चरणासु च ।
कफवाते च दातव्यं तैलमुत्तरवस्तिना ॥१००॥
गोपित्तमत्स्यपित्ते वा क्षौमं त्रि:सप्तभावितम् ।
मधुना किण्वचूर्णं वा दद्यादचरणापहम् ॥१०१॥
स्रोतसां शोधनं कण्डूक्लेदशोफहरञ्च तत् ।
वातघ्नैः शतपाकैस्तु तैलैः प्रागतिचारणी ॥१०२॥
आस्थाप्या चानुवास्या च स्वेद्यैर्चानिलसूदनैः ।
स्नेहद्रव्यैस्तथाहारैरुपनाहैश्च युक्तितः ॥१०३॥
शताह्वायवगोधूमकिण्वकुष्ठप्रियङ्गुभिः ।
बलाखुपर्णिकाश्वाह्वैः संयावो धारणः स्मृतः ॥१०४॥
यामिन्याप्लुतयोन्योश्च कर्त्तव्यः स्वेदनोऽपि वा ।

क्रमः कार्य्यस्ततः स्नेहः पिचुभिस्तर्पणं भवेत् ॥१०५॥
शल्लकीजिङ्गिनीजम्बूधवत्वक्पञ्चवल्कलैः ।
कषायैः साधितः स्नेहः पिचुः स्याद्विप्लुतापहः ॥१०६॥
कर्णिन्यां वर्त्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवैः ।
वस्तमूत्रकृता धार्य्या सर्वञ्च श्लेष्मनुद्धितम् ॥१०७॥
त्रैवृतं स्नेहने स्वेदो ग्राम्यानूपौदका रसाः ।
दशमूलपयो वस्तियोदावर्त्तानिलार्त्तिषु ॥१०८॥
त्रैवृतेनानुवास्या च वस्तिश्चोत्तरसंज्ञितः ।
एतदेव महायोन्यां स्रस्तायाञ्च विधीयते ॥१०९॥
वसा ऋक्षवराहाणां घृतञ्च मधुरैः शृतम् ।
पूरयित्वा महायोनिं बध्नीयात् क्षौमलक्तकैः ॥११०॥
प्रसूतां सर्पिषाभ्यज्य क्षीरखिन्नां प्रवेश्य च ।
बध्नीयाद्धैमवारस्य पिण्डेनामूत्रकालतः ॥१११॥
यच्च वातविकाराणां कर्म्मोक्तं तच्च कारयेत् ।
सर्वव्यापत्सु मतिमान् महायोन्यां विशेषतः ॥११२॥
न हि वाताद्दते योनिर्नारीणां संप्रदुष्यति ।
शमयित्वा तमन्यस्य कुर्य्याद्दोषस्य भेषजम् ॥११३॥
मूलकल्कन्तु रोहीतात् पाण्डुरे प्रदरे पिबेत् ।
जलेनामलकाद्बीजं कल्कं वा ससितामधुम् ॥११४॥
मधुनामलकाचूर्णं रसं वा लेहयेच्च ताम् ।
न्यग्रोधत्वक्कषायेण लोध्रकल्कं तथा पिबेत् ॥११५॥
अस्रावे क्षौमपट्टं वा भावितं तेन धारयेत् ।
प्लक्षत्वक्चूर्णपिण्डं वा धारयेन्मधुना कृतम् ॥११६॥
योन्याः स्नेहाक्तया लोध्रप्रियङ्गुमधुकस्य च ।
धार्य्या मधुयुता वर्त्तिः कषायाणाञ्च सर्वशः ॥११७॥
स्रावच्छेदार्थमभ्यक्तां धूपयेद्वा घृताप्लुतैः ।

सरलागुग्गुलुयवैः सतैलकटुमत्स्यकैः ॥११८॥
कासीसत्रिफलाकाङ्क्षी साम्रजम्बुस्थिधातकी ।
पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ॥११९॥
पलाशसर्जजम्बुत्वक्समङ्गामोचधातकीः ।
सपिच्छिला परिक्लिन्ना स्तम्भनः कल्क इष्यते ॥१२०॥
स्तब्धानां कर्कशानाञ्च पिण्डो मार्दवकारकः ।
धारयेद्वेशवारं वा पायसं कृशरं तथा ॥१२१॥
दुर्गन्धानां कषायः स्यात् तौवरः कल्क एव वा ।
चूर्णं वा सर्वगन्धानां पूतिगन्धापकर्षणम् ॥१२२॥
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः ।
अदुष्टे प्राकृते बीजे जीवोपक्रमणे सति ॥१२३॥
पञ्चकर्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम् ।
परीक्ष्य वर्णदोषाणां दुष्टं तद्घ्नैरुपाचरेत् ॥१२४॥

भवन्ति चात्र ।

सलिङ्गा व्यापदो योनेः सनिदानचिकित्सिताः ।
उक्ता विस्तरशः सम्यक् मुनिना तत्त्वदर्शिना ॥१२५॥
पुनरेवाग्निवेशस्तु पप्रच्छ भिषजां वरम् ।
आत्रेयमुपसङ्गम्य शुक्रदोषास्त्रयानघ ॥१२६॥
रोगाध्याये समुद्दिष्टा ह्यष्टौ पुंसामशेषतः ।
तेषां हेतुं भिषक्श्रेष्ठ ! दुष्टादुष्टस्य चाकृतिम् ॥१२७॥
चिकित्सितञ्च कार्त्स्न्येन क्लैव्यं यच्च चतुर्विधम् ।
उपद्रवेषु योनीनां प्रदरो यश्च कीर्त्तितः ॥१२८॥
तेषां निदानं लिङ्गञ्च चिकित्साञ्चैव तत्त्वतः ।
समासव्यासभेदेन प्रब्रूहि भिषजांवर ! ॥ १२९॥
तस्मै शुश्रूषमाणाय प्रोवाच मुनिपुङ्गवः ।
बीजं यस्माद्व्यवायेषु हर्षयोनिसमुत्थितम् ।

शुक्रं पौरुषमित्युक्तं तस्माद्वक्ष्यामि तच्छृणु ॥१३०॥
यथा वीजमकालाम्बुकृमिकीटाग्निदूषितम्।
न विरोहति सन्दुष्टं तथा शुक्रं शरीरिणाम् ॥१३१॥
अतिव्यवायाद्व्यायामादसात्म्यानाञ्च सेवनात्।
अकाले वाप्ययोनौ वा मैथुनं न च गच्छतः ॥१३२॥
रूक्षतिक्तकषायातिलवणाम्लोष्णसेवनात्।
नारीणामरसज्ञानां सवणाज्जरया तथा ॥१३३॥
चिन्ताशोकादविस्रम्भाच्छस्त्रक्षाराग्निविभ्रमात्।
भयात् क्रोधादतीसारात् व्याधिभिः कर्षितस्य च ॥१३४॥
वेगाघातात् क्षताच्चापि धातूनां संप्रदूषणात्।
दोषाः पृथक् समस्ता वा प्राप्य रेतोवहाः शिराः।
शुक्रं संदूषयन्त्याशु तद्वक्ष्यामि विभागशः ॥१३५॥
फेनिलं तनु रूक्षञ्च विवर्णं पूति पिच्छिलम्।
अन्यधातूपसंसृष्टमवसादि तथाष्टमम् ॥१३६॥
फेनिलं तनु रूक्षञ्च कृच्छ्रेणाल्पञ्च मारुतात्।
भवत्युपहतं शुक्रं न तद्गर्भाय कल्पते ॥१३७॥
सनीलमथवा पीतमत्युष्णं पूतिगन्धि च।
दहल्लिङ्गं विनिर्याति शुक्रं पित्तेन दूषितम् ॥१३८॥
श्लेष्मणा वद्धमार्गन्तु भवत्यत्यर्थपिच्छिलम्।
स्त्रीणामत्यर्थगमनादभिघातात् क्षतादपि ॥१३९॥
शुक्रं प्रवर्त्तते जन्तोः प्रायेण रुधिरान्वयम्।
वेगसन्धारणाच्छुक्रं वायुना विहतं पथि ॥१४०॥
कृच्छ्रेण याति ग्रथितमवसादि तथाष्टमम्।
इति दोषाः समाख्याताः शुक्रस्याष्टौ सलक्षणाः ॥१४१॥
स्निग्धं घनं पिच्छिलञ्च मधुरञ्चाविदाहि च।
रेतः शुद्धं विजानीयाच्छ्वेतं स्फटिकसन्निभम् ॥१४२॥

वाजीकरणयोगोक्तैरुपयोगैः सुखैर्हितैः ।
रक्तपित्तहरैर्योगैर्योनिव्यापदिकैस्तथा ॥ १४३॥
दुष्टं यथा भवेद्रेतः ततस्तत् समुपाचरेत्।
घृतञ्च जीवनीयं यच्चावनप्राश एव च ॥१४४॥
गिरिजस्य प्रयोगश्च रेतोदोषानपोहति ।
वातान्विते हिताः शुक्रे निरूहाः सानुवासनाः ॥१४५॥
अभयामलकीयञ्च पैत्ते शस्तं रसायनम्।
मागध्यमृतलोहानां त्रिफलाया रसायनम् ॥१४६॥
कफोत्थिते शुक्रदोषे हन्याद्भल्लातकस्य च ।
अन्यधातूपसंसृष्टं शुक्रं वीक्ष्य भिषक् क्रियाम् ॥१४७॥
यथादोषं प्रयोज्यं स्याद्दोषधातुभिषग्जितम् ।
सर्पिः पयो रसाः शालियवगोधूमषष्टिकाः ।
प्रशस्ताः शुक्रदोषेषु वस्तिकर्म विशेषतः ।
इत्यष्टशुक्रदोषाणां मुनिनोक्तं चिकित्सितम् ॥ १४८ ॥
रेतोदोषोद्भवं क्लैब्यं यस्माच्छुद्धेव सिध्यति ।
ततो वक्ष्यामि ते सम्यक् अग्निवेश ! यथायथम् ॥१४९॥
बीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात्।
क्लैब्यं सम्पद्यते तस्य शृणु सामान्यलक्षणम् ॥१५०॥
सङ्कल्पप्रवणो नित्यं प्रियां वश्यामपि स्त्रियम् ।
न याति लिङ्गशैथिल्यात् कदाचित् याति वा यदि ॥१५१॥
श्वासार्त्तः स्विन्नगात्रश्च मोघसङ्कल्पचेष्टितः ।
म्लानशिश्नश्च निर्बीजः स्यादेतत् क्लैब्यलक्षणम् ।
सामान्यलक्षणं ह्येतद्विस्तरेण प्रवक्ष्यते ॥१५२॥
शीतरूक्षाल्पसंक्लिष्टविरुद्धाजीर्णभोजनात्।
शोकचिन्ताभयत्रासात् स्त्रीणाञ्चात्यर्थसेवनात् ॥१५३॥
अभिचारादविस्रम्भाद्रसादीनाञ्च संक्षयात् ।

वातादीनाञ्च वैषम्यात् तथैवानशनात्क्रमात् ॥१५४॥
नारीणामरसज्ञत्वात् पञ्चकर्मापचारतः।
बीजोपघातात् भवति पाण्डुवर्णः सुदुर्बलः ॥१५५॥
अल्पप्राणोऽल्पहर्षश्च प्रमदासु भवेन्नरः।
हृत्पाण्डुरोगतमककामलाश्रमपीड़ितः ॥१५६॥
छर्द्यतीसारशूलार्त्तः कासज्वरनिपीड़ितः।
बीजोपघातजं क्लैव्यं ध्वजभङ्गक्षतं शृणु ॥१५७॥
अत्यम्ललवणक्षारविरुद्धाजीर्णभोजनात्।
अत्यम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात् ॥१५८॥
दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात्।
कन्यानाञ्चैव गमनादयोनिगमनादपि ॥१५९॥
दीर्घरोगां चिरोत्सृष्टां तथैव च रजस्वलाम्।
दुर्गन्धां दुष्टयोनिञ्च तथैव च परिस्नुताम् ॥१६०॥
ईदृशीं प्रमदां मोहात् यो गच्छेत् कामहर्षितः।
चतुष्पदाभिगमनाच्छेफसश्चाभिघाततः ॥१६१॥
अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात्।
काष्ठप्रहारनिष्पेषात् शूकानाञ्चातिसेवनात्।
रेतसश्च प्रतीघाताद्ध्वजभङ्गः प्रवर्त्तते ॥१६२॥
भवन्ति यानि रूपाणि तस्य वक्ष्याम्यतः परम्।
श्वयथुर्वेदना मेढ्रे रागश्चैवोपलक्ष्यते।
स्फोटाश्च तीव्रा जायन्ते लिङ्गपाको भवत्यपि ॥१६३॥
मांसवृद्धिर्भवेच्चास्य व्रणाः क्षिप्रं भवन्त्यपि।
पुलाकोदकसङ्काशः स्रावः श्यावारुणप्रभः ॥१६४॥
वलयीकुरुते चापि कठिनश्च परिग्रहः।
ज्वरस्तृष्णा भ्रमो मूर्च्छाच्छर्दिश्चास्योपजायते ॥१६५॥
रक्तं कृष्णं स्रवेच्चापि नीलमाविललोहितम्।

अग्निनेव च दग्धस्य तीव्रो दाहः सवेदनः ॥१६६॥
वस्तौ वृषणयोर्वापि सीवन्यां वंक्षणेषु च।
कदाचित् पिच्छिलो वापि पाण्डुस्रावश्च जायते ॥१६७॥
श्वयथुश्च भवेन्मन्दस्तिमितोऽल्पपरिस्रवः।
चिरात् च पाकं व्रजति शीघ्रं वाथ प्रमुच्यते ॥१६८॥
जायन्ते क्रिमयश्चापि क्लिद्यते पूतिगन्धि च।
विशीर्य्यते मणिश्चास्य मेद्रमुष्कावथापि च ॥१६९॥
ध्वजभङ्गकृतं क्लैव्यमित्येतत् समुदाहृतम्।
एवं पञ्चविधं केचित् ध्वजभङ्गं वदन्त्यपि ॥१७०॥

इति ध्वजभङ्गकृतक्लैव्यम्।

क्लैव्यं जरासम्भवं हि प्रवक्ष्याम्यथ तच्छृणु।
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते ॥१७१॥
अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम्।
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात् ॥१७२॥
बलवीर्य्येन्द्रियाणाञ्च क्रमेणैव परिक्षयात्।
परिक्षयादायुषश्चाप्यनाहाराच्छ्रमात् क्लमात् ॥१७३॥
जरासम्भवजं क्लैव्यमित्येतैर्हेतुभिर्नृणाम्।
जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्बलः ॥१७४॥
विवर्णो विह्वलो दीनः क्षिप्रं व्याधिमथाश्नुते।
एतज्जरासम्भवं हि चतुर्थं क्षयजं शृणु ॥१७५॥

इति जरासम्भवक्लैव्यम्।

अतिप्रचिन्तनाच्चैव शोकात् क्रोधाद्भयादपि।
ईर्ष्योत्कण्ठादथोद्वेगात् सदा विशति यो नरः ॥१७६॥
कृशो वा सेवते रूक्षमन्नपानमथौषधम्।
दुर्बलप्रकृतिश्चैव निराहारो भवेद् यदि ॥१७७॥
असात्म्यभोजनाच्चापि हृदये यो व्यवस्थितः।

रसः प्रधानधातुर्हि क्षीयेताशु नरस्ततः ॥१७८॥
रक्तादयश्च क्षीयन्ते धातवस्तस्य देहिनः।
शुक्रावसानास्तेभ्यो हि शुक्रं धाम परं मतम् ॥१७९॥
चेतसो वातिहर्षेण व्यवायं सेवते तु यः।
शुक्रन्तु क्षीयते तस्य ततः प्राप्नोति स क्षयम्।
घोरं व्याधिमवाप्नोति मरणं वा स गच्छति ॥१८०॥
शुक्रं तस्माद्विशेषेण रक्ष्यमारोग्यमिच्छता।
एतन्निदानलिङ्गाभ्यामुक्तं क्लैव्यं चतुर्विधम् ॥१८१॥
केचित् क्लैव्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे।
वदन्ति शेफसञ्छेदाद्वृषणोत्पाटनेन वा ॥१८२॥
मातापित्रोर्बीजदोषादशुभैश्चाकृतात्मनः।
गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः शिराः।
शोषयन्त्याशु तन्नाशाद्रेतश्चाप्युपहन्यते ॥१८३॥
तत्र सम्पूर्णसर्वाङ्गः स भवत्यपुमान् पुमान्।
एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात् ॥१८४॥
चिकित्सितमतस्तूर्द्धं समासव्यासतः शृणु।
शुक्रदोषेषु निर्दिष्टं भेषजं यत् मयानघ।
क्लैव्योपशान्तये कुर्यात् क्षीणक्षतहितञ्च यत् ॥१८५॥
वस्तयः क्षीरसर्पींषि हृष्ययोगाश्च ये मताः।
रसायनप्रयोगाश्च सर्वानेतान् प्रयोजयेत्।
समीक्ष्य देहदोषाग्नीन् बलभेषजकालवित् ॥१८६॥
व्यवायहेतुजं क्लैव्यं यत् स्याद्धेतुविपर्ययात्।
दैवव्यपाश्रयैश्चैव भेषजैश्चाभिचारजम्।
समासेनैतदुद्दिष्टं भेषजं क्लैव्यशान्तये ॥१८७॥
विस्तरेण प्रवक्ष्यामि क्लैव्यानां भेषजं पुनः।
सुस्निग्धस्विन्नगात्रस्य स्नेहयुक्तं विरेचनम्।

अन्वासनं ततः कुर्य्यात् अथवास्थापनं पुनः ॥१८८॥
प्रदद्यात् मतिमान् वैद्यस्ततस्तमनुवासयेत् ।
पलाशैरण्डमुस्ताद्यैः पश्चादास्थापयेत् ततः ॥१८९॥
वाजीकरणयोगाश्च पूर्वं ये समुदाहृताः ।
भिषजा ते प्रयोज्याः स्युः क्लैव्ये बीजोपघातजे ॥१९०॥
ध्वजभङ्गकृतं क्लैव्यं ज्ञात्वा तस्याचरेत् क्रियाम् ।
प्रदेहान् परिषेकांश्च कुर्य्याद्वा रक्तमोक्षणम् ।
स्नेहपानञ्च कुर्वीत सस्नेहं वा विरेचनम् ॥१९१॥
अनुवासं ततः कुर्य्यादथवास्थापनं पुनः ।
व्रणवच्च क्रियाः सर्वास्तत्र कुर्य्याद्विचक्षणः ॥१९२॥
जरासम्भवजे क्लैव्ये क्षयजे चैव कारयेत् ।
स्नेहस्वेदोपपन्नस्य सस्नेहं शोधनं हितम् ॥१९३॥
क्षीरसर्पिर्वृष्ययोगा वस्तयश्चैव यापनाः ।
रसायनप्रयोगाश्च तयोर्भेषजमुच्यते ॥१९४॥
विस्तरेणैतदुद्दिष्टं क्लैव्यानां भेषजं मया ॥१९५॥
इति क्लैव्यचिकित्सा ।

यः पूर्वमुक्तः प्रदरः शृणु हेत्वादिभिस्तु तम् ।
यात्यर्थं सेवते नारी लवणाम्लगुरूणि च ।
कटून्यथ विदाहीनि स्निग्धानि पिशितानि च ॥१९६॥
ग्राम्यौदकानि मेध्यानि कृशरं पायसं दधि ।
शुक्तमस्तुसुरादीनि भजन्त्याः कुपितोऽनिलः ॥१९७॥
रक्तं प्रमाणमुत्क्रम्य गर्भाशयगताः शिराः ।
रजोवहाः समाश्रित्य रक्तमादाय तद्रजः ।
यस्माद्विवर्द्धयत्याशु रक्तपित्तं समावृतम् ॥१९८॥
तस्मादसृग्दरं प्राहुरेतत् तन्त्रविशारदाः ।
रजः प्रदीर्य्यते यस्मात् प्रदरस्तेन स स्मृतः ॥१९९॥
सामान्यतः समुद्दिष्टं कारणं लिङ्गमेव च ।

चतुर्विधं व्यासतस्तु वाताद्यैः सन्निपाततः
अतःपरं प्रवक्ष्यामि देहाकृतिभिषग्जितम् ॥२००॥
रूक्षादिभिर्मारुतस्तु रक्तमादाय पूर्ववत्।
कुपितः प्रदरं कुर्य्यात् लिङ्गं तस्य च मे शृणु ॥२०१॥
फेनिलं तनु रूक्षञ्च श्यावमारुणमेव च।
किंशुकोदकसङ्काशं सरुजं वाथ नीरुजम् २०२॥,
कटीवंक्षणहृत्पार्श्वपृष्ठश्रोणिषु मारुतः।
कुरुते वेदनां तीव्रामेतद्वातात्मकं विदुः ॥२०३॥
अम्लोष्णलवणक्षारैः पित्तं प्रकुपितं यदा।
पूर्ववत् प्रदरं कुर्य्यात् पैत्तिकं लिङ्गतः शृणु ॥२०४॥
सनीलमथवा पीतमत्युष्णमसितं तथा।
नितान्तरक्तं स्रवति मुहुर्मुहुरथार्त्तिमत् ॥२०५॥
विदाहरागतृष्णामोहज्वरभ्रमसमायुतम्।
असृग्दरं पैत्तिकन्तु श्लैष्मिकन्तु प्रवक्ष्यते ॥२०६॥
गुर्वादिभिर्हेतुभिश्च पूर्ववत् कुपितः कफः।
प्रदरं कुरुते तस्य लक्षणं तत्त्वतः शृणु ॥२०७॥
पिच्छिलं पाण्डुवर्णञ्च गुरु स्निग्धञ्च शीतलम्।
स्रवत्यसृक् श्लेष्मलञ्च तथा मन्दरुजाकरम्।
छर्द्यरोचकहृल्लासश्वासकासमन्वितम् ॥२०८॥
वक्ष्यते चीरदोषाणां सामान्यमिह कारणम्।
यत् तदेव त्रिदोषस्य कारणं प्रदरस्य तु ॥२०९॥
त्रिलिङ्गसंयुतं विद्यान्नैकावस्थमसृग्दरम्।
नारी त्वतिपरिक्लिष्टा यदा प्रक्षीणशोणिता।
सर्वहेतुसमाचारादतिवृद्धस्तदानिलः ॥२१०॥
रक्तमार्गेण सृजति प्रत्यनीककरं कफम्।
दुर्गन्धं पिच्छिलं पीतं विदग्धं पित्ततेजसा ॥२११॥

वसां मेदश्च यावद्धि समुपादाय वेगवान् ।
सृजत्यपत्यमार्गेण सर्पिर्मज्जवसोपमम् ॥२१२॥
शश्वत् स्रवत्यथास्रावं तृष्णादाहज्वरान्विताम् ।
क्षीणरक्तां दुर्बलाञ्च तामसाध्यां विवर्जयेत् ॥२१३॥
मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहुलात्यल्पमार्त्तवं शुद्धमादिशेत् ॥२१४॥
गुञ्जाफलसवर्णञ्च पद्मालक्तकसन्निभम् ।
इन्द्रगोपकसङ्काशमार्त्तवं शुद्धमेव तत् ॥२१५॥
योनीनां वातलाद्यानां यदुक्तमिह भेषजम् ।
चतुर्णां प्रदराणाञ्च तत् सर्वं कारयेद्भिषक् ॥२१६॥
रक्तातिसारिणां यच्च तथा शोणितपित्तिनाम् ।
रक्तार्शसाञ्च यत् प्रोक्तं भेषजं तच्च कारयेत् ॥२१७॥

इति प्रदरचिकित्सा ।

अथ स्तन्यदोषचिकित्सा ।

धात्रीस्तनस्तन्यसम्पदुक्ता विस्तरतः पुरा ।
स्तन्यसञ्जननञ्चैव स्तन्यस्य च विशोधनम् ॥२१८॥
वातादिदुष्टे लिङ्गञ्च क्षीणस्य च चिकित्सितम् ।
तत् सर्वमुक्तं ये त्वष्टौ क्षीरदोषाः प्रकीर्त्तिताः ॥२१९॥
वातादिष्वेव तान् विद्याच्छास्त्रचक्षुर्भिषक्तमः ।
त्रिविधास्तु यतः शिष्यास्ततो वक्ष्यामि विस्तरम् ॥२२०॥
अजीर्णासात्म्यविषमविरुद्धात्यर्थभोजनात् ।
लवणाम्लकटुक्षारप्रक्लिन्नानाञ्च सेवनात् ॥२२१॥
मनःशरीरसन्तापादस्वप्नान्निशि चिन्तनात् ।
प्राप्तवेगप्रतीघातादप्राप्तोदीरणेन च ॥२२२॥
परमान्नं गुडकृतं कृशरं दधि मन्दकम् ।
अभिष्यन्दीनि मांसानि ग्राम्यानूपौदकानि च ॥२२३॥
भुक्त्वा भुक्त्वा दिवास्वप्नात् मद्यस्यातिनिषेवणात् ।

नायासादभीघातात् क्रोधाच्चातङ्ककर्षणैः ॥२२४॥
दोषाःचीरवहाः प्राप्य शिराः स्तन्यं प्रदूष्य च।
कुर्य्युरष्टविधं भूयो दोषास्तान् मे निबोधत ॥२२५॥
वैरस्यं फेनसङ्घातं रौक्ष्यञ्चेत्यनिलात्मके।
पित्ताद्वैवर्ण्यदौर्गन्ध्ये स्नेहपैच्छिल्यगौरवम्।
कफाद्भवति रूक्षाद्यैरनिलः स्वैः प्रकोपणैः ॥२२६॥
क्रुद्धः चीराशयं प्राप्य रस स्तन्यस्य दूषयेत्।
विरस वातसंसृष्टं क्षयीभवति तत् पिवन्।
न चास्य स्वदते चीर क्षच्छ्रेण च विवर्द्धते ॥२२७॥
तथैव वायुः कुपितः स्तन्यमन्तर्विलोडयन्।
करोति फेनसङ्घातं तत् तु क्षच्छ्रात् प्रवर्त्तते॥२२८॥
तेन चामस्वरो वालो बद्धविण्मूत्रमारुतः।
वातिकं शीर्षरोगं वा पीनसं वाधिगच्छति ॥२२९॥
पूर्व्ववत् कुपितः स्तन्ये स्नेह शोषयतेऽनिलः।
रूक्षं तत् पिवतो रौक्ष्यात् वलह्रासश्च जायते ॥२३०॥
पित्तमुष्णादिभिः क्रुद्ध स्तन्याशयमभिप्लुतम्।
करोति स्तन्यवैवर्ण्यं नीलपीतासितादिकम् ॥२३१॥
विवर्णगात्रः स्विन्नः स्यात् तृष्णालुर्भिन्नविट् शिशुः।
नित्यमुष्णशरीरश्च नाभिनन्दति तत् स्तनम् ॥२३२॥
पूर्व्ववत् कुपिते पित्ते दौर्गन्ध्यं चीरमृच्छति।
पाण्डामयस्तत् पिवतः कामला च भवेच्छिशोः ॥२३३॥
क्रुद्धो गुर्व्वादिभिः श्लेष्मा चीराशयगतः स्त्रियाः।
स्नेहान्वितत्वात् तत् चीरमतिस्निग्धं करोति तु ॥२३४॥
छर्दनः कुन्थनस्तेन लालालुर्जायते शिशुः।
नित्योपदिग्धैः स्रोतोभिर्निद्राक्लमसमन्वितः।
श्वासकासपरीतस्तु प्रसेकतमकान्वितः ॥२३५॥

अभिभूय कफः स्तन्यं पिच्छिलं कुरुते यदा।
लालालुः शूनवक्त्राक्षिर्जडः स्यात् तु पिबन् शिशुः ॥२३६॥
कफः क्षीराशयगतो गुरुत्वात् क्षीरगौरवम्।
अतिस्नेहान्वितं पीत्वा बालो हृद्रोगमृच्छति।
अन्यांश्च विविधान् रोगान् कुर्य्यात् क्षीरसमाश्रितान् ॥२३७॥
क्षीरे वातादिभिर्दुष्टे सम्भवन्ति तदात्मकाः।
तत्रादौ स्तन्यशुद्ध्यर्थं धात्रीं स्नेहोपपादिताम्।
संस्वेद्य विधिवद्वैद्यो वमनेनोपपादयेत् ॥२३८॥
वचाप्रियङ्गुयष्ट्याह्वफलवत्सकसर्षपैः।
कल्कैर्निम्बपटोलानां क्वाथैः सलवणैर्वमेत् ॥२३९॥
सम्यग्वान्तां यथान्यायं कृतसंसर्जनां ततः।
दोषकालबलापेक्षी स्नेहयित्वा विरेचयेत् ॥२४०॥
त्रिवृतामभयां वापि त्रिफलारससंयुताम्।
पाययेत् मधुसंयुक्तामभयाञ्चापि केवलाम्।
पाययेन्मूत्रसंयुक्तां विरेकार्थञ्च शास्त्रवित् ॥२४१॥
अथ सम्यग्विरिक्तां च कृतसंसर्जनां पुनः।
ततो दोषापहैरन्नपानैरुपाचरेत् ॥२४२॥
शालयो षष्टिका वा स्युः श्यामाका भोजने हिताः।
प्रियङ्गवः कोरदूषा यवा वेणुयवास्तथा ॥२४३॥
वंशवेत्रकलायाश्च सक्षौद्रा यूषसंस्कृताः।
मुद्गान् मसूरान् यूषार्थे कुलत्थांश्च प्रकल्पयेत् ॥२४४॥
निम्बवेत्राग्रकुलकवार्त्ताकामलकैः शृतान्।
सव्योषसैन्धवान् यूषान् दापयेत् स्तन्यशोधनान् ॥२४५॥
शशान् कपिञ्जलानेणान् संस्कृतांश्च प्रकल्पयेत्।
शार्ङ्गेष्टासप्तपर्णत्वगश्वगन्धाशृतं जलम् ॥२४६॥
पाययेताथवा स्तन्यशुद्ध्यै कटुरोहिणीम्।

अमृतासप्तपर्णत्वक्क्काथञ्चैव सनागरम् ॥२४७॥
किराततिक्तकक्काथं श्लोकपादेरितान् पिबेत्।
वीनेतान् स्तन्यशुद्ध्यर्थमिति सामान्यभेषजम्।
कीर्त्तितं स्तन्यदोषाणां पृथगन्यं निबोधत ॥२४८॥
पाययेद्धि रसक्षीरा द्राक्षामधुकशारिवाः।
स्वल्पपिष्टां पयस्याञ्च समालोड्य सुखाम्बुना ॥२४९॥
यवकोलकुलत्थैश्च पिष्टैरालेपयेत् स्तनौ।
शुष्कौ प्रक्षाल्य निर्दुह्यात् तथा स्तन्यं विशुध्यति ॥२५०॥
फेनसङ्घातवत् क्षीरं यस्यास्तां पाययेत च।
पाठानागरशार्ङ्गष्टामूर्वाः पिष्ट्वा सुखाम्बुना ॥२५१॥
अञ्जनं तगरं दारु बिल्वमूलं प्रियङ्गवः।
स्तनयोः पूर्ववत् कार्यं लेपनं क्षीरशोधनम् ॥२५२॥
किरातृतिक्तकं शुण्ठी सामृता क्वाथयेद्भिषक्।
तं क्वाथं पाययेद्धात्रीं स्तन्यदोषनिवर्हणम् ॥२५३॥
स्तनौ चालेपयेत् पिष्टैर्यवगोधूमसर्षपैः।
षड्विरेकाश्रितीयोक्तैरौषधैः स्तन्यशोधनैः ॥२५४॥
रूक्षक्षीरा पिबेत् क्षीरं तैर्वा सिद्धं घृतं पिबेत्।
पूर्ववज्जीवकाद्यञ्च पञ्चमूलं प्रलेपनम्।
स्तनयोः संविधातव्यं सुखोष्णं स्तन्यशोधनम् ॥२५५॥
यष्टिमधुकमृद्वीकापयस्याः सिन्धुवारिकाः।
शीताम्बुना पिबेत् कल्कं क्षीरवैवर्ण्यनाशनम् ॥२५६॥
द्राक्षामधुककल्केन स्तनौ चास्याः प्रलेपयेत्।
प्रक्षाल्य वारिणा चैव निर्दुह्यात् तौ पुनःपुनः ॥२५७॥
विषाणिकाजशृङ्गी च त्रिफलां रजनीं वचाम्।
पिबेत् क्षीराम्बुना पिष्ट्वा क्षीरदौर्गन्ध्यनाशनम् ॥२५८॥
लिह्याद्वाप्यभयाचूर्णं सव्योष माक्षिकप्लुतम्।

क्षीरदौर्गन्ध्यनाशार्थं धात्री पथ्याशिनी तथा ॥२५८॥
शारिवोशीरमञ्जिष्ठाश्लेष्मातकसचन्दनैः।
पत्राम्बुचन्दनोशीरैः स्तनौ चास्याः प्रलेपयेत् ॥२६०॥
स्निग्धक्षीरा दारुमुस्तपाठाः पिष्ट्वा सुखाम्बुना।
पीत्वा ससैन्धवाः क्षिप्रं क्षीरशुद्धिमवाप्नुयात् ॥२६१॥
पाययेत् पिच्छिलक्षीरां शार्ङ्गेष्टामभयां वचाम्।
मुस्तनागरपाठाश्च पीताः स्तन्यविशोधनाः ॥२६२॥
तक्रारिष्टमपि पिबेदम्लसं यत् निदर्शितम्।
विदारीबिल्वमधुकैः स्तनौ चास्याः प्रलेपयेत् ॥२६३॥
त्रायमाणामृतानिम्बपटोलत्रिफला शृतम्।
गुरुक्षीरा पिबेदेतत् स्तन्यदोषविशुद्धये ॥२६४॥
पिबेद्वा पिप्पलीमूलचव्यचित्रकनागरम्।
बलानागरशार्ङ्गेष्टामूर्वाभिर्लेपयेत् स्तनौ।
पृश्निपर्णीपयस्याभ्यां स्तनौ चास्याः प्रलेपयेत् ॥२६५॥
अष्टावेते क्षीरदोषा हेतुलक्षणभेषजैः।
निर्दिष्टाः क्षीरदोषोत्थास्तथोक्ताः केचिदामयाः ॥२६६॥
दोषदूष्यमलाश्चैव महतां व्याधयश्च ये।
त एव सर्वे बालानां मात्रा त्वल्पतरा मता ॥२६७॥
निवृत्तिर्वमनादीनां मृदुत्वं परतन्त्रता।
वाक्चेष्टयोरसामर्थ्यं वीक्ष्य बालेषु शास्त्रवित्।
भेषजञ्चाल्पमात्रन्तु यथाव्याधि प्रयोजयेत् ॥२६८॥
मधुराणि कषायाणि क्षीरवन्ति मृदूनि च।
प्रयोजयेद् भिषग् बाले मतिमान् अप्रमादतः ॥२६९॥
अत्यर्थस्निग्धरूक्षोष्णमम्लं कटु विपाकि च।
गुरु चौषधपानान्नमेतद्बालेषु गर्हितम् ॥२७०॥
समासात् सर्वरोगाणामेतद् बालेषु भेषजम्।
निर्दिष्टं शास्त्रवित् वैद्यः प्रविविच्य प्रयोजयेत् ॥२७१॥

इति स्तन्यदोषदबालरो

सलिङ्गव्यापदो योनेः सनिदानचिकित्सिताः।
उक्ता विस्तरशः सम्यक् मुनिना तत्त्वदर्शिना ॥२७२॥
इति सर्वविकाराणामुक्तमेतत् चिकित्सितम्।
स्थानमेतद्धि तन्त्रस्य रहस्यं सारमुत्तमम् ॥२७३॥
अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च।
नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते ॥२७४॥
तानेतान् कापिलबलः शेषान् दृढ़बलोऽकरोत्।
तन्त्रस्यास्य महार्थस्य पूरणार्थं यथातथम् ॥२७५॥
रोगा येऽप्यत्र नोद्दिष्टा बहुत्वान्नामरूपतः।
तेषामप्येतदेव स्याद्दोषादीन् वीक्ष्य भेषजम् ॥२७६॥
दोषदूष्यनिदानानां विपरीतं हितं ध्रुवम्।
उक्तानुक्तान् गदान् सर्वान् सम्यक्युक्तं नियच्छति ॥२७७॥
देशकालप्रमाणानां सात्म्यासात्म्यस्य चैव हि।
सम्यक्योगोऽन्यथाप्येषां पथ्यमप्यन्यथा भवेत् ॥२७८॥
आस्यादामाशयस्थान् हि रोगान् नस्तःशिरोगतान्।
गुदात् पक्वाशयस्थांश्च हन्त्याशु दत्तमौषधम् ॥२७९॥
शरीरावयवोत्थेषु वीसर्पपिडकादिषु।
यथादेशं प्रदेहादि शमनं स्याद्विशेषतः ॥२८०॥
दिनातुरौषधव्याधिजीर्णलिङ्गर्त्तवेक्षणम्।
काले विद्याद्दिनापेक्षः पूर्वाह्णे वमनं यथा ॥२८१॥
रोग्यवेक्ष्य यथा प्रातर्निरन्नो बलवान् पिबेत्।
भेषजं लघुपथ्यान्नैर्युक्तमद्यात् तु दुर्बलः ॥२८२॥
भैषज्यकालो भक्तादौ मध्ये पश्चान्मुहुर्मुहुः।
सामुद्गं भक्तसंयुक्तं ग्रासग्रासान्तरे दश ॥२८३॥
अपाने विगुणे पूर्वं समाने मध्यभोजनम्।
व्याने तु प्रातरशितमुदाने भोजनोत्तरम् ॥२८४॥

वायौ प्राणे प्रदुष्टे तु ग्रासे ग्रासान्तरिय्यते ।
श्वासकासपिपासासु त्ववचार्य्यं मुहुर्मुहुः ॥२८५॥
सामुद्रं हिक्किने देयं लड्डुनान्नेन संयुतम् ।
सशोन्यन्ययौषधं भोज्यैर्विचित्रैररुचौ हितम् ॥२८६॥
ज्वरे पेयाः कषायाश्च क्षीरसर्पिर्विरेचनम् ।
षड़हे षड़हे देयं कालं वीक्ष्यामयस्य तु ॥२८७॥
क्षुद्वेगमोक्षौ लघुता विशुद्धिर्जीर्णलक्षणम् ।
तदा भेषजमादेयं स्याद्धि दोषवदन्यथा ॥२८८॥
चयादयश्च दोषाणां वर्ज्यं सेव्यञ्च यत्र यत् ।
ऋतावपेक्ष्यं यत् कर्म पूर्वं सर्वमुदाहृतम् ॥२८९॥
उपक्रमाणां करणं प्रतिषेधे च कारणम् ।
व्याख्यातमबलानां सविकल्पानामवेक्षणे ॥२९०॥
मुहुर्मुहुश्च रोगाणामवस्था आतुरस्य च ।
अवेक्षमाणस्तु भिषक् चिकित्सायां न मुह्यति ॥२९१॥
इत्येवं षड्विधं कालमनपेक्ष्य भिषग्जितम् ।
प्रयुक्तमहिताय स्यात् शस्यस्याकालवर्षवत् ॥२९२॥
व्याधीनामृत्वहोरात्रवयसां भोजनस्य तु ।
विशेषो भिद्यते यस्तु कालापेक्षः स उच्यते ॥२९३॥
वसन्ते श्लेष्मजा रोगाः शरत्काले तु पित्तजाः ।
वर्षासु वातजाश्चैव प्रायः प्रादुर्भवन्ति हि ।
निशान्ते दिवसान्ते च वर्षान्ते वातजाः गदाः ॥२९४॥
प्रातः क्षपादौ कफजास्तयोर्मध्ये तु पित्तजाः ।
जीर्णान्ते वातजा रोगा जीर्यमाणे तु पित्तजाः
श्लेष्मजा भुक्तमात्रे तु लभन्ते प्रायशो बलम् ॥२९५॥
नाल्पं हन्त्यौषधं व्याधिं यथापोऽल्पा महानलम् ।
दोषवच्चातिमात्रं स्यात् शस्यस्यात्युदकं यथा ॥२९६॥

सम्प्रधार्य्य बलं तस्मादामयस्यौषधस्य च ।
नैवातिबहुलात्यल्पं भेषज्यमवचारयेत् ॥२९७॥
औचित्याद् यस्य यत् सात्म्यं देशस्य पुरुषस्य च ।
अपथ्यमपि नैकान्तात् तत् त्यजन्नभवे सुखम् ॥२९८॥
वाह्लीकाः पह्लवाश्चीनाः शूलीका यवनाः शकाः ।
मांसगोधूममाध्वीकशस्त्रवैश्वानरोचिताः ॥२९९॥
मीरसात्म्यास्तथा प्राच्या मत्स्यसात्म्याश्च सैन्धवाः ।
अश्मकावन्तिकानान्तु तैलाम्लं सात्म्यमुच्यते ॥३००॥
कन्दमूलफलं सात्म्यं विद्यात् मलयवासिनाम् ।
सात्म्यं दक्षिणतः पेयामन्थश्चोत्तरपश्चिमे ॥३०१॥
मध्यदेशे भवेत् सात्म्यं यवगोधूमगोरसाः ।
तेषां तत् सात्म्ययुक्तानि भेषजान्यवचारयेत् ॥३०२॥
सात्म्यं ह्याशु बलं धत्ते नातिदोषञ्च बह्वपि ।
योगैरेवं चिकित्सन् हि देशाद्यज्ञोऽपराध्यति ॥३०३
वयोबलशरीरादिभेदा हि बहवो मताः ।
तथान्तः सन्धिमार्गाणां दोषाणां गूढचारिणाम् ॥३०४॥
भवेत् कदाचित् कार्य्यापि विरुद्धाभिमता क्रिया ।
अन्तर्गतं गूढपित्तं स्वेदसेकोपनाहनैः ॥३०५॥
नीयन्ते वहिरुष्णैर्हि तयोष्मं शमयन्ति तम् ।
वाह्यैश्च शीतैः सेकाद्यैरुष्मान्तर्याति पीडितः ॥३०६॥
सोऽन्तर्गूढं कफं हन्ति शीतं शीतैस्तथा जयेत् ।
श्लक्ष्णपिष्टो घनो लेपश्चन्दनस्यापि दाहकृत् ॥३०७॥
त्वग्गतस्योष्मणो रोधात् शीतकृच्चान्यथा गुरोः ।
छर्द्दिघ्ना मक्षिकाविष्ठा मक्षिकैव तु वामयेत् ॥३०८
द्रव्येषु स्विन्नदग्धेषु चैव तेष्वेव विक्रिया ।
तस्माद्दोषौषधादीनि परीक्ष्य दश तत्त्वतः ।

कुर्य्यात् चिकित्सितं प्राज्ञो न योगैरेव केवलैः ॥२०९॥
निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनायाति हेतुना।
क्षीणे मार्गीकृते देहे शेषः सूक्ष्म इवानलः ॥२१०॥
तस्मात् तमनुबध्नीयात् प्रयोगेणानपायिना।
सिद्धयर्थं प्राक् प्रयुक्तस्य सिद्धस्याप्यौषधस्य तु ॥२११॥
काठिन्यादूनभावाद्वा दोषोऽन्तः कुपितो महान्।
पथ्यैर्मृदुत्वतां नीतो मृदुदोषकरो भवेत् ॥२१२॥
पथ्यमप्यग्रतस्तस्माद् यो व्याधिरुपजायते।
ज्ञात्वैवं वृद्धिमभ्यासमथवान्यस्य कारयेत् ॥२१३॥
सातत्यात् स्वाद्वभावाद्वा पथ्यं द्वेष्यत्वमागतम्।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ॥२१४॥
मनसोऽर्थानुकूल्याद्धि तुष्टिरूर्जा रुचिर्बलम्।
सुखोपभोगता च स्याद्व्याधेश्चातो बलक्षयः ॥२१५॥
लौल्याद्दोषचयाद्वापि व्याधिधर्म्मास्वपि या रुचिः।
तासु पथ्योपचारः स्याद्योगेनाद्यं विकल्पयेत् ॥२१६॥
विंशतिर्व्यापदो योनेर्निदानं लिङ्गमेव च।
चिकित्सा चापि निर्दिष्टा स्त्रियाणां हितकाम्यया ॥२१७॥
शुक्रदोषास्तथा चाष्टौ निदानाकृतिभेषजैः।
क्लैब्यान्युक्तानि चत्वारि चत्वारः प्रदरास्तथा ॥२१८॥
तेषां निदानलिङ्गञ्च भैषज्यञ्चैव कीर्त्तितम्।
क्षीरदोषास्तथा चाष्टौ हेतुलिङ्गभिषग्जितैः ॥२१९॥
तेषां चिकित्सा निर्दिष्टा समासव्यासतो मया।
रेतसो रजसश्चैव कीर्त्तितं शुद्धिलक्षणम् ॥२२०॥
उक्तानुक्तचिकित्सा च सम्यङ्योगस्तथैव च।
देशादिगुणयत्ना च कालः षड्विध एव च ॥२२१॥
देशे देशे च यत् साम्यं यथा भेषोऽपराध्यति।

चिकित्सा चापि निर्दिष्टा दोषाणां गूढचारिणाम् ॥२२२॥
यो हि सम्यक् न जानाति शास्त्रं शास्त्रार्थमेव च।
न कुर्य्यात् स क्रियां चित्रमचक्षुरिव चित्रकृत् ॥२२३॥

इति योनिव्यापच्चिकित्सितं समाप्तम्।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते।
चिकित्सितमिदं स्थानं षष्ठं परिसमापितम् ॥

---

# कल्पस्थानम्।

## प्रथमोऽध्यायः।

### मदनकल्पः।

अथातो मदनकल्पं व्याख्यास्याम इति ह स्माह भगवान् आत्रेयः।

अथ खलु वमनविरेचनार्थं मदनफलादिविहितादीनां वमनविरेचनद्रव्याणां सुखोपभोग्यतमैः सद्रव्यैर्द्रव्यैः विविधैः संयोगानाञ्च क्रियाविधेः सुखोपायस्य सम्यगुपकल्पनार्थं कल्पस्थानमुपदेक्ष्यामोऽग्निवेश। ॥१॥

तत्र दोषहरणमूर्द्धभागं वमनसंज्ञकमधोभागं विरेचनसंज्ञकम्, उभयं वा शरीरमलविरेचनाद्विरेचनशब्दं लभते ॥२॥

तत्रोष्णतीक्ष्णसूक्ष्मव्यवायिविकाशीनि औषधानि स्ववीर्य्येण हृदयमुपेत्य धमनीरनुसृत्य सम्यक् युक्त्या स्थूलाणुस्रोतोभ्यः केवलं शरीरगतं दोषसङ्घातम् आग्नेयत्वात् विष्यन्दयन्ति तैक्ष्ण्यात् विच्छिन्दन्ति ॥३॥

स विच्छिन्नः परिप्लवः स्नेहभाविते काये स्नेहाक्तभाजनस्थमिव क्षौद्रमसज्जन् प्रवणभावात् आमाशयमागत्य उदानप्रणुन्नोऽग्निवाय्वात्मकत्वात् ऊर्द्धभागप्रभावात् औषधस्य ऊर्द्धम् उत्क्षिप्यते। सलिलपृथिव्यात्मकत्वात् अधोभागप्रभावाच्च औषधस्य अधः प्रवर्त्तते, उभयतश्च उभयगुणत्वात् इति लक्षणोद्देशः ॥४॥

युतः स्थिरसुकुमारवर्णसंहननोपपन्नसाधारणगुणयुक्तपुरुषः साधारणो ज्ञेयः ॥९॥

तत्र देशे जाङ्गले साधारणे वा यथाकालं शिशिरातपपवनसलिलसेविते समे शुचौ प्रदक्षिणे श्मशानचैत्यदेवयजनागारसभारामवल्मीकोषरविरहिते कुशरोहिपास्तीर्णे स्निग्धकृष्णसुवर्णवर्णमधुरमृत्तिके मृदावफालकृष्टेऽनुपहतेऽन्यैर्बलवत्तरैः द्रुमैरौषधयो जाताः प्रशस्यन्ते ॥१०॥

तत्र यानि कालजातानि उपगतसम्पूर्णप्रमाणरसवीर्यगन्धानि कालातपाग्नि सलिलपवनजन्तुभिः अनुपहतगन्धवर्णरसस्पर्शप्रभावाणि प्रत्यग्राणि उदीच्यां दिशि स्थितानि तेषां शाखापत्रमचिरप्ररूढं वर्षावसन्तयोर्ग्राह्यं ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढपर्णानां शरदि त्वक्कन्दक्षीराणि हेमन्ते साराणि पुष्पफलमिति मङ्गलाचारः कल्याणवृत्तः शुचिः शुक्लवासाः सम्पूज्य देवतामश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात् ॥११॥

गृहीत्वा चानुरूपगुणवद्भाजने संस्थाप्यागारेषु प्रागुदग्द्वारेषु निवातप्रवातैकदेशेषु नित्यपुष्पोपहारबलिकर्मवत्सु अग्निसलिलोपस्वेदधूमरजोमूषिकचतुष्पादामनभिगमनीयानि स्ववच्छन्नानि शिक्ये चासज्य स्थापयेत्। तत्तानि च यथादोषं प्रयुञ्जीत ॥१२॥

सुरासौवीरकतुषोदकमैरेयमेदकधान्याम्लफलाम्लदध्यम्लादिभिर्वाते ॥१३॥

मृद्वीकामलकमधुमधूकपरूषकफलफाणितक्षीरादिभिश्च पित्ते ॥१४॥

श्लेष्मणि तु मधुमूत्रकषायादिभिर्भावितानि चालोड़ितानि च इति उद्देशः ॥१५॥

तं विस्तरेण द्रव्यदेहदोषसात्म्यादीनि प्रविभज्य व्याख्यास्यामः ॥१६॥

वमनद्रव्याणां मदनफलानि श्रेष्ठतमानि आचक्षते अनपायित्वात्, तानि वसन्तग्रीष्मयोरन्तरे पुष्याश्वयुग्भ्यां मृगशिरसा वा गृह्णीयात् मैत्रे मुहूर्त्ते करणे च। यानि पक्कानि हरितानि पाण्डूनि अक्रिमीणि अप्रम्लानि अक्लिन्नानि अनग्धानि तानि प्रमृज्य कुशपुटे बद्ध्वा गोमयेनालिप्य यवतुषमाषशालिकुलत्थमुद्गपर्णीनामन्यतमे निदध्यादष्टरात्रम्। अत ऊर्द्ध्वं मृदुभूतानि तानि मधिष्टगन्धानिउद्धृत्य शोषयेत्। सुशुष्काणां फलानां पिप्पलीरुद्धरेत् तासां घृतदधिमधुपललविमर्दितानां पुनः शुष्काणां तासां नवकलसं सुप्रमृष्टवालुकमरजस्कमाकण्ठं पूरयित्वा स्ववच्छन्नं स्वनुगुप्तं सिक्ये आसज्य स्थापयेत् ॥१७॥

अथ च्छर्दनीयमातुरं द्व्यहं त्र्यहं वा स्नेहस्वेदोपपन्नं च्छर्दयेदिति ॥१८॥

ग्राम्यानूपौदक-मांस-रस-क्षीर-दधिमाषतिलशाकादिभिः समुत्क्लेशितश्लेष्माणं व्युषितं जीर्णाहारं पूर्वाह्णे कृतबलिहोम-मङ्गलप्रायश्चित्तं निरन्नमनतिस्निग्धं यवाग्वा घृतमात्रां च पीतवन्तम्, तासां फलपिप्पलीनामन्तर्नखमुष्टिं यावद्वा साधु मन्येत जर्जरीकृत्य यष्टिमधुकषायेण कोविदारकर्बुदारनीपविदुलबिम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्पीकषायाणामन्यतमेन वा रात्रिमुषितं विमृद्य पूतं मधुसैन्धवयुक्तं सुखोष्णं कृत्वा पूर्णं शरावं मन्त्रेणानेनाभिमन्त्रयेत् ॥१९॥

ओम् ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु ते ॥२०॥
रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥२१॥

इत्येवमभिमन्त्र्योदङ्मुखमातुरं पाययेत्। श्लेष्मज्वरगुल्मप्रतिश्यायवन्तं विशेषेण पुनरा पित्तागमनात् तेन साधु वमति ॥२२॥

हीनवेगन्तु पिप्पल्यामलकसर्षपकल्कलवणोष्णोदकैः पुनः पुनः प्रवर्त्तयेत् आपित्तदर्शनात् इत्ययं सर्वच्छर्दनयोगविधिः ॥ २३ ॥

सर्वेषु तु मधुसैन्धवं कफविलायनच्छेदार्थं वमनेषु विदध्यात्। न चोष्णविरोधो मधुनश्छर्दनयोगयुक्तस्याविपक्वप्रत्यागमनाद्दोषप्रहरणाच्च ॥२४॥

फलपिप्पलीनां द्वौ द्वौ भागौ कोविदारादिकषायेण त्रि सप्तकृत्वः भावयेत् तेन रसेन तृतीय भागं पिष्ट्वा हरीतकीभिर्विभीतकैरामलकैर्वा तुल्यं वर्त्तयेत्। तासामेका द्वे वा पूर्वोक्तानां कषायाणामन्यतमस्याञ्जलिमात्रेण विमृद्य बलवत्श्लेष्मप्रसेकग्रन्थिज्वरोदरारुचिषु पाययेदिति समानं पूर्वेण ॥२५॥

फलपिप्पलीक्षीरं तेन वा क्षीरयवागूमधोभागे रक्तपित्ते हृद्दाहे च तृषितस्य वा दध्न उत्तरकं कफच्छर्दिसमकप्रसेकेषु तस्यैव पयसः शीतस्य सन्तानिकाञ्जलिं पित्ते प्रकुपिते उरःकण्ठहृदये च तनुकफोपदिग्धे इति समानं पूर्वेण ॥२६॥

फलपिप्पलीशृतक्षीरान्नवनीतमुत्पन्नं फलादिकल्ककषायसिद्धं कफाभिभूताग्निं विशुष्कदेहञ्च मात्रया पाययेदिति समानं पूर्वेण ॥२७॥

फलपिप्पलीनां फलादिकषायेण त्रि.सप्तकृत्वः परिभावितेन पुष्परज.प्रकाशेन चूर्णेन सरसि बृहत्सरोरुहं सायाह्नेऽवचूर्णयेत्। तद्रात्रिव्युषित प्रभाते पुनरवचूर्णितमुद्धृत्य हरिद्राकृशरक्षीरयवागूनामन्यतम सैन्धवगुडफाणितयुक्तमाकण्ठं पीतवन्तमाघ्रापयेत् सुकुमारमुत्क्लिष्ट पित्त कफम् औषधद्वेषिणमिति समानं पूर्वेण ॥२८॥

फलपिप्पलीनां भल्लातकविधिपरिस्रुतं स्वरसं पक्त्वा फाणि तेनातन्तुलीभावाल्लेहयेत् ॥२९॥

तापशुष्कं वा चूर्णीकृतं जीमूतादिकषायेण पित्ते कफस्थानगते पाययेदिति समानं पूर्वेण ॥३०॥

फलपिप्पलीचूर्णानि पूर्ववत् कोविदारादीनां पञ्चानामन्यतमकषायस्रुतानि वर्त्तिक्रियाः कोविदारादिकषायोपसर्जनाः पेया इति समानं पूर्वेण ॥३१॥

फलपिप्पलीषु आरग्वधकुटजस्वादुकण्टकपाठापाटलिशार्ङ्गेष्टामूर्वासप्तपर्ण-नक्तमालपिचुमर्दपटोल-सुषवी-गुडूचीसोमवल्कद्वीपिकानां पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेराणां च अन्यतमकषायेण सिद्धो लेह इति समानं पूर्वेण ॥३२॥

फलपिप्पलीषु एलाहरेणुकाशतपुष्पाकुस्तुम्बुरुतगरकुष्ठत्वक्चोरकमरुवकागुग्गुलु-वालुकश्रीवेष्टकपरिपेलक-मांसीशैलेयकस्थौणेयकसरल-पारावत-पद्यशोकरोहिणीनां विंशतेरन्यतमस्य कषायेण साधितोत्कारिकाकल्पेन *यथा मोदको वा मोदककल्पेन* यथादोषरोगविभक्ति प्रयोज्या इति समानं पूर्वेण ॥३३॥

फलपिप्पलीस्वरसकषायपरिभावितानि तिलशालितण्डुलपिष्टानि तत्कषायोपसर्जनानि शष्कुलीकल्पेनवा पूपा इति समानं पूर्वेण ॥३४॥

एतेनैव च कल्पेन सुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकशृङ्गवेर-रञ्जनभूस्तृणककासमर्दभद्रराजानामिक्षुवालिकेक्षुकाण्डेक्षूणाश्चान्यतमस्य कषायेण कारयेत् ॥३५॥

यथा वदरषाड़वरागलेहमोदकोत्कारिकातर्पणपानक-मांसरस-यूष-मद्यानि मदनफलपाचितानि तेनोपसृज्य यथादोषरोगविभक्ति दद्यात् तैः साधु वमतीति ॥३६॥

तत्र श्लोकाः।

मदनः करहाटश्च राटः पिण्डीतकः फलम्।
श्वसनश्चेति पर्य्यायैरुच्यते तस्य कल्पना ॥३७॥
नव योगाः कषायेषु वर्त्तिष्वष्टौ पयोमुखे।
पञ्च फाणितचूर्णे द्वौ त्रयी वर्त्तिक्रियासु षट् ॥३८॥
विंशतिर्विंशतिर्लेहमोदकोत्कारिकासु च।
शष्कुलीपूपपयोक्ता योगाः षोड़श षोड़श ॥३९॥
दशान्ये षाड़वाद्येषु त्रयस्त्रिंशदिदं शतम्।
योगानां विधिवद्दृष्टं फलकल्पे महर्षिणा ॥४०॥

## द्वितीयोऽध्यायः।

### जीमूतकल्पः।

कल्पं जीमूतकस्येमं फलपुष्पाश्रयं शृणु।
खरागरी च वेणी च तथा स्याद्देवताड़कः ॥१॥
जीमूतकं त्रिदोषघ्नं यथास्वौषधकल्पितम्।
प्रयोक्तव्यं ज्वरश्वासहिक्काकोठामयेषु च ॥२॥
यथोक्तगुणयुक्तानां देयजानां यथाविधि।
पयः पुष्पेषु निर्वृत्ते फले पेया शृतं पयः ॥३॥
लोमशे क्षीरसन्तानं दध्युत्तरमलोमशे।
शृते पयसि दध्यम्लं जातं हरितपाण्डुके ॥४॥
जीर्णानाञ्च सुशुष्काणां न्यस्तानां भाजने शुचौ।
चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत् ॥५॥
आसुत्य च सुरामण्डे मर्दित्वा प्रसृतं पिबेत्।
कफजेऽरोचके कासे पाण्डुरोगे सयक्ष्मणि ॥६॥
द्वे चापोथ्याथवा त्रीणि गुडूच्यामलकस्य वा।
कोविदारादिकानां वा निम्बस्य कुटजस्य वा।

कषायेष्वासुतं पूत्वा तेनैव विधिना पिबेत् ॥७॥
अथवारग्वधादीनां सप्तानां पूर्ववत् पिबेत् ।
एकैकशः कषायेण पित्तश्लेष्मज्वरार्दितः ॥८॥
वर्त्तयः फलवत्योऽष्टौ कोलमात्रास्तु ता मताः ।
जीमूतकस्य वा कल्कं चूर्णं वा शिशिराम्बुना ।
ज्वरे पित्तभवे वातदुष्टे श्लेष्मणि चानुगे ॥९॥
जीवकर्षभकेचूर्णं शतावर्य्या रसेन वा ।
पित्तश्लेष्मज्वरे दद्याद्वातपित्तज्वरेऽथवा ॥१०॥
तथा जीमूतकक्षीरात् समुत्पन्नं पचेद् घृतम् ।
फलादीनां कषायेण श्रेष्ठं तद्वमनं मतम् ॥११॥

तत्र श्लोकौ ।

षट् क्षीरे मदिरामण्डे एको द्वादश चापरे ।
सप्त चारग्वधादीनां कषायेऽष्टौ च वर्त्तिषु ॥१२॥
जीवकादिषु चत्वारो घृतश्चैकं प्रकीर्त्तितम् ।
कल्पे जीमूतकानाञ्च योगास्त्रिंशत्रवाधिकाः ॥१३॥

---

## तृतीयोऽध्यायः ।

### इक्ष्वाकुकल्पः ।

सिद्धं वक्ष्याम्यथेक्ष्वाकुकल्पं येषां प्रशस्यते ।
पञ्चचत्वारिंशदुक्ता योगा अस्मिन् महर्षिणा ॥१॥
लम्बाथ कटुकालाबू तुम्बी बिम्बफला तथा ।
इक्ष्वाकु फलिनीचैव प्रोच्यते तस्य कल्पना ॥२॥
कासश्वासविषच्छर्द्दिज्वरार्त्ते कफकर्षिते ।
प्रताम्यति नरे चैव वमनार्थं तदिष्यते ॥३॥
अपुष्पस्य प्रवालानां मुष्टिं प्रादेशसंमिताम् ।

क्षीरप्रस्थे शृतं दद्यात् पित्तोद्रिक्ते कफज्वरे ॥४॥
पुष्पादिषु च चत्वारः क्षीरे जीमूतके यथा।
योगा हरितपाण्डूनां सुरामण्डेन पञ्चमः ॥५॥
फलस्वरसभागञ्च त्रिगुणक्षीरसाधितम्।
उरःस्थिते कफे दद्यात् स्वरभेदे सपीनसे ॥६॥
कृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि।
जातं स्यात् कफजे कासे श्वासे वम्याञ्च तां पिबेत् ॥७॥
मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः।
तेन तक्रं विपक्वं वा सक्षौद्रलवणं पिबेत् ॥८॥
मज्जाक्षीरेण बीजानि भावयेत् पाययेत च।
विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ॥९॥
तुम्बयाः फलरसैः शुष्कैः सपुष्पैरवचूर्णितम्।
छर्दयेन्माल्यमाघ्राय गन्धसम्पत् सुखोचितः ॥१०॥
भक्षयेत् फलमध्यं वा गुड़ेन पललेन च।
इक्ष्वाकुफलतैलं वा सिद्धं वा पूर्ववद् घृतम् ॥११॥
यष्ट्याह्वमदनादीनि फलादीनां यथोत्तरम्।
पिबेद्विमृद्य बीजानि कषायैस्त्वासुतं पृथक् ॥१२॥
यष्ट्याह्वकोविदारार्द्यैर्मुष्टिमन्तर्नखं पिबेत्।
कषायैः कोविदारार्द्यैर्भावाय फलवत् स्मृताः ॥१३॥
बिल्वमूलकषायेण तुम्बीबीजाञ्जलिं पिबेत्।
पूतस्यास्य त्रयो भागास्तुर्यः फाणितस्य तु ॥१४॥
सघृतं बीजभागश्च पिष्टमर्द्धैषिकास्तथा।
महाजालिनिजीमूतकृतवेधनवल्लकान् ॥१५॥
तं लेहं साधयेद्दर्व्या घट्टयेन्मृदुनाग्निना।
यावत् स्यात् तन्तुमत् तोये पतितश्च न शीर्य्यते।
तं लिह्यान्मात्रया लेहं मन्थश्चापि पिबेदनु ॥१६॥

कल्प एषोऽग्निमन्थादौ चतुष्के पृथगुच्यते।
यक्तुभिर्वा पिबेन्मन्थं तुम्बीस्वरसभावितैः।
कफजेऽथ ज्वरे कासे कण्ठरोगेष्वरोचके ॥१७॥
गुल्मे मेहे प्रसेके च कल्कं मांसरसैः पिबेत्।
नरः साधु वमत्येवं न च दौर्बल्यमश्नुते ॥१८॥

तत्र श्लोकाः।

पयस्यष्टौ सुरामण्डमस्तुतक्रेषु च त्रयः।
द्वेयं सपललं तैलं वर्द्धमानासवेषु षट् ॥१९॥
घृतमेकं कषायेषु नवान्ये मधुकादिषु।
अष्टौ वर्त्तिक्रिया लेहाः पञ्च मन्थो रसस्तथा ॥२०॥
योगा इक्ष्वाकुकल्पे ते चत्वारिंशच्च पञ्च च।
उक्ता महर्षिणा सम्यक् प्रजानां हितकाम्यया ॥२१॥

---

## चतुर्थोऽध्यायः।

### धामार्गवकल्पः।

कर्कोटकी कटुफला महाजालिनिरेव च।
धामार्गवस्य पर्य्याया राजकोशातकी तथा ॥१॥
गरे गुल्मोदरे कासे वातश्लेष्मामये स्थिते।
कफे च कण्ठवक्त्रस्थे कफसञ्चयजेषु च।
रोगेष्वेषु प्रयोज्याः स्युः स्थिराश्च गुरवश्च ये ॥२॥
फलं पुष्पं प्रवालञ्च विधिना तस्य संहरेत्।
प्रवालस्वरसं शुष्कं कृताश्च गुलिकाः पृथक्।
कोविदारादिभिः पेयाः कषायैर्मधुकस्य च ॥३॥
पुष्पादिषु पयोयोगाश्चत्वारः पञ्चमी सुरा।
पूर्ववज्जीर्णशुष्काणामतः कल्पः प्रवक्ष्यते ॥४॥
मधुकस्य कषायेण बीजं कण्ठोद्धृतं फलम्।

सगुडं व्युषितं रात्रिं कोविदारादिभिस्तथा ॥५॥
दद्याद् गुल्मोदरार्त्तेभ्यो ये चाप्यन्ये कफामयाः।
दद्यादन्नेन वा युक्तं छर्दिंहृद्रोगशान्तये ॥६॥
चूर्णैर्वाप्युत्पलादीनि भावितानि प्रभूतशः।
रसक्षीरयवाग्वादिष्वसौ प्राप्ता वमेत् सुखम् ॥७॥
चूर्णीकृतस्य वर्त्तिं वा कृत्वा बदरसम्मिताम्।
विनीयाञ्जलिमात्रे तु पिबेत्तोयशतो रसे ॥८॥
पृषतर्श्यरुरङ्क्वाखगजोष्ट्राश्वतरस्य च।
खदंष्ट्रखरखड्गानाञ्चैव पेयां शकृद्रवे ॥९॥
जीवकर्षभकौ वीरामात्मगुप्तां शतावरीम्।
काकोलीं श्रावणीं मेदां महामेदां मधूलिकाम् ॥१०॥
एकैकशोऽभिसंचूर्ण्य सह धामार्गवेण तु।
शर्करामधुसंयुक्ता लेहा ब्रह्मवकासिनाम् ॥११॥
सुखोदकानुपानाः स्युः पित्तोष्मसहिते कफे।
धान्यतुम्बुरुयूषेण कल्कस्तस्य विपाचनः ॥१२॥
आत्याः सौमनसायिन्या रजन्याश्चोरकस्य वा।
वृषिकस्य महाकुद्रसहाहैमवतस्य च।
विम्बराः पुनर्नवाया वा कासमर्दस्य वा पृथक् ॥१३॥
एकं धामार्गवं द्वे वा कषाये परिसृय तु।
तत्कृतं क्षीरजं सर्पिः साधितं वा फलादिभिः।
घृतं मनोविकारेषु पिबेद् वमनमुत्तमम् ॥१४॥
तत्र श्लोकौ।
पञ्चपेन च चत्वारः क्षीर एकः सुरासवे।
कषायैर्विंशतिः कल्कैर्दश द्वौ च शकृद्रसे ॥१५॥
षड् एकस्तथाशेये दश लेहास्तथा घृते।
कल्पे धामार्गवस्योक्ताः षष्टिर्योगा महर्षिणा ॥१६॥

# पञ्चमोऽध्यायः ।

## वत्सककल्पः ।

अथ वत्सकनामानि भेदं स्त्रीपुंसयोस्तथा ।
कल्पञ्चास्य प्रवक्ष्यामि विस्तरेण यथातथम् ॥१॥
वत्सकः कुटजः शक्रो वृक्षको गिरिमल्लिका ।
बीजानीन्द्रयवास्तस्य तथोच्यन्ते कलिङ्गकाः ॥२॥
बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान् भवेत् ।
श्यामा चारुणपुष्पो स्त्री फलवृन्तैस्तथाणुभिः ॥३॥
रक्तपित्तकफघ्नस्तु सुकुमारेष्वनत्ययः ।
हृद्रोगज्वरवातासृग्वीसर्पादिषु शस्यते ॥४॥
काले फलानि संगृह्य तयोः शुष्काणि संक्षिपेत् ।
तेषामन्तर्नखं मुष्टिं जर्जरीकृत्य सापयेत् ।
मधुकस्य कषायेण कोविदारादिभिस्तथा ॥५॥
निशिस्थितं विमृद्यैतल्लवणक्षौद्रसंयुतम् ।
पित्ते तद्वमनं श्रेष्ठं पित्तश्लेष्मनिबर्हणम् ॥६॥
अष्टाहं पयसार्केण तेषां चूर्णानि भावयेत् ।
जीवकस्य कषायेण ततः फाणितलं पिबेत् ॥७॥
फलजीमूतकेक्ष्वाकुजीवन्तीनां पृथक् तथा ।
सर्षपाणां मधूकानां लवणस्याथवाम्बुना ।
क्षयरेणाथवा युक्तं विदध्याद्वमनं भिषक् ॥८॥

तत्र श्लोकः ।

कषायैर्नवचूर्णैश्च पञ्चोक्ताः सलिलैस्त्रयः ।
एकश्च क्षपरायां स्याद्योगास्तेऽष्टादश स्मृताः ॥९॥

---

# षष्ठोऽध्यायः ।

## कृतवेधनकल्पः ।

कृतवेधननामानि कल्पञ्चास्य निबोधत ।
क्ष्वेड़ः कोशातकी चोक्ता मृदङ्गफलमेव च ॥१॥
अत्यम्लकटुतीक्ष्णोष्णं गाढेष्विष्टं गदेषु च ।
कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥२॥
क्षीरादिकुसुमादीनि सुरा चैतेषु पूर्ववत् ।
शुष्काणान्तु बीजानामेकं द्वौ वा यथाबलम् ।
कषायैर्मधुकादीनां नवभिः फलवत् पिबेत् ॥३॥
क्वाथयित्वा फलं तस्य पूत्वा लेहं निधापयेत् ।
कृतवेधनकल्काद्यं फलाद्यर्धांशसंयुतम् ॥४॥
पृथक् चारग्वधादीनां त्रयोदशभिरासुतम् ।
शाल्मलीमूलकल्कानां पिच्छाभिर्दशभिस्तथा ।
वर्त्तयः फलवत् षट् स्युः फलादीनां घृतं तथा ॥५॥
कोशातकानि पञ्चाशत् कोविदाररसैः पचेत् ।
तं कषायं फलादीनां कल्कैर्लेहं पुनः पचेत् ॥६॥
क्ष्वेड़स्य तत्र भागः स्याच्छेषाण्यर्धांशिकानि च ।
कषायैः कोविदाराद्यैरेवं पक्त्वा पचेत् पृथक् ॥७॥
कषायेषु फलादीनामानूपं पिशितं पृथक् ।
कोशातकीफलं पक्त्वा तद्रसं लवणैः पिबेत् ॥८॥
फलादिपिप्पलीतुल्यं तद्वत् क्ष्वेड़रसं पिबेत् ।
क्ष्वेड़ं क्वाथे पिबेत् सिद्धं मिश्रमिक्षुरसेन च ॥९॥

तत्र श्लोकौ ।

क्षीरे द्वौ द्वौ सुरा चैका क्वाथा द्वाविंशतिस्तथा ।
दश पिच्छा घृतञ्चैकं षट् च वर्त्तिक्रियाः शुभाः ॥१०॥

लेहेऽष्टौ सप्त मांसे च योग इक्षुरसेऽपरः।
सप्तविधनकल्पेऽस्मिन् षष्टिर्योगाः प्रकीर्त्तिताः ॥११॥

---

## सप्तमोऽध्यायः।

### श्यामात्रिवृत् कल्पः।

विरेचने त्रिवृन्मूलं श्रेष्ठमाहुर्मनीषिणः।
तस्याः संज्ञा गुणाः कर्म भेदः कल्पश्च वक्ष्यते ॥१॥
त्रिभण्डी त्रिवृता चैव श्यामा कूटरणा तथा।
सर्वानुभूतिः सुवहा शब्दैः पर्य्यायवाचकैः ॥२॥
कषायामधुरा रूक्षा विपाके कटुका च सा।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥३॥
सैदानीमौषधैर्युक्ता वातपित्तकफापहैः।
कल्पे वैशिष्यमासाद्य सर्वरोगहरा भवेत् ॥४॥
मूलन्तु द्विविधं तस्याः श्यामञ्चारुणमेव च।
तयोर्मुख्यतरं विद्धि मूलं यदरुणप्रभम्।
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तच्छुभम् ॥५॥
मोहयेदाशुकारित्वाच्छ्यामा कण्ठं क्षिणोत्यपि।
तैक्ष्ण्यात् कर्षति ह्रत्कण्ठमाशु दोषं हरत्यपि।
शस्यते बहुदोषाणां क्रूरकोष्ठाश्च ये नराः ॥६॥
गुणवत्यां तयोर्भूमौ जातं मूलं समुद्धरेत्।
उपोष्य प्रयतः शुक्लः शुक्लवासाः समाहितः ॥७॥
गम्भीरानुगतं श्लक्ष्णं न तिर्य्यग्विसृतञ्च यत्।
गृहीत्वा विसृजेत् काष्ठं त्वचं शुष्कां निधापयेत् ॥८॥
स्निग्धस्विन्नो विरेच्यस्तु पेयामात्राशितः सुखम्।
अक्षमात्रं तयोः पिण्डं विनीयाम्ले न ना पिबेत् ॥९॥

गोऽश्वजामहिषामूत्रसौवीरकतुषोदकैः।
प्रसन्नया त्रिफलया श्रृतया च पृथक् पिबेत्॥१०॥
एकैकं सैन्धवादीनां द्वादशानां सनागरम्।
त्रिवृत् त्रिगुणसंयुक्तं चूर्णमुष्णाम्बुना पिबेत्॥११॥
पिप्पली पिप्पलीमूलं मरिचं गजपिप्पली।
सरलः किलिमं हिङ्गु भार्गी तेजोवती तथा॥१२॥
मुस्तं हैमवती पथ्या चित्रको रजनी वचा।
स्वर्णक्षीर्यजमोदा च शृङ्गवेरञ्च तैः पृथक्।
एकैकार्धांशसंयुक्तं पिबेद्‌ गोमूत्रसंयुतम्॥१३॥
मधूकार्धांशसंयुक्तं शर्कराम्बुयुतं पिबेत्।
जीवकर्षभकौ मेदां श्रावणीं कर्कटाह्वयम्॥१४॥
मुद्गमाषाख्यपर्ण्यौ च महतीं श्रावणीं तथा।
काकोलीं क्षीरकाकोलीं क्षुद्रां छिन्नरुहां तथा॥१५॥
क्षीरयुक्तां पयस्याञ्च यष्ट्याह्वं विधिना पिबेत्।
वातपित्तहितान्येतान्यन्यानि तु कफानिले॥१६॥
क्षीरमांसेक्षुकाश्मर्यद्राक्षापीलुरसैः पृथक्।
सर्पिषा वा तयोश्चूर्णमभयार्धांशिकं पिबेत्॥१७॥
लिह्याद्वा मधुसर्पिर्भ्यां संयुक्तं ससितोपलम्।
अजगन्धा तुगाक्षीरी विदारी शर्करा त्रिवृत्॥१८॥
चूर्णितं क्षौद्रसर्पिर्भ्यां लीढ्वा सा॰ विरिच्यते।
सन्निपातज्वरस्तम्भदाहतृष्णार्दितो नरः॥१९॥
श्यामात्रिवृत्कषायेण कल्केन च सशर्करम्।
साधयेद्विधिवल्लेहं लिह्यात् पाणितलं ततः॥२०॥
सक्षौद्रां शर्करां पक्त्वा कुर्य्यात् श्लक्ष्णाजने नवे।
त्रिपिच्छोते त्रिवृच्चूर्णं त्वक्पत्रमरिचैः सह।
मात्रया लेहयेदेतद्दीप्तराणां विरेचनम्॥२१॥

कुड़वांशान् रसानिक्षुद्राक्षापीलुपरूषकान् ।
सितोपलात् पलं क्षौद्रात् कुड़वार्द्धञ्च साधयेत् ॥२२॥
तं लेहं योजयेच्छीतं त्रिवृच्चूर्णेन शास्त्रवित् ।
एतदुष्णत्वपित्तानामीश्वराणां विरेचनम् ॥२३॥
शर्करामोदकान् वर्त्तिगुलिकामांसपूपकान् ।
अनेन विधिना कुर्य्यात् पैत्तिकानां विरेचनम् ॥२४॥
पिप्पलीं नागरं क्षारं श्यामात्रिवृतया सह ।
लेहयेत् मधुना सार्द्धं श्लेष्मलानां विरेचनम् ॥२५॥
मातुलुङ्गाभयाधात्री श्रीपर्णीकोलदाड़िमात् ।
सुमृष्टान् स्वरसांस्तैले साधयेत् तत्र चावपेत् ॥२६॥
सहकारात् कपित्थाच्च साध्यमम्लञ्च यत् फलम् ।
पूर्ववल्लेहीभूते त्रिवृच्चूर्णञ्च साधयेत् ॥२७॥
त्वक्पत्रकेशरैलानां चूर्णञ्च मधुमात्रया ।
लेहोऽयं कफपूर्णानामीश्वराणां विरेचनम् ॥२८॥
पानकानि रसान् यूषान् मोदकान् रागषाड़वान् ।
अनेन विधिना कुर्य्याद्विरेकार्थे कफाधिके ॥२९॥
त्वगेलाभ्यां समं नीतं त्रिवृत् तैश्च शर्करा ।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥३०॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥३१॥
शर्करा त्रिफला श्यामा त्रिवृद्भागाधिका मधु ।
मोदकः सन्निपातोर्द्ध्वरक्तपित्तज्वरापहः ॥३२॥
त्रिवृच्चूर्णस्तास्त्रिस्त्रिस्तथ त्रिफलात्वचः ।
विडङ्गपिप्पलीक्षारं समान्तिसय चूर्णिताः ॥३३॥
लिह्यात् सर्पिर्मधुभ्याञ्च मोदकं वा गुड़ेन च ।
भक्ष्येष्वपरीहारमेतच्छोधनमुत्तमम् ॥३४॥

गुल्मं प्लीहोदरं श्वासं हलीमकमरोचकम्।
कफवातक्षतांश्चान्यान् व्याधीनेतद्व्यपोहति ॥३५॥
विड़ङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकान्।
मरिचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पलीः ॥३६॥
लवणान्यजमोदा च चूर्णितं कार्षिकं पृथक्।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥३७॥
धात्रीफलरसप्रस्थांस्त्रीन् गुडार्द्धतुलां तथा।
पक्त्वा मृद्वग्निना खादेद्दरोदुम्बरोपमान् ॥३८॥
गुड़ान् कृत्वा न चास्य स्याद्विहाराहारयन्त्रणा।
कुष्ठार्शःकामलामेहगुल्मोदरभगन्दरम् ॥३९॥
ग्रहणीपाण्डुरोगांश्च हन्युः पुंसवनाश्च ते।
कल्याणका इति ख्याताः सर्वेष्वृतुषु यौगिकाः ॥४०॥

इति कल्याणकगुड़ः।

व्योषत्वक्पत्रसुस्तैलाविड़ङ्गामलकाभयाः।
समभागा त्रिपम् दद्याद् द्विगुणञ्च सुकूलकम् ॥४१॥
त्रिवृतोऽष्टगुणं भागं शर्करायाश्च षड्गुणम्।
चूर्णितं गुड़िकान् कृत्वा क्षौद्रेण पलसम्मितान् ॥४२॥
भक्षयेत् कल्यमुत्थाप्य शीतञ्चानुपिबेज्जलम्।
मूत्रकृच्छ्रे ज्वरे वम्यां कासे श्वासे भ्रमे क्षये ॥४३॥
तापे पाण्ड्वामयेऽग्नेऽग्नौ प्रस्ता निर्यन्त्रिताशिनः।
योगः सर्वविषार्त्तश्च मतः श्रेष्ठो विरेचने ॥४४॥
त्रिवृत्पलं हिमस्रुतं पथ्या धान्यीरुवूकयोः।
दशैतान् मोदकान् कुर्य्यादीश्वराणां विरेचनम् ॥४५॥
त्रिवृद्धेमवती श्यामा नीलिनी हस्तिपिप्पली।
समूला पिप्पली मुस्तमजमोदा दुरालभा ॥४६॥
कार्षिकं नागरपलं गुड़स्य पञ्चविंशतिम्।

चूर्णितं मोदकान् कुर्य्यादुदुम्बरफलोपमान् ॥४७॥
हिङ्गुसौवर्चलव्योषयमानीविड़जीरकैः ।
वचाजगन्धात्रिफलाचव्यचित्रकधान्यकैः ॥४८॥
मोदकान् वेष्टयेच्चूर्णैस्तान् सतुम्बुरुदाड़िमैः ।
त्रिकवंचणहृद्बस्तिकोष्ठार्श:प्लीहशूलिनाम् ।
हिक्काकासारुचिश्वासकफोदावर्त्तिनां शुभाः ॥४९॥
त्रिवृतां कौटजं वीजं पिप्पली विश्वभेषजम् ।
क्षौद्रद्राक्षारसोपेतं वर्षास्वेतद्विरेचनम् ॥५०॥
त्रिवृद्दुरालभा मुस्ता शर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्वशीतलं जलदात्यये ॥५१॥
त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ।
स्वर्णक्षीरीञ्च हेमन्ते पिष्ट्वा तूष्णाम्बुना पिवेत् ॥५२॥
शर्करा त्रिवृता तुल्या ग्रीष्मकाले विरेचनम् ।
त्रिवृत्त्रायन्तिहपुषां सातलां कटुरोहिणीम् ॥५३॥
स्वर्णक्षीरीञ्च संचूर्ण्य गोमूत्रे भावयेत् त्र्यहम् ।
एष सर्व्वर्त्तुको योगः स्निग्धानां मलदोषहृत् ॥ ५४ ॥
दुरालभा त्रिवृच्छ्यामा वत्सकं हस्तिपिप्पली ।
नीलिनी त्रिफला मुस्तं कटुका च सुचूर्णिता ॥५५॥
सर्पिर्मांसरसोष्णाम्बुयुक्तं पाणितलं ततः ।
पिवेत् सुखतमं ह्येतद्रूक्षाणामपि शस्यते ॥ ५६ ॥
नूपणत्रिफलाहिङ्गुकार्षिकं त्रिवृतापलम् ।
सौवर्चलार्द्धकर्षञ्च पलार्द्धञ्चाम्लवेतसात् ॥५७॥
तच्चूर्णं शर्करातुल्यं मद्येनाम्लेन वा पिवेत् ।
गुल्मपार्श्वार्त्तिनुत् सिद्धं जीर्णे चाद्यात् रसौदनम् ॥५८॥
सप्तलां त्रिफलां दन्तीं त्रिवृतां व्योषसैन्धवम् ।
कृत्वा चूर्णन्तु सप्ताहं भाव्यमामलकीरसे ।

तयोर्व्वा तर्पणे यूषे पिशिते रागषाड़िषु ॥५९॥
तुल्याम्लं त्रिवृताकल्कसिद्धं गुल्महरं घृतम् ।
मूलं श्यामात्रिवृतयोः पचेदामलकैः सह ।
जले तेन कषायेण पक्वा सर्पिः पिबेन्नरः ॥६०॥
निर्य्यूहेण तयोर्युक्तया सिद्धसर्पिः पिबेत् तथा ।
साधितं वा पयस्ताभ्यां सुखं तेन विरिच्यते ॥६१॥
त्रिवृन्मुष्टींस्तु सनखानष्टौ द्रोणे जले पचेत् ।
पादशेषं कषायं तं शीतं गुड़तुलायुतम् ॥६२॥
स्निग्धे स्थाप्यं घटे क्षौद्रपिप्पलीफलचित्रकैः ।
प्रलिप्ते विधिना मासं जातं तन्मात्रया पिबेत् ॥६३॥
ग्रहणीपाण्डुरोगघ्नं गुल्मश्वयथुनाशनम् ।
सुरां वा त्रिवृतापादकल्कां तत्क्वाथसंयुताम् ॥६४॥
यवैः श्यामात्रिवृत्क्वाथस्विन्नैः कुल्माषमम्भसा ।
आसुतं षड़हं पर्णे जातं सौवीरकं पिबेत् ॥६५॥
भृष्टान् मासतुषान् मुद्गान् यवांस्तच्चूर्णसंयुतान् ।
आसुतानम्भसा तद्वत् पिबेज्जातं तुषोदकम् ॥६६॥
तथा मदनकाश्मीर्य्यान् पाड़वादीन् पृथग्दश ।
त्रिवृच्चूर्णेन संयोज्य विरेकार्थं प्रयोजयेत् ॥६७॥
त्वक्केशराम्रातकदाड़िमैलासितोपलामाक्षिकमातुलुङ्गैः ।
मद्यैस्तथान्यैश्च मनोऽनुकूलैर्युक्तानि देयानि विरेचनानि॥६८
धौताम्बुना धौतवतश्च तस्य स्विन्नमुखच्छर्दिविघातहेतोः ।
हृद्यांश्च सत्पुष्पफलप्रवालादम्लांश्च दद्यादुपजिघ्रणार्थम्॥६९॥

तत्र श्लोकाः ।

एकोऽम्लादिभिरष्टौ च दश द्वौ सैन्धवादिभिः ।
मूलेऽष्टादश यद्यो द्वौ जीवकादौ चतुर्दश ॥७०॥
क्षीरादौ सप्तलेहेऽष्टौ चत्वारः सितयापि च ।

पानकादिषु पञ्चैव षड़ृतौ पञ्चमोदकाः ॥७१॥
चत्वारश्च घृतचौरे द्वौ चूर्णे तर्पणे तथा।
द्वौ मद्ये काञ्जिके द्वौ च दशान्ये षाड़वादिषु ॥७२॥
श्यामायाश्चिवृतायाश्च कल्पेऽस्मिन् समुदाहृतम्।
शतं दशोत्तरं सिद्धं योगानां परमर्षिणा ॥७३॥

---

## अष्टमोऽध्यायः।

### चतुरङ्गुलकल्पः।

आरग्वधो राजवृक्षः सम्याकश्चतुरङ्गुलः।
प्रग्रहः कृतमालश्च कर्णिकारोऽवघातकः ॥१॥
ज्वरहृद्रोगवातासृगुदावर्त्तादिरोगिषु।
राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ॥२॥
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे।
योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः ॥३॥
फलकाले फलं तस्य ग्राह्यं परिणतञ्च यत्।
तेषां गुणवतां भारं सिकतासु निधापयेत् ॥४॥
सप्तरात्रात् समुद्धृत्य शोषयेदातपे भिषक्।
ततो मज्जानमुद्धृत्य शुचौ भाण्डे निधापयेत् ॥५॥
द्राक्षारसयुतो देयो दाहोदावर्त्तपीड़िते।
चतुर्वर्षसुखे बाले यावद्द्वादशवार्षिके ॥६॥
चतुरङ्गुलमज्ज्ञस्तु प्रसृत वाथवाञ्जलिम्।
सुरामण्डेन संयुक्तमथवा कोलसीधुना ॥७॥
दधिमण्डेन वा युक्तं रसेनामलकस्य वा।
कृत्वा शीतकषायं तं पिबेत् सौवीरकेण वा ॥८॥
त्रिवृतो वा कषायेण मज्जकल्कं तथा पिबेत्।

तथा बिल्वकषायेण लवणक्षौद्रसंयुतम् ॥९॥
कषायेणाथवा तस्य त्रिवृच्चूर्णं गुड़ान्वितम् ।
साधयित्वा शनैर्लेहं लेहयेन्मात्रया नरम् ॥१०॥
चतुरङ्गुलसिद्धाद्वा चीराद्द यद्दधियाद्द हृतम् ।
मज्ज्ञः कल्केन धात्रीणां रसे तत्साधितं पिबेत् ॥११॥
तद्वेद्व दशमूलस्य कुलत्थानां यवस्य च ।
कषाये साधितं कल्कैः सर्पिः श्यामादिभिः पिबेत् ॥१२॥
दन्तीक्वाथेऽञ्जलिं मज्ज्ञः शम्पाकस्य गुड़स्य च ।
दत्त्वा मासार्द्धमासस्थमरिष्टं पाययेत च ॥१३॥
यस्य यत् पानमन्नञ्च हृद्यं स्वाद्वपि वा कटु ।
लवणं वा भवेत् तेन युक्तं दद्याद्विरेचनम् ॥१४॥

तत्र श्लोकाः ।

द्राक्षारसे सुरासौध्वोर्दधि चामलकीरसे ।
सौवीरकषायाभ्यां बिल्वशम्पाकयोस्तथा ॥१५॥
लेहोऽरिष्टो घृते द्वे च योगा द्वादश कीर्त्तिताः ।
चतुरङ्गुलकल्पेऽस्मिन् सुकुमाराः प्रकीर्त्तिताः ॥१६॥

---

## नवमोऽध्यायः ।

### तिल्वककल्पः ।

तिल्वकस्तु मतो लोध्रो बृहत्पत्रस्तिरीटकः ।
तस्य मूलत्वचं शुष्कामन्तर्वल्कलवर्जिताम् ॥१॥
चूर्णयेत् तु त्रिधा कृत्वा द्वौ भागौ क्वाथयेत् ततः ।
लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥२॥
भागं तं दशमूलस्य पुनः क्वाथेन भावयेत् ।
शुष्कं चूर्णं पुनः कृत्वा तत ऊर्द्ध्वं प्रयोजयेत् ॥३॥
दधितक्रसुरामण्डमूत्रैर्बदरसीधुना ।

रसेनामलकानां वा ततः फाणितलं पिबेत् ॥४॥
सुरां लोध्रकषायेण जातां पचश्चितां पिबेत् ।
मेषशृङ्गयभयाकृष्णाचित्रकैः सलिले शृते ॥५॥
तत्तुलां सुनुयात् तच्च जातं सौवीरकं यदा ।
भवेदञ्जलिना तस्य लोध्रकल्कं पिबेत् तदा ॥६॥
दन्तीचित्रकयोर्द्रोणे सलिलस्याढकं पृथक् ।
संक्वाथ्य च गुडस्यैकां तुलां लोध्रस्य चाञ्जलिम् ॥७॥
स्रावयेत् तत् परं पश्चात् मद्यपानाद्विरेचनम् ।
तिल्वकस्य कषायेण दशकृत्वः सुभाविताम् ॥८॥
मात्रां कम्पिल्लकस्यैव कषायेण पुनः पिबेत् ।
चतुरङ्गुलकल्पेन लेहोऽन्यः कार्य एव च ॥९॥
त्रिफलायाः कषायेण ससर्पिर्मधुफाणितः ।
लोध्रचूर्णपूतः सिद्धो लेहः श्रेष्ठो विरेचने ॥१०॥
तिल्वकस्य कषायेण कल्केन च सशर्करः ।
सघृतः साधितो लेहः स च श्रेष्ठो विरेचने ॥११॥
षट्पाटौ बिल्वतादीनां मुष्टीश्च सनखान् पृथक् ।
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात् पचेत् ॥१२॥
पिष्टैस्तैरेव बिल्वाद्यैः समूत्रलवणैरथ ।
ततो मात्रां पिबेत् काले श्रेष्ठमेतद्विरेचनम् ॥१३॥
लोध्रकल्केन मूत्राम्ललवणैश्च पचेद्घृतम् ।
चतुरङ्गुलकल्पेन सर्पिषी द्वे च साधयेदिति ॥१४॥

तत्र श्लोकौ ।

पञ्च दध्यादिभिस्त्वेकः सुरासौवीरकेण च ।
एकोऽरिष्टस्तथा योग एकः कम्पिल्लकेन च ॥१५॥
लेहास्त्रयो घृतेनापि चत्वारः सम्प्रदर्शिताः ।
योगास्ते लोध्रमूलानां कल्पे षोडश दर्शिताः ॥१६॥

# दशमोऽध्यायः ।

## सुधाकल्पः ।

विरेचनानां सर्वेषां सुधा तीक्ष्णतमा मता ।
अज्ञातस्तु भिनत्त्याशु दोषाणां कष्टविभ्रमात् ॥१॥
तस्मान्नैषा मृदौ कोष्ठे प्रयोक्तव्या कदाचन ।
न दोषनिचये चाल्पे सति वान्यपरिक्रमे ॥२॥
पाण्डुरोगोदरे गुल्मे कुष्ठे दूषीविषार्दिते ।
श्वयथौ मधुमेहे च दोषविभ्रान्तचेतसि ॥३॥
रोगैरेवं विधैर्ग्रस्तं ज्ञात्वा समाणमातुरम् ।
प्रयोजयेन्महाव्रचं सम्यक् स ह्यवचारितः ॥४॥
सद्यो हरति दोषाणां महान्तमपि सञ्चयम् ।
द्विविधः स मतो यैव बहुभिर्येव कण्टकैः ॥५॥
सुतीक्ष्णैः कण्टकैरल्पैः प्रवरो बहुकण्टकः ।
स नाम्ना तु गुडानन्दो सुधानिस्त्रिंशपत्रकः ॥६॥
तं विपाट्याहरेत् क्षीरं शस्त्रेण मतिमान् भिषक् ।
द्विवर्षां वा त्रिवर्षां वा शिशिरान्ते विशेषतः ॥७॥
बिल्वादीनां बृहत्या वा कण्टकार्य्याश्च चैकशः ।
कषायं तं समांशेन कल्पाङ्गारेषु शोषयेत् ॥८॥
ततः कोलसमां मात्रां पिबेत् सौवीरकेण वा ।
तुषोदकेन कोलानां रसेनामलकस्य वा ॥९॥
सुरया दधिमण्डेन मातुलुङ्गरसेन वा ॥१०॥
सातलां काञ्चनक्षीरीं श्यामादीनि कटुत्रिकम् ।
यथोपपत्ति सप्ताहं सुधाक्षीरेण भावयेत् ॥११॥
कोलमात्रं हृतेनातः पिबेन्मांसरसेन वा ।

त्र्यूषणं त्रिफलां दन्तीं चित्रकं त्रिवृतां तथा ॥१२॥
सुक्क्षीरभावितं सम्यग्विदध्यात् गुड़पानके ।
त्रिवृतारग्वधं दन्तीं शङ्खिनीं सप्तलां समाम् १३॥
निशिश्चितं गवां मूत्रे शोषयेदातपे ततः ।
सप्ताहं भावयित्वैवं सुक्क्षीरेणापरं पुनः ॥१४॥
सप्ताहं भावयेच्चूर्णं ततस्तेनापि भावितम् ।
गन्धमाल्य तदाघ्राय प्राहत्य पटमेव च ॥१५॥
सुखमाशु विरिच्यन्ते मृदुकोष्ठा नराधिपाः ॥१६॥
श्यामात्रिवृत्कषायेण सुक्क्षीरघृतफाणितैः ।
लेहं पक्त्वा विरेकार्थं लेहयेन्मात्रया नरम् ॥१७॥
पाययेत सुधाक्षीरं यूषैर्मांसरसैर्घृतैः ।
भावितान् शुष्कमत्स्यान् वा मांसं वा भक्षयेन्नरः ॥१८॥
क्षीरेणामलकैः सर्पिश्चतुरङ्गुलवत् पचेत् ।
सुरां वा कारयेत् क्षीरं घृतं वा पूर्ववत् पचेदिति ॥१८॥

तत्र श्लोकौ ।

सौवीरकादिभिः सप्त सर्पिषा च रसेन च ।
पानकं प्रेयलेहौ च योगा यूषादिभिस्त्रयः ॥२०॥
द्वौ शुष्कमत्स्यमांसाभ्यां सुरेका द्वे च सर्पिषी ।
सुधाकल्पस्य योगास्ते विंशतिः समुदाहृताः ॥२१॥

---

## एकादशोऽध्यायः ।

### सप्तलाशङ्खिनीकल्पः ।

सप्तला चर्मसाह्वा च बहुफेनरसा च सा ।
शङ्खिनी तिक्तला चैव यवतिक्ताक्षिपीड़कः ॥१॥
ते गुल्मगरहृद्रोगकुष्ठशोफोदरादिषु ।

त्रिकासितीक्ष्णरूक्षत्वाद्योज्ये श्लेष्माधिकेषु तु ॥२॥
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम् ।
सप्तलायाश्च मूलानि गृहीत्वा भाजने क्षिपेत् ॥३॥
अक्षमात्रं तयोः पिण्डं प्रसन्नालवणायुतम् ।
हृद्रोगे कफवातार्ये गुल्मे चैव प्रयोजयेत् ॥४॥
पियालपीलुकर्कन्धुकोलाम्रातकदाडिमैः ।
द्राक्षापनसखर्जूरबदराम्लपरूषकैः ॥५॥
मैरेयदधिमण्डेऽम्ले सौवीरकतुषोदके ।
सीधौ चाम्येष कल्पः स्यात् सुखं तीव्रविरेचने ॥६॥
तैलं विदारिगन्धाद्यैः पयसि क्वथिते पचेत् ।
सप्तलाशङ्खिनीकल्के त्रिवृच्छ्यामार्धभागिके ॥७॥
दधिमण्डेन सन्धाय सिद्धं तत् पाययेत च ।
शङ्खिनीचूर्णभागौ द्वौ नीलीचूर्णश्च चाक्षकः ॥८॥
हरीतकीकषायेण तैलं तत्पीडितं पिबेत् ।
अतसीसर्षपैरण्डकरञ्जेष्वेष संविधिः ॥९॥
शङ्खिनीसप्तलासिद्धात् क्षीरात् यदुदियाद् घृतम् ।
तत्कभागं तयोरेव त्रिवृच्छ्यामार्धसंयुतम् ॥१०॥
क्षीरेणालोड्य सम्पक्वं पिबेत् तच्च विरेचनम् ।
तथा दन्तीद्रवन्त्योः स्यादजशृङ्ग्यजगन्धयोः ॥११॥
क्षीरिण्या नीलिकायाश्च तथैव च करञ्जयोः ।
मसूरविदलायाश्च प्रत्यक्श्रेण्यास्तथैव च ॥१२॥
विडङ्गार्द्धांशकल्केन तद्वत् साध्यं घृतं पुनः ।
शङ्खिनीसप्तलाधात्रीकषाये साधयेद् घृतम् ॥१३॥
त्रिवृत्कल्पेन सर्पिश्च त्रयो लेहाश्च पूर्ववत् ।
सुराकम्पिल्लयोर्योगः कार्यो लोध्रवदेव च ॥१४॥
दन्तीद्रवन्त्योः कल्केन सौवीरकतुषोदके ।

अजगन्धाजशृङ्गोथ तद्वत् स्यातां विरेचने ॥१५॥

तत्र श्लोकौ ।

कषाया दश षट् चैव षट् तैलेऽष्टौ च सर्पिषि ।
मद्य मद्ये त्रयो लेहा योगाः काम्पिल्लके तथा ॥१६॥
सप्तलाशङ्खिनीभ्यां ते त्रिंशदुक्ता नवाधिकाः ।
योगाः सिद्धाः समस्ताभ्यामेकशोऽपि च ते हिताः ॥१७॥

---

## द्वादशोऽध्यायः ।

### दन्तीद्रवन्तीकल्पः ।

दन्त्युदुम्बरपर्णी स्याचित्रकुम्भोऽथ मुकूलकः ।
द्रवन्तीनामतश्चित्रा न्यग्रोधी मूषिकाह्वया ॥१॥
तयोर्मूलानि संगृह्य स्थिराणि बहलानि च ।
हस्तिदन्तप्रकाराणि श्यावताम्राणि बुद्धिमान् ॥२॥
पिप्पलीमधुलिप्तानि स्वेदयेन्मृत्कुशान्तरे ।
शोषयेदातपेऽग्न्यर्कौ हतो ह्येषां विकाशिता ॥३॥
तीक्ष्णोष्णाशुव्यवायीनि विकाशीनि गुरूणि च ।
विलापयन्ति दोषौ द्वौ मारुतं कोपयन्ति च ॥४॥
दधितक्रसुरामण्डैः पिण्डमक्षसमं तयोः ।
पियालकोलबदरपीलुशीधुभिरेव च ॥५॥
पिबेद्दुल्योदरी दोषैरभिष्विन्नश्च यो नरः ।
गोमृगाजरसैः पाण्डुः कृमिकुष्ठी भगन्दरी ॥६॥
तयोः कल्के कषाये च दशमूलरसायुते ।
कक्ष्यालजीविसर्पेषु दाहे च विपचेद् घृतम् ॥७॥
तैलं मेहे च गुल्मे च सोदावर्ते कफानिले ।
चतुःस्नेहं शकृच्छुक्रवातसङ्गानिलार्त्तिषु ॥८॥

रसे दन्त्यजशृङ्गयोश्च गुड़क्षौद्रघृतान्वितः ।
लेहः शिवो विरेकार्थे दाहसन्तापमेहनुत् ॥९॥
वाततर्षे ज्वरे पैत्ते स्यात् स एवाजगन्धया ।
मूलं दन्तीद्रवन्त्योश्च पचेदामलकीरसे ॥१०॥
त्रींस्तु तस्य कषायस्य भागौ द्वौ फाणितस्य च ।
तस्मै सर्पिषि तैले वा भर्जयेत् तच्च चावयेत् ॥११॥
कल्कं दन्तीद्रवन्त्योश्च श्यामादीनाञ्च भागशः ।
तत्सिद्धं प्राशयेल्लेहं सुखं तेन विरिच्यते ॥१२॥
रसे च दशमूलस्य तथा वैभीतके रसे ।
हरीतकीरसे चैव लेहानेवं पचेत् पृथक् ॥१३॥
तयोर्विल्वसमं चूर्णं तद्रसेनैव भावितम् ।
प्रसृष्टविधि वातोत्थे गुल्मे चाम्लयुतं शुभम् ॥१४॥
पाटयित्वेक्षुकाण्डं वा कल्केनालिप्य चान्तरा ।
स्वेदयित्वा ततः खादेत् सुखं तेन विरिच्यते ॥१५॥
मूलं दन्तीद्रवन्त्योश्च सह मुद्गैर्विपाचयेत् ।
लावतित्तिरिकाणाञ्च ते रसाः स्युर्विरेचने ॥१६॥
तयोर्वापि कषायेण यवागूं जाङ्गलं रसम् ।
माषयूषांश्च सल्लत्य दद्यात् तेन विरिच्यते ॥१७॥
तत्कषायात् त्रयो भागा द्वौ सितायास्तथैव च ।
एको गोधूमचूर्णानां कार्या चोत्कारिका शुभा ॥१८॥
मोदको वास्य कल्केन कार्य्यस्तत्र विरेचने ।
तयोर्वापि कषायेण सद्यमस्योपकल्पयेत् ॥१९॥
दन्तीक्वाथेन चालोड्य दन्तीतैलेन साधितम् ।
गुड़लावणिकान् भक्ष्यान् विविधान् भक्षयेत् नरः ॥२०॥
द्रवन्ती मरिचं दन्तीं यमानीमुपकुञ्चिकाम् ।
नागरं हैमदुग्धोञ्च चित्रकञ्चेति चूर्णितम् ॥२१॥

सप्ताहं भावयेन्मूत्रे गवां पाणितलं ततः।
पिबेद् घृतेन चूर्णन्तु विरिक्तश्चापि तर्पणम् ॥२२॥
सर्वरोगहरं मुख्यं सर्वेष्वृतुषु शोभनम्।
चूर्णं तदनपायित्वात् बालवृद्धेषु पूजितम् ॥२३॥
दुर्भक्ताजीर्णपार्श्वार्त्तिगुल्मप्लीहोदरेषु च।
गण्डमालासु वाते च पाण्डुरोगे च शस्यते ॥२४॥
पलं चित्रकदन्त्योश्च हरीतक्याश्च विंशतिः।
पिप्पलीविड्ङ्गतार्क्षोद्रगुड़स्याष्टपलेन तत् ॥२५॥
विनीय मोदकान् कुर्य्याद्दशैकं भक्षयेत् ततः।
उष्णाम्बु च पिबेच्चानु दशमे दशमेऽह्नि च ॥२६॥
एते निष्परिहाराः स्युः सर्वरोगनिवर्हणाः।
ग्रहणीपाण्डुरोगार्शःकण्डूकोठानिलापहाः ॥२७॥
दन्तीद्विपलनिर्य्यूहो द्राक्षार्द्धप्रस्थसाधितः।
शोधने पित्तकासे च पाण्डुरोके च शस्यते ॥२८॥
दन्तीकल्कं समगुड़ं शीतवारियुतं पिबेत्।
विरेचनं मुख्यतमं कामलाहरमुत्तमम् ॥२९॥
शुण्ठीमरिचपिप्पल्याः कार्षिकाः स्युः पृथक् पृथक्।
द्विगुणे शर्करेले च शङ्खिनी स्याच्चतुर्गुणा ॥३०॥
नीलिनीमष्टगुणितां द्विरष्टगुणितां तथा।
दन्तीं द्रवन्तीं त्वक्क्षीरमेकधात्र प्रदापयेत् ॥३१॥
तस्मादर्द्धपलं चूर्णात् लिह्यान्माध्वीकसंयुतम्।
शीतोदकानुपानन्तु निरपायं विरेचनम् ॥३२॥
श्यामादन्तीरसे गौड़ः पिप्पलीफलचित्रकैः।
लिप्तेऽरिष्टोऽनिलकफप्लीहपाण्डूदरापहः ॥३३॥
तथा दन्तीद्रवन्त्योश्च कषायेणाजगन्धयोः।
गौड़ः कार्य्योऽजशृङ्ग्या वा रसैः सुखविरेचनः ॥३४॥

तच्चूर्णक्वाथमाषाम्बुकिण्वतोयसमुद्भवा।
मदिरा कफगुल्माल्पवह्निपार्श्वकटिग्रहे ॥३५॥
अजगन्धाकषायेण सौवीरकतुषोदके।
सुराकाम्पिल्लके योगा लोध्रवच्च तयोः स्मृताः ॥३६॥

भवन्ति चात्र।

दध्यादिषु त्रयः पञ्च पियालाद्यैस्त्रयो रसे।
लेहेषु ये त्रयो लेह्याः षट् चूर्णे त्वेक एव च ॥३७॥
इक्ष्वावेकस्तथा सुक्रमांसानाञ्च रसास्त्रयः।
यवाग्वादौ त्रयश्चैव उक्ता उत्कारिकाविधौ ॥३८॥
एकश्च मोदके मद्ये चैकं तत् क्वाथतैलके।
चूर्णमेकं पुनश्चैको मोदकः पञ्च चासवे ॥३९॥
एकः सौवीरकेऽप्येकयोगः स्यात् तु तुषोदके।
एका सुरा कम्पिल्लके चैकः पञ्च घृते स्मृताः ॥४०॥
दन्तीद्रवन्तीकल्पेऽस्मिन् प्रोक्ताः षोड़शकास्त्रयः।
नानाविधानां योगानां शुद्धिदोषामयान् प्रति ॥४१॥
नियतं पञ्चपञ्चाशत् योगानां वमने स्मृतम्।
द्वे शते नवकाः पञ्च योगानान्तु विरेचने ॥४२॥
ऊर्द्धानुलोमभागानामित्युक्तानि शतानि षट्।
प्राधान्यतः समाश्रित्य द्रव्याणि दश पञ्च च ॥४३॥
यदि येन प्रधानेन द्रव्यं समुपसृज्यते।
तत्संज्ञकः स संयोगो भवतीति विनिश्चितम् ॥४४॥
फलादीनां प्रधानानां गुणभूताः सुरादयः।
ते हितान्यनुवर्त्तन्ते मनुजेन्द्रमिवेतरे ॥४५॥
विरुद्धवीर्य्यमप्येषां प्रधानानामबाधकम्।
समानवीर्य्यन्त्वधिकं क्रियासामान्यमिष्यते ॥४६॥
इष्टवर्णरसस्पर्शगन्धार्थं प्रति चामयम्।

अतो विरुद्धवीर्य्याणां प्रयोग इति निश्चितम् ॥४७॥
भूयश्चैषां बलाधानं कार्य्यं स्वरसभावनैः ।
सुभावितं ह्यल्पमपि द्रव्यं स्याद्बहुकर्मकृत् ।
स्वरसैस्तुल्यवीर्य्यैर्वा तस्माद् द्रव्याणि भावयेत् ॥४८॥
अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ।
कुर्य्यात् संयोगविश्लेषकालसंस्कारयुक्तिभिः ॥४९॥
प्रदेशमात्रमेतावद्द्रष्टव्यमिह पठ्यतम् ।
स्वबुद्धैवं सहस्राणि कोटीर्वापि प्रकल्पयेत् ॥५०॥
बहुद्रव्यविकल्पत्वाद् योगसंख्या न विद्यते ।
तीक्ष्णमध्यमृदूनान्तु तेषां शृणुत लक्षणम् ॥५१॥
सुखं क्षिप्रं महावेगमसक्तं यत् प्रवर्त्तते ।
नातिग्लानिकरं पायौ हृदये न च रुक्करम् ॥५२॥
अन्तराशयमक्षिण्वन् कृत्स्नं दोषं निरस्यति ।
विरेचनं निरूहो वा तत् तीक्ष्णमिति निर्दिशेत् ॥५३॥
जलाग्निकीटैरस्पृष्टं देशकालगुणान्वितम् ।
ईषन्मात्राधिकैर्युक्तं तुल्यवीर्य्यैः सुभावितम् ।
स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजम् ॥५४॥
किञ्चिदेभिर्गुणैर्हीनं पूर्वोक्तैर्मात्रया तथा ।
स्निग्धस्विन्नस्य वा सम्यङ्मध्यं भवति भेषजम् ॥५५॥
मन्दवीर्य्यं विरूक्षस्य हीनमात्रन्तु भेषजम् ।
अतुल्यवीर्य्यैः संयुक्तं मृदु स्यान्मन्दवेगवत् ॥५६॥
अकृत्स्नदोषहरणादयुक्तं तद् बलीयसाम् ।
मध्यावरबलानान्तु प्रयोज्यं सिद्धिमिच्छता ॥५७॥
तीक्ष्णो मध्यो मृदुर्व्याधिः सर्वमध्याल्पलक्षणः ।
तीक्ष्णादीनि बलापेक्षी भेषजान्येषु योजयेत् ॥५८॥
देयन्त्वनिर्हृते पूर्वं पीते पश्चात् पुनःपुनः ।

भेषजं वमनार्थीय प्राय आपित्तदर्शनात् ॥५९॥
बलं वैविध्यमालक्ष्य दोषाणामातुरस्य च।
पुनः प्रदद्याद्भैषज्यं सर्वशो वा विवर्जयेत् ॥६०॥
निर्हृते वापि जीर्णे वा दोषनिर्हरणे बुधः।
भेषजेऽन्यत् प्रयुञ्जीत प्रार्थयन् सिद्धिमुत्तमाम् ॥६१॥
पयन्त्यं वमनं दोषात् पच्यमानं विरेचनम्।
निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ॥६२॥
पीते प्रस्रंसने दोषान् न निर्हृत्य जरां गते।
वमिते चौषधे धीरः पाययेदातुरं पुनः ॥६३॥
दीप्ताग्निं बहुदोषञ्च दृढवेदगुणं नरम्।
दुःशोध्यं तदहर्भुक्तं श्वो भूयः पाययेत् पुनः ॥६४॥
दुर्बलो बहुदोषश्च दोषपाकेण यो नरः।
विरिच्यते रसैर्भोज्यैर्भूयस्तामनुसारयेत् ॥६५॥
वमनैश्च विरेकैश्च विशुद्धस्याप्रमाणतः।
भोजनान्तरपानाभ्यां दोषशेषं शमं नयेत् ॥६६॥
दुर्बलं शोधितं पूर्वमल्पदोषञ्च मानवम्।
अपरिज्ञातकोष्ठञ्च पाययेदौषधं मृदु ॥६७॥
श्रेयो मृदसकृत् पीतमल्पबाधं निरत्ययम्।
न चातितीक्ष्णं यत् क्षिप्रं जनयेत् प्राणसंशयम् ॥६८॥
दुर्बलोऽपि महादोषो विरेच्यो बहुशोऽल्पशः।
मृदुभिर्भेषजैर्दोषा हन्युर्ह्यनसनिर्हृताः ॥६९॥
यस्योर्ध्वं कफसंसृष्टं पीतं यात्यनुलोमिकम्।
वमितं कवलैः शुद्धं लङ्घितं पाययेत्तु तम् ॥७०॥
विबद्धेऽल्पे चिराद्दोषे सवल्वणां पिबेज्जलम्।
तेनाध्मानं सतट्च्छर्दिर्विबन्धश्चैव शाम्यति ॥७१॥
भेषजं दोषरुद्धञ्चेदोर्द्ध्वं नाधः प्रवर्त्तते।

सोद्गारं साङ्गशूलं वा स्वेदं तत्रावचारयेत् ॥७२॥
सुविरिक्तस्तु सोद्गारमाश्वेवौषधमुल्लिखेत् ।
अतिप्रवर्त्तनं जीर्णे सुप्तोतिः स्तम्भयेद्भिषक् ॥७३॥
कदाचित् श्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम् ।
क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा तत् प्रवर्त्तते ॥७४॥
विरूक्षानाहयोर्जीर्णे विष्टभ्योर्द्ध्वं गतेऽपि वा ।
वायुना भेषजे त्वन्यत् सस्नेहलवणं पिबेत् ॥७५॥
तृण्मोहभ्रममूर्च्छायाः स्युश्चेज्जीर्य्यति भेषजे ।
पित्तघ्नं स्वादु शीतञ्च भेषजं तत्र शस्यते ॥७६॥
लालाहृल्लासविष्टम्भलोमहर्षाः कफावृते ।
भेषजं तत्र तीक्ष्णोष्णं कट्वादिकफनुद्धितम् ॥७७॥
सुस्निग्धं क्रूरकोष्ठञ्च लङ्घयेदविरेचितम् ।
तेनास्य स्नेहजः श्लेष्मा सङ्क्षयेवोपशाम्यति ॥७८॥
रूक्षवह्वनिलक्रूरकोष्ठव्यायामशूलिनाम् ।
दीप्ताग्नीनाञ्च भैषज्यमविरिच्यैव जीर्य्यति ॥७९॥
तेभ्यो वस्तिं पुरा दत्त्वा पश्चाद्दद्याद्विरेचनम् ।
वस्तिप्रवर्त्तितं दोषं हरेच्छीघ्रं विरेचनम् ॥८०॥
रूक्षाशनाः कर्म्मनित्या ये नरा दीप्तपावकाः ।
तेषां दोषाः क्षयं यान्ति कर्म्मवातातपाग्निभिः ॥८१॥
विरुद्धाध्यशनाजीर्णान् दोषानपि जयन्ति ते ।
स्नेह्यास्ते मारुतात् रक्ष्या नाव्याधौ तान् विशोधयेत् ॥८२॥
नातिस्निग्धशरीराय दद्यात् स्नेहविरेचनम् ।
स्नेहोत्क्लिष्टशरीराय रूक्षं दद्यात् विरेचनम् ॥८३॥
एवं ज्ञात्वा विधिं धीरो देशकालप्रमाणवित् ।
विरेचनं विरेच्येभ्यः प्रयच्छन् नापराध्यति ॥८४॥
विभ्रंशो विषवद्यस्य सम्यग् योगो यथाऽमृतम् ।

कालेष्ववश्यं पेयञ्च तस्माद् यत्नात् प्रयोजयेत् ॥८५॥
द्रव्यप्रमाणन्तु यदुक्तमस्मिन् मध्येषु तत् कोष्ठवयोवलेषु।
तन्मूलमालम्ब्य भवेद्विकल्पं तेषां विकल्पोऽभ्यधिकोनभावः॥८६॥
षड्वंश्यस्तु मरीचिः स्यात् षण्मरीच्यस्तु सर्षपः।
अष्टौ ते सर्षपा रक्तास्तण्डुलश्चापि तद्द्वयम् ॥८७॥
धान्यमाषो भवेदेको धान्यमाषद्वयं यवः।
अण्डिकास्ते तु चत्वारस्तावतस्तु माषकः ॥८८॥
हेमश्च धानकश्चोक्तो भवेच्छाणस्तु ते त्रयः।
शाणौ द्वौ द्रङ्क्षणं विद्यात् कोलं वदरमेव च ॥८९॥
विद्याद्द्वौ द्रङ्क्षणौ कर्षं सुवर्णञ्चाक्षमेव च।
विड़ालपदकं तच्च पिचुं पाणितलं तथा ॥९०॥
तिन्दुकञ्च विजानीयात् कवड़ग्रहमेव च।
द्वे सुवर्णे पलार्द्धं स्याच्छुक्तिरष्टमिका तथा ॥९१॥
द्वे पलार्द्धे पलं मुष्टिः प्रकुञ्चोऽथ चतुर्थिका।
विल्वं षोड़शिकश्चाम्रं द्वे पले प्रसृतं विदुः ९२॥
अष्टमानन्तु विज्ञेयं कुड़वौ द्वौ तु मानिका।
पलं चतुर्गुणं विद्यादञ्जलिं कुड़वं तथा ॥९३॥
चत्वारः कुड़वाः प्रस्थश्चतुःप्रस्थमथाढ़कम्।
पात्रं तदेव विज्ञेयं कंसः प्रस्थाष्टकं तथा ॥९४॥
कंसश्चतुर्गुणो द्रोणश्चार्म्मणं लक्ष्मणञ्च तत्।
स एव कलशः ख्यातो घटमुन्मानमेव च ॥९५॥
घटन्तु द्विगुणं सूर्पो विज्ञेयः कुम्भ एव च।
गोणीं शूर्पद्वयं विद्यात् खारीं भारीं तथैव च ॥९६॥
द्वात्रिंशच्चैव जानीयाद्वाहं शूर्पाणि बुद्धिमान्।
तुलां शतपलं विद्यात् परिमाणविशारदः ॥९७॥
शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्त्तितम्।

द्विगुणं तद्द्रवेष्विष्टं तथा सद्योद्धृतेषु च ॥९८॥
यदि मानं तुला प्रोक्ता पलं वा तत् प्रयोजयेत् ।
अनुक्ते परिमाणे तु तुल्यं मानं प्रकीर्त्तितम् ॥९९॥
द्रवकार्य्येऽपि चानुक्ते सर्व्वत्र सलिलं स्मृतम् ।
यत्नश्च पादनिर्द्देशश्चतुर्भागस्तत्र सः ॥१००॥
जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम् ।
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम् ॥१०१॥
स्नेहपाकस्त्रिधा ज्ञेयो मृदुर्मध्यः खरस्तथा ।
तुल्ये कल्केन निर्य्यासे भेषजानां मृदुः स्मृतः ॥१०२॥
सम्पाक-द्रव निर्य्यासे मध्यो दर्व्वीं विमुञ्चति ।
शीर्य्यमाणे तु निर्य्यासे वर्त्तमाने खरस्तथा ॥१०३॥
खरोऽभ्यङ्गे स्मृतः पाको मृदुर्नस्तःक्रियासु च ।
मध्यपाकन्तु पानार्थे वस्तौ च विनियोजयेत् ॥१०४॥
मानञ्च द्विविधं प्राहुः कालिङ्गं मागधं तथा ।
कालिङ्गात् मागधं श्रेष्ठमेवं मानविदो विदुः ॥१०५॥

तत्र श्लोकौ ।

कल्पार्थः शोधनं संज्ञा पृथग्घेतुः प्रवर्त्तते ।
देशादीनां फलादीनां गुणा योगाः शतानि षट् ॥१०६॥
विकल्पहेतुर्नामानि तीक्ष्णमध्यात्मलक्षणम् ।
विधिश्चावस्थिको मानं स्नेहपाकश्च दर्शितः ॥१०७॥

इति दन्तीद्रवन्तीकल्पो नाम द्वादशोऽध्यायः ।

इति सप्तमं कल्पस्थानं समाप्तम् ।

---

# सिद्धिस्थानम्।

## प्रथमोऽध्यायः।

### कल्पनासिद्धिः।

अथातः कल्पनासिद्धिं व्याख्यास्याम इति ह स्माह भगवानात्रेयः।

का कल्पना पञ्चसु कर्मसूक्ता क्रमश्च कः किञ्च कृताकृतेषु।
लिङ्गं तथैवातिकृतेषु सङ्ख्या का किं गुणाः केषु च का च बस्तिः॥१॥
के वर्जनीयाः प्रतिकर्मकाले कृते कियान् वा परिहारकालः।
प्रणीयमानश्च न याति बस्तिः केनेति शीघ्रं सुचिराच्च केन॥२॥
साध्या गदाः स्वैः शमनैश्च केचित् कस्मात् प्रयुक्तैर्न शमं व्रजन्ति।
प्रचोदितः शिष्यवरेण सम्यगित्यग्निवेशेन भिषग्वरिष्ठः॥३॥
पुनर्वसुस्तत्त्वविदाह तस्मै सर्वप्रजानां हितकाम्ययेदम्।
त्र्यहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य इष्टः।
नातःपरं स्नेहनमादिशन्ति सात्म्यीभवेत् सप्तदिनात् परन्तु॥४॥
स्नेहोऽनिलं हन्ति मृदु करोति देहं मलानां विनिहन्ति सङ्गम्।
स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं स्वेदस्तु दोषं नयति द्रवत्वम्॥५॥
ग्राम्यौदकानूपरसैः समांसैरुत्क्लेशनीयः पयसा च वम्यः।
रसैस्तथा जाङ्गलजैः सयूषैः स्निग्धः कफाहविकारैर्विरेच्यः॥६॥
श्लेष्मोत्क्लिष्टश्छर्दयति ह्यदुःखं विरिच्यते मन्दकफस्तु सम्यक्।
अधःकफेऽल्पे वमनं हि गच्छेद्विरेचनं हृतकफे तथोर्ध्वम्॥७॥
स्निग्धाय देयं वमनं यथोक्तं वान्तस्य पेयादिरनुक्रमश्च।
स्निग्धस्य सुस्विन्नतनोर्यथावत् विरेचनं योग्यतमं प्रयोज्यम्॥८॥
पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रिर्द्विरथैकशश्च।
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः॥९॥
यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण।

महान् स्थिरः सर्वसहस्तथैव शुद्धस्य पेयादिभिरन्तरग्निः ॥१०॥
जघन्यमध्यप्रवरेषु वेगाश्चत्वार इष्टा वमने षडष्टौ ।
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ॥११॥
पित्तान्तमिष्टं वमनं तयोर्द्धमधःकफान्तञ्च विरेकमाहुः ।
द्वित्रीन् सविट्कानपनीय वेगान् मेयं विरेके वमने तु पीतम् ॥१२॥
क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः ।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तथा लघुत्वेऽपि च लक्ष्यमाणे ॥१३॥
दुश्छर्दिते स्फोटककोठकण्डूहृत्खाविशुद्धिर्गुरुगात्रता च ।
तृण्मोहमूर्च्छानिलकोपनिद्राबलादिहानिर्वमनेऽति च स्यात् ॥१४॥
स्रोतो विशुद्धीन्द्रियसंप्रसादौ लघुत्वमूर्जोऽग्निरनामयत्वम् ।
प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत् क्रमेण १५
स्यात् श्लेष्मपित्तानिलसंप्रकोपः सादस्तथाग्नेर्गुरुता प्रतिश्या ।
तन्द्रा तथा छर्दिररोचकश्च वातानुलोम्यं न च दुर्विरिक्ते ॥१६॥
कफास्रपित्तक्षयजानिलोत्थाः सुप्त्यङ्गमर्दक्लमवेपनाद्याः ।
निद्राबलाभावतमःप्रवेशः सोन्मादहिक्काश्च विरेचितेऽति ॥१७॥
संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेताप्यनुवासयेद्वा ।
दद्यात्तथान्नानि बुभुक्षिताय तैलाक्तगात्राय ततो निरूहम् ॥१८
प्रत्यागते मांसरसेन भोज्यः समीक्ष्य वा दोषबलं यथार्हम् ।
नरस्ततो निश्यनुवासनार्हो नित्याशितः स्यादनुवासनीयः ॥१९॥
शीते वसन्ते च दिवानुवास्यो रात्रौ शरद्ग्रीष्मघनागमेषु ।
तानेव दोषान् परिरक्षता ये स्नेहस्य पाने परिकीर्त्तिताः प्राक् २
प्रत्यागते चाप्यनुवासनीये दिवा प्रदेयं व्युषिताय भोज्यम् ।
सायञ्च भोज्यं परतस्त्र्यहे वा त्र्यहेऽनुवास्योऽहनि पञ्चमे वा ॥२
त्र्यहे द्व्यहे वाप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनञ्च ।
एकं तथा त्रीन् कफजे विकारे पित्तात्मके पञ्च [illegible] सप्त वापि ॥२
वातेन चैकादश वा पुनर्वा वस्तीन्न युग्मान् कुशलो विदध्यात् ।

नरो विरिक्तस्तु निरूहदानं विवर्जयेत् सप्तदिनान्यवश्यम् ॥२३॥
शुद्धो विरेकेण निरूहदानं नद्यस्य शून्यं विक्षयेच्छरीरम् ।
वस्तिर्वयःस्थापयिता सुखायुर्बलाग्निमेधास्वरवर्णकृच्च ॥२४॥
सर्वार्थकारी शिशुवृद्धयूनां निरत्ययः सर्वगदापहश्च ।
विट्श्लेष्ममूत्रानिलपित्तकर्षी स्थिरत्वकृच्छुक्रबलप्रदश्च ॥२५॥
विश्वक्स्थितं दोषचयं निरस्य सर्वान् विकारान् शमयेन्निरूहः ।
देहे निरूहेण विशुद्धमार्गे संस्नेहनं वर्णबलप्रदश्च ॥ २६॥
न तैलदानात् परमस्ति किञ्चित् द्रव्यं विशेषेण समीरणार्त्ते ।
स्नेहाद्धि रौक्ष्यं लघुतां गुरुत्वादौष्ण्याच्च शैत्यं पवनस्य हत्वा॥२७॥
तैलं ददत्याशु मनःप्रसादं वीर्य्यं बलं वर्णमथाग्निपुष्टिम् ।
मूले निषिक्ते हि यथा द्रुमः स्यान्नीलच्छदः कोमलपल्लवाग्रः ॥२८
काले महान् पुष्पफलप्रदश्च तथा नरः स्यादनुवासनेन ।
अपत्यसन्तानविवृद्धकारी काले यशस्वी बहुकीर्त्तिमांश्च ॥२९॥
स्तब्धाश्च ये सङ्कुचिताश्च येऽपि ये पङ्गवो येऽपि च भग्नभग्नाः ।
येषाञ्च शाखासु चरन्ति वाताः शस्तो विशेषेण हि तेषु वस्तिः ३०
आध्मापने विग्रथिते पुरीषे शूले च भक्तानभिनन्दने च ।
एवम्प्रकाराश्च भवन्ति कुक्षौ ये चामयास्तेषु च वस्तिरिष्टः ॥३१॥
याश्च स्त्रियो वातकृतोपसर्गाद्गर्भं न गृह्णन्ति नृभिः समेताः ।
क्षीणेन्द्रिया ये च नराः कृशाश्च तेषाञ्च वस्तिः परमः प्रदिष्टः॥३२
उष्णाभिभूतेषु वदन्ति शीतान् शीताभिभूतेषु तथा सुखोष्णान् ।
तत्प्रत्यनीकौषधसंप्रयुक्तान् सर्वत्र वस्तीन् प्रविभज्य युञ्ज्यात्॥३३
न बृंहणीयान् विदधीत वस्तीन् विशोधनीयेषु गदेषु वैद्यः ।
कुष्ठप्रमेहादिषु मेदुरेषु नरेषु ये चापि विशोधनीयाः ॥३४॥
क्षीणक्षतानां न विशोधनीयान् न शोषिणां नो भृशदुर्बलानाम् ।
न मूर्च्छितानाञ्च न शोधितानां येषाञ्च दोषेषु निबद्धमायुः ॥३५॥
शाखागताः कोष्ठगताश्च रोगा मर्मोर्द्ध्वसर्वावयवाङ्गजाश्च ।

ये सन्ति तेषां न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति॥३
विण्मूत्रपित्तादिमलाशयानां विक्षेपसंहारकरः स यस्मात्।
तस्यातिवृद्धस्य शमाय नान्यद् वस्तेर्विना भेषजमस्ति किञ्चित्॥३
तस्माच्चिकित्सार्द्धमिति ब्रुवन्ति सर्वां चिकित्सामपि वस्तिमेके।
नाभिप्रदेशञ्च कटीञ्च गत्वा कुक्षिं समालोड्य पुनश्च पार्श्वम्॥३८
संस्नेह्य कायं शिथिलांश्च कृत्वा दोषान् पुरीषं ग्रथितं विमथ्य।
संसक्तवेगः सपुरीषदोषः प्रत्यागतो वस्तिरिति प्रशस्तः॥३८॥
प्रसृष्टविण्मूत्रसमीरणत्वं रुच्यग्निवृद्ध्याशयलाघवानि।
रोगोपशान्तिः प्रकृतिस्थता च बलञ्च तत् स्यात् सुनिरूढलिङ्गम्॥४
स्याद्रुक्शिरोहृद्गुदकुक्षिलिङ्गे शोफः प्रतिश्यायविकर्त्तिके च।
हृल्लासिका मारुतमूत्रसङ्गः श्वासो न सम्यक् च निरूहिते स्यात्॥४
लिङ्गं यदेवातिविरेचितस्य भवेत् तदेवातिनिरूहितस्य।
प्रत्येत्य सक्तं सशकृच्च तैलं रक्तादिबुद्धीन्द्रियसंप्रसादः॥४२॥
स्वप्नानुवृत्तिर्लघुता बलञ्च सृष्टाश्च वेगाः स्वनुवासिते स्युः।
अधःशरीरोदरबाहुपृष्ठपार्श्वेषु रुग्रूक्षखरञ्च गात्रम्॥४२॥
ग्रहश्च विण्मूत्रसमीरणानां असम्यगेतान्यनुवासिते स्युः।
हृल्लासमोहक्लमसादमूर्च्छा विकर्त्तिका चात्यनुवासिते स्युः॥४४
यस्यैति यामाननुवर्त्तते त्रीन् स्नेहावरः स्यात् स विशुद्धदेहः।
आश्वागतेऽन्यस्तु पुनर्विधेयः स्नेहो न संस्नेहयति ह्यतिष्ठन्॥४
त्रिंशत् स्मृताः कर्मसु वस्तयो हि कालस्ततोऽर्द्धेन ततश्च योगः।
सान्वासना द्वादश वै निरूहाः प्राक्स्नेह एकः परतश्च पञ्च॥४६
काले त्रयोऽन्ते पुरतस्तथैकः स्नेहा निरूहान्तरिताश्च षट् स्युः।
योगे निरूहास्त्रय एव देयाः स्नेहाश्च पञ्चैव परादिमध्याः॥४७
त्रीन् पञ्च वाऽप्यथ चतुरोऽथ षड्वा वाताधिकेभ्यस्त्वनुवासनीयान्।
स्नेहान् प्रदायाशु भिषग्विदध्यात् स्रोतो विशुद्ध्यर्थमतो निरूहान्॥४
विशुद्धकायस्य ततः क्रमेण स्निग्धन्तु तैः स्वेदितमुत्तमाङ्गम्।

विरेचयेन्निर्हृतवस्त्रिरथैकशो वा बलं समीक्ष्य त्रिविधं मलानाम् ॥४९॥
उरःशिरोलाघवमिन्द्रियाणां स्रोतोविशुद्धिश्च भवेद्विशुद्धे ।
गलोपलेपः शिरसो गुरुत्वं निष्ठीवनञ्चाप्यथ दुर्विरिक्ते ॥५०॥
शिरोऽक्षिशङ्खश्रवणार्त्तितोदयाप्यर्थशुद्धेस्तिमिरञ्च पश्येत् ।
स्यात् तर्पणं तत्र मृदु द्रवञ्च स्निग्धस्य तीक्ष्णन्तु पुनर्न योगे ॥५१॥
इत्यातुरस्वस्थविधिः प्रयोगे बलायुषोर्वृद्धिकृदामयघ्नः ।
कालस्तु वस्त्यादिषु याति यावांस्तावान् भवेद्विःपरिहारकालः५२
अत्यासनस्थानवचांसि यानं स्वप्नं दिवा मैथुनवेगरोधान् ।
शीतोपचारातपशोककरोषांस्त्यजेदकालाहितभोजनञ्च ॥५३॥
बद्धे प्रणीते विषमे च नेत्रे मार्गे तथार्शःकफविड्विबन्धे ।
न याति वस्तिं न सुखं निरेति दोषावृतोऽल्पो यदि वाल्पवीर्यः५४
प्राप्ते तु वर्चोऽनिलमूत्रवेगे वाते विवृद्धेऽल्पबले गुदे वा ।
अत्युष्णतीक्ष्णश्च मृदौ प्रकोष्ठे प्रणीतमात्रः पुनरेति वस्तिः ॥५५॥
मेदःकफाभ्यामनिलो निरुद्धः शूलाङ्गसुप्तिश्वयथून् करोति ।
स्नेहन्तु युञ्जन्नबुधस्तु तस्मै संवर्द्धयत्येव हि तान् विकारान् ॥५६॥
रोगास्तथान्येऽप्यवितर्क्यमाणाः परस्परेणावृतशीतमार्गाः ।
सन्दूषिता धातुभिरेव चान्यैः स्वैर्भेषजैर्नोपशमं व्रजन्ति ॥५७॥
सर्वञ्च रोगप्रशमाय कर्म्महीनातिमात्रं विपरीतकालम् ।
मिथ्योपचाराच्च न तं विकारं शान्तिं नयेत्पथ्यमपिप्रयुक्तम् ॥५८
तत्र श्लोकः ।
प्रश्नानिमान् द्वादश पञ्चकर्माण्युद्दिश्य सिद्धाविह कल्पनायाम् ।
प्रजाहितार्थं भगवान् महार्थान् सम्यक् जगादर्षिवरोऽग्निपुत्रः५९

---

## द्वितीयोऽध्यायः ।

### पञ्चकर्मीयसिद्धिः ।

येषां यस्मात् च कर्माण्यग्निवेश ! न कारयेत् ।
येषाञ्च कारयेत् यानि तत् सर्वं संप्रवक्ष्यते ॥ १ ॥

चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च ।
सद्वैद्यनृपतिद्वेष्टा तद्द्विष्टः शोकपीडितः ॥ २ ॥
यादृच्छिको मुमूर्षुश्च विहीनः करणैश्च यः ।
वैरी वैद्याभिमानी च श्रद्धाहीनः सशङ्कितः ॥ ३ ॥
भिषजामविधेयश्च नोपक्रम्यो भिषग्विदा ।
एतानुपचरन् वैद्यो बहून् दोषानवाप्नुयात् ॥ ४ ॥
एभ्योऽन्ये समुपक्रम्या नराः सर्वैरुपक्रमैः ।
अवस्थां प्रविभज्यैषां वर्ज्यं कार्यञ्च वक्ष्यते ॥ ५ ॥

अच्छर्दनीयास्तावत् क्षतक्षीणाति-स्थूलकृश-बालवृद्धदुर्बल-श्रान्त-पिपासित-क्षुधितकर्मभाराध्वहतोपवासमैथुनाध्ययनव्यायामचिन्ताप्रसक्त-क्षामगर्भिणी-सुकुमार-संवृतकोष्ठ-दुश्छर्दनोर्ध्वरक्त पित्त-प्रसक्तच्छर्द्यूर्ध्व-वातास्थापितानुवासित-हृद्रोगोदावर्त-मूत्राघातप्लीहगुल्मोदराष्ठीलास्वरोपघाततिमिरशिरःशङ्खकर्णाक्षिपार्श्वशूलार्त्ताः ॥ ६ ॥

तत्र क्षतस्य च भूयः क्षणनात् रक्तातिप्रवृत्तिः स्यात् । क्षीणातिस्थूल-कृशबालवृद्धदुर्बलानामौषधबलासहत्वात् प्राणोपरोधः । श्रान्तपिपासितक्षुधितानाञ्च तद्वत् । कर्मभाराध्वहतोपवासमैथुनाध्ययनव्यायामचिन्ताप्रसक्तक्षामाणां रौक्ष्याद्वातरक्तच्छेदक्षतभयं स्यात् । गर्भिण्या गर्भव्यापदामगर्भभ्रंशाच्च दारुणा रोगप्राप्तिः । सुकुमारस्य हृदयस्य विकर्षणादूर्ध्वमधो वा रुधिरातिप्रवृत्तिः । संवृतकोष्ठदुश्छर्दनयोरतिमात्रप्रवाहनाद्दोषाः समुत्क्लिष्टा ह्यन्तःकोष्ठे जनयन्त्यन्तर्विसर्पं स्तम्भं जाड्यं वैचित्त्यं मरणं वा । ऊर्ध्वरक्तपित्तस्य उदानम् उत्क्षिप्य प्राणान् हरेद्रक्तञ्चातिप्रवर्त्तयेत् । प्रसक्तच्छर्देस्तु तद्वदूर्ध्ववातास्थापितानुवासितानामूर्ध्वं वातातिप्रवृत्तिः । हृद्रोगिणो हृदयोपरोधः । उदावर्त्तिनो घोरतर उदावर्त्तः स्यात् शीघ्रतर-

हन्ता। मूत्रघातादिभिरार्त्तानां तीव्रतरः शूलप्रादुर्भावः। तिमिरार्त्तानां तिमिरातिवृद्धिः। शिरःशूलादिषु शूलातिवृद्धिः। तस्मादेते न वाम्याः ॥ ७ ॥

सर्वेष्वपि खलु एतेष्वपि विषगरविरुद्धाभ्यवहारामक्तेषु अप्रतिसिद्धं शीघ्रकारित्वात् दोषाणामिति ॥ ८ ॥

शेषास्तु वाम्याः। पीनसकुष्ठनवज्वरराजयक्ष्मकासश्वासगलग्रहगलगण्ड-श्लीपद-मेह-मन्दाग्निविरुद्धाजीर्णान्नविसूचिकालसकविषगरपीतदष्टदिग्धविद्धाधःशोणितपित्तकफप्रसेकदुर्नामहृल्लासारोचकाविपाकापच्यपस्मारोन्मादातिसारशोथपाण्डुरोगमुखपाकदुष्टस्तन्यादयः श्लेष्मव्याधयो विशेषेण रोगाध्यायोक्ताश्च तेषु हि वमनं प्रधानतममित्युक्तं केदारसेतुभेदे शाल्यादिशोषदोषविनाशवत् ॥ ९ ॥

अविरेच्यास्तु सुभगक्षतगुदमुक्तनालाधोभागरक्तपित्तविलङ्घितदुर्बलेन्द्रियाल्पाग्निनिरूढकामादि-व्यग्राजीर्णि नवज्वरमदात्ययिताध्मातशल्यार्दिताभिहतातिस्निग्धरूक्षदारुणकोष्ठाः क्षतादयश्च गर्भिण्यन्ताः ॥ १० ॥

तत्र सुभगस्य सुकुमारोक्तो वमनदोषः स्यात्। क्षतगुदस्य क्षते गुदे वायुः प्राणोपरोधकरीं परां रुजां जनयेत्। मुक्तनालमतिमहत्या हन्यात्। अधोभागरक्तपित्तिनाञ्च तद्वदेव विलङ्घितदुर्बलेन्द्रियाल्पाग्निनिरूढा औषधवेगं न ते सहेरन्। कामादिव्यग्रमनसो न प्रवर्त्तते कृच्छ्रेण वा प्रवर्त्तमानमयोगदोषान् कुर्य्यात् अजीर्णिन आमदोषः स्यात्। नवज्वरस्य अविपक्वान् दोषान् न निर्हरेत् वातमेव च कोपयेत्। मदात्ययितस्य मद्यक्षीणे देहे वायुः प्राणोपरोधं कुर्य्यात्। आध्मातस्य आध्मायमानस्य वा पुरीषकोष्ठनिचितो वायुर्विसर्पन् सहसा आनाहं तीव्रतरं मरणं वा जनयेत्। शल्यार्दिताभिहतयोः क्षते वायु-

रोग्यितो जीवितं हिंस्यात् अतिस्निग्धस्य अतियोगभयं भवेत् रूक्षस्य वायुरङ्गग्रहं कुर्य्यात्। दारुणकोष्ठस्य विरेचनोद्धत दोषा हृच्छूलपर्वभेदानाहाङ्गमर्दच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः। क्षतादीनां गर्भिण्यन्तानां छर्दनोक्तो दोषः स्यात्। तस्मादेते न विरेच्याः ॥११॥

शेषास्तु विरेच्याः। कुष्ठज्वरमेहोर्द्ध्वरक्तपित्तभगन्दरोदरार्शोब्रध्नप्लीहगुल्मार्वुदगलगण्डग्रन्थिविसूचिकालसकमूत्राघातक्रिमिकोष्ठवीसर्पपाण्डुरोगशिरःपार्श्वशूलोदावर्त्तनेत्रास्यदाहहृद्रोगव्यङ्गनीलीकनेत्रनासिकास्यस्रवणरोगहलीमकश्वास कासकामलापस्मारोन्माद-वात-रक्त-योनि-रेतो-दोष-तैमिर्य्यारोचकाविपाकच्छर्दिश्वयथूदरविस्फोटकादयः पित्तव्याधयो विशेषेण रोगा ध्यायोक्ताश्च। एतेषु हि विरेचनं प्रधानतममित्युक्तमग्न्युपशमेऽग्निगृहवत् ॥ १२ ॥

अनास्थाप्यास्तु अजीर्णातिस्निग्धपीतस्नेहोत्क्लिष्टदोषाल्पाग्नियानक्लान्तातिदुर्वलक्षुत्तृष्णाश्रमार्त्तातिकृशभुक्तभक्तपीतोदकवमितविरिक्तकृतनस्तःकर्मक्रुद्धभीतमत्तमूर्च्छितप्रसक्तच्छर्दिनिष्ठीविकाश्वासकासहिक्काबद्धच्छिद्रोदकोदराध्मातालसकविसूचिकामप्रजातिसारमधुमेहकुष्ठार्त्ताः ॥ १३ ॥

तत्र अजीर्णातिस्निग्धपीतस्नेहानां दूष्योदरं मूर्च्छा श्वयथुर्वा स्यात्। उत्क्लिष्टदोषमन्दाग्न्योररोचकस्तीव्रः। यानक्लान्तस्य क्षोभव्यापन्नो वस्तिराशु देहं शोषयेत्। अतिदुर्वलक्षुत्तृष्णाश्रमार्त्तानां पूर्वोक्तो दोषः स्यात्। अतिकृशस्य कार्श्यं पुनर्जनयेत्। पीतोदकभुक्तभक्तयोरुत्क्लिश्योर्द्ध्वमधो वा वायुर्वस्तिमुत्क्षिप्य क्षिप्रं घस्रो घोरान् विकारान् जनयेत्। वमितविरिक्तयोस्तु रूक्षशरीरं निरूहः क्षतं क्षार इव दहेत्। कृतनस्तःकर्मणो विभ्रंशं भृशसंरुद्धस्रोतसः कुर्य्यात्। क्रुद्धभीतयो-

वस्तिरूर्द्ध्वमुपप्लवेत्। मत्तमूर्च्छितयोर्भ्रंशं विचलितायां संज्ञायां चित्तोपघातव्यापत् स्यात्। प्रसक्तच्छर्दिनिष्ठीविकाश्वासकासहिक्कार्त्तानामूर्द्ध्वीभूतो वायुरूर्द्ध्वं वस्तिं नयेत्। बद्धच्छिद्रोदकोदराध्मातानां भृशतरमाध्माप्य वस्तिः प्राणान् हिंस्यात्। अलसक-विसूचिकामप्रजातामातिसारिणामक्षतदोषः स्यात्। मधुमेहकुष्ठिनोर्व्याधिः पुनर्वृद्धिस्तस्मादेते नास्थाप्याः ॥ १४ ॥

शेषास्त्वास्थाप्याः। सर्वाङ्गैकाङ्गकुक्षिरोगवातवर्च्चोमूत्रशुक्रसङ्गबलवर्णमांसरेतःक्षयदोषाध्मानाङ्गसुप्तिक्रिमिकोष्ठोदावर्त्तातिसारपर्वाभितापप्लीहगुल्महृद्रोगभगन्दरोन्मादज्वरब्रध्नशिरःकर्णशूल-हृदयपार्श्व-पृष्ठ-कटीग्रहवेपनाक्षेपक गौरवातिलाघव रजःक्षयार्त्तां विषमाग्निस्फिग्जानुजङ्घोरुगुल्फपार्ष्णिप्रपदयोनिबाह्वङ्गुलिस्तनाङ्गदन्तनखपर्वास्थि-शूलशोषस्तम्भान्त्रकूजनपरिकर्त्तिकादयः वातव्याधयो विशेषेण रोगाध्यायोक्ताश्च एतेषु आस्थापनं प्रधानतममित्युक्तं वनस्पतिमूलच्छेदवत् ॥१५॥

ये एवानास्थाप्यास्त एव अननुवास्याः स्युः। विशेषतस्त्वभुक्तभक्त नवज्वरपाण्डुरोगकामलाप्रमेहार्शःप्रतिश्यायारोचक-मन्दाग्निदुर्बलप्लीहकफोदरोरुस्तम्भवर्चोभेद-विषगरपीतकफाभिष्यन्द-गुरुकोष्ठश्लीपदगलगण्डापचीक्रिमिकोष्ठिनः ॥ १६ ॥

तत्राभुक्तभक्तस्यानावृतमार्गत्वादूर्द्ध्वमतिवर्त्तते स्नेहः। नवज्वरपाण्डुरोगकामलाप्रमेहिणां दोषानुत्क्लेश्योदरं जनयेदर्शसस्य अर्शांस्यभिष्यन्द्याध्मानं कुर्य्यात्। अरोचकार्त्तस्य अन्नगृद्धिं पुनः हन्यात्। मन्दाग्निदुर्बलयोर्मन्दतरमग्निं कुर्य्यात्। प्रतिश्यायप्लीहादिमतां भृशोत्क्लिष्टदोषाणां भूय एव दोषं वर्द्धयेत् तस्मादेते नानुवास्याः ॥ १७ ॥

य एवास्थाप्यास्त एवानुवास्याः। विशेषतस्तु रूक्षतीक्ष्णाग्नयः केवलवातरोगार्त्ताश्च। एतेषु ह्यनुवासनं प्रधानतम-

प्राड्वृट्शरद्वसन्तेष्वितरेषु त्वात्ययिकेषु रोगेषु नावनं कुर्य्याद् ग्रीष्मे पूर्वाह्णे शीते मध्याह्ने वर्षास्वदुर्दिने चेति ॥ २२ ॥

तत्र श्लोकाः।

इति पञ्चविधं कर्म विस्तरेण निदर्शितम्।
येभ्यो यत् त्वहितं यस्मात् कर्म येभ्यश्च यद्धितम् ॥२३॥
न चैकान्तेन निर्दिष्टे तत्राभिनिविशेद्बुधः।
स्वयमप्यत्र वैद्येन तर्क्यं बुद्धिमता भवेत् ॥ २४ ॥
उत्पद्येत हि सावस्था देशकालबलं प्रति।
यस्यां कार्य्यमकार्य्यं स्यात् कर्म कार्य्यञ्च वर्जयेत् ॥ २५ ॥
छर्दिहृद्रोगगुल्मार्त्ते वमनं स्वे चिकित्सिते।
अवस्थां प्राप्य निर्दिष्टं कुष्ठिनां वस्तिकर्म च ॥ २६ ॥
तस्मात् सत्यपि निर्दिष्टे कुर्य्यादूह्यं स्वयं धिया।
विना तर्केण या सिद्धिर्यदृच्छासिद्धिरेव सा ॥ २७ ॥

---

## तृतीयोऽध्यायः।

### वस्तिसूत्रीयसिद्धिः।

कृतक्षणं शैलवरस्य रम्ये स्थितं धनेशायतनस्य पार्श्वे।
महर्षिसङ्घैर्वृतमग्निवेशः पुनर्वसुं प्राञ्जलिरन्वपृच्छत् ॥ १ ॥
यस्तिर्नरेभ्यः किमपेक्ष्य दत्तः स्यात्सिद्धिमान् किम्मयमस्य नेत्रम्।
कीदृक् प्रमाणाकृति किं गुणञ्च केषाञ्च किं योनिगुणश्च वस्तिः २
निरूहकल्पः प्रणिधानमात्राः स्नेहस्य वा काः शमने विधिः कः।
के वस्तयः केषु मता इतीदं श्रुत्वोत्तरं प्राह वचो महर्षिः ॥३॥
समीक्ष्य दोषौषधदेशकालसात्म्याग्निसत्त्वादिवयोबलानि।
वस्तिः प्रयुक्तो नियतं गुणाय स्युः सर्वकर्माणि च सिद्धिमन्ति॥४॥
सुवर्णरूप्यत्रपुताम्ररीतिकांस्यास्थिशस्त्रद्रुमवेणुदन्तैः।
नलैर्विषाणैर्मणिभिश्च तैस्तैः कार्य्याणि नेत्राणि त्रिकर्णिकानि॥५॥
षड्द्वादशाष्टाङ्गुलसम्मितानि षड्विंशतिद्वादशवर्षजानाम्।

स्युर्मुद्गकर्कन्धुसतीनवाहि च्छिद्राणि वर्त्या पिहितानि चापि॥६॥
यथावयोऽङ्गुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुलिकामुखानि॥७॥
स्यात् कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते वस्तिनिबन्धने द्वे।
जारद्गवो माहिषहारिणो वा स्याच्छौकरो वस्ति रजस्य वापि॥८॥
दृढस्तनुर्नष्टशिरोविगन्धः कषायरक्तः सुमृदुः सुशुद्धः।
नृणां वयो वीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः॥९॥
वस्तेरभावे प्लवजो गलो वा स्यादङ्कपादः सुघनः पटो वा।
नेत्रस्य चालाभत एव नाड़ी हिताखिजा वंशभवा नलो वा॥१०॥
आस्थापनार्हं पुरुषं विधिज्ञः समीक्ष्य पुण्येऽहनि शुक्लपक्षे।
प्रशस्तनक्षत्रमुहूर्त्तयोगे जीर्णान्नमेकाग्रमुपक्रमेत॥११॥
बलां गुडूचीं त्रिफलां सरास्नां द्वे पञ्चमूले च पलोन्मितानि।
अष्टौ फलान्यर्द्धतुलाञ्च मांसाच्छागात् पचेदप्सु चतुर्थशेषम्॥१२॥
पूतं यवानीफलबिल्वकुष्ठवचाशताह्वाघनपिप्पलीनाम्।
कल्कैर्गुडक्षौद्रघृतैः सतैलैर्युतं सुखोष्णैस्तु पिचुप्रमाणैः॥१३॥
गुडात् पलं द्विप्रसृतान्तु मात्रां स्नेहस्य युक्त्या मधुसैन्धवादि।
स्नेहं सुनिर्मथ्य ततोऽनुकल्पं प्रक्षिप्य वस्तौ मथितं खजेन॥१४॥
वस्तिं ततः सव्यकरे निधाय सुबद्धमुच्छास्य च निर्व्वलीकम्।
अङ्गुष्ठमध्येन मुखं पिधाय नेत्राग्रसंस्थामपनीय वर्त्तिम्॥१५॥
तैलाक्तगात्रं कृतमूत्रविट्कं नातिक्षुधार्त्तं शयने मनुष्यम्।
समेऽथवैषच्चतशीर्षके वा नात्युच्छ्रिते स्वास्तरणोपपन्ने॥१६॥
सव्येन पार्श्वेन सुखं शयानं कृत्वर्जुदेहं स्वभुजोपधानम्।
निकुञ्च्य सव्येतरदस्य सक्थि वामं प्रसार्य्य प्रणयेत् ततस्तम्॥१७॥
स्निग्धे गुदे नेत्रचतुर्थभागं स्निग्धं शनैर्ऋजु पृष्ठवंशम्।
अकम्पनावेपनलाघवादीन् पाण्योर्गुणांश्चापि हि दर्शयंस्तम्॥१८॥
प्रपीड्य चैकग्रहणेन दत्तं नेत्रं शनैरेव ततोऽपकर्षयेत्।

नात्युच्छ्रितं नाप्यतिनीचपादं सपादपीठं शयनं प्रशस्तम् ॥२
प्रधानमृद्वास्तरणोपपन्नं प्राक्शीर्षकं शुक्लपटोत्तरीयम्।
भोज्यं पुनर्व्याधिमवेक्ष्य सम्यक् प्रकल्पयेद्यूषपयोरसाद्यैः ॥३
सर्वेषु विद्याद्विधिमेतदाद्यं वक्ष्यामि बस्तीनत उत्तरीयान्।
सम्यक् प्रणीताः खलु बस्तयो ये वातामयघ्नाश्च बलप्रदाश्च ॥३
द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य सपूर्वपेषः।
त्रिस्नेहयुक्तः प्रवरो निरूहः सर्वानिलव्याधिहरः प्रदिष्टः ॥३५॥
स्थिरादिवर्गस्य बलापटोलत्रायन्तिकैरण्डयवैर्युतस्य।
प्रस्थोरसश्छागरसार्धयुक्तः साध्यः पुरः प्रस्थरसश्च यावत् ॥३६॥
प्रियङ्गुकृष्णा घनकल्कयुक्तः सतैलसर्पिर्मधुसैन्धवश्च।
स्याद्दीपनो मांसबलप्रदश्च चक्षुर्बलञ्चापि ददाति सद्यः ॥३७॥
एरण्डमूलात्त्रिपलं पलानि ह्रस्वानि मूलानि च यानि पञ्च।
रास्नाश्वगन्धातिबलागुडूचीपुनर्नवारग्वधदेवदारु ॥३८॥
भागा पलांशा मदनाष्टयुक्ता जलाढके साधितेऽष्टशेषे।
पेष्या शताह्वा हवुषाप्रियङ्गु सपिप्पलीकं मधुकं वचा च ॥३९॥
रसाञ्जनं वत्सकबीजमुस्तं भागाक्षमात्रं लवणांशयुक्तम्।
समाक्षिकस्तैलयुतः समूत्रो बस्तिर्नृणां दीपनलेखनीयः ॥४०॥
जङ्घोरुपादत्रिकपृष्ठशूले कफावृतं मारुतनिग्रहश्च।
विण्मूत्रवातग्रहणं सशूलमाध्मानतामश्मरिशर्करश्च ॥४१॥
आनाहमर्शो ग्रहणीप्रदोषानेरण्डबस्तिः शमयेत् प्रयुक्तः।
वैद्येन सम्यक् कुशलेन चैव पुनर्वसूक्तः कृपया नराणाम् ॥४२॥
चतुष्पले तैलघृतस्य भृष्टश्छागाच्छतार्धात् दधिदाडिमाम्लः।
रसः सपेष्यो बलवर्णमांसरेतोऽग्निदश्चाक्ष्यशिरोरुजाघ्नः ॥४३॥
जलाढकेऽष्टपलं पलाशात् पक्त्वा रसोऽर्धाढकमात्रशेषः।
कल्कैर्वचामागधिकापलाभ्यां युक्तः शताह्वाद्विपलेन चापि ॥४४॥
ससैन्धवः क्षौद्रयुतः सतैलो देयो निरूहो बलवर्णकारी।

ानाहपार्श्वामययोनिदोषान् गुल्मानुदावर्त्तरुजञ्च हन्यात् ॥४५
ह्वाङ्कमूलाष्टपलेन सिद्धं पयः शताह्वाफलपिप्पलीभिः ।
युक्तं ससर्पिर्मधु वातरक्तवैस्वर्य्यवीसर्पहितो निरूहः ॥४६॥
यष्ट्याह्वलोध्राभयचन्दनैश्च शृतं पयोऽग्र्य कमलोत्पलैश्च ।
सशर्करं क्षौद्रयुतं सुशीतं पित्तामयान् हन्ति सजीवनीयम् ॥४७॥
विदारिकाचन्दनपद्मकर्द्धियष्ट्याह्वरास्नाह्वपयारिवाश्च ।
यक्षोभ्रमञ्जिष्ठमथाप्यनन्ताबलास्थिराद्यं ह्रस्वपञ्चमूलम् ॥४८॥
निःक्वाथ्य तोयेन रसेन तेन शृतं पयोऽर्द्धोदकमम्बुहीनम् ।
जीवन्तिमेदर्द्धिशतावरीभिर्वीराद्विकाकोलिकशेरुकाभिः ॥४९॥
सितोपलाजीवकपद्मरेणुप्रपौण्डरीकैः कमलोत्पलैश्च ।
गोधूमगुप्तामधुकैर्विदारीमुञ्जातकैः केशरचन्दनैश्च ॥५०॥
पिष्टैश्च तत्क्षौद्रयुतैर्निरूहं ससैन्धवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन् क्षीरेण वाद्यात् परिषिक्तगात्रः ॥५१॥
दाहातिसारौ प्रदरास्रपित्तहृत्पाण्डुरोगान् विषमज्वरांश्च ।
सगुल्ममूत्रग्रहकामलादीन् सर्वामयान् पित्तकृतान्निहन्ति ॥५२॥
द्राक्षादिकाश्मर्य्यमधूकसेव्यैः सशारिवाचन्दनशीतपाक्यैः ।
पयः शृतं श्रावणिमुद्गपर्णीतुगात्मगुप्तामधुयष्टिकल्कैः ॥५३॥
गोधूमचूर्णैश्च तथाक्षमात्रैः सक्षौद्रसर्पिर्मधुयष्टितैलैः ।
पथ्याविदारीक्षुरसैर्गुडेन वस्तिं युतं पित्तहरं विदध्यात् ॥५४॥
ह्वाभिपार्श्वोदरदेहदाहे दाहेऽन्तरस्थे च सरक्तमूत्रे ।
क्षीणे क्षते रेतसि चापि नष्टे पैत्तेऽतिसारे च नृणां प्रशस्तः ॥५५॥
कोषातकारग्वधदेवदारुमूर्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान् बृहतीञ्च तोये रसस्य तस्य प्रसृता दश स्युः ॥५६॥
तां सर्षपैलामदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
फलाम्लतैलस्य समाक्षिकस्य क्षारस्य तैलस्य च सार्षपस्य ॥५७॥
दद्यान्निरूहं कफरोगिणे ज्ञो मन्दाग्नये चाप्यशनद्विषे च ।

पटोलपथ्यामरदारुभिर्वा सपिप्पलीकैः क्वथितैर्जलाख्यैः ॥५८॥
द्विपञ्चमूले त्रिफलां सविल्वां फलानि गोमूत्रयुतः कषायः ।
कलिङ्गपाठाफलमुस्तकल्कः ससैन्धवः क्षारयुतः सतैलः ॥५९॥
निरूहमुख्यः कफजान् विकारान् सपाण्डुरोगालसकामदोषान् ।
हन्यात् तथा मारुतमूत्रसङ्गं वस्तेस्तथाटोपमथापि घोरम् ॥६०॥
रास्नामृतैरण्डविडङ्गदारुसप्तच्छदोशीरसुराह्वनिम्बैः ।
श्यामाकभूनिम्बपटोलपाठातिक्ताखुपर्णी दशमूलमुस्तैः ॥६१॥
त्रायन्तिकाशिग्रुफलत्रिकैश्च क्वाथः सपिण्डीतकतोयमूत्रः ।
यष्ट्याह्वकृष्णाफलिनीमताह्वारसाञ्जनश्वेतवचाविडङ्गैः ॥६२॥
कलिङ्गपाठाम्बुदसैन्धवैश्च कल्कैः ससर्पिर्मधुतैलमिश्रः ।
अयं निरूहः क्रिमिकुष्ठमेहब्रध्नोदराजीर्णकफातुरेभ्यः ॥६३॥
रूक्षौषधैरप्यपतर्पितेभ्य एतेषु रोगेष्वपि सत्सु दत्तः ।
निहत्य वातं ज्वलनं प्रदीप्य विजित्य रोगांश्च बलं करोति ॥६४॥
पुनर्नवैरण्डवृषाश्मभेदवृश्चीरभूतीकबलापलाशाः ।
द्विपञ्चमूलानि पलांशिकानि क्षुण्णानि धौतानि फलानि चाष्टौ ॥६५॥
बिल्वं यवान् कोलकुलत्थधान्यफलानि चैकप्रसृतोन्मितानि ।
पयोजलार्धाढकयोः शृतं तत् क्षीरावशेषं सितवस्त्रपूतम् ॥६६॥
वचामृताह्वामरदारुकुष्ठयष्ट्याह्वसिद्धार्थकपिप्पलीनाम् ।
कल्कैर्यवान्या मदनैश्च युक्तं नात्युष्णशीतं गुडसैन्धवाक्तम् ॥६७॥
क्षौद्रस्य तैलस्य च सर्पिषश्च तथैव युक्तं प्रसृतत्रयेण ।
दद्यान्निरूहं विधिना विधिज्ञः सर्वसंसर्गकृतामयघ्नम् ॥६८॥
स्निग्धोष्ण एकः पवने निरूहो द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः ॥६
रसेन वाते प्रतिभोजनं स्यात् क्षीरेण पित्ते तु कफे च यूषैः ।
तथानुवास्येषु च बिल्वतैलं स्याज्जीवनीयं फलसाधितं च ॥७०॥
इतीदमुक्तं निखिलं यथावद्वस्तिप्रदानस्य विधानमग्र्यम् ।
योऽधीत्य विद्वानिह वस्तिकर्म करोति लोके लभते स सिद्धिम् ॥७

# चतुर्थोऽध्यायः ।

## स्नेहव्यापादिका सिद्धिः ।

स्नेहबस्तीन् निबोधेमान् वातपित्तकफापहान् ।
मिथ्याप्रणिहितानाञ्च व्यापदः सचिकित्सिताः ॥ १ ॥
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ।
गुडूच्येरण्डभूतीकभार्गीवृषकरोहिषम् ॥ २ ॥
शतावरीं सहचरं काकनासां पलांशिकाम् ।
यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान् ॥ ३ ॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ।
तैलाढ़कं समक्षीरं जीवनीयैः पलोन्मितैः ॥ ४ ॥
अनुवासनमेतद्धि सर्ववातविकारनुत् ।
आनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥ ५ ॥
शताह्वा यवबिल्वाम्लैः सिद्धं तैलं समीरणे ।
सैन्धवेनाग्निवर्णेन तप्तञ्चानिलनुद् घृतम् ॥ ६ ॥
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥ ७ ॥
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शटीं वचाम् ।
पिष्ट्वा तैलं घृतं क्षीरे साधयेत् तच्चतुर्गुणे ॥ ८ ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ।
मूत्ररेतोरजोदोषान् हरेत् तदनुवासनात् ॥ ९ ॥
लाभतश्चन्दनाद्यैश्च पिष्टैः क्षीरचतुर्गुणम् ।
तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनम् ॥ १० ॥
सैन्धवं मदनं कुष्ठं शताह्वां निचुलं बलाम् ।
ह्रीवेरं मधुकं भार्गीं देवदारु सकट्फलम् ॥ ११ ॥
नागरं पुष्करं मेदां चविकां चित्रकं शटीम् ।

विड्ङ्गातिविषे श्यामां हरेणुं नीलिनीं स्थिराम् ॥ १२ ॥
बिल्वाजमोदे कृष्णाञ्च दन्तीं रास्नाञ्च पेषयेत् ।
साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥ १३ ॥
ब्रध्नोदावर्त्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीञ्चैव हन्यात् तदनुवासनात् ॥ १४ ॥
मदनैर्वाम्लसंयुक्तैर्बिल्वाद्येन गणेन वा ।
तैलं कफहरैर्वापि वाफघ्नं कल्पयेद्भिषक् ॥ १५ ॥
विड्ङ्गैरण्डरजनीपटोलत्रिफलाऽमृताः ।
जातिप्रवालनिर्गुण्डीदभमूलाखुपर्णिकाः ॥ १६ ॥
निम्बपाठासहचरशम्याककरवीरकम् ।
एषां क्वाथेन विपचेत् तैलमेभिश्च कल्कितैः ॥ १७ ॥
फलबिल्वत्रिवृत्कृष्णारास्नाभूनिम्बदारुभिः ।
सप्तपर्णवचोशीरदार्वीकुष्ठकलिङ्गकैः ॥ १८ ॥
लतायष्टिशताह्वाग्निशटीचोरकपौष्करैः ।
तत् कुष्ठानि क्रिमीन् मेहानर्शांसि ग्रहणीगदम् ॥ १९ ॥
क्लैव्यं विषमाग्नित्वं मलं दोषत्रयं तथा ।
प्रयुक्तं प्रणुदत्याशु पानाभ्यङ्गानुवासनैः ॥ २० ॥
व्याधिव्यायामकर्माध्वक्षीणाबलनिरोजसाम् ।
क्षीणशुक्रस्य चातीव स्नेहो ह्यस्तिबलप्रदः ॥ २१ ॥
पादजङ्घोरुपृष्ठस्य कच्याश्च स्थिरतां पराम् ।
जनयेदप्रजानाञ्च प्रजां स्त्रीणां तथा नृणाम् ॥ २२ ॥
वातपित्तकफान्यत्रपुरीषैरावृतस्य च ।
अभुक्ते च प्रणीतस्य स्नेहवस्तेः षडापदः ॥ २३ ॥
शीतोऽल्पो वाधिके वाते पित्तेऽत्युष्णः कफे मृदुः ।
अतिभुक्ते गुरुर्वेर्चः सञ्चयेऽत्यबलस्तथा ॥ २४ ॥
दत्तस्तैरावृतः स्नेहो न यात्यभिभवादधः ।

अभुक्तेनावृतत्वाच्च यात्यूर्ध्वं तस्य लक्षणम् ॥ २५ ॥
अङ्गमर्दज्वराध्मानशीतस्तम्भोरुपीडनैः।
पार्श्वरुग्वेष्टनैर्विद्यात् स्नेहं वातावृतं भिषक् ॥ २६ ॥
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैल्वकैः।
सौवीरकसुराकोलकुलत्थरससाधितैः ॥ २७ ॥
निरूहैर्निर्हरेत् सम्यक् समूत्रैः पञ्चमूलिकैः।
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ॥ २८ ॥
दाहरागतृषामोहतमकज्वरदूयणैः।
विद्यात् पित्तावृतं स्वादुतिक्तैस्तं वस्तिभिर्हरेत् ॥ २९ ॥
तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः।
संमूर्च्छाग्लानिभिर्विद्यात् श्लेष्मणा स्नेहमावृतम् ॥ ३० ॥
कषायकटुतीक्ष्णोष्णैः सुरामूत्रोपसाधितैः।
फलतैलयुतैः सास्त्रैर्वस्तिभिस्तं विनिर्हरेत् ॥ ३१ ॥
छर्दिमूर्च्छारुचिग्लानिज्वरशूलाङ्गमर्दनैः।
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ॥ ३२ ॥
कटूनां लवणानाञ्च क्वाथैश्चूर्णैश्च पाचनम्।
विरेको मृदुरत्रामविहिता च क्रिया हिता ॥ ३३ ॥
विण्मूत्रानिलसङ्गार्त्तिगुरुत्वाध्मानहृद्ग्रहैः।
स्नेहं विड्रावृतं मत्वा स्नेहस्वेदैः सवर्त्तिभिः ॥ ३४ ॥
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः।
निर्हरेद्विधिना सम्यगुदावर्त्तहरैश्च च ॥ ३५ ॥
अभुक्ते शून्यपायी वा वेगात् स्नेहोऽतिपीड़ितः।
धावत्यूर्ध्वं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥ ३६ ॥
मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थकान्।
तत्सिद्धतैल इष्टोऽत्र निरूहः सानुवासनः ॥ ३७ ॥
कण्ठादागच्छतः स्तम्भकण्ठग्रहविरेचनैः।

छर्दिघ्नैभिः क्रियाभिश्च तस्य कार्यं निवर्त्तनम् ॥ ३८ ॥
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः ।
सर्वोऽल्पो वावृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥ ३९ ॥
मुक्तस्नेहं द्रवोष्णञ्च लघुपथ्योपसेवनम् ।
भुक्तवान् मात्रया योज्यमनुवास्य त्र्यहात् त्र्यहात् ॥४०॥
धान्यनागरसिद्धं हि तोयं दद्याद्विचक्षणः ।
व्युषिताय निशाः कल्यमुष्णं वा केवलं जलम् ॥ ४१ ॥
स्नेहाजीर्णं जरयति श्लेष्माणं तद्भिनत्ति च ।
मारुतस्यानुलोम्यञ्च कुर्य्यादुष्णोदकं नृणाम् ॥ ४२ ॥
वमने वा विरेके च निरूहे सानुवासने ।
तस्मादुष्णोदकं देयं वातश्लेष्मप्रशान्तये ॥ ४३ ॥
रूक्षनित्यस्तु दीप्ताग्निर्व्यायामी मारुतामयी ।
वङ्क्षणश्रोण्युदावर्त्तवातार्त्ताश्च दिने दिने ॥ ४४ ॥
एषाञ्चाशु जरां स्नेहो यात्यस्तु सिकतास्विव ।
अतोऽन्येषां त्र्यहात् प्रायः स्नेहं पचति पावकः ॥ ४५ ॥
नत्वामं प्रणयेत् स्नेहं स ह्यभिष्यन्दयेद् गुदम् ।
सावशेषञ्च कुर्वीत वायुः शेषे हि तिष्ठति ॥ ४६ ॥
न चैव गुदकण्ठाभ्यां दद्यात् स्नेहमनन्तरम् ।
उभयस्मात् समं गच्छन् वायुस्तौन् दूषयेत् समम् ॥४७॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
उत्क्लेशाग्निवधौ स्नेहान्निरूहात् पवनाद्भयम् ॥ ४८ ॥
तस्मान्निरूढः स्नेह्यः स्यान्निरूढ्यश्चानुवासितः ।
स्नेहशोधनयुक्त्यैव वस्तिकर्म त्रिदोषनुत् ॥ ४९ ॥
कर्मव्यायामभाराध्वयानस्त्रीकर्षितेषु च ।
दुर्बले वातभग्ने च मात्रावस्तिः सदा मतः ॥ ५० ॥
ह्रस्वायाः स्नेहमात्राया मात्रावस्तिः समो भवेत् ।

यथेष्टाहारचेष्टस्य सर्वकालं निरत्ययः ॥ ५१ ॥
बल्यं सुखोपचर्य्यश्च सुखं सृष्टपुरीषकृत्।
स्नेहमात्राविधानं हि बृंहणं वातरोगनुत् ॥ ५२ ॥

तत्र श्लोकौ।

वातादीनां शमायोक्ताः प्रवराः स्नेहवस्तयः।
तेषाञ्चाप्रयुक्तानां व्यापदः सचिकित्सिताः ॥ ५३ ॥
प्राग्भोज्यं स्नेहवस्तौ यद्‌ भुवं येऽर्हाश्चाप्यहाश्च ये।
स्नेहवस्तिविधिश्चोक्तो मात्रावस्तिविधिस्तथा ॥५४॥

---

## पञ्चमोऽध्यायः।

### नेत्रवस्तिव्यापादिकासिद्धिः।

अथ नेत्राणि वस्तींश्च शृणु वर्ज्यानि कर्मसु।
नेत्रस्याप्रणीतस्य व्यापदः सचिकित्सिताः ॥१॥
ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबन्धनम्।
पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत् ॥२॥
अप्राप्त्यतिगतिक्षोभकर्षणक्षणनस्रवाः।
गुदपीडा गतिर्जिह्मा तेषां दोषा यथाक्रमम् ॥३॥
मांसलच्छिद्रविषमस्थूलजालकवातलाः।
छिन्नः क्लिन्नश्च तानष्टौ वस्तीन् कर्मसु वर्जयेत् ॥४॥
गतिवैषम्यविसत्वस्रावदौर्गन्ध्यविट्स्रवाः।
फेनिलच्युतधार्य्यत्वं वस्तेः स्याद्‌ वस्तिदोषतः ॥५॥
सवातातिद्रुतोत्क्षिप्ततिर्य्यगुल्लुप्तकम्पिताः।
अतिवाह्यगमन्दातिवेगदोषाः प्रणेतृतः ॥६॥
अनुच्छ्वासानुबन्धे वा दत्ते निःशेष एव वा।
प्रविश्य कुपितो वायुः शूलतोदकरो भवेत् ॥७॥

तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ।
द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ॥८॥
स्यात् कटीगुदजङ्घार्त्तिर्वस्तिस्तम्भोरुभेदनम् ।
भोजनं तत्र वातघ्नं स्वेहाः स्वेदाः सवस्तयः ॥९॥
तिर्य्यग्वक्त्रावृतद्वारे बद्धे वाग्रे न गच्छति ।
नेत्रं तदृजु निष्कृष्य संशोध्य च पुनर्नयेत् ॥१०॥
पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः ।
उरःशिरोरुजं सादमूर्वोश्च जनयेत् बली ॥११॥
वस्तिः स्यात् तत्र विल्वादिफलश्यामानि मूत्रवान् ।
स्याद्दाहो दवथुः शोफः कम्पनाभिहते गुदे ॥१२॥
कषायमधुराः शीताः सेकास्तत्र सवस्तयः ।
अतिमात्रप्रणीतेन नेत्रेण चलनाद्बलेः ॥१३॥
स्यात् छर्द्दिदाहनिस्तोदगुदवर्च्चःप्रवर्त्तनम् ।
तत्र सर्पिः पिचुः चीरं पिच्छावस्तिश्च शस्यते ॥१४॥
न वा वहति मन्दस्तु वाह्याख्याश्च निवर्त्तते ।
स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता ॥१५॥
अतिप्रपीड़ितः क्रोष्ठे तिष्ठत्यायाति वा गलम् ।
तत्र वस्तिर्विरेकश्च गलपीड़ादिकर्म च ॥१६॥

तत्र श्लोकः ।

नेत्रवस्तिप्रणेतृणां दोषानेतान् सभेषजान् ।
विद्वांस्तत्त्वेन मतिमान् वस्तिकर्माणि कारयेत् ॥१७॥

---

## षष्ठोऽध्यायः ।

### वमनविरेचनव्यापत्सिद्धिः ।

अथ शोधनयोः सम्यग्विधिमूर्द्धानुलोमयोः ।
असम्यक्कृतयोश्चैव दोषान् वक्ष्यामि सौषधान् ॥१॥

अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः।
तदन्तरे प्रावृडाद्यास्तेषां साधारणास्त्रयः॥२॥
प्रावृट् शुचिनभौ ज्ञेयौ शरदूर्जसहौ पुनः।
तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति॥३॥
एतानृतून् विचिन्त्यैव दद्यात् संशोधनं नृणाम्।
स्वस्थवृत्तिमभिप्रेत्य व्याधौ व्याधिवशेन तु।
कर्मणां वमनादीनामन्तरेष्वन्तरेषु च॥४॥
स्नेहस्वेदौ प्रयुञ्जीत स्नेहायन्ते प्रयोजयेत्।
विसर्पपीडकाशोफकामलापाण्डुरोगिणः।
अभिघातविषार्त्तांश्च नातिस्निग्धान् विरेचयेत्॥५॥
नातिस्निग्धशरीराय दद्यात् स्नेहविरेचनम्।
स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद्विरेचनम्॥६॥
स्नेहस्वेदोपपन्नेन जीर्णे मात्रावदौषधम्।
एकाग्रमनसा पीतं सम्यग्योगाय कल्पते॥७॥
स्निग्धात् पात्राद् यथा तोयमयत्नेन प्रणुद्यते।
कफादयः प्रणुद्यन्ते स्निग्धाद्देहात् तथौषधैः॥८॥
आर्द्रं काष्ठं यथा वह्निर्विष्यन्दयति सर्वतः।
तथा स्निग्धस्य वै दोषान् स्वेदो विष्यन्दयेत् स्थिरान्॥९॥
क्लिष्टं वासो यथोत्क्लेश्य मलैः संशोध्यतेऽम्भसा।
स्नेहस्वेदैस्तथोत्क्लेश्य शोध्यते शोधनैर्मलः॥१०॥
अजीर्णे वर्द्धते ग्लानिर्विबन्धश्चैव जायते।
पीतं संशोधनञ्चैव विपरीतं प्रवर्त्तते॥११॥
अल्पमात्रं महावेगं बहुदोषहरं सुखम्।
लघुपाकं सुखास्वादं प्रीणनं व्याधिनाशनम्॥१२॥
अविकारापिपन्नञ्च नातिग्लानिकरञ्च तत्।
गन्धवर्णरसोपेतं विद्यात् मात्रावदौषधम्॥१३॥

विधूय मानसान् दोषान् कामक्रोधभयादिकान् ।
एकाग्रमनसा पीतं सम्यग्योगाय कल्पते ॥१४॥
नरः श्वो वमनं पाता भुञ्जीत कफवर्द्धनम् ।
सुजरं द्रवभूयिष्ठं लघुशीतं विरेचनम् ॥१५॥
उत्क्लिष्टाल्पकफत्वेन चिप्रं दोषाः स्रवन्ति हि ।
पीतौषधस्य तु भिषक् शुद्धिलिङ्गानि लक्षयेत् ।
ऊर्द्ध्वं कफानुगे पित्ते विट्पित्तेऽनुकफे त्वधः ॥१६॥
हृतदोषं वदेत् कार्श्यदौर्बल्ये चेत् सलाघवम् ।
वामयेत् तु ततः शेषमौषधं न त्वलाघवे ॥१७॥
स्तैमित्येऽनिलसङ्गे च निरुद्गारेऽपि वामयेत् ।
श्यालाघवादरुत्वाच्च कफस्याग्निकरं भवेत् ॥१८॥
वमिते वर्द्धते वह्निः शमं दोषा व्रजन्ति हि ।
वमितं लङ्घयेत् सम्यग् जीर्णलिङ्गान्यलक्षयन् ।
तानि दृष्ट्वा तु पेयादिक्रमं कुर्यान्न लङ्घनम् ॥१९॥
संशोधनाभ्यां शुद्धस्य हृतदोषस्य देहिनः ।
यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ॥२०॥
कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके ।
तर्पणादिक्रमं कुर्यात् पेयाभिष्यन्दयेद्धि तान् ॥२१॥
अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णोर्जोमनस्विता ।
लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥२२॥
क्लमो दाहोऽङ्गसदनं भ्रममूर्च्छाशिरोरुजा ।
अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥२३॥
अकालेऽल्पातिमात्रञ्च पुराणं न च भावितम् ।
असम्यक् संस्कृतश्चैव व्यापद्येतौषधं ध्रुवम् ॥२४॥
आध्मानं परिकर्त्तिश्च स्रावो हृद्गात्रयोर्ग्रहः ।
जीवादानं सविभ्रंशः स्तम्भः सोपद्रवः क्रमः ॥२५॥

अयोगादतियोगाच्च दशैता व्यापदो मताः ।
प्रेष्यभैषज्यवैद्यानां वैगुण्यादातुरस्य च ।
श्लेष्मोत्क्लिष्टेन दुर्गन्धमल्पमल्पमतिवाध्यते ॥२६॥
योगः सम्यक्प्रवृत्तिः स्यादतियोगोऽतिवर्त्तनम् ।
अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्त्तनम् ॥२७॥
श्लेष्मोत्क्लिष्टेन दुर्गन्धमल्पं नाति वा बहु ।
विरेचनमजीर्णे च पीतमूर्द्धं प्रवर्त्तते ॥२८॥
क्षुधार्त्तमृदुकोष्ठाभ्यां स्वल्पोत्क्लिष्टकफेन वा ।
तीक्ष्णं पीतं स्थितं क्षुब्धं वमनं स्याद्विरेचनम् ।
अयोगे तत्र कर्त्तव्यं समासेनाभिधीयते ॥ २९ ॥
प्रातिलोम्येन दोषाणां हरणात् तेष्वकाच्छतः ।
अयोगसंज्ञे कृच्छ्रेण नचागच्छति चाल्पशः ॥३०॥
पीतौषधो न शुद्धयेच्चेज्जीर्णे तस्मिन् पुनः पिबेत् ।
औषधं न त्वजीर्णेऽन्यद्भयं स्यादतियोगतः ॥३१॥
कोष्ठस्य गुरुतां ज्ञात्वा लघुत्वं बलमेव च ।
अयोगे मृदु वा दद्यादौषधं तीक्ष्णमेव वा ॥३२॥
वमनं न तु दुश्छर्दं मृदुकोष्ठे विरेचनम् ।
पाययेतौषधं भूयो हन्यात् पीतं पुनर्हि तौ ॥३३॥
अस्निग्धास्विन्नदेहस्य रूक्षस्यानवमौषधम् ।
दोषानुत्क्लिश्य निर्हर्त्तुमशक्तं जनयेद्गदान् ॥३४॥
विभ्रंशं श्वयथुं हिक्कां तमसो दर्शनं भ्रमम् ।
पिण्डिकोद्वेष्टनं कण्डूमूर्वोः सादं विवर्णताम् ॥३५॥
स्निग्धस्विन्नस्य ज्ञात्वेवं दीप्ताग्नेर्जीर्णमौषधम् ।
पीतैर्वा स्तम्भयेत् शमं दोषानुत्क्लिश्य नाहरेत् ॥३६॥
तानेव जनयेद्रोगान् न योगः सर्व एव सः ।
विज्ञाय मतिमांस्तत्र यथोक्तां कारयेत् क्रियाम् ॥३७॥

तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरसङ्करैः ।
पाययेत पुनर्जीर्णे समूलैर्वा निरूहयेत् ॥३८॥
निरूढ़ञ्च रसैर्धन्वैर्भोजयित्वाऽनुवासयेत् ।
फलमागधिकादारुसिद्धतैलेन मात्रया ॥३९॥
स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ।
नचातितीक्ष्णेन ततो ह्यतियोगस्तु जायते ।
अतितीक्ष्णं क्षुधार्त्तस्य मृदुकोष्ठस्य भेषजम् ।४०॥
हत्वाशु विट्पित्तकफान् धातून् विस्रावयेद्द्रवान् ।
बलस्वरक्षयं दाहं कण्ठशोषं भ्रमं तृषाम् ।
कुर्य्याच्च मधुरैस्तत्र शेषमौषधमुल्लिखेत् ॥४१॥
वमने तु विरेकः स्याद्विरेके वमनं मृदु ।
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ॥४२॥
कषायमधुरैः शीतैरन्नपानौषधैस्तथा ।
रक्तपित्तातिसारघ्नैर्दाहज्वरहरैरपि ॥४३॥
अञ्जनं चन्दनोशीरमज्जासृक्शर्करोदकम् ।
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥४४॥
शुङ्गाभिर्वा वटादीनां सिद्धां पेयां समाक्षिकाम् ।
वर्च्चःसंग्राहिकैः सिद्धं क्षीरं भोज्यञ्च दापयेत् ॥४५॥
जाङ्गलैर्वा रसैर्भोज्यं पिच्छावस्तिं च दापयेत् ।
मधुरैरनुवास्यश्च सिद्धेन क्षीरसर्पिषा ॥४६॥
वमनस्यातियोगे तु शीताम्बुपरिषेचितम् ।
पिबेत् फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ॥४७॥
सोद्गारायां भृशं वम्यां मूर्च्छायां धान्यमुस्तयोः ।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥४८॥
वमतोऽन्तःप्रविष्टायां जिह्वायां कवलग्रहाः ।
स्निग्धाम्ललवणैर्हृद्यैर्यूषक्षीररसैर्हिताः ॥४९॥

फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः।
निःसृतान्तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ॥५०॥
वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम्।
यवागूं तनुकां दद्यात् स्नेहस्वेदौ च बुद्धिमान् ॥५१॥
वमितश्च विरिक्तश्च मन्दाग्निश्च विलङ्घितः।
अग्निप्राणविवृद्ध्यर्थं क्रमं पेयादिकं भजेत् ॥५२॥
बहुदोषस्य रूक्षस्य हीनाग्नेरल्पमौषधम्।
सोदावर्त्तस्य चोत्क्लिश्य दोषान्मार्गान् निरुध्य च ॥५३॥
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजाम्।
श्वासविण्मूत्रवातानां सङ्गं कुर्याच्च दारुणम् ॥५४॥
अभ्यङ्गं स्वेदवर्त्त्यादि सनिरूहानुवासनम्।
उदावर्त्तहरं सर्वं कर्माध्मातस्य शस्यते ॥५५॥
स्निग्धेन गुरुकोष्ठेन सामे बलवदौषधम्।
क्षामेण मृदुकोष्ठेन श्रान्तेनाल्पबलेन वा ॥५६॥
पीतं गत्वा गुदं साममाशु दोषं निरस्य च।
तीव्रशूलां सपिच्छास्रां करोति परिकर्त्तिकाम् ॥५७॥
लङ्घनं पाचनं सामे रूक्षोष्णं लघुभोजनम्।
वृंहणीयो विधिः सर्वः क्षामस्य मधुरस्तथा ॥५८॥
सामे जीर्णे तु बन्धयेत् क्षाराम्लं लघु शस्यते।
पुष्पकासीसमिश्रं वा क्षारेण लवणेन च ॥५९॥
सदाडिमरसं सर्पिः पिबेद्वातेऽधिके सति।
दध्यम्लं भोजने पाने संयुक्तं दाडिमत्वचा ॥६०॥
देवदारुतिलानां वा कल्कमुष्णाम्बुना पिबेत्।
अश्वत्थोदुम्बरप्लक्षकदम्बैर्वा शृतं पयः ॥६१॥
कषायमधुरं वस्तिं पिच्छावस्तिमथापि वा।
यष्टीमधुकसिद्धं वा स्नेहवस्तिं प्रदापयेत् ॥६२॥

अल्पन्तु बहुदोषस्य दोषमुत्क्लिश्य भेषजम् ।
अल्पाल्पं स्रावयेत् कण्डूं शोफकुष्ठानि गौरवम् ॥६३॥
कुर्य्याच्चाग्निवधोत्क्लेशस्तैमित्यारुचिपाण्डुताम् ।
परिस्रावणतं दोषं शमयेद्वामयेदपि ॥६४॥
स्नेहितं वा पुनस्तीक्ष्णं पाययेच्च विरेचनम् ।
शुद्धे चूर्णासवारिष्टान् संस्कृतांश्च प्रदापयेत् ॥६५॥
पीतौषधस्य वेगानां निग्रहात् मारुतादयः ।
कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ॥६६॥
सहिक्काश्वासपार्श्वार्त्तिदैन्यलालाक्षिविभ्रमैः ।
जिह्वां खादति निःसंज्ञो दन्तान् किटिकिटापयन् ॥६७॥
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ।
मधुरैः पित्तमूर्च्छार्त्तं कटुभिः कफमूर्च्छितम् ॥६८॥
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ।
कायाग्निश्च बलञ्चास्य क्रमेणाभिविवर्द्धयेत् ॥६९॥
पवनेनातिवमतो हृदयं यस्य पीड्यते ।
तस्मै स्निग्धाम्ललवणं दद्यात् पित्तकफेऽन्यथा ॥७०॥
पीतौषधस्य वेगानां निग्रहेण कफेन वा ।
रुद्धोऽति च विशुद्धस्य गृह्णात्यङ्गानि मारुतः ॥७१॥
स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्त्तिमूर्च्छितैः ।
तत्र वातहरं सर्वं स्नेहस्वेदादि कारयेत् ॥७२॥
अतितीक्ष्णं मृदौ कोष्ठे लघुदोषस्य भेषजम् ।
दोषान् हृत्वा विनिर्मथ्य जीवं हरति शोणितम् ॥७३॥
तेनान्नं मिश्रितं दद्याद्वायसाय शुनेऽपि वा ।
भुंक्ते तच्चेद्वदेज्जीवं न भुंक्ते पित्तमादिशेत् ॥७४॥
शुक्लं वा भावितं वस्त्रमाधानं कोष्णवारिणा ।
प्रक्षालितं विवर्णं चेत् पित्तं शुद्धन्तु शोणितम् ॥७५॥

स्रपामूर्च्छामदार्त्तस्य कुर्य्यादामरणात् क्रियाम्।
तस्य पित्तहरीं सर्वामतियोगे च या हिता ॥७६॥
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक्।
पिबेज्जीवाभिसन्धाने जीवं तद्ध्याशु गच्छति ॥७७॥
तदेव दर्भमृदितं रक्तं वस्तिं प्रदापयेत्।
श्यामाकाश्मर्य्यबदरीदूर्वावीरैः सृतं जलम् ॥७८॥
घृतमण्डाञ्जनयुतं वस्तिं शीतं प्रदापयेत्।
पिच्छावस्तिं सुशीतं वा घृतमण्डानुवासनम् ॥७९॥
गुदभ्रंशं कषायैश्च स्तम्भयित्वा प्रवेशयेत्।
सामगन्धर्वशब्दांश्च सञ्ज्ञानाशेऽस्य कारयेत् ॥८०॥
यदा विरेचनं पीतं विडन्तरवतिष्ठते।
वमनं भेषजान्तं वा दोषानुत्क्लेश्य नावहेत् ॥८१॥
तदा कुर्वन्ति कण्ड्वादीन् दोषाः प्रकुपिता गदान्।
स विभ्रंशो मतस्तत्र स्याद् यथाव्याधि भेषजम् ॥८२॥
पीतं स्निग्धेन सस्नेहं तद्दोषैर्मार्दवात् घृतम्।
न वाहयति दोषास्तु स्वस्थानात् स्तम्भयेच्च तान् ॥८३॥
वातसङ्गगुदस्तम्भशूलैः चरति चाल्पशः।
तीक्ष्णं वस्तिं विरेकं वा दद्याल्लङ्घनपाचनम् ॥८४॥
रूक्षं विरेचनं पीतं रूक्षेणाल्पबलेन वा।
मारुतं कोपयित्वाशु कुर्य्याद्घोरानुपद्रवान् ॥८५॥
स्तम्भशूलानि घोराणि सर्वगात्रेषु मारुतः।
स्नेहस्वेदादिकस्तत्र कार्य्यो वातहरो विधिः ॥८६॥
स्निग्धस्य गुरुकोष्ठस्य मृदूत्क्लेश्यौषधं कफम्।
पित्तं वातञ्च सरुध्य सतन्द्रागौरवं क्लमम् ॥८७॥
दौर्बल्यञ्चाङ्गसादञ्च कुर्य्यादाशु तदुल्लिखेत्।
लङ्घनं पाचनञ्चात्र स्निग्धं तीक्ष्णञ्च शोधनम् ॥८८॥

तत्र श्लोकौ।

इत्येता व्यापदः प्रोक्ताः सर्वा हि सचिकित्सिताः।
वमनस्य विरेकस्य कृतस्याकुशलैर्नृणाम् ॥८९॥
एतान् विज्ञाय मतिमानवस्थार्यैव तत्त्वतः।
कुर्य्यात् संशोधनं सम्यगारोग्यार्थी नृणां सदा ॥९०॥

## सप्तमोऽध्यायः।

### वस्तिव्यापत्सिद्धिः।

धीधैर्य्यौदार्य्यगाम्भीर्य्यक्षमादमतपोनिधिम्।
पुनर्वसुं शिष्यगणः पप्रच्छ विनयान्वितः ॥१॥
काः कति व्यापदो वस्तेः किंसमुत्थानलक्षणाः।
काश्चिकित्सा इति प्रश्नान् श्रुत्वा तानब्रवीद् गुरुः ॥२॥
नातियोगौ क्लमाध्माने हिक्का हृत्प्राप्तिरूर्द्धता।
प्रवाहिका शिरोऽङ्गार्त्तिः परिकर्त्तः परिस्रवः ॥३॥
द्वादश व्यापदो वस्तेरसम्यग्योगसम्भवाः।
आसामेकैकशो रूपं चिकित्साञ्च निबोधत ॥४॥
गुरुकोष्ठेऽनिलप्राये रूक्षे वातोल्वणेऽपि वा।
शीतोऽल्पलवणस्नेहद्रवमात्रो घनोऽपि वा ॥५॥
वस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन्।
करोति गुरुकोष्ठत्वं वातमूत्रशकृद्ग्रहम् ॥६॥
नाभिवस्तिरुजं दाहं हृल्लेपं श्वयथुं गुदे।
कण्डूगण्डानि वैवर्ण्यमरुचिं वह्निमार्दवम् ॥७॥
तत्रोष्णायाः प्रमथ्यायाः पानं स्वेदाः पृथग्विधाः।
फलवर्त्त्योऽथवा कालं ज्ञात्वा शस्तं विरेचनम् ॥८॥
विल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान्।
सुरादिमूत्रवान् वस्तिः स प्राक् प्रेरितमानयेत् ॥९॥

इति अयोगव्यापच्चिकित्सा।

स्निग्धस्विन्नेऽतितीक्ष्णोष्णो मृदुकोष्ठेऽतियुज्यते।
तस्य लिङ्गं चिकित्साञ्च शोधनाभ्यां समाचरेत् ॥१०॥
पृश्निपर्णीं स्थिरां पद्मं काश्मर्य्यं मधुकं बलाम्।
पिष्ट्वा द्राक्षां मधुकञ्च क्षीरे तण्डुलधावने ॥११॥
द्राक्षायाः पक्वलोष्ट्रस्य प्रसादो मधुकस्य च।
विनीय सघृतं वस्तिं दद्याद्दाहेऽतियोगजे ॥१२॥

इति अतियोगव्यापच्चिकित्सा।

आमदोषे निरूहेण मृदुना दोष ईरितः।
रुणद्धि मार्गं वातस्य हन्त्यग्निं मूर्च्छयत्यपि ॥१३॥
क्लमं विदाहं हृच्छूलं मोहवेष्टनगौरवम्।
कुर्य्यात् स्वेदैर्विरूक्षैस्तं पाचनैश्चाप्युपाचरेत् ॥१४॥
पिप्पलीकत्तृणोशीरदारुमूर्वाशृतं जलम्।
पिबेत् सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनम् ॥१५॥
वचानागरसर्जैला दधिमण्डेन मूर्च्छिताः।
पेयाः प्रसन्नया वा सुरारिष्टेनासवेन वा ॥१६॥
दारु त्रिकटुकं पथ्यां पलाशं चित्रकं शटीम्।
पिष्ट्वा कुष्ठञ्च मूत्रेण पिबेत् क्षाराञ्च दीपनान् ॥१७॥
वस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकम्।
समूत्रमथवा व्यक्तलवणं मधुतैलिकम् ॥१८॥

इति क्लमव्यापच्चिकित्सा।

अल्पवीर्य्यो महादोषे रूक्षे क्रूराशये कृतः।
वस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात् समीरणम् ॥१९॥
स विमार्गोऽनिलः कुर्य्यादाध्मानं मर्म्मपीड़नम्।
विदाहं गुरुकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ॥२०॥
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति।
फलश्यामादिभिः कुष्ठकृष्णालवणसर्षपैः।

धूममाषवचाकिण्वचारचूर्णैर्गुडैः कृताम् ॥२१॥
कराङ्गुष्ठनिभां वर्त्तिं यवमध्यां निधापयेत् ।
स्वभ्यक्तस्विन्नगात्रस्य तैलाक्तां सेचिते गुदे ॥२२॥
अथवा लवणागारधूमसिद्धार्थकैः कृताम् ॥२३॥
बिल्वादिना निरूहः स्यात् पीलुसर्षपमूत्रवान् ।
सरलामरदारुभ्यां सिद्धश्चैवानुवासनम् ॥२४॥

इति अध्मानव्यापच्चिकित्सा ।

मृदुकोष्ठेऽबले वस्तिरतितीक्ष्णोऽतिनिर्हरन् ।
कुर्य्याद्धिक्कादिकं तत्र हिक्काघ्नं बृंहणञ्च यत् ॥२५॥
बलास्थिरादिकाश्मर्य्यत्रिफलागुड़सैन्धवैः ।
सप्रसन्नारनालाम्लैस्तैलं पक्वानुवासयेत् ॥२६॥
क्षाराम्ललवणयोरर्द्धं पिवेदुष्णाम्बुना युतम् ।
धूमलेहरसक्षीरस्वेदायामाश्च वातनुत् ॥२७॥

इति हिक्काव्यापच्चिकित्सा ।

अतितीक्ष्णः सवातो वा न वा सम्यक् प्रपीड़ितः ।
घट्टयेद्हृदयं वस्तिस्तत्र कायचयोत्कटैः ॥२८॥
स्यात् साम्ललवणस्कन्धकरीरवदरीफलैः ।
शृतैर्वस्तिर्हितः सिद्धं वातघ्नैश्चानुवासनम् ॥२९॥

इति हृद्गतव्यापच्चिकित्सा ।

वातमूत्रपुरीषाणां दत्तवेगान् निरुन्धतः ।
अति वा पीड़ितो वस्तिर्मुखेनायाति वेगवान् ॥३०॥
मूर्च्छाविकारं तस्यादौ दृष्ट्वा शीताम्बुना मुखम् ।
सिञ्चेत् पार्श्वोदरञ्चाधः प्रमृज्याद्वीजयेच्च तम् ॥३१॥
केशेष्वालम्ब्य चाकाशे धनुषा त्रासयेच्च तम् ।
गोखराश्वगजैः सिंहै राजभिर्वैस्तथोरगैः ॥३२॥
उल्काभिर्वमन्यैर्वा वस्तिमस्य न्यसेदधः ।

वस्त्रपाणिग्रहैः कण्ठो रुध्याच्च म्रियते यथा ॥३३॥
प्राणोदाननिरोधाद्धि प्रसिद्धतरमार्गगः।
अपानः पवनो वस्तिं तमाश्वेवापकर्षति ॥३४॥
*ततः क्रमुककल्कार्चं पाययेताम्लसंयुतम्।*
औष्ण्यात् तैक्ष्ण्यात् सरत्वाच्च वस्तिचास्यानुलोमयेत् ॥३५॥
पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः।
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितः ॥३६॥
बिल्वादिपञ्चमूलेन सिद्धो वस्तिरुरःस्थिते।
शिरःस्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ॥३७॥
*इति ऊर्ध्वव्यापच्चिकित्सा।*
स्निग्धस्विन्ने सशेषदोषे वस्तिर्मृद्वल्पभेषजः।
उत्क्लेश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकाम् ॥३८॥
स वस्तिः पायुशोफाय जङ्घोरुसदनाय च।
निरुद्धमारुतो जन्तुरभीक्ष्णं संप्रवाहते ॥३९॥
स्वेदाभ्यङ्गान् निरूहांश्च शोधनीयानुलोमिकान्।
विदध्याल्लङ्घयित्वा तु वस्तिं कुर्याद्विरिक्तवत् ॥४०॥
इति प्रवाहिकाव्यापच्चिकित्सा।
दुर्बले तीव्रदोषे च दुष्कोष्ठे च तनुर्मृदुः।
शीतोऽल्पश्चाहृतो दोषैर्वस्तिस्तद्विहतोऽनिलः ॥४१॥
मार्गैर्गात्राणि सन्धावन्नूर्ध्वं मूर्धन्युपाहितम्।
ग्रीवां मन्ये च गृह्णाति शिरः कण्ठं भिनत्ति च।
बाधिर्यं कर्णनादञ्च पीनसं नेत्रविभ्रमम् ॥४२॥
कुर्यादभ्यञ्जनं तैललवणेन यथाविधि।
युञ्ज्यात् प्रधमनैर्नस्यैर्धूमै रास्यं विरेचयेत्।
तीक्ष्णानुलोमिकेनाथ स्विन्नं भुक्तेऽनुवासयेत् ॥४३॥
स्नेहस्वेदैरनापाद्य गुरुतीक्ष्णातिमात्रया।

यस्य वस्तिः प्रयुज्येत नातिमात्रं प्रयुज्यते ॥४४॥
स्तब्धोदावृत्तकोष्ठस्य रुद्धः स्रोतःसु मारुतः।
प्रपन्नोऽङ्गरुजं कुर्य्यात् तं तैललवणान्वितम्।
उष्णाम्बुप्रस्तरकाद्यैः स्वेदैस्समुपपादयेत् ॥४५॥
सबिल्वतैललवणो निरूहस्तस्य शस्यते।
तैलावगाढस्निग्धस्य कारयेदनुवासनम् ॥४६॥
अभुज्य विधिना सम्यक् स्निग्धं कायं ततःपरम्।
विरेचनैर्निरूहैश्च वस्तिभिश्चानुलोमिकैः ॥४७॥
इति शिरःशूलव्यापच्चिकित्सा।
सुस्निग्धस्निग्धदेहस्य यस्य वस्तिर्विधीयते।
अतितीक्ष्णो गुदश्चैव सोऽतिमात्रं प्रवर्त्तयेत् ॥४८॥
स्रुतेषु तस्य दोषेषु निरूढस्यातिमात्रशः।
स्तब्धोदावृत्तकोष्ठस्य वायुः संप्रतिहन्यते ॥४९॥
विलोमगसमुद्भूतो रुजत्यङ्गानि देहिनः।
गात्रवेष्टननिस्तोदभेदस्फुरणजृम्भणैः ॥५०॥
तं तैललवणाभ्यक्तं सेचयेदुष्णवारिणा।
एरण्डपत्रनिष्क्वाथैः प्रस्तरैर्वोपपादयेत् ॥५१॥
यवान् कुलत्थान् कोलानि पञ्चमूले तयोभये।
जलाढकद्वये पक्त्वा पादशेषेण तेन च।
कुर्य्यात् सबिल्वतैलोष्णलवणेन निरूहणम् ॥५२॥
निरूहणे समाश्वस्तं द्रोण्यां समवगाहयेत्।
ततो भुक्तवतस्तस्य कारयेदनुवासनम्।
यष्टीमधुकतैलेन बिल्वतैलेन वा भिषक् ॥५३॥
इति अङ्गशूलव्यापच्चिकित्सा।
मृदुकोष्ठाल्पदोषस्य रूक्षतीक्ष्णोऽतिमात्रवान्।
वस्तिर्दोषान् निरस्याशु जनयेत् परिकर्त्तिकाम् ॥५४॥

त्रिकवङ्क्षणवस्तीनां तोदं नाभेरधो रुजम्।
विबन्धाल्पाल्पसुत्थानं गुदनिर्लेखनं भवेत् ॥५५॥
स्वादुशीतौषधैस्तत्र पय इक्ष्वादिभिः शृतम्।
यष्ट्याह्वतिलकल्काभ्यां वस्तिः स्यात् क्षीरभोजिनः ॥५६॥
समर्जरसयष्ट्याह्वजिङ्गिनीकर्दमाञ्जनम्।
विनीय दुग्धे वस्तिः स्यात् सिताक्षौद्रमृदुभोजिनः ॥ ५७ ॥
इति परिकर्त्तव्यापच्चिकित्सा।
पित्तरक्तोऽम्ल उष्णो वा तीक्ष्णो वा लवणोऽथवा।
वस्तिर्लिखति पायुन्तु तीक्ष्णोऽति विदहत्यपि ॥५८॥
स विदग्धः स्रवत्यस्रं पित्तस्थानैकवर्णवत्।
सार्यते बहुवेगेन मोहं गच्छति चासकृत् ॥५९॥
आर्द्रशाल्मलिवृन्तैस्तु क्षुण्णै राजं पयः शृतम्।
सर्पिषा योजितं शीतं वस्तिमस्मै प्रदापयेत् ॥६०॥
वटादिपल्लवेष्वेष कल्पो यवतिलेषु च।
सुवर्चलोपोदिकयोः कर्वुदारे च शस्यते ॥६१॥
गुदे सेकाः प्रदेहाश्च शीताः स्युर्मधुराश्च ये।
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते ॥६२॥
इति परिस्रवव्यापच्चिकित्सा।
तत्र श्लोकाः।
इत्येता व्यापदः प्रोक्ता वस्तेः साकृतिभेषजाः।
बुद्धा कार्त्स्न्येन तान् वस्तीन् नियुञ्जन् नापराध्यति ॥६३॥
तीक्ष्णत्वं मूत्रविल्वादिलवणक्षारसर्षपैः।
*प्राप्तकालं विधातव्य क्षीराद्यैर्मार्दवं तथा ॥६४॥*
आपादतलमूर्द्धस्थान् दोषान् पक्वाशये स्थितः।
वीर्य्येण वस्तिरादत्ते खस्थोऽर्को भूरसानिव ॥६५॥
यद्वत् कुसुम्भसंमिश्रात् तोयाद्राग हरेत् पटः।
तद्वद्द्रवीकृतात् कायान्निरूहो निर्हरेत् मलान् ॥६६॥

## अष्टमोऽध्यायः ।

### प्रसृतयोगिका सिद्धिः ।

अथेमान् सुकुमाराणां निरूहान् स्नेहनान् मृदून् ।
कर्मणा विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक् ॥१॥
क्षीराद् द्वौ प्रसृतौ कार्यौ मधुतैलघृतात् त्रयः ।
खजेन मथितो वस्तिर्वातघ्नो बलवर्णकृत् ॥२॥
एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषः ।
बिल्वादिमूलक्वाथाद् द्वौ कौलत्थाद् द्वौ स वातनुत् ॥३॥
पञ्चमूलरसात् पञ्च द्वौ तैलात् क्षौद्रसर्पिषोः ।
एकैकः प्रसृतो वस्तिः स्नेहनीयोऽनिलापहः ॥४॥
सैन्धवार्धाक्ष एकैकः क्षौद्रतैलपयोघृतात् ।
प्रसृतौ हपुषाक्षश्च निरूहः शुक्रकृत् परः ॥५॥
पटोलनिम्बभूनिम्बरास्नासप्तच्छदाम्भसः ।
चत्वारः प्रसृता एको घृतात् सर्षपकल्कितः ॥६॥
निरूहः पञ्चतिक्तोऽयं मेहाभिष्यन्दकुष्ठनुत् ।
विडङ्गत्रिफलाशिग्रुफलमुस्ताखुपर्णिकात् ॥७॥
कषायात् प्रसृताः पञ्च तैलादेको विमथ्य तान् ।
विडङ्गपिप्पलीकल्को निरूहः क्रिमिनाशनः ॥८॥
पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषः ।
एकैकः प्रसृतो वस्तिः कृष्णाकल्को वृषत्वकृत् ॥९॥
चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात् ।
प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ॥१०॥
श्वदंष्ट्राश्मभिदेरण्डरसात् तैलात् सुरासवात् ।
प्रसृताः पञ्चयष्ट्याह्वात् कोलो मागधिका सिता ॥११॥
कल्को वस्तिस्तु सानाहे मूत्रकृच्छ्रे परो मतः ।

एते सलवणाः कोष्णा निरूहाः प्रसृता नव ॥ १२ ॥
मृदुवस्तौ जड़ीभूते तीक्ष्णोऽन्यो वस्तिरिष्यते।
तीक्ष्णैर्विकर्षितैः स्वादुमत्यास्थापनमिष्यते ॥१३॥
वातोपसृष्टस्तीक्ष्णैः स्युर्गुदाहादयो यदि।
द्राक्षाम्बुना विहलाम्लं दद्याद्दोषानुलोमनम् ॥१४॥
तद्धि पित्तमलक्षातान् हत्वा दाहादिकान् जयेत्।
गुड़ब्राय पिवेत् शीतां यवागूं शर्करायुताम् ॥१५॥
अथवातिविरिक्तः स्यात् चीणविट्कः स भक्षयेत्।
माषयूषेण कुल्माषान् पिवेद्वाथवा सुराम् ॥ १६ ॥
सामं चेदतिसार्य्येत शूलारोचकवान् नरः।
स तदा हपुषाकुष्ठनतदारुवचाः पिवेत् ॥१७॥
शक्कृदातमसृक् पित्तं कफं वा योऽतिसार्य्यते।
पक्वास्तत्र स्ववर्गीयैर्वस्तिः श्रेष्ठं भिषग्जितम् ॥१८॥
पञ्चामेषां द्विसंसर्गात् लिङ्गभेदा भवन्ति ते।
केवलैः सह चेत् त्रिंशद्विद्यात् सोपद्रवानपि ॥१९॥
शूलप्रवाहिकाध्मानपरिकर्त्तारुचिज्वरान्।
तृष्णादाहममूर्च्छाद्यांश्चैषां विद्यादुपद्रवान् ॥२०॥
तत्रामे वमनं कार्य्यं स्योपाम्ललवणैर्युतम्।
पाचनं शस्यते वस्तिरामे हि प्रतिषिध्यते ॥२१॥
वातघ्नाद्विवर्गीयैर्वस्तिः शकृति शस्यते।
स्वाद्बम्ललवणैः शस्ताः स्नेहवस्तिः समीरणे ॥२२॥
रक्ते रक्तेन पित्तन्तु कषायस्वादुतिक्तकैः।
सार्य्यमाणे कफे वस्तिः कषायकटुतिक्तकैः ॥२३॥
शकृता वायुना चामे तेन वर्चस्यथानिले।
संसृष्टेऽन्तरपानं स्याद्दोषाम्ललवणैर्युतम् ॥२४॥
पित्तेनामेऽसृजा वापि तयोरामेन वा पुनः।

संसृष्टयोर्भवेत् पानं सव्योषकटुतिक्तकम् ॥२५॥
तथामे कफसंसृष्टे कषायव्योषतिक्तकम् ।
आमे तनुकफे व्योषकषायलवणैर्युतम् ।
वातेन विपि पित्ते वा विट्पित्ते च तथानिले ॥२६॥
मधुराम्लकषायः स्यात् संसृष्टे वस्तिरुत्तमः ।
शकृच्छोणितयोः पित्तशकृतोः रक्तपित्तयोः ॥२७॥
वस्तिरन्योन्यसंसर्गे कषायस्वादुतिक्तकः ।
कफेन विपि पित्ते वा कफे विट्पित्तशोणितैः ॥२८॥
व्योषतिक्तकषायः स्यात् संसृष्टे वस्तिरुत्तमः ॥२९॥
स्याद्वस्तिर्व्योषतिक्ताम्लः संसृष्टे वायुना कफे ।
मधुरव्योषतिक्तस्तु रक्ते कफविमिश्रिते ॥३०॥
मारुते कफसंसृष्टे व्योषाम्ललवणो भवेत् ।
वस्तिर्वातेन रक्ते तु कार्यः स्वादम्लतिक्तकः ॥३१॥
त्रिचतुःपञ्चषड्योगानेवमेव विकल्पयेत् ।
युक्तिर्येषातिसारोक्ता सर्वरोगेष्वपि स्मृता ॥३२॥
युगपत् षड्रसं पथ्यं संसर्गे पाचनं भवेत् ।
निरामाणां पक्वानां वस्तिः षाड्रसिको मतः ॥३३॥
उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वचः ।
शङ्खं सर्जरसं लाक्षां कर्दमञ्च पलांशिकम् ॥३४॥
पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत् ।
पतीसारेषु सर्वेषु देयमेतद् यथाबलम् ॥३५॥
कच्छूराधातकीबिल्वसमङ्गारक्तशालिभिः ।
मसूराम्बष्ठकाभ्याञ्च यवागूः स्याज्ज्वरे श्रुतैः ॥३६॥
वाल्योदुम्बरकट्वङ्गसमङ्गाम्रप्रवालैः ।
मसूरधातकीपुष्पपद्मनाभिश्च तथा भवेत् ॥३७॥
स्थिरादीनां बलादीनामिक्ष्वादीनामथापि वा ।

कार्य्येषु समसूत्राणां नवारिष्टाः पृथक् पृथक् ॥३८॥
कच्छूरामूलशाल्यादितण्डुलैर्वापि साधिताः।
दधितक्रारनालाम्लचार्ङ्गेर्य्यम्लरसेऽपि वा ॥३९॥
शीताः समर्कराः चौद्राः सर्व्वातीसारनाशनाः।
सर्षपैर्मरिचाजाजीमधुरा लवणाः शिवाः ॥४०॥

भवन्ति चात्र।

स्निग्धाम्ललवणमधुरं पानं वस्तिश्च मारुते कोष्णः।
शीतं तिक्तकषायं मधुरं पित्ते च रक्ते च ॥४१॥
तिक्तोष्णकषायकटुश्लेष्मणि संग्राहि वातमुच्छ्रन्ति।
पाचनमामे पानं पिच्छास्रववस्तयो रक्ते ॥४२॥
अतिसारं प्रत्युक्तं मिश्रं द्वन्द्वामयोगजेष्वपि च।
तत्रोद्रेकविशेषाद्दोषेषूपक्रमः कार्य्यः ॥४३॥
प्रासृतिका सव्यापत् क्रिया निरूहास्तथातिसारघ्निलाः।
रसकल्पहृतयवाग्वश्चोक्ता गुरुणा प्रसृतसिद्धौ ॥४४॥

---

## नवमोऽध्यायः।

### त्रिमर्मीया सिद्धिः।

सप्तोत्तरं मर्म्मशतम् अस्मिन् शरीरे स्कन्धशाखाश्रितम् त्रिवेश। तेषामन्यतमपीड़ायां समधिका पीडा भवति तत्रानिबद्धवैशेष्यात् ॥ १ ॥

तत्र शाखाश्रितेभ्यो मर्म्मभ्यः स्कन्धाश्रितानि गरीयांसि शाखानां तदाश्रितत्वात्। स्कन्धाश्रितेभ्योऽपि हृद्वस्तिशिरांसि मूलत्वाच्छरीरस्य ॥ २ ॥

तत्र हृदि दश च धमन्यः प्राणोदानमनोबुद्धिचेतनामहाभूतानि च नाभ्यामरा इव प्रतिष्ठितानि ॥३॥

भूयश्च हृदि उपसृष्टे वातेन हिङ्गुचूर्णलवणानामन्यतमचूर्ण-संयुक्तां पेयां मातुलुङ्गस्य रसेनवान्येन वाम्लेन द्रव्येन वा पाययेत। स्थिरादिपञ्चमूलीरसः सशर्करः पानार्थं बिल्वादिपञ्चमूलरस-सिद्धा च यवागूः हृद्रोगविहितञ्च कर्म ॥१२॥

मूर्द्धि तु वातोपसृष्टे अभ्यङ्गस्वेदनोपनाहनस्नेहपाननस्तः-कर्मावपीड़नधूमादीनि ॥१३॥

वस्तौ तु कुम्भीस्वेदो वर्त्तयश्च। श्यामादिभिर्गोमूत्रसिद्धो निरूहः। बिल्वादिस्वरससिद्धः शरकाशेक्षुदर्भगोक्षुरक-मूलशृतक्षीरैश्च। त्रपुषैर्वारुखराश्वावीजयवक्षभकाक्किती निरूहः। चारयवतिलकष्टकल्किती वा निरूहः। पीत-दारुकसिद्धतैलानुवासनम्। तैलञ्च सर्पिर्विरेकार्थम् ॥१४॥

शतावरी-गोक्षुरक-वृहती-कण्टकारिकागुडूचीपुनर्नवोशीर-मधुकद्विसारिवालोध्र-श्रेयसी-कुशकाशमूल-कषायक्षीरचतुर्गुण बलावृषर्षभकखराह्वोपकुञ्चिका-वत्सकत्रपुषैर्वारुबीज-शितिमा-रक-मधुकवचामतपुष्पाश्मभेदवर्षाभूमदनफलकल्कसिद्धं तैलम् उत्तरवस्तिर्निरूहः शुद्धस्निग्धस्विन्नस्य वस्तिशूलमूत्रविकारहर इति ॥१५॥

भवन्ति चात्र।

हृदि मूर्द्धि च वस्तौ च नृणां प्राणाः प्रतिष्ठिताः।
तस्मात् तेषां सदा यत्नात् कुर्वीत परिपालनम् ॥ १६ ॥
आघातवर्जनं नित्यं स्वस्थवृत्तानुवर्त्तनम्।
उत्पन्नार्त्तिविघातश्च मर्मणां परिपालनम् ॥ १७ ॥
अत ऊर्द्ध विकारा ये त्रिमर्मीये चिकित्सिते।
न प्रोक्ता मर्मजास्तेषां काश्चिद्वक्ष्यामि औषधान् ॥ १८ ॥
क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्द्धं प्रपद्यते।
पीडयन् हृदयं गत्वा शिरःशङ्खौ च पीड़यन् ॥ १९ ॥

धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत् तथा ।
कृच्छ्रेण चाप्युच्छ्वसिति स्तब्धाक्षोऽथ निमीलकः ॥ २० ॥
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ।
दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति ॥ २१ ॥
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ।
वायुना दारुणं प्राहुरेके तदपतानकम् ॥ २२ ॥
श्वसनं कफवाताभ्यां रुद्धं तस्य विमोचयेत् ।
तीक्ष्णैः प्रधमनैः संज्ञां तासु मुक्तासु विन्दति ॥ २३ ॥
मरिचं शिग्रुबीजानि विडङ्गं च फणिज्झकम् ।
एतानि सूक्ष्मचूर्णानि दद्याच्छीर्षविरेचनम् ॥ २४ ॥
हिङ्गु तुम्बुरु पथ्या च पौष्करं लवणत्रयम् ।
यवक्वाथाम्बुना पेयं हृद्ग्रहेऽपतन्त्रके ॥ २५ ॥
हिङ्गु स्वर्जिविडं शुण्ठी ससौवर्चलदाडिमम् ।
पिबेद्वातकफघ्नं च कर्म हृद्रोगनुद्धितम् ॥ २६ ॥
शोधना बस्तयस्तीक्ष्णा हितास्तस्य च सर्वशः ।
सौवर्चलाभयाव्योषैः सिद्धं स्याच्च घृतं हितम् ॥ २७ ॥
मधुरस्निग्धगुर्वन्नसेवनाच्चिन्तनाद् भयात् ।
शोकाद्ध्यानप्रसङ्गाच्च वायुनोदीरितः कफः ॥ २८ ॥
यदाऽसौ प्रत्यवस्कन्द्य हृदयं हृदयाश्रयान् ।
समावृणोति भावांस्तदा तन्द्रोपजायते ॥ २९ ॥
हृदये व्याकुलीभावो वाक्चेष्टेन्द्रियगौरवम् ।
मनोबुद्ध्यप्रसादश्च तन्द्राया लक्षणं मतम् ॥ ३० ॥
कफघ्नं तत्र कर्त्तव्यं शोधनं शमनानि च ।
व्यायामो रक्तमोक्षश्च भोज्यं च कटुतिक्तकम् ॥ ३१ ॥
मूत्रौकसादं जठरं कृच्छ्रमुत्सङ्गसंक्षयौ ।
मूत्रातीतोऽनिलाष्ठीला वातबस्त्युष्णमारुतौ ॥ ३२ ॥

वातकुण्डलिकाग्रन्थिविड्घातो वस्तिकुण्डलम्।
त्रयोदशैते मूत्रस्य दोषास्तांल्लिङ्गतः शृणु ॥३३॥
पित्तं कफो द्वयं वापि वस्तौ संहन्यते यदा।
मारुतेन तदा मूत्रं रक्तपीतं घनं सृजेत् ॥३४॥
सदाहं श्वेतसान्द्रं वा सर्वैर्वा लक्षणैर्युतम्।
मूत्रौकसादं तं विद्यात् पित्तश्लेष्महरैर्जयेत् ॥३५॥
विधारणात् प्रतिहतं वातोदावर्त्तितं यदा।
पूरयत्युदरं मूत्रं तदा तदनिमित्तकम् ॥३६॥
अपक्तिमूत्रविट्सङ्गैस्तन्मूत्रजठरं वदेत्।
मूत्रवैरेचनीं तत्र चिकित्सां संप्रयोजयेत् ॥३७॥
हिङ्गुद्विरुत्तरं चूर्णं त्रिमर्मीये प्रकीर्त्तितम्।
हन्यान्मूत्रादिसंघातं व्याधिश्च गुदमेढ्रयोः ॥३८॥
मूत्रितस्य व्यवायात् तु रेतो वातोद्धतं च्युतम्।
पूर्वं मूत्रस्य पश्चाद्वा स्रवेत् तत् शुक्रमुच्यते ॥३९॥
खवैगुण्यानिलाक्षेपैः किञ्चिन्मूत्रञ्च तिष्ठति।
मणिसन्धौ स्रवेत् पश्चात् तदल्पमथवाऽतिरुक्।
मूत्रोत्सङ्गः स विच्छिन्नस्तच्छेषो गुरुशेफसः ॥४०॥
वाताक्रतिर्भवेद्वालात्(?)मूत्रे ग्रथति संचयः।
चिरं धारयतो मूत्रं त्वरया न प्रवर्त्तते।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥४१॥
आध्मापयन् वस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम्।
कुर्य्यात् तीव्रार्त्तिमष्ठीला मूत्रविण्मार्गरोधिनीम् ॥४२॥
मूत्रं धारयतो वस्तौ वायुः क्रुद्धो विधारयेत्।
मूत्ररोधार्त्तिकण्डूभिर्वातवस्तिः स उच्यते ॥४३॥
उष्णया क्षीणकं मूत्रं शोषयन् रक्तपीतकम्।
उष्णघातः सृजेत् कृच्छ्राद्वस्त्युपस्थार्त्तिदाहवान्।

गतिसङ्गादुदावृत्तः स मूत्रस्थानमार्गयोः ॥४४॥
मूत्रस्य विगुणो वायुर्भग्नव्याविद्धकुण्डली ।
मूत्रं विहन्ति संस्तम्भभङ्गगौरववेष्टनैः ।
तीव्ररुक् मूत्रविट्सङ्गैर्वातकुण्डलिकेति सा ॥४५॥
रक्तं वातकफाद्दुष्टं वस्तिद्वारे सुदारुणम् ।
ग्रन्थिं कुर्य्यात् स कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ।
अश्मरीसमशूलं तं मूत्रग्रन्थिं प्रचक्षते ॥४६॥
रूक्षदुर्बलयोर्वातेनोदावृत्तं शकृद्यदा ।
मूत्रस्रोतः प्रपद्येत विट्संसृष्टं तदा नरः ।
विड्गन्धं मूत्रयेत् कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥४७॥
द्रुताध्वलङ्घनायासादभिघातात् प्रपीड़नात् ।
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥४८॥
शूलस्पन्दनदाहार्त्तो विन्दुं विन्दुं स्रवत्यपि ।
पीड़ितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्त्तिमान् ॥४९॥
वस्तिकुण्डलमाहुस्तं घोरशस्त्रविषोपमम् ।
पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ॥५०॥
तस्मिन् पित्तान्विते दाहः शूलमूत्रविवर्णता ।
श्लेष्मणा गौरवं शोफः स्निग्धं मूत्रं घनं सितम् ॥५१॥
श्लेष्मरुद्धबिलो वस्तिः पित्तोदीर्णो न सिध्यति ।
अविभ्रान्तबिलः साध्यो न तु यः कुण्डलीकृतः ।
स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ॥५२॥
दोषाधिक्यमवेक्ष्यैतान् मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिञ्च सर्वेषामेव योजयेत् ॥५३॥
पुष्पनेत्रञ्च हैमं स्यात् श्लक्ष्णमौत्तरवस्तिकम् ।
जातीपुष्पस्य वृन्तेन समं गोपुच्छसंस्थितम् ।
रौप्यं वा सर्षपच्छिद्रं द्विकर्णं द्वादशाङ्गुलम् ॥५४॥

तेनाजवस्तियुक्तेन स्नेहस्यार्द्धपलं नयेत्।
यथा वयोविशेषेण स्नेहमात्रां विकल्पय वा ॥५५॥
स्नातस्य भुक्तभक्तस्य रसेन पयसापि वा।
सृष्टविण्मूत्रवेगेन पीठे जानुसमे मृदौ ॥५६॥
ऋजोः सुखोपविष्टस्य हृष्टे मेढ्रे घृताञ्चिते।
शलाकयान्विष्य गतिं यथाप्रतिहता व्रजेत् ॥५७॥
ततः शेफःप्रमाणेन पुष्पनेत्रं प्रवेशयेत्।
गुदवन्मूत्रमार्गेण प्रणयेदनु सेवनीम् ॥५८॥
हिंस्यात् वस्तिगतं वस्तिं मूले स्नेहो न गच्छति।
सुखं प्रपीड्य निष्कम्प्यं निष्कर्षेत् नेत्रमेव च ॥५९॥
प्रत्यागते द्वितीयन्तु तृतीयञ्च प्रदापयेत्।
अनागच्छन्तुपेक्ष्यस्तु रजनीव्युषितस्य च ॥६०॥
पिप्पलीलवणागारधूमापामार्गसर्षपैः।
वार्त्ताकुरसनिर्गुण्डीशम्पाकैः ससहाचरैः ॥६१॥
मूत्राम्लपिष्टैः सगुडैर्वर्त्तिं कृत्वा प्रवेशयेत्।
अग्रे तु सर्षपाकारं पश्चाद्दृष्टो माषसम्मिताम् ॥६२॥
नेत्रदीर्घां घृताभ्यक्तां सुकुमारामभङ्गुराम्।
नेत्रवन्मूत्रनाड्यान्तु पायौ वाङ्गुष्ठसम्मिताम् ॥६३॥
स्नेहे प्रत्यागते ताभ्यां सानुवासनिको विधिः।
परिहारस्य सव्यापत् सम्यक् दत्तस्य लक्षणम् ॥६४॥
स्त्रीणाञ्चार्त्तवकाले तु प्रतिकर्म तदाचरेत्।
गर्भासना सुखं स्नेहं तदादत्ते ह्यपाहता ॥६५॥
गर्भं योनिस्तदा शीघ्रं जिते गृह्णाति मारुते।
वस्तिजेषु विकारेषु योनिविभ्रंशजेषु च।
योनिशूलेषु तीव्रेषु योनिव्यापत्स्वसृग्दरे ॥६६॥
अप्रस्रवति मूत्रे च विन्दुं विन्दुं स्रवत्यपि।

विदध्यादुत्तरं वस्तिं यथास्त्रौषधसंस्कृतम् ॥६७॥
पुष्पनेत्रप्रमाणन्तु प्रमदानां दशाङ्गुलम् ।
मूत्रस्रोतःपरीणाहं मूत्रस्रोतोऽनुवाहि च ॥६८॥
गर्भमार्गे तु नारीणां विधेयं चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे तु बालायास्त्वेकमङ्गुलम् ॥६९॥
उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी ।
अथास्याः प्रणयेन्नेत्रमनु वंशगतं सुखम् ॥७०॥
हिंस्त्रियत्वां तां स्नेहानङ्कोरात्नेण योजयेत् ।
वस्तिं वस्तौ प्रणीते च वस्तियानन्तरो भवेत् ॥७१॥
त्रिरात्रं कर्म कुर्वीत स्नेहमात्रां विवर्धयन् ।
अनेनैव विधानेन कर्म कुर्य्यात् पुनस्त्र्यहात् ॥७२॥
अतः शिरोविकाराणां कश्चिद्भेदः प्रवक्ष्यते ।
रक्तपित्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ।
तीव्ररुग्दाहरागं हि शोफं कुर्वन्ति दारुणम् ॥७३॥
स शिरो विषवद्वेगी निरुध्याशु गलं तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः ॥७४॥
जीवेत् त्र्यहं चेद्भैषज्यं प्रत्याख्यायास्य कारयेत् ।
शिरोविरिक्तसेकादि सर्वं वीसर्पनुञ्च यत् ॥७५॥
रूक्षात्यध्यशनात् पूर्ववातावश्यायमैथुनैः ।
वेगसन्धारणायासव्यायामैः कुपितोऽनिलः ॥७६॥
केवलः स कफो वार्द्धं गृहीत्वा शिरसोऽनिलः ।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्द्धे च वेदनाम् ।
शस्त्रारणिनिभां कुर्य्यात् तीव्रां सोऽर्द्धावभेदकः ॥७७॥
नयनं वाथवा श्रोत्रमतिवृद्धो विनाशयेत् ।
चतुःस्नेहोत्तमां मात्रां शिरःकायविरेचनम् ।
नाड़ीस्वेदो घृतं जीर्णं वस्तिकर्मानुवासनम् ॥७८॥

उपनाहः शिरोवस्तिर्दहनं चात्र शस्यते।
प्रतिश्याये शिरोरोगे यच्चोद्दिष्टं चिकित्सितम् ॥७८॥
सन्धारणादजीर्णाद्यैर्मस्तिष्कं रक्तमारुतौ।
दुष्टौ दूषयतस्तच्च दुष्टं ताभ्यां विमूर्च्छितम् ॥८०॥
सूर्य्योदयांशुसन्तापाद्दुःखं विष्यन्दते शनैः।
ततो दिने शिरःशूलं दिनवृद्ध्या च वर्द्धते ॥८१॥
दिनक्षये ततः स्थाने मस्तिष्के संप्रशाम्यति।
सूर्य्यावर्त्तः स एव स्यात् सर्पिरौत्तरभक्तिकम् ॥८२॥
शिरःकायविरेकौ च मूर्द्धा च स्नेहधारणम्।
जाङ्गलैरुपनाहश्च घृतचीरैश्च सेचनम् ॥८३॥
वर्हितित्तिरिलावादिश्वृतं चीरोत्थितं घृतम्।
नावनं जीवनीयाष्टगुणक्षीरोपसाधितम् ॥८४॥
उपवासातिशोकातिरूक्षशीताल्पभोजनैः।
दुष्टा दोषास्त्रयो मन्यां पश्चाद्घाटे तु वेदनाम् ॥८५॥
तीव्रां कुर्वन्ति नासाक्षिभ्रूशङ्खेष्ववतिष्ठते।
स्पन्दनं गण्डपार्श्वस्य नेत्ररोगं हनुग्रहम् ॥८६॥
सोऽनन्तवातस्तं हन्याच्छिरोऽकावर्त्तनाशनैः।
वातो रूक्षादिभिः क्रुद्धः शिरःकम्पमुदीरयेत् ॥८७॥
तत्रामृताबलारास्नामहाश्वेताश्वगन्धकैः।
स्नेहस्वेदादिवातघ्नं शस्तं नस्यञ्च तर्पणम् ॥८८॥
नस्तःकर्म च कुर्वीत शिरोरोगेषु सूक्ष्मवित्।
द्वारं हि शिरसो नासा तेन तद्व्याप्य हन्ति ताम् ॥८९॥
नावनञ्चावपीड़श्च ध्मापनं धूम एव च।
प्रतिमर्षश्च विज्ञेयो नस्तःकर्म तु पञ्चधा ॥९०॥
स्नेहनः शोधनश्चैव द्विविधं नावनं स्मृतम्।
शोधनः स्तम्भनश्च स्यादवपीड़ो द्विधा मतः ॥९१॥

चूर्णं स्याद् ध्मापनं नाम देहस्रोतोविशोधनम्।
विज्ञेयस्त्रिविधो धूमः प्रागुक्तः शमनादिकः ॥८२॥
प्रतिमर्शो भवेत् स्नेहो निर्दोष उभयार्थकृत्।
एवं तद्रेचनं कर्म तर्पणं शमनं त्रिधा ॥८३॥
स्तम्भसुप्तिगुरुत्वाद्याः श्लैष्मिका ये शिरोगदाः।
शिरसो रेचनं तेषु नस्तःकर्म प्रशस्यते ॥८४॥
ये च वातात्मका रोगाः शिरःकम्पार्दितादयः।
शिरसस्तर्पणं तेषु नस्तःकर्म प्रवक्ष्यते ॥८५॥
रक्तपित्तादिरोगेषु शमनं नस्यमिष्यते।
ध्मापनं धूमपानञ्च यथायोग्येषु शस्यते।
दोषादिकं समीक्ष्यैव भिषक् सम्यक् च कारयेत् ॥८६॥
फलादि भेषजं प्रोक्तं शिरसो यद्विरेचनम्।
तच्चूर्णं कल्पयेत् तेन पचेत् स्नेहं विरेचनम् ॥८७॥
यदुक्तं मधुरस्कन्धे भेषजं तेन तर्पणम्।
साधयित्वा भिषक् स्नेहं नस्तः कुर्याद्विधानवित् ॥८८॥
प्राक्सूर्ये मध्यसूर्ये वा।कुर्यात् तर्पणमेव च।
उत्तानस्य शयानस्य शयने स्वास्तृते सुखम् ॥८९॥
प्रलम्बशिरसः किञ्चित् किञ्चित् पादोन्नतस्य च।
दद्यान्नासापुटे स्नेहं तर्पणं बुद्धिमान् भिषक् ॥१००॥
अनवाक्शिरसो नस्यं न शिरः प्रतिपद्यते।
अत्यवाक्शिरसो नस्यं मस्तुलुङ्गे च तिष्ठति ॥१०१॥
अत एव शयानस्य यदार्यं स्वेदयेच्छिरः।
मस्ते य नासामुन्नाम्य वामेनाङ्गुष्ठपर्वणा ॥१०२॥
हस्तेन दक्षिणेनाथ दद्यादुभयतः समम्।
प्रणाड्या पिचुना वापि नस्तः स्नेहं यथाविधि ॥१०३॥
दत्ते च स्वेदयेद्भूय आकर्षेच्च पुनःपुनः।

मत् स्वेदं श्लेष्मणा सार्द्धं तथा स्वेहो न तिष्ठति ॥१०४॥
स्वेदेनोत्क्लेशितः श्लेष्मा नस्तःकर्मण्युपस्थितः।
भूयः स्वेहस्य शैत्येन शिरसि स्यायते ततः ॥१०५॥
श्रोत्रमन्यागलाद्येषु विकाराय स कल्पते।
ततो नस्तःकृते धूमं पिबेत् कफविनाशनम्।
हितान्नभुङ्निवातोष्णसेवी स्यात् नियतेन्द्रियः ॥१०६॥
विधिरेषोऽवपीड़स्य कार्य्यः प्रधापनस्य च।
षड्भूत्याथवा नाद्या धमेच्चूर्णं सुखेन वा ॥१०७॥
विरिक्तशिरसन्तूर्णं पाययित्वाम्बु भोजयेत्।
लघु त्रिग्धविरुद्धञ्च निवातस्थमतन्द्रितः ॥१०८॥
विरेकशुद्धो दोषस्य कोपनं यस्य सेवते।
स दोषो विचरंस्तत्र करोति स्वान् गदान् बहून्।
यथास्वं विहितं तेषु क्रियां कुर्य्याद्विचक्षणः ॥१०९॥
अकालकृतजातानां रोगाणामनुरूपतः।
अजीर्णे भोजने भुक्ते तोयपीतेऽथ दुर्दिने ॥११०॥
प्रतिश्याये नवे स्नाने स्नेहपानेऽनुवासने।
नावनं स्नेहन रोगान् करोति श्लैष्मिकान् बहून् ॥१११॥
तत्र श्लेष्महरः सर्वस्तीक्ष्णोष्णादिविधिर्हितः।
क्षामे विरिक्ते गर्भे व्यायामाभिहतेष्वपि ॥११२॥
वातो रूक्षेण नस्येन क्रुद्धस्तान् जनयेद्गदान्।
तत्र वातहरः सर्वो विधिः स्नेहनबृंहणः ॥११३॥
स्वेदादिः स्याद् घृतं क्षीरं गर्भिण्यास्तु विशेषतः।
ज्वरशोकाभितप्तानां तिमिरं मद्यपस्य च ॥११४॥
रूक्षैः सेकाञ्जनैर्लेपैः पुटपाकैश्च शोधयेत्।
तेन स्वरादयस्तत्र प्रशमं यान्ति तस्य तु ॥ ११५ ॥
स्नेहनं शोधनञ्चैव द्विविधं नस्यमुच्यते।

प्रतिमर्षश्च नस्यार्थं करोति न च दोषवान् ॥११६॥
नस्तः स्नेहाङ्गुलिं दद्यात् प्रातर्निशि च सर्वदा ।
नचोत्सिंहेदरोगाणां प्रतिमर्शः स दार्ढ्यकृत् ॥११७॥

तत्र श्लोकौ ।

त्रीणि यस्मात् प्रधानानि मर्माण्यभिहतेषु च ।
तेषु लिङ्गं चिकित्सा च रोगभेदाश्च सौषधाः ॥११८॥
विधिरुत्तरवस्तेश्च नस्तःकर्मविधिस्तथा ।
षड्व्यापद्भेषजं सिद्धौ मर्माख्याये प्रकीर्त्तितम् ॥११९॥

---

## दशमोऽध्यायः ।

### वस्तिसिद्धिः ।

सिद्धानां वस्तीनां तेषु तेषु रोगेषु सर्वदा ।
शृणुग्निवेश ! गदतः सिद्धिं सिद्धिप्रदां भिषजाम् ॥१॥
बलदोषकालरोगप्रकृतीः प्रविभज्य योजितः ।
सम्यक् स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान् नियच्छति २
कर्मान्यत् वस्तिसमं न विद्यते शोघ्रसुखविशोधित्वात् ।
आश्वपतर्पणयोगाच्च निरत्ययत्वाच्च ॥ ३ ॥
सत्यपि दोषहरत्वे कटुतीक्ष्णोष्णादि भेषजम् ।
सदुःखोद्गाराद्यबलकोष्ठाबाधा विरेके स्युः ॥४॥
अविरेच्यौ शिशुवृद्धौ तावदप्राप्तहीनधातुबलौ ।
आस्थापनमेव तयोः सर्वार्थकृदुत्तमं कर्म ॥५॥
बलवर्णहर्षमार्दवगात्रस्नेहान् नृणां ददत्याशु ।
अनुवासनं निरूहश्चोत्तरवस्तिश्च स त्रिविधः ॥६॥
शाखावातार्त्तानां सदुञ्चितस्तब्धभग्नसन्धीनाम् ।
विट्सङ्गाध्मानारुचिपरिकर्त्तिरुगादिषु च शस्तः ॥७॥
उष्णार्त्तानां शीतान् शीतार्त्तानां तथा सुखोष्णांश्च ।

सद्योगौषधयुक्तान् वस्तीन् सर्वत्र विनियुञ्ज्यात् ॥८॥
वस्तीन् न बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु।
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्त्ताः ॥९॥
न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कदेहानाम्।
युञ्ज्याद्विशोधनीयान् दोषनिबद्धायुषो ये च ॥१०॥
वाजीकरणेऽसृक्पित्तयोश्च मधुघृतपयोयुताः सर्वे।
शस्ताः सतैलमूत्रारनालवणाश्च कफवाते ॥११॥
युञ्ज्याद्द्रव्याणि वस्तिष्वम्लं मूत्रं पयःसुराक्वाथान्।
अविरोधाद्धातूनां रसयोनित्वाच्च जलसृष्टम् ॥१२॥
सुरदारुशताह्वैलाकुष्ठमधुकपिप्पलीमधुस्नेहाः।
कल्कानुलोमभागाः सर्षपाः शर्करा लवणम् ॥१३॥
आवापो वस्तीनामतः प्रयोज्यानि येषु यानि स्युः।
युक्तानि सह कषायैस्तद्धुक्तरतः प्रवक्ष्यामि ॥१४॥
चिरजातकठिनबलिषु व्याधिषु तीक्ष्णा विपर्यये च मृदवः।
समतिवापकषायैर्योज्यास्त्वनुवासननिरूहाः ॥१५॥
अर्द्धश्लोकैरतः सिद्धान् नानाव्याधिषु वर्गशः।
वस्तीन् वीर्यसमैर्भागैर्यथार्हानिह तान् शृणु ॥१६॥
विल्वाग्निमन्थश्योणाकाः काश्मर्यः पाटलिस्तथा।
शालपर्णी पृश्निपर्णी बृहत्यौ वर्द्धमानकः ॥१७॥
यवाः कुलत्थाः कोलानि स्थिरा चेति त्रयोऽनिले।
शस्यन्ते सचतुःस्नेहा पिशितस्य रसान्विताः ॥१८॥
नलवञ्जुलवानीरशतपत्राणि शैवलम्।
मञ्जिष्ठाशारिवानन्ता पयस्या मधुयष्टिका ॥१९॥
चन्दन पद्मकोशीरतुङ्गाश्च पैत्तिके त्रयः।
सशर्कराघृतक्षौद्राः सक्षीरा वस्तयो हिताः ॥२०॥
अर्कस्तथैव चालर्क एकाष्ठीला पुनर्नवा।

हरिद्रा त्रिफला मुस्तं पीतदारु कुटन्नटम् ॥२१॥
पिप्पल्यश्चित्रकश्चेति वयस्ते श्लेष्मरोगिणाम्।
सक्षारक्षौद्रगोमूत्रा नातिस्नेहान्विता हिताः ॥२२॥
फलजीमूतकेक्ष्वाकुधामार्गवकवत्सकाः।
श्यामा च त्रिफला चैव स्थिरा दन्ती द्रवन्त्यपि ॥२३॥
प्रकीर्या चोदकीर्या च नीलिनी क्षीरिणी तथा।
सप्तला शङ्खिनी लोध्रं फलं काम्पिल्लकस्य च ॥२४॥
चत्वारो मूत्रसिद्धास्ते पक्वाशयविशोधनाः।
व्यस्तैरपि समस्तैश्च चतुर्योगा उदाहृताः ॥२५॥
काकोली क्षीरकाकोली मुद्गपर्णी शतावरी।
विदारी मधुयष्ट्याह्वा शृङ्गाटककशेरुके ॥२६॥
आत्मगुप्ताफलं माषाः सगोधूमा यवास्तथा।
जाङ्गलानूपजं मांसमित्येते शुक्रवर्धनाः ॥२७॥
जीवन्ती चाग्निमन्थश्च धातकीपुष्पवत्सकौ।
प्रपद्मः खदिरः कुष्ठं शमी पिण्डीतको यवाः ॥२८॥
प्रियङ्गु रक्तमूली च तरुणी स्वर्णयूथिका।
पटाद्याः किंशुकं लोध्रमिति सांग्राहिका मताः ॥२९॥
परिस्रवे शृतं क्षीरं सवृश्चीरपुनर्नवम्।
पृश्निपर्णिकया वापि तण्डुलीयकयुक्तया ॥३०॥
कोलकतककाण्डेक्षुदर्भकाशेक्षुमालिभिः।
दाहघ्नः सघृतक्षीरो द्वितीयश्चोत्पलादिभिः ॥३१॥
कर्बुदाराद्रकानीपविदुलैः क्षीरसाधितैः।
बस्तिः प्रदेयो भिषजा शीतः समधुशर्करः ॥३२॥
परिकर्ते तथा हन्तैः क्षीरसर्पीकोविदारजैः।
देयो बस्तिः सुखोष्णस्तु यथावत् विदितक्रियैः ॥३३॥
शुद्धिः साम्भविरुन्नानां क्षीरसिद्धो घृतान्वितः।

स्थितः प्रवाहणे तद्वद्वृन्तैः शाल्मलिकस्य च ॥३४॥
अश्वावरोहिकाः काकनासाराजकशेरुकैः।
सिद्धाः क्षीरेऽतियोगे स्युः क्षौद्राञ्जनघृतैर्युताः ॥३५॥
न्यग्रोधाद्यैस्तुभिश्च तेनैव विधिनापरः।
वस्तिः प्रवाहणे देयो भिषजा कल्पितो धिया ॥३६॥
बृहती क्षीरकाकोली पृश्निपर्णी शतावरी।
काश्मरी बदरी दूर्वा तथोशीरप्रियङ्गवः ॥३७॥
जीवनीयैः शृतौ क्षीरौ द्वौ घृताञ्जनसंयुतौ।
वस्ती प्रदेयौ भिषजा शीतौ समधुशर्करौ ॥३८॥
गोऽव्यजामहिषीक्षीरैर्जीवनीययुतैस्तथा।
तेनैव विधिना वस्तिर्देयः सक्षौद्रशर्करः ॥३९॥
शशैणदक्षमार्जारमहिषाव्यजशोणितैः।
सद्यस्कैर्मृदुभिर्वस्तिर्जीवादाने प्रशस्यते ॥४०॥
मधूकमधुकद्राक्षादूर्वाकाश्मर्यचन्दनैः।
शर्कराचन्दनद्राक्षामधुधात्रीफलोत्पलैः ॥४१॥
रक्तपित्तप्रमेहे तु कषायः सोमवल्कजः।
वस्तिर्देयो विधिज्ञेन भिषजा युक्तिकल्पितः ॥४२॥
त्रिकाख्ययोऽनिलादीनां चतुष्काश्चापरे त्रयः।
पक्वाशयविशुद्ध्यर्थं हृद्याः मात्राहिकास्तथा ॥४३॥
परिस्रावे तथा दाहे परिकर्ते प्रवाहणे।
अतियोगे मताः पञ्च जीवादाने तथा त्रयः ॥४४॥
रक्तपित्ते द्वयं मेहे एकविंशच्च पञ्च च।
सुलभाल्पौषधक्लेशा वस्तयो गुणवत्तमाः ॥४५॥
गुल्मातिसारोदावर्त्तस्तम्भसङ्कुचितादिषु।
सर्वाङ्गैकाङ्गरोगेषु रोगेष्वेवंविधेषु च ॥४६॥
यथास्वमौषधैः सिद्धान् वस्तीन् दद्यात् विचक्षणः।
पूर्वोक्तेन विधानेन कुर्य्यादरोगान् स्वर्गविधान् ॥४७॥

# एकादशोऽध्यायः

## फलमात्रा सिद्धिः।

भगवन्तमुदारसत्त्वधीद्युतिविज्ञानसमृद्धमत्रिजम्।
फलवस्तिवरत्वनिश्चये सविवादा मुनयोऽभ्युपागमन् ॥१॥
भृगुकौशिककाप्यशौनकाः सपुलस्त्यासितगौतमादयः।
कतमत् प्रवरं फलादिषु मृतमास्थापनयोजनास्विति ॥२॥
कफपित्तहरं परं फलेष्वथ जीमूतकमाह शौनकः।
मृदुवीर्यतया भिनत्ति तद्दिति चोवाच नृपोऽथ वामकः ॥३॥
कटुतुम्बीफलमुत्तमं मतं वमने दोषसमीरणञ्च तत्।
तदयोग्यमशैत्यतीक्ष्णताकटुरौक्ष्यादिति गौतमोऽब्रवीत् ॥४॥
कफपित्तनिबर्हणं परं स च धामार्गवमित्यमन्यत।
तदमन्यत वातलं पुनर्वडिशो ग्लानिकरं बलापहम् ॥५॥
कुटजं प्रशशंस चोत्तमं न बलघ्नं कफपित्तहारि च।
अतिविज्जलमूर्ध्वभागिकं पवनक्षोभि च काप्य आह तत् ॥६॥
कृतवेधनमाह वातलं कफपित्तं प्रबलं हरेदिति।
तदसाध्विति भद्रशौनकः कटुकत्वादपि बलघ्नमित्यपि ॥७॥
इति तद्वचनानि हेतुभिः सुविचित्राणि निशम्य बुद्धिमान्।
प्रशशंस फलेषु निश्चये परमं चात्रिसुतोऽब्रवीदिदम् ॥८॥
फलदोषगुणान् सरस्वती प्रति सर्वैरपि सम्यगीरिता।
न तु किञ्चिददोषनिर्गुणं गुणभूयस्त्वमतो विचिन्त्यते ॥९॥
इह कुष्ठहिता गरागरी हितमिक्ष्वाकु तु मेहिने मतम्।
कुटजस्य फलं हृदामये प्रवरं कोठफलञ्च पाण्डुषु ॥१०॥
उदरे कृतवेधनं हितं मदनं सर्वगदाविरोधि तु।
मधुकं सकषायतिक्तकं तदरूक्षं कटुकञ्च विज्जलम् ॥ ११ ॥
कफपित्तहृदाशुकारि चाव्यनपायं पवनानुलोमि च।
फलनामविशेषतस्ततो लभतेऽन्येषु फलेषु सत्स्वपि ॥१२॥

गुरुणा च वचस्युदाहृते मुनिसङ्घैरिति पूजिते ततः।
प्रणिपत्य मुदा समन्वितः सहितः शिष्यगणोऽनुपृष्टवान् ॥ १३ ॥
सर्वकर्मगुणकृद् गुरुणोक्तो वस्तिरङ्ग मतमर्थवेदिना।
नाभ्यधो गुदगतश्च शरीरात् सर्वतः कथमपोहति दोषान् ॥१४॥
सद्गुरुरब्रवीदिदं शरीरं तन्वयतेऽनिलः सङ्गविघातात्।
केवल एव दोषसहितः स हि वायुः प्रकोपमुपयाति ॥१५॥
तं पवनं सपित्तकफविट्कं शुद्धिकरोऽनुलोमयति वस्तिः।
सर्वशरीरगश्च गदसङ्घातप्रकाशनात् प्रशान्तिमुपयाति ॥१६॥
अथाभिगम्यार्थमखण्डितं धिया गजोष्ट्रगोऽश्वाश्वजवस्तिकर्म।
अपृच्छदेन स च वस्तिमब्रवीत् विधिश्च तस्याह पुनः प्रचोदितः१७
अजाविके सौम्यगजोष्ट्रयोर्वा गवाश्वयोर्वस्तिसुशन्तिमाहिषम्।
अजाविकादन्त्यसुवस्तिसुत्तरं वदन्ति वस्तिं विपरीतरूपम् ॥१८॥
सुवस्तिमष्टादशपोड़शाङ्गुलं नयैव नेत्रञ्च दशाङ्गुलं क्रमात्।
गजोष्ट्रगोऽश्वाव्यजवस्तिसन्धौ चतुर्थभागे च सकर्णिकं वदेत्॥१९॥
प्रस्थस्त्वजाव्योर्हि निरूहमात्रा गवादिषु द्विद्विगुणो यथाबलम्।
निरूह उष्ट्रस्य तथाढकद्वयं गजस्य त्वर्धस्त्वनुवासनेऽष्टमः ॥२०॥
कलिङ्गकुष्ठे मधुकं सपिप्पली वचा शताह्वा मदन रसाञ्जनम्।
हितानि सर्वेषु गुड़ः ससैन्धवो हिपद्मपूलं सविकल्पनालियम् ॥२१
गजेऽधिकोऽश्वत्थवटाश्वकर्णजाः सखादिराः शणशाललतालजाः।
तथा च उष्ट्रे धवशिग्रुपाटलीमधूकसाराः सनिकुम्भचित्रकाः ॥२२
पलाशभूतीकसुराह्वरोहिणीकषाय उक्तास्त्वधिको गवां हितः।
पलाशदन्तीसुरदारुकत्तृणद्रवन्त्य उक्तास्तुरगस्य चाधिकाः ॥२३॥
खरोष्ट्रयोः पीलुकरीरखादिराः शम्याकबिल्वादिगणश्च च च्छदाः
अजाविकानां त्रिफलापरूषकं कपित्थकर्कन्धुसबिल्वकोलजम्॥२४
अथाग्निवेशः सततोऽन्तरान्तरा हितञ्च पप्रच्छ गुरुस्तदाह च।
सदातुराः श्रोत्रियराजसेवकास्तथैव वेश्याः सह पण्यजीविभिः२५

द्विजो हि शिष्याध्ययनव्रताह्निकक्रियादिभिर्देहहितं न चै
नृपोपसेवी नृपचित्तरक्षणात् परानुरोधाद्बहुचिन्तनाद्भयात्
नृचित्तवर्त्तिन्युपचारतत्परा मृजाभिभूषानिरताः पराङ्गना।
सदासनादत्यनुबद्धविक्रयक्रयादिलोभादपि पण्यजीविनः॥
सदैव ते ह्यागतवेगनिग्रहं समाचरन्ते न च कालभोजनम्।
अकालनिर्हारविहारसेविनो भवन्ति येऽन्येऽपि सदातुराश्च
समीरणं वेगविधारणोद्धतं विबद्धसर्वाङ्गरुजाकरं भिषक्।
समीक्ष्य तेषां फलवर्त्तिमादितः सुकल्पितां स्नेहवतीं प्रयोजयेत्
निरूहितं धन्वरसेन भोजितं निकुम्भतैलेन ततोऽनुवासयेत्।
बलाश्वगन्धासहबिल्वचित्रकान् द्विपञ्चमूले शतमात्मगुप्तयोर्
यवान् कुलत्थांश्च पचेज्जलाढके रसः सपेष्यस्तु कलिङ्गकादिभि
सतैलसर्पिर्गुडसैन्धवोहितः सदा नराणां बलवर्द्धनः परः॥२१॥
पुनर्नवैरण्डनिकुम्भचित्रकान् सदेवदारुत्रिवृता निदिग्धिकाम्
महान्ति मूलानि च पञ्च तन्नवान् विपाच्यमूत्रे दधिमस्तु संयुते
सतैलसर्पिर्लवणैश्च पञ्चभिर्विमूर्च्छितं वस्तिमथ प्रयोजयेत्।
तथैव यस्तं मधुकेन साधितं फलेन बिल्वेन शताह्वयाथवा॥२३
सजीवनीयस्तु रसेऽनुवासने निरूहणे चालवणो भिषग्हितः।
नचान्यदाश्वङ्गबलाभिवर्द्धनं निरूहवस्तेः शिशुवृद्धयोः परम्॥२४॥

तत्र श्लोकः।

फलकर्मवस्तिवरतत्त्वनिश्चयो वात्यादीनाम्।
सततातुराश्च दृष्टाः फलमात्रायां हितश्चैषाम्॥२५॥

---

## द्वादशोऽध्यायः।

### उत्तरवस्तिसिद्धिः।

अथ खल्वातुरं वैद्यः संशुद्धं वमनादिभिः।
दुर्बलं कृशमल्पाग्निं मुक्तसन्धानबन्धनम्॥१॥

निर्हृतानिलविण्मूत्रकफपित्तं क्रमागयम्।
शून्यदेहं प्रतीकारासहिष्णुं परिपालयेत् ॥२॥
यथैव तरुण पूर्णं तैलपात्रं तथैव च।
गोपाल इव दण्डी गाः सर्वस्मादपचारतः ॥३॥
अग्निसन्धुक्षणार्थन्तु पूर्वं पेयादिभिर्भिषक्।
रसोत्तरेणैव चरेत् क्रमेण क्रमकोविदः ॥४॥
स्निग्धाम्लस्वादुहृद्यानि ततोऽम्ललवणौ रसौ।
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥५॥
अन्योऽन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः।
व्यत्यासादुपयोगेन प्रकृतिं गमयेद्भिषक् ॥६॥
सर्वक्षमो निरासङ्गो रतियुक्तः स्थिरेन्द्रियः।
बलवान् सत्त्वसम्पन्नो विज्ञेयः प्रकृतिं गतः ॥७॥
एतां प्रकृतिमप्राप्तः सर्ववर्ज्यानि वर्जयेत्।
महादोषकरास्त्वष्टाविमानि तु विशेषतः ॥८॥
उच्चैर्भाष्यं रथक्षोभमतिचंक्रमणासने।
अजीर्णाहितभोज्ये च दिवास्वप्नं समैथुनम् ॥९॥
तज्जा देहोर्द्ध्वसर्वाधोमध्यपीड़ामदोषजाः।
श्लेष्मजाः क्षयजाश्चैव व्याधयः स्युर्यथाक्रमम् ॥१०॥
तेषां विस्तरतो लिङ्गमेकैकस्य सभेषजम्।
यथावत् संप्रवक्ष्यामि सिद्धान् वस्तींश्च यापनान् ॥११॥

तत्रोच्चैर्भाष्यातिभाष्याभ्यां शिरस्तापकर्णशङ्खनिस्तोदस्रोतोऽवरोधमुखतालुकण्ठशोषतैमिर्य्यपिपासाज्वरतमकहनुमन्याग्रहनिष्ठीवनोरःपार्श्वशूलस्वरभेदहिक्काश्वासादयः स्युः ॥१२॥

रथक्षोभात् सन्धिपर्वशैथिल्यहनुनासाकर्णशिरःशूलतोदवङ्क्षिविक्षोभाटोपान्त्रकूजनाध्मापनहृदयेन्द्रियोपरोधस्फिक्पार्श्ववङ्क्षण-वृषण कटीपृष्ठवेदना-सन्धिस्कन्धग्रीवादौर्बल्याङ्गाभितापपादशोफप्रस्वापहर्षणादयः ॥१३॥

अतिचंक्रमणात् पादजङ्घोरुजानुवंक्षणश्रोणीपृष्ठशूलसक्थिसादनिस्तोदपिण्डिकोद्वेष्टनाङ्गमर्दांसाभितापसिराधमनी-हर्षश्वासकासादयः स्युः ॥१४॥

अत्यासनात् रथक्षोभजाः स्फिक्पार्श्ववंक्षणवृषणकटीपृष्ठवेदनादयः स्युः ॥१५॥

अजीर्णाध्यशनाभ्यान्तु मुखशोषाध्मानशूलनिस्तोदपिपासागात्रसादच्छर्द्यतीसारमूर्च्छाज्वरप्रवाहणामविषादयः स्युः ॥१६॥

विषमाहिताशनाभ्याम् अनन्नाभिलाषदौर्बल्यवैवर्ण्यकण्डूपामागात्रावसादवातादिप्रकोपजाय ग्रहणीअर्शोविकारादयः ॥१७॥

दिवास्वप्नात् अरोचकाविपाकाग्निनाशस्तैमित्यपाण्डुकण्डूपामादाहच्छर्द्यङ्गमर्दहृत्स्तम्भजाड्यतन्द्रा-निद्रा-प्रसङ्गग्रन्थिजन्मदौर्बल्यरक्तमूत्राक्षितातालुलेपाः पिपासा च ॥१८॥

व्यवायात् आशुबलसादोरुसादशिरो-गिरोगुदमेढ्र-वंक्षणोरुजानुजङ्घा पाद-शूल-हृदय-स्पन्दननेत्रपीडाङ्गशैथिल्यशुक्रमार्गशोणितागमन-कासश्वासशोणितष्ठीवितस्वरावसादकटीदौर्बल्यैकाङ्ग-सर्वाङ्ग-रोगमुष्क-श्वयथु-वातवर्चोमूत्रसङ्गशुक्रविसर्गजाड्यवेपथुबाधिर्य्यविषादादयः स्युः उत्पाट्यते इव गुदस्ताड्यत इव मेढ्रम् अवसीदतीव मनो वेपते हृदयं पीड्यन्ते सन्धयः तमः प्रविशति इव च ॥१९॥

इत्येवमेभिरष्टभिरभिचारैरेते प्रादुर्भवन्ति उपद्रवाः ॥२०॥

तेषां भिषक् उच्चैर्भाष्यातिभाष्यजानामभ्यङ्गस्वेदोपनाहधूमनस्योपरिभक्तस्नेहपानरसक्षीरादिभिर्वातहरः सर्वो विधिर्मिश्च ॥२१॥

रथक्षोभातिचक्रमणात्यासनजानां स्नेहस्वेदादि वातहरं कर्म सर्वं निदानवर्जनं ॥२२॥

अजीर्णाध्यशनजानां निरवशेषतश्छर्दनं रूक्षस्वेदधूमपानलङ्घनीय पाचनीयदीपनीयौषधावचारणञ्च ॥२३॥

विषमाहिताशनजानां यथास्वं दोषक्रिया: ॥२४॥

दिवास्वप्नजानां धूमपानलङ्घनवमनशिरोविरेचनव्यायाम-रूक्षाशनादिदीपनीयीयघोपयोगः। प्रकर्षणोन्मर्दनपरिषेचनादिश्च श्लेष्महरः सर्वो विधिः ॥२५॥

मैथुनजाना जीवनीयसिद्धयोः क्षीरसर्पिषोरुपयोगः। तथा वातहराः स्वेदाभ्यङ्गोपनाहा हृद्याश्चाहाराः स्नेहाःस्नेहविधयो यापना वस्तयोऽनुवासनञ्च। मूत्रवैकृतवस्तिशूलेषु च उत्तरवस्तिः। विदारीगन्धादिगणजीवनीयगणक्षीरससिद्ध तैलं स्याद्- यापनाश्च वस्तयः सर्वकालं देयास्तानुपदेक्ष्यामः ॥२६॥

मुस्तोशीर-वलारग्वधरास्नामञ्जिष्ठाकटुरोहिणीत्रायमाणा-पुनर्नवा-विभीतक-गुडूचीस्थिरादि-पञ्चमूलानि पलिकानि खण्डशः कृतानि अष्टौ च मदनफलानि प्रक्षाल्य जलाढ़के परिक्वाथ्य पादशेषे रसः क्षीरद्विप्रस्थसंयुक्तः पुनःपुनः स्रुतः क्षीरावशेषस्तस्यो जाङ्गलरसमधुघृतः शतकुसुममधुककुटजफलरसाञ्जनप्रियङ्गुकल्कीकृतः ससैन्धवः सुखोष्णवस्तिः शुक्रमांसबलजननः क्षतक्षीणकासगुल्मशूलविषमज्वरब्रध्नकुण्डलीदावर्त्तकुक्षिशूलमूत्रकृच्छ्रासृग्दरजो-विसर्पप्रवाहिकाशिरोरुजाजानूरुजङ्घावस्ति ग्रहाश्मर्युन्मादार्शःप्रमेहाध्मानरक्तपित्तश्लेष्मव्याधिहरः-सद्यो वलजननो रसायनश्चेति ॥ २७ ॥

एरण्डमूलपलाशात् षट्पलं शालपर्णी पृश्निपर्णी बृहती कण्टकारिका गोक्षुरकरास्नाश्वगन्धा गुडूची वर्षाभूरारग्वध-देवदार्विति पलिकानि, खण्डशः कृतानि फलानि चाष्टौ प्रक्षाल्य जलाढ़के क्षीरपादे पचेत्। पादशेषं कषायं पूतं शतकुसुमादि कुष्ठ-मुस्त-पिप्पलीहपुषाबिल्ववचा-वत्सक-फलरसाञ्जन-प्रियङ्गु-यमानि सक्षेप-कल्कितं मधु-घृत-तैल-सैन्धवयुक्तं सुखोष्णं निरूहमेकं द्वौ त्रीन् वा दद्यात्। सर्वथा

प्रशस्तो विशेषतो ललित-सुकुमारक्षतक्षीणस्थविरचिरार्शसा मपत्यकामानाञ्च ॥ २८ ॥

सहचरबलामूर्वामूलशारिवासिद्धेन पयसा तथा बृहती कण्टकारीशतावरीच्छिन्नरुहाशृतेन पयसा मधुकमदनपिप्पली· कल्कीकृतेन पूर्ववद् वस्तिः ॥ २९ ॥

तथा बलातिबलाविदारीशालपर्णीपृश्निपर्णी·बृहतीकण्टकारिका दर्भमूलयवकाश्मर्य्यबिल्वफलयवसिद्धेन पयसा मधूकमदनकल्कीकृतेन मधुघृतसौवर्चलयुक्तेन कासज्वरगुल्मप्लीहार्दित· स्त्रीमद्यक्लिष्टानां सद्योबलजननो रसायनश्च ॥ ३० ॥

तथा बलातिबलारास्नारग्वधमदनबिल्वगुडूचीपुनर्नवैरण्डा· श्वगन्धासहचरपलाशदेवदारुद्विपञ्चमूलानि पलिकानि यवकोल कुलत्थद्विप्रसृतं शुष्कमूलकानाञ्च जलद्रोणसिद्धं निरूढप्रमाण शेषं कषायं पूतं मधुकमदनशतपुष्पाकुष्ठपिप्पलीवचावत्सक· फलरसाञ्जनप्रियङ्गुयमानीकल्कीकृतं गुडघृततैलक्षौद्रक्षीरमां· सरसाम्लकाञ्जिकसैन्धवयुक्तं सुखोष्णं वस्तिं दद्यात्। शुक्रमूत्र· वर्चःसङ्गेऽनिलजे गुल्महृद्रोगाध्मानब्रध्नपार्श्वपृष्ठकटीग्रहसञ्ज्ञाना· शबलक्षयेषु च ॥ ३१ ॥

हपुषार्द्धकुडवद्विगुणार्द्धक्षुण्णयवः क्षीरोदकसिद्धः क्षीरशेषो मधुघृततैललवणयुक्तः सर्वाङ्ग-विकृत-वातरक्त-मलविण्मूत्र क्षो· भितहितो वातहरो बुद्धिमेधाग्निबलजननश्च ॥ ३२ ॥

ह्रस्वपञ्चमूलकषायः क्षीरोदकसिद्धः पिप्पलीमधुकमदन· कल्कीकृतः सगुडघृततैललवणः क्षीणविषमज्वरकर्शितस्य वस्तिः ॥ ३३ ॥

बलातिबलापामार्गाल्गुलाटपलार्कतृण यवाञ्जलि कषायं पूर्ववद्वस्तिः स्थविरदुर्बलक्षीणशुक्राणां पथ्यतमः ॥ ३४ ॥

बलामधूकविदारीदर्भमूलमृद्वीकायवैः कषायमात्रेण पयसा समं मधुकास्कन्द समधुघृतसैन्धवं जरासद्यो वस्तिं दद्यात् ॥ ३५ ॥

शालपर्णीपृश्निपर्णीगोक्षुरकमूलकाश्मर्यपरूषकखर्जूरफल-मधूकपुष्पैरजाक्षीरजलप्रस्थाभ्यां सिद्धः कषायः पिप्पलीमधुकोत्पलकल्कितः सघृतसैन्धवः क्षीणेन्द्रियविषमज्वरकर्षितस्य बस्तिः शस्तः ॥ ३६ ॥

स्थिरादिपञ्चमूलीपञ्चपलेन शालियष्टिकयवगोधूममाषशालायपञ्चप्रसृतेन छागपयःसृतं पादशेषं कुक्कुटाण्डरससममधुघृतशर्करासैन्धवसौवर्चलयुक्तो वस्तिर्वृष्यतमो बलवर्णजननश्च। शयना वस्तयो द्वादश ॥३७॥

कल्पश्चैषां शिखिगोनर्दहंसाण्डरसे स्यात् ॥३८॥

सतित्तिरिः समयूरः राजहंसपञ्चमूलीपयःसिद्धं शतकुसुममधुकरास्नाकुटजफलपिप्पलीकल्कः घृततैलगुडसैन्धवयुक्तो वस्तिर्बलवर्णशुक्रजननो रसायनश्च ॥३९॥

द्विपञ्चमूलीकुक्कुटरससिद्धं पयः पादशेषं पिप्पलीमधुकरास्नामदनमधुकल्कं शर्करामधुघृतयुक्तं स्त्रीष्वतिकामानां बलजननो वस्तिः ॥४०॥

मयूरमहुपित्तपक्षपादास्यान्त्रे त्यक्त्वा स्थिरादिभिः पलिकैः सह जले पयसि पक्त्वा क्षीरशेषं मदनविदारीशतकुसुममधुककल्कीकृतं मधुघृतसैन्धवयुक्तं वस्तिं दद्यात् स्त्रीष्वतिप्रसक्तवीर्येन्द्रियेभ्यो हितो बलवर्णकरः ॥४१॥

कल्पश्चैव विष्किरप्रतुदप्रसहाम्बुचरेषु स्यादक्षीरो रोहितादिषु च मत्स्येषु च ॥४२॥

गोधानकुलमार्जारमूषिकशल्लकमांसान्ता दशपलान् भागान् सपञ्चमूलान् पयसि पक्त्वा तत् पयः पिप्पलीफलकल्कसैन्धवसौवर्चलशर्करामधुघृततैलयुक्तो वस्तिर्वृष्यो, रसायनः क्षीणक्षतस्य सन्धानकरो मथितोरस्करयगजहयभग्नवातबलासकप्रहृत्युदावर्तवातशक्रमूत्रवर्चःशुक्राणां हितमश्च ॥४३॥

कूर्मादीनामन्यतमपिशितसिद्धं पयो गोधूपनागह्ययनक्रहंस-कुक्कुटाण्डरस-मधु-घृतशर्करासैन्धवेक्षुरकात्मगुप्तफलकल्कसंसृष्टो वस्तिर्वृद्धानामपि बलजननः ॥४४॥

गोधूपयस्तवराहवृषणकर्कटचटकसिद्धं क्षीरमुच्चटकेक्षुरकात्मगुप्तामधुघृतयुतं किञ्चिल्लवणितं वस्तिः ॥४५॥

कर्कटकरसचटकाण्डरसयुक्तः समधुघृतशर्करो वस्तिरित्येते वस्तयः परमवृष्याः ॥४६॥

उच्चटकेक्षुरकात्मगुप्तास्नृतक्षीरप्रतिभोजनानुपानात् स्त्रीमतंगामिनं नरं कुर्युः ॥४७॥

दशमूलमयूरहंसकुक्कुटाघातात् पञ्चप्रसृतं तैलघृतवसामज्जचतुष्प्रसृतयुक्तं शतपुष्पामुस्तहपुषाकल्कीकृतः सलवणो वस्तिः पादगुल्फोरुजानुजङ्घात्रिकवंक्षणवस्तिवृषणानिलहरः ॥४८॥

मृगविष्किरानूपविलेशयानामितेनैव कल्पेन वस्तयो देयाः॥४९॥

मधुघृतद्विप्रसृतं तुल्योष्णोदकं शतपुष्पार्धपलं सैन्धवार्धाक्षयुक्तो वस्तिर्दीपनो बृंहणो बलवर्णकरो निरुपद्रवो वृष्यतमो रसायनः। क्रिमिकुष्ठोदावर्तगुल्मार्शोब्रध्नप्लीहमेहहरः ॥५०॥

तद्वत् समधुघृताभ्यां पयस्तुल्यो वस्तिः पूर्वकल्पेन बलवर्णकरो वृष्यतमो निरुपद्रवो वस्तिर्मेदपाकपरिकर्त्तिकामूत्रकृच्छ्रपित्तव्याधिहरो रसायनश्च ॥५१॥

मधुघृताभ्यां मांसरसतुल्यो मुस्तावचयुक्तः पूर्ववत् वस्तिर्बलाश्पादहर्षगुल्मजानूरुनिकुञ्चनवस्तिहृदयमेद्रपृष्ठशूलहरः ॥५२॥

सुरासौवीरककुलत्थमांसरसमधुघृततैलसमप्रसृतं सुस्नमताशाकल्कितं सलवणो वस्तिः सर्ववातरोगहरः ॥५३॥

तथा द्विपञ्चमूलत्रिफलाबिल्वमदनफलकषायो गोमूत्रसिद्धः

कुटजमदनफलमुस्तपाठाकल्कितः सैन्धववावशूकक्षौद्रतैल-युक्तो वस्तिः श्लेष्मव्याधिवस्त्याटोपवातशुक्रसङ्गपाण्डुरोगाजीर्ण-विसूचिकालसकेषु देय इति ॥५४॥

अत ऊर्द्ध्वं ह्यपतमान् स्नेहान् वक्ष्यामः ॥५५॥

शतावरीगुडूचीक्षुविदार्यामलकद्राक्षाखर्जूराणां यन्त्रपीडितानां रसप्रस्थमेकैकं तद्वद्घृततैलगोमहिषाजाक्षीराणां द्वौ द्वौ दद्यात्। जीवकर्षभकमेदामहामेदालवक्क्षीराशृङ्गाटकमधूलिकामधुकोच्चटकपिप्पलीपुष्करबीजनीलोत्पलकदम्बपुष्पपुण्डरीककेशरकल्कान् पृषतशरक्षुमांसकुक्कुटचटकचकोरमत्ताघवर्हिजीवञ्जीवककुलिङ्गहंसानां रसं वसामज्जादेय प्रस्थं दत्त्वा साधयेत्। ब्रह्मघोषशङ्खपटहभेरीनिनादैः सिद्धं सितच्छत्रछत्रच्छायं गजस्कन्धमारोपयेद्भगवन्तं ह्यपध्वजमभिपूज्य तं स्नेहं त्रिभागमाचिकमङ्गलाशीःस्तुतिदेवतार्चनैर्वस्तिं गमयेत्। नृणां स्त्रीविहारिणां नष्टरेतसां क्षतक्षीणविषमज्वरार्त्तानां व्यापन्नयोनीनां वन्ध्यानां रक्तगुल्मिनीनां मृतापत्यानामनार्त्तवानाञ्च स्त्रीणां क्षीणमांसरुधिराणां पथ्यतमरसायनमुत्तमं वलीपलितनाशनं विद्यात् ॥५६॥

वलागोक्षुरकरास्नाश्वगन्धाशतावरीसहचराणां शतं शतमाद्योत्य जलद्रोणशते प्रसाध्य तस्मिन् जलद्रोणावशेषे रसे वस्त्रपूते विदार्यामलकस्वरसयोर्वस्तमहिषवराहवृषकुक्कुटवर्हिहंसकारण्डवसारसानां घृततैलयोर्येकं पृथक् प्रस्थमष्टौ प्रस्थान् क्षीरस्य दत्त्वा चन्दनमधुकमधूलिकात्वक्क्षीरीविसमृणालोत्पलपटोलफलावगुप्तावपाकितालमज्जकखर्जूरस्वचोकातामलकीकण्टकारीजीवकर्षभक्षुद्रसहा महासहाशतावरीमेदापिप्पलीश्लैवेरत्वक्पत्रकल्काय दत्त्वा साधयेत्। ब्रह्मघोषादिना विधिना तत्सिद्धं वस्तिमादद्यात्। तेन स्त्रीशत गच्छेत् न

धावास्ते विहाराहारयन्त्रणा काचित्। एष वृष्यो वर्ण्यो बृंहण आयुष्यो वलीपलितनुत्। क्षतक्षीणनष्टशुक्रविषमज्वरार्त्तानां व्यापच्चयोनीनाञ्च पथ्यतमः ॥५७॥

सहचरपलशतमुदकद्रोणचतुष्टये पक्वा द्रोणशेषे रसे सुपूते विदारीक्षुरसप्रस्थाभ्यामष्टगुणक्षीरं घृततैलप्रस्थं बलामधुकमधूकचन्दनमधूलिकाशारिवामेदामहामेदाकाकोलीक्षीरकाकोली पयस्या-गुरुमञ्जिष्ठा-व्याघ्रनखशटी-सहचर-सहस्रवीर्य्या-वरा लोध्राणामक्षमात्रैर्द्विगुणशर्करैः कल्कैः साधयेत् ब्रह्मघोषादि विधिना। तन्निदं वस्तिं दद्यात्, एष सर्वरोगहरो रसाय ललितानां श्रेष्ठोऽन्तःपुरचारिणीनां क्षतक्षयवातपित्तवेदन श्वासकासहरस्त्रिभागमाक्षिको वलीपलितनुत् वर्णरूपबल मांसशुक्रवर्द्धनः ॥५८॥

इत्येते रसायनाः स्नेहवस्तयः सति विभवे शतपाका सहस्र पाका वा कार्य्या वीर्य्यबलाधानार्थमिति ॥५९॥

भवन्ति चात्र।

इत्येते वस्तयः स्नेहाश्चोक्ता प्राणिषु सञ्जिताः।
सुस्थानामातुराणाञ्च वृद्धानाञ्चाविरोधिनः ॥६०॥
अतिव्यवायशीलानां शुक्रमांसबलप्रदाः।
सर्वरोगप्रशमनाः सर्वेष्वृतुषु यौगिकाः ॥६१॥
नारीणाममजातानां नराणाञ्चाप्यपत्यदाः।
उभयार्थकरा दृष्टाः स्नेहवस्तिनिरूहयोः ॥६२॥

तत्र श्लोकाः।

व्यायामो मैथुनं मद्यं मधूनि शिशिराम्बु च।
सम्भोजनं रथक्षोभे वस्तिष्वेतेषु गर्हितम् ॥६३॥
शिखिगोनर्द्दंमाक्षेदं नवहस्तयस्त्रयः।
विंशतिर्विप्किरैस्त्रिंशत् प्रतुदैः प्रसहैर्नव ॥६४॥

विंशतिश्च तथा सप्तविंशतिश्चाम्बुचारिभिः ।
नव मत्स्यादिभिश्चैव शिखिकल्पेन वस्तयः ॥६५॥
दश कर्कटकाद्यैश्च कूर्मकल्पेन वस्तयः ।
मृगैः सप्तदशैकोनविंशतिर्विष्किरैर्दश ॥६६॥
आनूपैर्दशशिखिवद्भूशयैश्च चतुर्दश ।
एकोनत्रिंशदित्येते सप्त क्षेत्रैः समासतः ॥६७॥
प्रोक्ता विस्तरशो भिन्ना द्वे शते षोड़शोत्तरे ।
एते माचिकसंयुक्ताः कुर्वन्त्यतिवृषं नरम् ।
नातियोगं न वा योगः स्तम्भितास्ते च कुर्वते ॥६८॥
मृदुत्वाच्च निवर्त्तेरन् वस्तयश्चेत्त्रिरूच्ये ।
समूत्रैर्वस्तिभिस्तेकैराश्वाप्यः चिप्रमेव च ॥६९॥
शोफाग्निनाशपाण्डुत्वशूलार्शःपरिकर्त्तिकाः ।
स्युर्ज्वरश्चातिसारश्च यापनात्यर्थसेवया ॥७०॥
अरिष्टचीरशीध्वाद्या तत्रेष्टा दीपनी क्रिया ।
युक्त्या तस्मान्निषेवेत यापनान् न प्रसङ्गतः ॥७१॥
इत्युच्चैर्भाष्यपूर्वाणां,व्यापदः सचिकित्सिताः ।
विस्तरेण पृथक् प्रोक्तास्तेभ्यो रचेन्नरं सदा ॥७२॥
कर्मणां वमनादीनां असम्यक्करणापदाम् ।
यत्नोक्तं साधन स्थाने सिद्धिस्थान तदुच्यते ॥७३॥
इत्यध्यायशतं विंशमात्रेयमुनिवाङ्मयम् ।
हितार्थं प्राणिनां प्रोक्तमग्निवेशेन धीमता ॥७४॥
दीर्घमायुर्यशः प्रज्ञामारोग्यञ्चापि पुष्कलम् ।
सिद्धिञ्चानुत्तमां लोके प्राप्नोति विधिना पठन् ॥७५॥
विस्तारयति लेशोक्तं संचिपत्यतिविस्तरम् ।
संस्कर्त्ता कुरुते तन्त्रं पुराणञ्च पुनर्नवम् ॥७६॥
अतस्तन्त्रोत्तममिदं चरकेणातिबुद्धिना ।

संस्कृतं तत् तु संसृष्टं विभागेनोपलक्ष्यते ॥७७॥
इदमन्यूनशब्दार्थं तन्त्रं दोषविवर्जितम्।
अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे ॥७८॥
कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषाञ्च वलोच्चयम्।
सप्तदशौषधाध्यायसिद्धिकल्पैरपूरयत् ॥७९॥
षट्त्रिंशद् विचित्राभिर्भूषितं तन्त्रयुक्तिभिः।
तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ॥८०॥
प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम्।
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ॥८१॥
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः।
पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ॥८२॥
अतीतानागतापेक्षास्वसंज्ञोह्यसमुच्चयाः।
निदर्शनं निर्वचनं सन्नियोगो विकल्पनम् ॥८३॥
प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः।
तन्त्रे व्याससमासाभ्यां भवन्त्येतानि कृत्स्नशः ॥८४॥
तन्त्रे समासव्यासोक्ता भवन्त्येता हि कृत्स्नशः।
एकदेशेन दृश्यन्ते समासाभिहितास्तु ताः ॥८५॥
यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा।
प्रबोधनप्रकाशार्थास्तथा तन्त्रस्य युक्तयः ॥८६॥
एकस्मिन्नपि यस्येह शास्त्रे लब्धास्पदा मतिः।
स शास्त्रमन्यदप्याशु युक्तिज्ञत्वात् प्रबुध्यते ॥८७॥
अधीयानोऽपि शास्त्राणि तन्त्रयुक्त्या विचक्षणः।
नाधिगच्छति शास्त्रार्थानर्थान् भाग्यक्षये यथा ॥८८॥
दुर्गृहीतं क्षिणोत्येव शास्त्रं शस्त्रमिवाबुधम्।
सुगृहीतं तदेव ज्ञं शास्त्रं शस्त्रञ्च रक्षति ॥८९॥
तस्मादेताः प्रवक्ष्यन्ते विस्तरेणोत्तरे पुनः।